M. M. ŚIVAKUMĀRAŚĀSTRĪ-GRANTHAMĀLĀ
[ Vol. 9 ]

# TATTVACINTĀMAṆIḤ

(PRATYAKṢA KHAṆḌA—PART I)
OF
GAṄGEŚA UPĀDHYĀYA
With Three Commentaries

**DARPAṆA**

*By*
MAHĀRĀJA MAHEŚA ṬHĀKURA

**ĀLOKA**

*By*
SRĪ PAKṢADHARA MIŚRA
&

**RAHASYA**

*By*
ŚRĪ MATHURĀNĀTHA BHAṬṬA

*Foreword by*
DR. VIDYANIWAS MISHRA
*Vice-Chancellor*

*EDITED BY*
DR. MAHĀPRABHULĀLA GOSVĀMĪ
M. A , D. Litt.
*Ex-Professor & Head, Comparative Philosophy*
*Sampurnanand Sanskrit University, Varanasi*




VARANASI
1991

Research Publication Supervisor—
Director, Research Institute
Sampurnanand Sanskrit University
Varanasi.

●

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi—221 002.

●

Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi —221 002.

●

First Edition—1000 Copies
Price—Rs. 132=00

●

Printed at—
Tara Printing Works
Kamaccha, Varanasi.

म० म० शिवकुमारशास्त्रि-ग्रन्थमाला

[ नवमं पुष्पम् ]

गङ्गेशोपाध्यायविरचितः

# तत्त्वचिन्तामणिः

[ प्रत्यक्षखण्डे प्रथमो भागः ]

महाराजमहेशठक्कुरविरचितया

दर्पणव्याख्यया

श्रीपक्षधरमिश्रकृतया

आलोकव्याख्यया

श्रीमथुरानाथभट्टप्रणीतया

रहस्यव्याख्यया

समलङ्कृतः

कुलपतिश्रीविद्यानिवासमिश्रप्ररोचनया

विभूषितः

सम्पादकः

राष्ट्रपतिसम्मानितमहाप्रभुलालगोस्वामी

आचार्यचरः, तुलनात्मकधर्मदर्शनविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी




वाराणस्याम्

२०४८ तमे वैक्रमाब्दे १९१३ तमे शकाब्दे १९९१ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
निदेशकः, अनुसन्धान-संस्थान,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।



प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१ ००२.



प्राप्ति-स्थानम्ः—
विक्रय-विभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१ ००२.



प्रथमं संस्करणम्—१००० प्रतिरूपाणि
मूल्यम्—१३२ = ०० रूप्यकाणि



मुद्रकः—
तारा प्रिंटिंग वर्क्स,
कमच्छा, वाराणसी ।

# प्ररोचना

भारतीयदर्शनशास्त्रस्येतिहासे श्रीगङ्गेशोपाध्यायानां 'तत्त्वचिन्तामणिः' इति ग्रन्थो नूतनमध्यायमारभते। अयमेव नव्यन्यायस्यावतरणम्। अमुं ग्रन्थमधिकृत्यैव नव्यन्यायशास्त्रस्य उत्तरकाले विस्तरष्टीकारूपेण, प्रकरणरूपेण वा भूयिष्ठतर्कसंवलितः परिष्कारोपेतो निरन्तरं दृश्यते। अस्य ग्रन्थस्य प्रत्यक्षखण्डस्य आलोक-दर्पण-माथुरीति टीकात्रयसंवलितस्य सम्पादनं विद्वद्भिः पण्डितमहाप्रभुलालगोस्वामिमहोदयैः प्रास्तावि। तस्य प्रथमखण्डं प्रकाशयन् मुदमावहामि।

अस्मिन् खण्डे प्रामाण्यवादः परिशीलितः। प्रमाणपरीक्षा न्यायशास्त्रस्य मुख्यप्रतिपाद्यो विषयः। अस्मिन् खण्डे सैव प्रथिता। अत एवास्याधिकं माहात्म्यम्।

मन्ये, सुधियः टीकात्रयोपेतं ग्रन्थमेनं समादरपूर्वकं प्रेक्षिष्यन्त इति।

वाराणस्याम्
मार्गशीर्षपौर्णमास्याम्,
२०४८ वैक्रमाब्दे
(२१।१२।१९९१ खैस्ताब्दे)

विद्यानिवासमिश्रः
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# आमुखम्

भारतीयदर्शनशास्त्रे प्रमाणस्य पर्यालोचना सर्वत्र परिदृश्यते। दर्शनशास्त्रस्याक्षुण्णप्रबलप्रवाहः प्रमाणम्, प्रमेयम् प्रमाता एवं प्रमितिः इति चतुर्वर्गस्य बहुमुखीं धारामाश्रित्य प्रवहति। चतुर्वर्गेषु प्रमेयस्वरूपावधारणमेव मुख्यन्तथापि प्रमेयावधारणं प्रमाणायत्तमिति प्रमाणस्वरूपावधारणार्थं यथा नैयायिकाः वैशेषिकाः मीमांसकादयः दार्शनिकाः सन्नद्धास्तथैव बौद्धाः, जैनादयोऽपि प्रमाणस्वरूपनिरूपणे बद्धपरिकराः सन्ति। प्रमाणस्वरूपावधारणं दार्शनिकानामनन्यसाधारणं कर्तव्यमिति भारतीयदार्शनिकाः प्रमाणस्वरूपावधारणे निरतिशयप्रणिहिता भवन्ति। सर्वत्र प्रमाणस्वरूपसमीक्षायामपि न्याये मीमांसायाञ्च प्रमाणस्वरूपं तर्ककर्कश-विचारचातुरीभिः समीक्षितम्। प्रमाणलक्षणे, प्रमाणसंख्यादिषु सत्स्वपि मतभेदेषु 'प्रमेयसिद्धिः प्रमाणायत्ता' इत्यत्र नास्ति कोऽपि मतभेदलेशोऽपि।

प्रमाणस्य प्रामाण्यं स्वतः परतो वा, प्रमाणसामान्यमेव किं स्वतः प्रमाणमथवा परतः प्रमाणमेतादृशी पर्यालोचनापि भारतीयदर्शनशास्त्रे सूत्रकालादेव प्रविष्टा। अक्षपादसूत्राणां जैमिनिसूत्राणाञ्च समीक्षायां प्रामाण्यस्य स्वतस्त्वं परतस्त्वमन्नेत्यस्मिन्सम्बन्धे मतभेदः सुस्पष्टमुपलभ्यते। नात्र सन्देहो यत् अक्षपादो जैमिनिश्च शब्दप्रमाणसम्बन्ध एव स्वस्त्वावतारणां विधत्ते। अक्षपादमते शब्दप्रामाण्यं परतः जैमिनिमते च स्वतः, इयमालोचनाऽपि उभयमहर्षिमते वेदरूप शब्दप्रमाणामादायैव भवति। प्रमाणान्तरप्रसङ्गे उभावपि मौनमवलम्बयतः। परवर्तिनि काले सकलप्रमाणव्यापिनी स्वतस्त्वपरतस्त्वनिरूपणविषयिणी चर्चा सञ्जाता। अक्षपादमतानुसारिण आचार्याः प्रमाणमात्रस्यैव परतः प्रामाण्यं संगिरन्ते, किन्तु तात्पर्यटीकाकारः शब्दप्रत्यक्षप्रमाणयोरेव परतः प्रामाण्यं साधयति। तात्पर्यपरिशुद्धिकारः उदयनः तत्त्वचिन्तामणिकारः गङ्गेशोपाध्यायश्च वाचस्पतेरुक्तिमन्यथाव्याख्याय प्रमाणमात्रस्य परतः प्रामाण्यं प्रत्यपीपदत्। परवर्तिभिः चिन्तामणिव्याख्यातृभिरपि तथैवानुष्ठितम्।

मीमांसाशास्त्रेऽपि इयमेव स्थितिः, वृत्तिकारः, भाष्यकारः वार्तिककारादयश्च प्रामाण्यमात्रस्य स्वतस्त्वं प्रतिपादयन्ति। स्वतस्त्वं परतस्त्वंस्वेति विचारो दुरवगाहः दर्शनशास्त्रस्य विषयः। अत एव श्रूयते—'नमः प्रामाण्यवादाय मत्कवित्वापहारिणे'। जयन्तभट्टस्तु मीमांसकं प्रति 'अधिकारूढः' इत्युक्त्वा नूनमुपहसति यतः वार्तिककारप्रभृतयः प्रमाणसामान्ये प्रामाण्यस्वतस्त्व-सञ्चारेण सूत्रमर्यादाधिकारोहणं करोति। औत्पत्तिकसूत्रे (जै० सू० १।१।५) इत्यस्मिन् 'अव्यतिरेकश्चार्थेऽनुपलब्धे बादरायणस्यानपेक्षत्वात्' एतत्सूत्रघटकानपेक्षशब्देन वेदरूपशब्दप्रमाणस्य स्वतस्त्वमिति प्रतिपादयति जैमिनिः। आप्तोपदेशः शब्दः (अ० सू० १।१।७) अनेन सूत्रेणाक्षपादः

शब्दप्रमाणस्य परतस्त्वं समर्थयति । शब्दप्रमाणपरीक्षाप्रकरणे च "मन्त्रायुर्वेद-प्रामाण्यवच्च तत्प्रामाण्यम् आप्तप्रामाण्यात्" (अ० सू० २।१।६८) अनेन सूत्रेणापि वेदरूपशब्दप्रमाणस्य परतस्त्वं समर्थयति । किन्तु अन्येषां प्रमाणानां विषये किमपि सुस्पष्टं वचनं नोपलभ्यते । अतः नैयायिकानाम् 'अधिकारोहणं नास्ति' इति वक्तुं न शक्यते ।

"आप्तोपदेशः शब्दः" (१।१।७) इत्यत्र आप्तशब्दव्याख्याने भाष्यकारः प्रतिपादयति :—यः खलु जीवस्य हितप्राप्तयेऽहितपरिहारार्थं साधनपदार्थानां दृढतरप्रमाणेनाधारयति स एव साक्षात्कृतधर्मा आप्तः अर्थात् तत्त्ववेत्ता; तत्त्ववेत्तारः सन्तोऽपि जीवं प्रति कारुण्यशून्या अन्यथापि उपदेष्टुं शक्नुवन्ति, एतादृशीमाशङ्कांपरिहर्तुं भाष्यकारः ब्रूते—"आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा[1]"। तत्त्ववेत्ता पुरुषः यमर्थं जानाति तदर्थस्य ख्यापनार्थं तदिच्छा वर्तते । यथादृष्टार्थज्ञापनेच्छा वर्तत इति विपरीतमुपदेष्टुं न शक्यते । अत्र प्रयत्न एव चिख्यापयिषा । ख्यापनेच्छायामपि आलस्यवशादसौ नोपदिशेदित्याशङ्कां निराकर्तुं ख्यापनेच्छया ख्यापने यत्नशीलः । यथादृष्टार्थख्यापने यत्नशीलः सन्नपि तत्त्ववेत्ता पुरुषः वागिन्द्रियवैकल्यप्रयुक्तः यथावदुपदेष्टुं न शक्नुयादिति "चिख्यापयिषया प्रयुक्त उपदेष्टा" 'उपदेष्टा' इत्यस्य शब्दस्यार्थ उपदेशकर्ता । वागिन्द्रियवैकल्ये उपदेष्टा भवितुं नार्हति, अतः भाष्यकारोक्तस्यैव एषोऽर्थः फलति यत् तत्त्वज्ञः, कारुणिकः, अनलसः, अविकलवागिन्द्रियः आप्तः । अर्थात् तत्त्वज्ञानम्, कारुण्यम्, अनालस्यम्, इन्द्रियपटुत्वञ्चेति चतुर्विधधर्मस्य नामाप्तिः । एतदाप्तिधर्मप्रयुक्तः पुरुष आप्तः । वार्त्तिककारोऽपि तथैवानुवदति । एतादृशाप्तिविशिष्टपुरुषस्योपदेश एव शब्दप्रमाणम् । उपदिश्यत अनेनेति व्युत्पत्त्या उपदेशः वाक्यज्ञानं वाक्यार्थज्ञानं वा । वाक्यज्ञानस्य शब्दप्रमाणत्वे वाक्यार्थज्ञानं प्रमितिः । वाक्यज्ञानरूपं प्रमाणं पदार्थस्मृतिरूपव्यापारेण वाक्यार्थज्ञानजनकं भवति । वाक्यार्थज्ञानस्य शब्दप्रमाणत्वे तु हानबुद्धिरुपादानबुद्धिरुपेक्षाबुद्धिर्वा प्रमितिः । अयञ्चोपदेशशब्दः पदविधेः प्रवर्त्तनायाः समानार्थकः । तस्य ज्ञानमुपदेशः (जै० सू० १।१।५) इत्यनेन जैमिनिरपि धर्मस्य ज्ञापकं प्रमाणमुपदेश इत्युक्तवान् ।

विधिविवेके मण्डनमिश्र एतस्य विस्तृतं व्याख्यानं कृतवान् ।

उपदेशो नियोज्यार्थकर्माऽप्रस्थितचोदना ।
प्रथितो गुरुवैयादी नित्येऽपि न न कल्पते ॥

अप्रवर्त्तकमनिवर्त्तकमपि वाक्यमुपदेशो भवति । यथा 'सदेव सोम्येदमग्र आसीत्' इत्यादिवाक्यं नैव पुरुषस्य प्रवर्त्तकं निवर्त्तकम् वा तथा पुरुषस्य श्रेयोऽभिधायक-वाक्यत्वादुपदेश एव । उपदेशरूपशब्द एव प्रमाणम्, शब्द एव न प्रमाणम् ।

---

१. अ० सू० भा० १।१।७ ।

उपदेशोऽपि न शब्दप्रमाणम्, यतः अनाप्तपुरुषस्योपदेशोऽपि उपदेश एवास्ति, किन्तु नादः प्रमाणम्। आप्तिधर्मयुक्तपुरुषस्योपदेश एव शब्दप्रमाणम्।[1]

अत्र वार्तिककारः कथयति यत् प्रदर्शितदिशा आप्तोपदेश एव यदि शब्द-प्रमाणम्, तदा अतीन्द्रियस्वर्गापूर्वं देवतादिविषयकेच्च शब्द प्रमाणं न स्यात्। अतीन्द्रियवस्तुनः साक्षात्करणमेव सम्भावितं नास्ति। भाष्यकारोऽर्थसाक्षात्करणमेवाप्तिः। अतीन्द्रियस्वर्गादेः वस्तुनः साक्षात्कारं कोऽपि कर्तुं न शक्नोति। अतः आप्तोपदेशस्य प्रमाणत्वे स्वर्गादिरतीन्द्रियार्थः शब्दः प्रमाणं न भवितुमर्हति। अत आप्तपुरुषोपदेश एव शब्दप्रमाणमेतत्कथनमसङ्गतम्। अतः आप्तोपदेशस्य शब्द-प्रमाणत्वस्वीकर्तृणां कीदृशोऽर्थो भविता ?[2]

अत्रेदमगन्तव्यं यत् 'आप्तोपदेशशब्दस्य न प्रदर्शितरूपोऽर्थः अर्थात् आप्तस्यो-पदेश आप्तोपदेश इति षष्ठीसमासो नास्ति अपि तु आप्ताश्चासावुपदेशश्चेति कर्मधारय एव। तथा च आप्तो युक्तः युक्त उपदेश आप्तोपदेश इति। वेदस्यापौरुषेयत्वात्स्वर्गापूर्वं-देवताद्यतीन्द्रियविषयप्रतिपादकवैदिकोपदेशोऽपि अपौरुषेयः। अपौरुषेयवाक्यस्य कोऽपि प्रणेता न भवति, अत एव तस्य नित्यत्वम्। अपौरुषेयं वेदवाक्यञ्च स्वतः प्रमाणम्। शब्दः स्वभावतो नैव दुष्टोऽपि तु पौरुषेयानित्यं वाक्यं पुरुषदोषदुष्टं भवति। नित्यनिर्दुष्टत्वाच्च स्वतः प्रमाणम्। लौकिकोपदेशोऽपि प्रमाणान्तर-मूल-कत्वादेव युक्तः। युक्तोपदेशस्य संज्ञैवाप्तोपदेशः। लौकिकोपदेशो यदि प्रमाणान्तरमूलको न भवति तदाऽऽप्तोपदेशो न यतः अयुक्तोपदेशत्वादसावनाप्तोपदेश इति अप्रमाणमेव। अतः वैदिकोपदेशस्य प्रसक्तं स्वतः प्रामाण्यं सुस्थितमेव।[3]

---

१. उपदिश्यतेऽनेनेत्युपदेशो वाक्यज्ञानं तदर्थज्ञानं वाभिधीयते, तत्र वाक्यज्ञान-प्रामाण्यपक्षे तदर्थज्ञानं फलम् पदार्थस्मृत्यादयस्त्वान्तरालिका इति कर्तव्यता। तदर्थज्ञानप्रामाण्यपक्षे तु हानादिबुद्धिः फलम्। यद्यपि विधिरुपदेशः प्रवर्त्तनमित्य-नर्थान्तरम्, यद्यपि चाथं नियोज्य-प्रयोजने प्रवृत्तिनिवृत्ती विदधदाज्ञाऽध्ययना-भ्यामतिरिच्यते, ते हि नियोक्तृप्रयोजने प्रवृत्तिनिवृत्ती विधत्तः, तथापि भूतार्थ-परोपनिषदादिशब्दव्यापकत्वात्। पदप्रयोजनवद्वचनमात्रविवक्षयोपदेशपदं व्याख्येयम्-यद्यपि 'सदेव सोम्येदमग्र आसीद्' इत्यादि-वचनं क्वचिन्न प्रवर्त्तयति कुतश्चिद्वा न निवर्त्तयति पुरुषम्, तथापि पुरुषश्रेयोऽभिधत्त इत्युपदेश इत्युच्यते। (न्या० वा० ता० टी० पृष्ठम् १९३)।

२. ........स्वर्गापूर्वदेवतादिषूपदेशो न प्राप्नोति। अतीन्द्रियत्वात्, यदि साक्षात्करण-मर्थस्याप्तिः स्वर्गापूर्वदेवतादीन् न कश्चित् पश्यतीती तत्प्रतिपादको व्यवहारो न स्यात् तस्मादाप्तश्चासावुपदेशश्चेति युक्तम्, नाप्तस्योपदेश इति। न्या० वा० पृ० १७४

३. आप्तः, आप्तो युक्त इति यावत्। अपौरुषेयो वैदिक उपदेशः स्वर्गापूर्वदेवता-विषयः स्वतः प्रामाण्ये सिद्धे निर्दोषतया युक्त उपपन्नः, लौकिकश्चार्यम्लेच्छानां प्रमाणान्तरमूलोयुक्तः, मानान्तराभावे तु नाप्तोऽयुक्त इत्यर्थः। न्या० वा० ता० टी० पृ० १७४

'आप्तोपदेशः' अस्मिन् पदे षष्ठीसमासं स्वीकृत्य प्रदर्शितोऽर्थः। शब्दः स्वप्रामाण्ये प्रणेतृपुरुषस्याप्तधर्ममपेक्षते। तथा चोपदेशात्मकं शब्दप्रामाण्यमन्य-सापेक्षम्। इतरसापेक्षप्रामाण्यमेव परतः प्रामाण्यम्। नैयायिकानामेष एवाभिप्रायः। अत एव सूत्रकृतोक्तम् "मन्त्रायुर्वेदवच्च तत्प्रामाण्यम् आप्तप्रामाण्यात्' इत्यस्मिन् सूत्रे अदृष्टार्थकवेदवाक्यस्य प्रामाण्यमाप्तप्रामाण्यसापेक्षम्। अतीन्द्रियार्थद्रष्टा आप्त-पुरुष अतीन्द्रियार्थप्रतिपादकवेदवाक्यमारचितवान् अतः वेदवाक्यस्य प्रामाण्यम्।

'आप्तश्रुतिराप्तवचनन्तु' एतस्याः सांख्यकारिकाया व्याख्याने वाचस्पतिमिश्रः 'आप्तपुरुषस्य श्रुतिः' एतादृशं षष्ठी-समासं परित्यज्य 'आप्ता युक्तेति यावत्, आप्ता चासौ श्रुतिश्चेति आप्तश्रुतिः। श्रुतिश्च वाक्यजनितं वाक्यार्थज्ञानम्। तच्च स्वतः प्रमाणम्। अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषशङ्काविनिर्म्मुक्तं भवति" इत्युक्तवान्। कर्मधारयसमासं प्रदर्श्य सांख्याचार्यः मीमांसकमतमनुवर्तते। अतः वेदवाक्यरूपशब्द-प्रमाणस्य स्वतःप्रामाण्यं स्वीकृतवान्।

सांख्ये स्वतः प्रामाण्यस्वीकारेऽपि पातञ्जलवेदभाष्यमेतद्विरोधि। पातञ्जले १।७ सूत्रस्थभाष्ये आगमप्रमाणलक्षणमेतदुक्तं यत् 'आप्तेन दृष्टो अनुमितो वा अर्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते, शब्दात् तदर्थविषया वृत्तिः श्रोतुरागमः। वाचस्पतिमिश्र आप्तस्वरूपप्रकाशनार्थमुक्तवान् यत् (१) तत्त्वदर्शनम्, (२) कारुण्यम्, (३) वागिन्द्रियपटुत्वम्, त्रितयसम्बन्धस्य संज्ञा आप्तिः। तया वर्तत इत्याप्तः, अतः वार्तिककारमेवानुसरति। अनालस्यधर्मं परित्यज्य व्यासभाष्ये तस्यैवाप्तिरुच्यते, यत आलस्ययुक्त आप्तो न भवितुमर्हति। मीमांसका अनादिसर्वज्ञमीश्वरं न स्वीकुर्वन्ति न च सर्वज्ञं योगिनम्। अतः सर्वज्ञः पुरुषोऽतिन्द्रियार्थं दृष्ट्वाऽतीन्द्रियार्थोपदेशरूप-वाक्यरचनां कृतवान्—इति मीमांसक उक्तवान्। एतदेव अनपेक्षत्वात् सूत्रेण उक्तवान्। अन्यनिरपेक्षस्वतन्त्रशब्द एव प्रमाणम्। कोऽपि पुरुषः प्रमाणान्तरेण अर्थमवगत्य वाक्यमुच्चारयति तदा तद्वाक्यं निरपेक्षं भवितुं नार्हति, अपितु प्रणेतृ-पुरुषस्य प्रमाणान्तरसापेक्षो भवति।

एवमेव जैनाचार्याः अभ्यासदशोत्पन्नज्ञानस्य प्रमात्वं स्वतः, अनभ्यासदशो-त्पन्नज्ञानस्य न प्रमात्वमिति समर्थनं कृतवन्तः। एतन्मते प्रमाप्रमाणयोरत्यन्तं भेदो नास्ति। प्रमात्वस्य स्वतस्त्वमङ्गीकृतवन्तः, नूनं जैनाचार्यः सर्वमतमांशिकरूपेण स्वीकृत्य सर्वैः दार्शनिकैः सह विरोधाविरोधयोः व्यवस्थां करोतीत्यैवैतन्मतस्या साधारणवैशिष्ट्यम्, बौद्धाचार्यस्तु अप्रमात्वस्य स्वतस्त्वं प्रमात्वस्य परतस्त्वं समर्थयति।

प्रमाणशब्दः प्रमायाः करणे प्रमायां च विभिन्नार्थे प्रयुक्तो भवति। 'प्रमीयतेऽनेन' इति करणव्युत्पत्त्या प्रमाणशब्दः प्रमाकरणं बोधयति एवमेव 'प्रमितिः प्रमाणम्' एतादृशव्युत्पत्त्या प्रमाणशब्दः प्रमाज्ञानमवगमयति। अतः प्रमाणशब्देनापि प्रमाकरणत्वं प्रमात्वञ्च ज्ञायते। प्रमाणस्य प्रमात्वं स्वतः परतो वेति जिज्ञासायां

जिज्ञासुः प्रमाणशब्दस्य प्रयोगं किं प्रमाकरणमित्यर्थेऽथवा प्रमातात्पर्येण प्रयोगं करोति। यथार्थानुभवः प्रमा, अविपरीतानुभवो यथार्थानुभवः। अतः, यथार्थानुभवस्य करणत्वमेव प्रमाणत्वम्। तथा च प्रमात्वं प्रमाणत्वञ्चात्यन्तं भिन्नं वस्तु। प्रमेयतत्त्वावधारणं प्रमाणतत्त्वावधारणाधीनम्। प्रमेयतत्त्वावधारणमेव प्रमा। प्रमायाः करणं प्रमाणम्। अतः यथार्थानुभवजनकत्वमेव प्रमाणत्वम्। प्रमाणत्वरूपेणानवधारित-प्रमाणेन प्रमेयतत्त्वावधारणं न भवितुमर्हति। प्रमाणं प्रमाणाभासश्च द्वयमपि बोधजनकम्। बोधकत्व-धर्मः उभयत्रापि समानः[1]। किन्तु प्रमाणाभासेन प्रमेयतत्त्वावधारणं न भवति, यतः प्रमाणाभासोऽविपपरीतानुभवजनको नास्ति, अपि तु विपरीतानुभवजनकोऽयथार्थानुभवजनकः। रङ्गे रजतानुभवः, शंखे पीतानुभवः अनुभवोऽपि सन् न अविपरीतानुभवः। प्रमाणाभासापेक्षया प्रमाणस्य वैलक्षण्यमविपरीतानुभवजनकत्वम्। यद्यपि प्रमाया विषय एव प्रमेयो भवति तथापि प्रमाजनकप्रमाणविषयोऽपि प्रमेयपदेन व्यवहृतो भवति। अतः प्रमाणतत्त्वावधारणे पुरुषस्य प्रमाणतत्त्वावधारणमपि नितान्तमपेक्षितम्।[2] प्रमेयावधारणं प्रमाणतत्त्वावधारणे उदासीनस्य जनस्य न भवितुमर्हति। प्रमेयतत्त्वावधारणञ्च विना व्यवहारो न सम्भाव्यते। अतः व्यवहारिणो जीवमात्रस्य कृते प्रमाणतत्त्वावधारणमावश्यकम्। यद्यपि त्रयी, वार्ता दण्डनीत्यादिशास्त्रमपि प्रमेयतत्त्वावधारणे प्रवृत्तन्तथापि आन्वीक्षिकी विद्या एव मुख्यरूपेण प्रमाणतत्त्वावधारणे प्रवृत्ता, अतएव आन्वीक्षिकी सर्वविद्यानां प्रदीपभूता। न्यायविद्याऽवधृतप्रामाण्यकप्रमाणादेव सर्वैः विभिन्नशास्त्राचार्यैः स्वसिद्धान्तानुरूपं प्रमेयतत्त्वमवधारयति। यतो यथार्थावधारणं प्रमाणायत्तम्। प्रमाणेन प्रमाणतत्त्वावधारिते प्रमाणस्य प्रामाण्मपि प्रमाणान्तराधीनं भवेत्तदाऽनवस्था प्रसज्येत। तथा च प्रमाणप्रामाण्यावधारणस्यासम्भवत्वे प्रमेयावधारणमसम्भवमेव स्यात्।[3] प्रमाणाभासस्य निश्चयानुभवजनकता विद्यते किन्तु निश्चयाकारानुवः प्रमेयव्यभिचारी। प्रत्यक्षमेतच्छुक्तिरजताद्यनुभवे। तथा च प्रमाणात्प्रमाणाभासाच्चोत्पन्नानुभवयोरेकः प्रमेयाव्यभिचारी अन्यश्च प्रमेयव्यभिचारी।[4]

अविपरीतानुभवकरणत्वमेव प्रमाणत्वम्। प्रमाणत्वञ्च प्रमाघटितम्। अर्थात् प्रमितिक्रियायाः करणम्। प्रमाणम्, प्रमितिः, प्रमेयश्चेति त्रितयमपि प्रमितिक्रियाकारकम्। प्रमाता प्रमितिक्रियायाः कर्ता। प्रमाणं करणम्, प्रमेयं कर्म। अतः, क्रियायाः कारकं ज्ञानं क्रियानिरूपणाधीनमिति। क्रियास्वरूपनिरूपणं विना

---

१. नहि प्रमाणं तत्त्वेनानवधारितं बोधकत्वमात्रेण स्वगोचरावधारणायालम् तावन्मात्रस्य तदाभाससाधारण्यात्। न्या० वा० ता० टी० पृ० ३।

२. तथाहि प्रमेयादीनां तावत्पदार्थानां तत्त्वज्ञानं प्रमेयतत्त्वज्ञानाधीनम्......। न्या० वा० ता० टी० पृ० ३।

३. तदनवधारणाच्च प्रमेयादयो दुरवधारणाः। न्या० वा० ता० टी० पृ० ३।

४. अपि तु बोधकत्वैकार्थसमवेतेनाव्यभिचारित्वेन न्या० वा० ता० पृ० ३।

कारकस्वरूपनिरूपणं न सम्भाव्यते। प्रमितेः प्रमाया वा क्रियानिरूपणं विना करणनिरूपणं न भवितुमर्हति। अतः, प्रमाणस्य स्वतस्त्वपरतस्त्वनिरूपणार्थं प्रमायाः स्वतस्त्वपरतस्त्वनिरूपमावश्यकम्। प्रमाज्ञानस्य प्रमात्वं न गृह्यते तदा प्रमाकरणत्व-प्रमाणप्रामाण्यमपि अवधारयितुं न शक्यते। तथा च प्रमातत्त्वावधारणाधीनं प्रमाणतत्त्वावधारणमति ज्ञानस्य प्रमात्वावधारणार्थमेवादौ प्रयासः करणीयः। प्रमात्वस्य स्वतस्त्वं परतस्त्वं वेत्येवादौ विचारणीयम्। प्रमात्वस्य स्वतः परतोवाऽवधारणमेव प्रमात्वस्य ज्ञप्तौ स्वतस्त्ववादः परतस्त्ववादो वेत्युच्यते। ज्ञप्तिशब्दार्थः ज्ञानं यथार्थानुभवः। प्रमात्वविषयकयथार्थानुभवस्य स्वतस्त्वे स्वतः प्रमाणत्ववादः परतः स्वीकारे च परतः प्रमात्ववादः फलति।

ज्ञानस्य यथार्थानुभवत्वरूपप्रमात्वस्यावधारणं सम्भावितं न वा? यस्यावधारणं सम्भावितं तत्स्वतः अवधारणाभावे सति परतः। यस्य च स्वतः परतो वा अवधारणं न भवति तस्य अवधारणमेव न भवति। प्रमाया आवधारणत्वे प्रमाकरणस्याप्यवधारणं न भवति[1]। प्रमाकरणत्वोपधायकस्य प्रमात्वस्यानिश्चयदशायामुपहितप्रमाकरणत्वमप्यशक्यावधारणम्। अतः प्रमाकरणत्वस्य स्वतस्त्व-परतस्त्वविचारप्रसङ्गे प्रमात्वस्य स्वतस्त्वपरतस्त्वविचारो नासङ्गतः। यथा प्रमात्वस्य निरूपणं प्रमात्वनिरूपणसापेक्षं तथैव प्रमात्वनिरूपणं नान्यनिरूपणसापेक्षम्। यतः प्रमाणत्वमौपाधिकं प्रमात्वच्चानौपाधिकम्। अत एव प्रमात्वस्य स्वतः निरूपणं सम्भाव्यते न वेत्यवतारणा कृता[2]।

प्रमात्वं स्वतो निश्चीयत इत्यस्य कोऽभिप्रायः? स्वतः शब्दस्यार्थः स्वात्मना; तृतीयाविभक्तिस्थानेऽत्र तसिप्रत्ययः। ज्ञानं ज्ञानगतप्रमात्वस्य अर्थात् स्वधर्मभूतप्रमात्वस्य निश्चयं विधत्ते। अत्र स्वशब्दस्यार्थद्वयम्। आत्मा स्वकीयम् वा; स्वीयं वस्तु वा स्वशब्दार्थः। 'स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति कोशवाक्याद् उभयार्थबोधकः स्वशब्दः। स्वशब्दस्यात्मार्थकत्वे ज्ञानं ज्ञानगतधर्मस्य प्रमात्वस्य निश्चायकम्। स्वशब्दस्य स्वीयार्थबोधकत्वे ज्ञानाग्राहकज्ञानान्तरेण ग्राह्यज्ञानगतधर्मप्रमात्वस्य निश्चयो भवतीत्यर्थो लभ्यते। प्रमात्वस्य स्वतस्त्वपक्षे द्विविधोऽर्थो भासते। प्रमात्वस्य स्वतो निश्चयपक्षस्तु स्वेन प्रमात्वस्य निश्चयः, स्वीयेन = स्वग्राहकज्ञानेन ग्राह्यज्ञानगतप्रमात्वधर्मस्य निश्चयः। एतत्पक्षद्वयमपि ज्ञप्तिगतं स्वतस्त्वम्। एतद्व्यतिरिक्तमुत्पत्तिगतं स्वतस्त्वम्। एतच्च प्राचीनन्याये न तथा विशदीकृतं यथा परवर्तिकाले। अत्र प्रमात्वस्य स्वतस्त्वं द्विविधम्[3] स्वग्राह्यम्[4], स्वग्राहकग्राह्यम्। तत्र प्रथम-

१. प्रमाकरणत्वं हि नानवधारितायां प्रमायामवधारयितुं शक्यमित्यर्थः। ता० प० पृ० ८६।

२. ......तथा चोपधायकप्रमात्वस्यानिश्चयादुपहितं प्रमाकरणत्वमप्यशक्यावधारणमिति न प्रकृतासङ्गतिरित्यर्थः। न्या० वा० प्र० ४६।

३. स्वतो वेत्यस्य स्वात्मना वा स्वग्राहकेण वेत्यर्थः। ता० प० पृ० ४७।

४. .......न खलु विज्ञानमनात्मसंवेदनमात्मानमपि गृह्णाति प्रागेव तत्प्रामाण्यम्। न्या० वा० ता० टी० पृ० ३।

पक्षोऽसङ्गतः। ज्ञानमात्रस्यानात्मसम्वेदनत्वात्। ज्ञानस्य विषयसम्वेदनत्वेऽपि ज्ञानं स्वयं स्वस्य विषयत्वं नापादयति। ज्ञानं न स्वप्रकाशकमिति ज्ञानमनात्मसम्वेदनम्। ज्ञानं यथा विषयप्रकाशकं तथैव यदि स्वस्यापि प्रकाशकं स्यात्तदेव ज्ञानमात्मसम्वेदनं स्यात्। ज्ञानमप्रकाशमानं सदेव विषयप्रकाशस्वरूपम्, एष एव नैयायिकराद्धान्तः। उत्पन्नं ज्ञानं स्वविषयव्यवहारजनकं भवति। एतस्य विषयसुस्पष्टाभिव्यक्तये विरोधिनः प्रभाकारस्यापि पक्षः संक्षेपेणोच्यते।

प्रभाकरमते ज्ञानमात्मसम्वेदनं भवति। एतन्मते किमपि ज्ञानमनात्मसम्वेदनं न भवति। प्रत्यक्षं परोक्षं वा किमपि त्रितयविषयकं भवति। विषयः, ज्ञानम्, ज्ञानाश्रय आत्मा एतत्त्रितयमपि ज्ञाने युगपत् भासते। ज्ञानं न केवलं विषयप्रकाशस्वरूपम् अपितु त्रितयस्यापि प्रकाशकम्। विषयप्रकाशस्वरूपे ज्ञाने यथा विषयो भासते तथैव ज्ञानं स्वस्य ज्ञानाश्रयस्य आत्मनश्च नियतं भासकम्। प्रत्यक्षज्ञाने विषयः, ज्ञानम्; आत्मा चैतत्त्रितयमपि प्रत्यक्षरूपेण भासते। अत एवायं त्रिपुटीप्रत्यक्षवादी। अनुमित्यादिपरोक्षज्ञानेपि स्मृतौ च विषयः परोक्षरूपेण भासते परं ज्ञानम्, आत्मा च नियतं प्रत्यक्षरूपेण भासते। विषयमादायैव प्रत्यक्षत्वं परोक्षत्वम्। परोक्षज्ञानस्थले विषयस्य पारोक्ष्यम्। परोक्षज्ञानस्य विषय एव परोक्षः परोक्षज्ञानं परोक्षज्ञानस्याश्रय आत्मा चोभयमपि प्रत्यक्षम्। परोक्षविषयकज्ञानमेव परोक्षम्। आत्मा नियतज्ञानस्य आश्रयरूपेण भासते ज्ञानञ्च सविषयकस्वरूपेण भासते।

अत्रेयमापत्तिर्यत् यज्ज्ञानमुत्पन्नं सदपिन प्रकाशते तदा ज्ञानोत्पन्नेऽपि तस्य पुरुषस्य 'न जानामि' इति व्यवहारः स्यात्। अप्रकाशमानज्ञानेन 'जानामि' इति व्यवहारो नोपपद्यते। अत्र नैयायिकैरेवमुच्यते यत् ज्ञानस्य स्वरूपतः सत्तैव 'न जानामि' इतिव्यवहारस्य प्रतिबन्धिका। विना ज्ञानप्रकाशं ज्ञानस्योत्पत्तिमात्रेण आत्मनि ज्ञानस्य स्वरूपतः सत्ताऽस्तीति 'न जानामीति' व्यवहारो न जायते। ज्ञानस्यानात्मसम्वेदनत्वात्, स्वधर्मस्य प्रमात्वस्यापि ग्रहणं कर्तुं न शक्यते। प्रमाज्ञानं धर्मी प्रमात्वञ्च तद्धर्मः। धर्मः धर्मी च न्यायमते सर्वथा भिन्नः। ज्ञानस्यानात्मसम्वेदनत्व एव प्रमात्वस्य स्वतोऽग्रहः सेत्स्यति। उभयोर्भेदे प्रमात्वस्य स्वतोऽवधारणस्याशैव नास्ति। यद्धि ज्ञानं धर्मिणं न गृह्णाति तत् तद्धर्मं कथं गृह्णीयात् अनात्मसम्वेदनं ज्ञानं स्वयं स्वस्य ग्रहणं कर्तुं न शक्नोति।[1] अतः स्वधर्मप्रमात्वग्रहणसम्भावना तु दूरङ्गता।[2]

अत्रेदं चिन्तनीयम् यत् आकाशस्य विशेषगुणः शब्दः श्रवणेन्द्रियग्राह्यः शब्दधर्मी चाकाशः न श्रावणप्रत्यक्षविषय इति शब्दधर्मिणः ग्रहणाभावेऽपि आकाश-

---

१. न खलु विज्ञानमात्मसंवेदनमात्मानमपि गृह्णाति प्रागेव तत्प्रामाण्यम्। न्या० वा० ता० पृ० ३

२. धर्मधर्मिणोर्भेदपक्षेऽनात्मसम्वेदनमेव दूषणम्। अनात्मसम्वेदनता चोपपादयिष्यत इति हृदयम्। ता० प० पृ० ८७-८८

धर्मस्य शब्दस्य ग्रहणं भवति एवमेव पृथिवी घ्राणजप्रत्यक्षविषया न, किन्तु पृथिवी धर्मः गन्धः घ्राणेन्द्रियजप्रत्यक्षविषयो भवति। तथैव अनात्मसम्वेदनज्ञानस्य स्वयं ग्रहणाभावेऽपि प्रमात्वस्य धर्मस्य ग्रहणे नानुपपत्तिः। अतः धर्मिग्राहक एव धर्मग्राहको भवतीति नियमो नास्ति।[1]

अस्मिन् विषये पूर्वपक्षिप्रदर्शितो दृष्टान्तो नैव सङ्गतः। शब्दस्य श्रावणप्रत्यक्षे जात एव व्यवहारः प्रचलति। परन्तु शब्दः कस्य धर्मः आकाशस्य वायोर्वा इति निश्चयस्य नावश्यकता शब्दस्य श्रावणप्रत्यक्षविषयत्वेऽपि आकाशस्य धर्मरूपेण शब्दः श्रावणप्रत्यक्षविषयो नास्ति।[2] श्रावणप्रत्यक्षे शब्दस्य विषयीभूतत्वेऽपि आकाशस्य धर्मः शब्द एतादृशनिश्चयो नास्ति। शब्दः वायुधर्मः, दिग्धर्मः इति विवादविषयः शास्त्रज्ञानाम्।

अयमाशयः—श्रावणप्रत्यक्षे शब्दः गगनादिधर्मरूपेण गृहीतो न भवत्यत एव भट्टमते शब्दः अनाश्रितः न केवलं शब्दस्यानाश्रितत्वमपि तु शब्दोऽनाश्रितविभुद्रव्यम्। शब्दो यदि नियतधर्मरूपेण गृहीतः स्यात्तदा शब्दः किं वायोः धर्मः? किं दिशो धर्मः? किं निराश्रयविभुद्रव्यम्? एतादृशसंशयो न स्यात्। एवमेव गन्धरसादिविषयेऽपि। गन्धग्राहकेन्द्रियम् गन्धाश्रयग्राहकं न, गुणग्राहकमिन्द्रियं न गुणिग्राहकमिति।

प्रकृत-प्रमात्वविषये तादृशी घटना नास्ति। प्रमात्वं यदि ज्ञानधर्मरूपेण गृहीतं न स्यात्तदा प्रमात्वस्य अवधारणमनवधारणञ्च समानमेव, तथा च प्रमात्वावधारणं निष्कम्पप्रवृत्तिजनकं न भवेत्। प्रमात्वमेकं वस्तु एतावन्मात्रं ज्ञानं न निष्कम्पप्रवृत्तिजनकम्। ज्ञानधर्मिणि तद्धर्मिगत-धर्मरूपेण प्रमात्वस्यावधारणार्थमेषः प्रयासः। निर्दिष्ट-धर्मिगतप्रमात्वज्ञानं विना तादृशप्रमात्वग्रहोऽग्रहसमानः। प्रवर्त्तकज्ञानगत-प्रमात्वावधारणार्थमेव दार्शनिकाः सन्नद्धाः सन्ति। अतः अनात्मसम्वेदनज्ञान-प्रमात्वस्य यथा कथञ्चिदग्रहणे स्वधर्मरूपेण प्रमात्वं ग्राहयितुं नैव समर्थो भवति। ज्ञानं स्वविषयो न भवति।

भवतु नाम; प्रमात्वं स्वतः ग्राह्यमित्यस्मिन्पक्षे पक्षद्वयं प्रदर्शितम्। स्वेन, स्वप्रमात्वस्य ग्रहणं न भवितुमर्हति इति विवेचितम्। अनात्मसम्वेदनज्ञानं स्वयं स्वप्रमात्वस्य ग्रहणं कर्तुं न शक्नोति तथापि अनात्मसम्वेदनज्ञानस्य ग्राहकम् अर्थात् अनात्मसम्वेदनज्ञानविषयकज्ञानान्तरग्राह्यज्ञानधर्मस्य प्रमात्वस्य ग्रहणं कर्तुं शक्नोति। ज्ञानगतप्रमात्वं धर्मः तद्धर्माश्रयतज्ज्ञानव्यक्त्या ग्राह्यत्वाभावेऽपि द्वितीयज्ञानेन तद्ग्राह्यं भविष्यति। ज्ञानगतं प्रमात्वमपि तज्ज्ञानग्राह्यमेव अयमेव द्वितीय पक्षः।

परन्तु नायं सङ्गतः पक्षः, यतः, प्रमात्वधर्माश्रयज्ञानग्राहक-ज्ञानान्तर-प्रमात्वस्य ग्राहकं भवेत् इति स्वीकारे जिज्ञासा भवति यत् ज्ञानग्राहकं किं नाम ज्ञानान्तरम्?

---

१. यद्यपि शब्दगन्धादयो व्योमभूम्याद्यग्रहेऽपि गृह्यन्ते। ता० प० पृ० ४८

२. ··· तथापि न तद्धर्मतयेत्यर्थः। ता० प० पृ० ३८

किमिदं मनोजन्यमनुव्यवसायात्मकं ज्ञानम् ? अर्थात् मानसप्रत्यक्षरूपमनुव्यवसायात्मकं ज्ञानम् ? व्यवसायग्राहकमनुव्यवसायात्मकं ज्ञानम् ? एतस्यानुव्यवसायस्य विषयो यथा व्यवसायात्मकं ज्ञानन्तथैव व्यवसायज्ञानधर्मः प्रमात्वमपि विषयो भवेत् । अनुव्यवसायज्ञानेन व्यवसायज्ञानं व्यवसायज्ञानधर्मः प्रमात्वमित्युभयमपि गृहीतं भवति इत्येव स्वतस्त्ववादिमतम् ।[1]

नैयायिकाः, भट्टाः, मुरारिमिश्राः ज्ञानानात्मसम्वेदनवादिनः । नैयायिकाः, मुरारिमिश्राश्च ज्ञानग्राहकं ज्ञानान्तरमनुव्यवसायात्मकं ज्ञानम् । अनुव्यवसायात्मकं ज्ञानम् व्यवसायरूपज्ञानस्य मानसप्रत्यक्षम् । एतन्मते मन आन्तरिन्द्रियम् । व्यवसायात्मकज्ञानस्यात्मनि उत्पत्त्यनन्तरं मनोरूपान्तरिन्द्रियेण व्यवसायस्य प्रत्यक्षरूपमनुव्यवसायात्मकं ज्ञानमुत्पद्यते । व्यवसायः अनुव्यवसायस्य विषयो भवतीति व्यवसायधर्मः प्रमात्वमपि अनुव्यवसायस्य विषयः । व्यवसायधर्मी अनुव्यवसायस्य विषयो भवतीति व्यवसायधर्मः प्रमात्वमपि अनुव्यवसायस्य विषयो भवति । धर्मिग्राहकज्ञानेन धर्मस्य ग्रहणमपि सम्भाव्यते । नैयायिकाः मुरारिमिश्राश्च व्यवसायरूपज्ञानस्य ग्राहकं ज्ञानान्तरमनुव्यवसायात्मकं मानसप्रत्यक्षं स्वीकुर्वन्ति परं भट्टस्तथा न स्वीकरोति । यतः, भाट्टमते ज्ञानंमतीन्द्रियं नित्यानुमेयम् । अतः ज्ञानस्यानुव्यवसायरूपं मानसप्रत्यक्षं न भवितुमर्हति । अतः एतन्मते ज्ञानस्य ग्राहकं ज्ञानान्तरं प्रत्यक्षं नास्ति अपि तु लैङ्गिकमेव ज्ञानम् ।[2] ज्ञानजन्यज्ञानता धर्मरूपलिङ्गेन ज्ञातताजनकज्ञानस्य लैङ्गिकप्रतीतिर्भवति । अर्थात् अनुमितिर्भवति ।

प्रमात्वधर्मस्य धर्मी व्यवसायज्ञानग्राहकमानसप्रत्यक्षानुव्यवसायो भवतु ज्ञाततालिङ्गकानुमितिर्वा भवतु । पक्षद्वयेऽपि व्यवसायात्मकज्ञानम् अर्थात् प्रमात्वधर्मस्य धर्मिज्ञानगृहीतत्वेऽपि तज्ज्ञानेन प्रमात्वधर्मः नैव गृहीतः स्यात् अर्थात् ज्ञानग्राहकत्वेऽपि ज्ञानधर्मप्रमात्वग्राहको न भवितुमर्हति । ज्ञानस्य ज्ञानत्वरूपेण गृहीतत्वेऽपि प्रदर्शितानुव्यवसायेन अनुमित्या वा प्रमात्वरूपेण गृहीतं न भवितुमर्हति । यतः प्रमाज्ञानमप्रमाज्ञानमुभयमपि अनुव्यवसायः ज्ञाततालिङ्गकानुमिमितिर्विषयो भवति । मनः यथा प्रमारूपव्यवसायस्यानुव्यवसायस्य च जनकन्तथैव मनः अप्रमारूपव्यवसायस्यानुव्यवसायस्य च जनकं भवति । अविशिष्टरूपेणैव मनः प्रमाऽप्रमोभयरूपव्यवसायानुव्यवसाययोर्जनकम् । एवमेव ज्ञाततालिङ्गकेन ज्ञानस्यानुमितिः जनिका सैव प्रमाज्ञानस्य अप्रमाज्ञानस्य तुल्यरूपेणानुमितिः । मनः प्रमारूपज्ञानस्यानुव्यवसायमुत्पादयति अप्रमारूपज्ञानस्य अनुव्यवसायं नोत्पादयतीति वक्तुं न शक्यते, एवं ज्ञाततालिङ्गेनापि स्वजनकप्रमाज्ञानस्यानुमितिर्भवति अप्रमाज्ञानस्यानुमितिर्न भवतीति वक्तुं न शक्यते । प्रमाज्ञानं यथा ज्ञाततायाः जनकं तथैवाप्रमाज्ञानमपि ज्ञाततायाः जनकम् । उभयजन्यज्ञाततायाः किमपि वैलक्षण्यं नास्ति । प्रमाव्यवसायस्यानुव्यवसायोऽप्रमात्वविलक्षणरूपेण प्रमात्वस्य ग्राहकः कथं स्यात् ? एवमेव अविशिष्टकरणजन्यज्ञानं विभक्तरूपेण

---

१. नापि विज्ञानान्तरम् । न्या० वा० ता० टी० ३ ।

२. लैङ्गिकं वा, ता० प० पृ० ३८ ।

प्रमात्वस्य ग्राहकं कथमिव स्यात् ? अविशिष्टमनसा प्रमाऽप्रमासाधारणमनुव्यवसीयमानं ज्ञानं प्रमात्वरूपेणानुव्यवसीयमानं कथमिव स्यात् ? एवमविशिष्टज्ञाततालिङ्गेन प्रमाऽप्रमासाधारणरूपेणानुमीयमानं ज्ञानं प्रमात्वरूपेणानुमीयमानं कथमिव स्यात् ।[1] प्रदर्शितापत्त्युत्तरे यदि उच्येत यत् ज्ञाने यो धर्मो विद्यते तस्यैव ज्ञानस्यानुव्यवसीयमानत्वे अनुमीयमानत्वे वा तद्धर्मविशिष्टरूपेणैवानुव्यवसीयमानमनुमीयमानं वा स्यात् । व्यवसायज्ञाने यदि प्रमात्वधर्मो वर्तते तज्ज्ञानं प्रमात्वरूपेणैवानुव्यवसीयमानं स्यात् । ज्ञाने योऽप्रमात्वधर्मो वर्तते स एवाप्रमात्वरूपेणानुव्यवसीयमानो भवेत् ।[2]

पूर्वोक्तकथनं सर्वथाऽसमीचीनं यतः एतादृशकथने अप्रमात्वस्यापि स्वतस्त्वापत्तिः स्यात् । प्रमात्वस्य स्वतस्त्वस्वीकर्तृभिरपि अप्रमात्वस्य स्वतस्त्वं नैव स्वीक्रियते । अप्रमात्वस्य स्वतः ग्रहस्वीकारेऽप्रमाज्ञानात्प्रवृत्तिरेव नोत्पद्येत शुक्तौ रजतज्ञानेऽपि रजतार्थिनस्तत्र प्रवृत्तिर्जायते । अप्रमात्वस्य स्वतः ग्रहाभावादेव प्रवृत्तिर्भवति । ज्ञानग्रहे ज्ञानस्याप्रमात्वमपि यदि गृहीतं स्यात्तदा 'इदं रजतम्' एतज्जानमप्रमैतादृशबोधे सति कस्यापि रजतार्थिनः प्रवृत्तिर्न स्यात् । अप्रमात्वस्य स्वतोऽगृहीतत्वादेव प्रवृत्तिर्भवति । अतः प्रमात्वस्येवाप्रमात्वस्य स्वतस्त्वग्रहः केऽपि न स्वीकुर्वन्ति । किन्तु येन हेतुना प्रमात्वस्य स्वतस्त्वं सिद्ध्यति तेनैवाप्रमात्वस्यापि स्वतस्त्वं सिद्ध्यति । अतः अप्रमात्वस्य स्वतस्त्वापत्तिभिया प्रमात्वस्यापि स्वतस्त्वं न भवेदिति ।[3]

एतन्न समीचीनम् । यतः प्रायः ज्ञानमेव प्रमा । प्रमाज्ञाने प्रमात्वधर्मो विद्यतेऽप्रमाज्ञानेऽपि धर्म्यंशे प्रमात्वधर्म एव । धर्म्यंशेऽप्रमा नास्ति अप्रमाज्ञानेऽपि । कस्मिन्नपि ज्ञाने धर्म्यंशे संशयो विपरीतनिश्चयो वा न भवितुमर्हति । अत एव प्रमाज्ञानस्यापि धर्म्यंशे प्रमात्वधर्मो विद्यत इति प्रमात्वधर्मः ज्ञानत्वस्य व्यापकः । प्रमात्वगोचरः संस्कार उत्कटः अप्रमात्वगोचरः संस्कार अनुत्कटः । प्रमात्वगोचरस्य संस्कारस्योत्कटत्वादप्रमाज्ञानेऽपि प्रमात्वमारोपितम् ।[4]

अप्रमाज्ञाने प्रमात्वारोप एव अप्रमा । आरोपत्वमेव अप्रामाण्यम् । अतः आरोपात्मकज्ञानस्य स्वेनैव ग्रहणे तद्गताप्रमात्वमपि तेनैव गृहीतं स्यात् । आरोपस्य गृहीतत्वे आरोपगतारोपत्वमर्थात् अप्रमात्वमवि स्वतः गृहीतं स्यादिति अप्रमात्वग्रहस्य स्वतस्त्वापत्तिः । अप्रमाज्ञाने प्रमात्वस्यारोपोऽप्रमा । अप्रमाज्ञानेऽपि प्रमात्वस्यारोप-

---

१. तद्धि मानसं वा लैङ्गिकं वा उभयमपि ज्ञाततालक्षणाल्लिङ्गाद्वा अविशिष्टाज्जायमानं कथमिव तदाभासविशिष्टं गृह्णीयात् । ता० प० पृ० ४८ ।

२. ·········विषयविशेषात् तु तथात्वे·········ता० प० पृ० ४८ ।

३. अप्रमाणस्यापि स्वत एव ग्रहणप्रसङ्गात्तत्रापि विषयवैशिष्ट्यस्य सत्त्वात् । ता० प० पृ० ४८

४. प्रमायाः प्रायिकतया तद्वासनायाः समुत्कटत्वात् अप्रमाऽपि प्रमेत्येव गृह्यते··· । ता० प०, पृ० ४९

स्वीकारेऽनवस्था स्यात्।[1] अतः प्रदर्शितरूपेण प्रमात्वस्य स्वतस्त्वस्वीकारेऽप्रमात्वस्यापि स्वतस्त्वमपरिहार्यम्। प्रमाज्ञानं स्वयं स्ववृत्तिधर्मप्रमात्वस्य ग्रहणं कर्तुं न शक्नोति एवं स्वग्राहकेण स्वगृहीतेऽपि तेन स्वगतधर्मस्य प्रमात्वं गृहीतं न स्यात्।

ज्ञानस्यावश्यवेद्यता नियता नास्ति।[2] ज्ञानस्योत्पत्तौ अवश्यमेव वेद्यमिति नियमोऽसिद्धः। ज्ञानं यदि गृहीतं न स्यात्तदा ज्ञानगतप्रमात्वधर्मस्य ज्ञानं स्यादिति चिन्तैव न करणीया। धर्मिणो गृहीताभावे तद्गतधर्मस्य ज्ञानं नैव सम्भाव्येत। ज्ञानस्यावश्यवेद्यत्वाभावेऽपि ज्ञानं कदापि गृहीतं न स्यादिति नास्ति। दैवाद् ज्ञानमपि ज्ञातं भवेत्, ज्ञानस्य कदाचित् ज्ञातत्वेऽपि ज्ञातत्वरूपेणैव ज्ञातं भवति, किन्तु प्रमात्वं चाऽप्रमात्वरूपेण ज्ञातं न भवति।[3] अतः स्वतः ज्ञानगतप्रमात्वस्य ग्रहः न स्यात् स्वतः शब्दस्यार्थद्वयमपि पूर्वमेव प्रदर्शितम्। अत्रेयमापत्तिर्यत् व्यवसायग्राहकाऽनुव्यवसायेव ज्ञाततालिङ्गकानुमित्या वा व्यवसायज्ञानस्य गृहीतत्वेऽपि ज्ञानत्वरूपेणैव गृहीतं भवेत्। किन्तु प्रमाणत्वरूपेणाप्रमात्वरूपेण वा गृहीतं न भवति। अतः प्रमात्वं ज्ञानग्राहकग्राह्यं नास्ति। अर्थात् प्रमात्वाश्रयज्ञानानुव्यवसायादिना प्रमात्वं न गृह्यते। अतः स्वतः प्रमाणत्वग्रह एवासम्भवः।

परतस्त्वमपि प्रमाणस्य वक्तुं न सक्यते यद्विषयकं व्यवसायात्मकं ज्ञानमुत्पन्नं तद्विषयेऽन्यस्य ज्ञानस्योत्पन्नत्वेऽपि तेन प्रथमव्यवसायज्ञानस्य प्रमात्वं न गृह्यते। यतः घटस्य चाक्षुषज्ञानानन्तरं घटस्य स्पार्शनज्ञान उत्पन्नेऽपि तेन घटचाक्षुषज्ञानस्य प्रमात्वं ग्रहीतुं न शक्यते। यदि चक्षुषा दृष्टं तदेव स्पृष्ट्वाऽपि जानामि एतादृशक्रमिकप्रत्यक्षद्वयस्योत्पत्तावपि द्वितीयप्रत्यक्षज्ञानेन प्रथमप्रत्यक्षज्ञानस्य प्रमाणत्वं नावधार्यते। येन ज्ञानेनान्यज्ञानस्य प्रमात्वमवधारितं भवति तस्यैव ज्ञानस्य प्रमात्वं नावधारितं चेत्तदा तेनान्यस्य प्रमात्वं कथमवधारितं स्यात्? यस्य ज्ञानस्य स्वयं प्रमात्वं नावधारितं तज्ज्ञानं कथमन्यस्य प्रमात्वं बोधयेत्। यदि स्वतः परतो वा प्रमात्वस्य ग्रह एव न भवितुमर्हति तदा प्रमात्वस्य ग्रह एव न स्यात्। एतज्ज्ञानं प्रमा, एतज्ज्ञानमप्रमा, एतत्प्रमाणमेतदप्रमाणमेतादृश-निःशङ्कलोकव्यवहारः सर्वसिद्धः। प्रमात्वादिव्यवहारस्य सर्वजनप्रसिद्धत्वाद् व्यवहर्तव्यप्रमात्वादिज्ञानमत्यावश्यकम्।

अस्मिन् विषये प्रभाकरेणोक्तं यत् ज्ञानस्य स्वसम्वेदनास्वीकारे प्रमात्वग्रहः दुर्घटः स्यात्। ज्ञानस्य ज्ञानान्तरेण ग्रहणे तु ज्ञानं स्वयमेव स्वस्य ग्रहणं कर्तुं न शक्नोतीति स्वीकारे ज्ञानस्य प्रमात्वग्रहः दुर्घटः स्यात्। ज्ञानस्य स्वसम्वेदनत्व-

---

१. ...आरोपकस्य यदारोपकत्वमप्रामाण्यं तेनैव तस्य ग्रहे स्वत एवाप्रामाण्यस्यापि ग्रहप्रसङ्गः तत्रापि प्रामाण्यारोपेऽनवस्था स्यादिति परिहरति। न्या० नि० प्र० पृ० ४९।

२. ...न च ज्ञानमवश्यं ज्ञेयम...स्या० न्या० नि० प्र० पृ० ४९।

३. ....यदि तु दैवाद् गृह्यते तदा ज्ञानमित्येन न तु प्रमाणत्वप्रमाणं वेत्यपी। ता० वा० ४९।

स्वीकारे प्रदर्शितदोषस्य सम्भावनैव नास्ति। ज्ञानं स्वयं स्वस्य विषयो भवति। प्रमात्वविशिष्टज्ञानं स्वयं स्वस्य विषयो भवतीति स्वीकारेऽनवस्थादिः दोषो नास्ति। ज्ञानस्य प्रमात्वं यदि ज्ञानान्तरेण गृह्यते चेत्तदा तस्यापि ज्ञानान्तरेणेत्यनवस्था-दोषः दुष्परिहरः स्यात्। ज्ञानस्य स्वसम्वेदनाय तु अनवस्थादिदोषाणामवसर एव नास्ति।[1]

अत्र तात्पर्यटीकाकृद्भिरुच्यते यत् ज्ञानस्य स्वसम्वेदनत्वस्वीकारेऽपि प्रमात्व-ग्रहो न भवितुमर्हति।[2] यतः स्वसम्वेदनं प्रमाणसिद्धम्। ज्ञानस्य स्वसम्वेदनत्व-स्वीकारे यदि प्रमात्वस्य स्वतस्त्वमुपपन्नं स्यात्तदा प्रमात्वस्य स्वतस्त्वानुरोधेन ज्ञानस्य स्वसम्वेदनत्वमपि स्वीकृतं स्यात्। प्रमाणव्यवहारस्य सौष्ठवाथ ज्ञानस्य स्वसम्वेदनत्वमित्यपि तदा स्वीकृतं स्याद्यदा स्वसम्वेदनेन प्रमात्वग्रहः सम्भावितः स्यात्। किन्तु तथा नास्ति। प्रमाज्ञानं स्वयं स्वस्य ग्रहणं करोतीति स्वधर्मस्य प्रमात्वस्यापि ग्रहणं कर्तुं शक्नुयादित्येव तु ज्ञानस्यात्मसम्वेदनवादिन आशा। स्वसम्वेदनपक्षे यथा प्रमाज्ञानं स्वसम्वेदनं तथैव प्रमाभासज्ञानमपि स्वसम्वेदनं स्यात्। आभासस्य स्वसम्वेदनत्वे च तद्धर्मत्वमपि गृहीतं स्यात्, तथा सति प्रमाभासत्वस्यापि प्रमात्वस्येव स्वाश्रयग्राह्यत्वे केनापि मिथ्याज्ञानेन पुरुषस्य प्रवत्तिर्नोत्पन्ना स्यात्। अर्थात् अप्रमाज्ञानेनाप्रमात्वस्य ग्रहणे मिथ्याज्ञानत्वं स्यात्तथा च तेन प्रवृत्तिर्नोत्पन्ना स्यात्। अप्रमात्वरूपेण ग्रहीतं ज्ञानं प्रवृत्तिजनकं न भवति, परन्तु अप्रमाज्ञानेन प्रवृत्तिजनकमिति सर्वैः स्वीकार्यम्। अतः, अप्रमाज्ञानं प्रवृत्तिजनकं भवतीति अप्रमात्वस्य परतस्त्वं स्वीकरणीयमेव।[3]

प्रदर्शितरीत्या प्राभाकरमते स्वतस्त्वसमर्थने अप्रमात्वस्यापि स्वतस्त्वम-परिहार्यम्, परं, प्रभाकरः अप्रमाज्ञानमेव न स्वीकरोति। यद्यपि अनुभवमात्रस्य प्रमात्वं तैरङ्गीकृतन्तथापि स्मृतेरयथार्थत्वं नाङ्गीक्रियते। स्मृतेर्यथार्थत्वमनुभव-यथार्थत्वसापेक्षन्न, तथा च सापेक्षत्वप्रयुक्तं स्मृतेः प्रमात्वन्नास्ति। अतः, प्रभाकर-मतेऽगृहीतभेदज्ञानद्वयमेवाप्रमात्वम्। अत्र च न्यायमतसम्मतमप्रमात्वं तत्र नास्ति। तथा च अप्रमात्वमगृहीतभेदज्ञानद्वयस्वरूपम्, न तु धर्मः। किन्तु न्यायमतेऽप्रमा-ज्ञानस्य धर्मोऽप्रमात्वम्। अप्रमात्वस्यागृहीतभेदज्ञानद्वयस्वरूपत्वेऽपि विसम्वादिप्रवृत्ति-

---

१. ततः स्वसम्वेदननय एवास्तु तेन ह्ययं निर्वहयेत्। यदि तत्र किञ्चिदनवस्थादिकं पश्यामः··· । ता० प० पृ० ५०।

२. एतेन स्वसम्वेदननयेऽप्यव्यभिचारग्रहणं प्रयुक्तम्। न्या० वा० ता० पृ० ३।

३. असम्वेदननयो हि न तावत्प्रमाणसिद्धः। कदाचित्प्रमाणव्यवहारसौष्ठवात् स्वीक्रियेतापि यद्ययं तेन निर्वहेत्। नत्वेदस्ति। यथाहि प्रमाणं स्वात्मानं गृह्णत् प्रामाण्यं गृह्णाति तथा तदाऽऽभासमपि गृह्णीयात्। तथा च सर्वमिथ्या-ज्ञानादप्रवृत्तिप्रसङ्गस्तदवस्थः। ता० प० पृ० ५०।

स्तादृशज्ञानद्वयादुत्पद्यते। विसम्वादिप्रवृत्तिजनकत्वादेवागृहीतभेदज्ञानद्वयस्याप्रमात्वव्यवहारो भवति[1]।

भवतु नाम प्राभाकरमतेऽप्रमाज्ञानमपि प्रवृत्तिजनकम्, यतः, अप्रमाज्ञानेऽपि प्रमात्वारोपनिबन्धना प्रवृत्तिजनकता भवितुमर्हति। परमेतत्समाधानं न समीचीनम्, यतः, प्रभाकरमतेऽगृहीतभेदज्ञानद्वयस्यैवाप्रमात्वम्। ज्ञानस्य स्वसम्वेदनत्वात् ज्ञानात्मभूताप्रमात्वस्य ग्रहणमप्यपरिहार्यम्। ज्ञानात्मभूताप्रमात्वे प्रमात्वस्यारोपो न भवितुमर्हति। ज्ञानात्मभूतस्याप्रामाण्यस्य अग्रहणे सत्येव प्रमात्वारोपो भवितुमर्हति, परं ज्ञानात्मभूताप्रमात्वस्याग्रहणमसम्भवम्। यतः, एतन्मते ज्ञानं स्वसम्वेदनमेव। अप्रमात्वमपि ज्ञानस्वरूपं ज्ञानात्मभूतम्, तथा चाप्रमात्वस्याग्रहणे ज्ञानस्यैवाग्रहणं प्राप्नोति। अर्थात् ज्ञानेन ज्ञानस्य ग्रहणं न भवतीति स्वसम्वेदनसिद्धान्तभङ्गापत्तेः।[2]

यदि कोऽपि प्राभाकरो वदेद्यत् ज्ञानं ज्ञानस्याप्रमात्वञ्च नाभिन्नम्। ज्ञानं धर्मी अप्रमात्वञ्च धर्मः। धर्मधर्मिणोश्च भेदः। अतः, ज्ञानस्य स्वसम्वेदनत्वाज्ज्ञानरूपेण गृहीते सत्यपि ज्ञानधर्माप्रामाण्यस्याग्रहणं स्यात्। अप्रमात्वस्याग्रहणेऽगृहीताप्रमात्वज्ञानात्प्रवृत्तिरपि उत्पद्येत। गृहीताप्रमात्वज्ञानादेव प्रवृत्तिर्नोत्पद्यतेऽर्थात् यज्ज्ञानमप्रमात्वरूपेण ज्ञातं तत्प्रवृत्तिजनकं न भवति।[3] एकदेशिन एतत्कथनं नसङ्गतम्। धर्मधर्मिणोर्भेदस्वीकाराद् अप्रमात्वस्य परतस्त्वोपपादने प्रमात्वस्यापि परतस्त्वापत्तिः स्यात्। प्रमाज्ञानं स्वसम्वेदनमिति स्वस्वरूपे गृहीतेऽपि प्रमाज्ञानस्य धर्मः प्रमात्वं भिन्नमिति तदवश्यमेव गृहीतं स्यादित्यपि न समीचीनम्। अतः प्रमाज्ञानस्य स्वरूपतः गृहीतत्वेऽपि तद्धर्मः प्रमात्वमगृहीतं स्यादिति प्रमात्वस्य स्वतस्त्वसिद्धान्तो भज्येत अतः ज्ञानस्य स्वसम्वेदनत्वस्वीकारेऽपि ज्ञानेन ज्ञानस्वरूपस्यैव वेदनं स्यात् न तु स्वधर्मस्य प्रमात्वस्य वेदनं सम्भवति। एतत्पक्षस्वीकारेऽप्रमाज्ञानस्याप्रवर्तकत्वमथवा प्रमात्वस्य परतस्त्वमिति दोषयोरेकस्तु अपरिहार्य एव। अत एव तात्पर्यटीकाकारः कथयति यत् ज्ञानस्य स्वसम्वेदनत्वं स्वीकृत्यापि प्रमात्वस्य स्वतस्त्वं नैव रक्षितं स्यादिति।

### प्रामाण्यपरतस्त्वनिरुपम्

प्रमात्वस्य परतस्त्ववादिनामयमाशयः। घटज्ञानस्योत्पत्त्यनन्तरं सा ज्ञानव्यक्तिः स्वगतप्रमात्वधर्मस्य ग्राहिका न भवितुमर्हति। एवमेव घटविषयकज्ञानव्यक्तिविषयकं ज्ञानमर्थात् घटज्ञानानुव्यवसायेन ज्ञाततालिङ्गघटज्ञानविषयकानुमित्या वा ग्राह्यघटज्ञानस्य प्रमात्वं ग्रहीतुं न शक्यते, एवमेव प्रमात्वस्य स्वतस्त्वस्यासङ्गतत्वेऽपि

---

१. प्राभाकरमतेऽगृहीतभेदं ज्ञानस्वरूपमेवाप्रामाण्यसद्··· । न्या० वि० पृ० ५०

२. ······ननु तत्रापि प्रामाण्यारोपान् प्रवृत्तिः, स्वात्मभूतस्याप्रामाण्यस्य स्वसम्वेदनतया ग्रहणे समारोपासम्भवात्। अग्रहणे वा स्वसम्वेदनत्वयानुपपत्तेः। ता० प० पृ० ५१

३. धर्मधर्मिणोर्भेदानस्वरूपग्रहणेऽपि ताप्रामाण्यस्वरूपधर्मग्रहणति। त० प० पृ० ५१

घटज्ञानस्य प्रमात्वं घटविषयकज्ञानान्तरेण ग्रहीतुं शक्यते। घटविषयकज्ञानान्तरमेव पराभिधेयम्। एतदपरघटविषयकज्ञानान्तरेण पूर्वघटज्ञानस्य प्रमात्वं ग्रहीतुं शक्यते। घटज्ञानविषयकज्ञानस्य घटज्ञानाद्भिन्नत्वेऽपि तत्परं नास्ति। किन्तु तत्स्वीयमेव। स्वीयज्ञानेन प्रमात्वं न गृह्यत इति प्रतिपादितमेव। स्वस्मात् स्वीयाद्वा भिन्नं ज्ञानान्तर मेवात्र परम्। एतत्परज्ञानेन पूर्वज्ञानस्य प्रमात्वं गृहीतं भवति। एतदेव प्रमात्वपरतस्त्ववादिनां कथा।

अत्रेदं चिन्तनीयम् परशब्दार्थः कः? परज्ञानेन कस्यावगनिर्भवति? यथा घटविषयकचाक्षुषज्ञानाद्भिन्नघटविषयकस्पार्शनज्ञानं भिन्नं ज्ञानम्। स्वविषयविषयकज्ञानान्तरमेव परज्ञानम्। अनेन पूर्वज्ञानस्य प्रमात्वं गृह्यते? अथवा घटचाक्षुषज्ञानान्तरं घटजन्यजलाहरणादिक्रियायाः ज्ञानम् घटस्यार्थं क्रियाविषयकज्ञानमेव परज्ञानम्। एतत्परज्ञानेनार्थात् घटसाध्यजलाहरणादिक्रियाज्ञानेन घटचाक्षुषज्ञानस्य प्रमात्वं गृह्यते? अथ वा ज्ञानगृहीतविषयव्याप्यज्ञानविषयाद्भिन्नवस्त्वन्तरदर्शनमेव परज्ञानम्? तेन किं पूर्वज्ञानस्य प्रमात्वं गृह्यते? यथा वह्निदर्शनान्तरं वह्निव्याप्यधूमदर्शनेन वह्निज्ञानस्य प्रमात्वं गृह्यते? प्रमात्वस्य परतस्त्ववादिभिरेतदेवोच्येत किम्? ज्ञानपरतस्त्ववादिनां मते ज्ञानत्रयस्य परज्ञानरूपेण निर्देशो विद्यते।

(१) ज्ञानविषयकज्ञानान्तरम्।

(२) ज्ञानविषयजन्यार्थक्रियाज्ञानम्।

(३) ज्ञानविषयव्याप्यवस्त्वन्तरज्ञानम्।

एतत्त्रितयज्ञानमेव 'परज्ञानम्' एषु त्रिषु केनाप्येकेन ज्ञानेन पूर्वज्ञानस्य प्रमात्वं गृह्यते। एष एव परतस्त्ववादिनामभिप्रायः। प्रमात्वस्य परतस्त्ववादिनः विविधज्ञानस्य परत्वं निर्दिष्टम्। तत्र प्रथमं ज्ञानगृहीतविषयविषयकं ज्ञानान्तरम् प्रथमज्ञानगृहीतविषयविषयकज्ञानान्तरं समानजातीयः सम्बाद उच्यते। एतत्सजातीयसम्बादेन पूर्वज्ञानस्य प्रमात्वं गृह्यते। यथा प्रात्यक्षिकवह्निज्ञानानन्तरं तद्वह्निविषयकमपरमेकं प्रत्यक्षज्ञानं जायते। एतत्परवर्ति-प्रत्यक्षज्ञानेन पूर्ववर्तिनो वह्निप्रत्यक्षस्य प्रमात्वं गृह्यते। एकविषयकज्ञानन्तरमेव पूर्वज्ञानस्य सम्बाद उच्यते। एतत्सम्बादज्ञानं द्विविधम्। प्रत्यक्षज्ञानसमानेन्द्रियजज्ञानान्तरम्, इन्द्रियान्तरजज्ञानान्तरम्[१] प्रत्यक्षज्ञानस्य संवादः। यथा वह्निविषयकचाक्षुषज्ञानान्तरमेव वह्निविषयकं चाक्षुषज्ञानान्तरमेव पूर्वज्ञानस्य संवादः। अयमेव समानेन्द्रियजसम्बादः। चक्षुषा वह्निदर्शनानन्तरम् त्वगिन्द्रियेण तद्वह्निस्पर्शे सति वह्निविषयकं स्पार्शनज्ञानं पूर्ववर्तिचाक्षुषज्ञानस्येन्द्रियान्तरजसम्वादः।[२]

---

१. नापि परतः। परं हि तद्गोचरं वा ज्ञानमभ्युपेयेतार्थ क्रियानिर्भासं वा ज्ञानान्तरं तद्गोचरनान्तरीयकार्थान्तरदर्शनं वा? न्या० वा० ता० ता० पृ० ३।

२. प्रात्यक्षिके च वह्निविज्ञाने प्रात्यक्षिकमेव वह्निविज्ञानमिति यावत्। तच्च द्विविधं समानेन्द्रियजमिन्द्रियान्तरजंच। ता० प० पृ० ५१-२।

एवमेवानुमितौ धूमलिङ्गेन वह्निविषयकप्रमायाः प्रमाणस्य च विषये दार्शनिकानां महान् मतभेदो दृश्यते। न्यायविन्दुटीकायां धर्मोत्तराचार्येण प्रमाण-सम्बन्धे चतुर्विधा विप्रतिपत्तयः प्रदर्शिताः।

१. संख्याविप्रतिपत्तिः। अर्थात् प्रमाणमेकं, द्विविधम् च ततोऽधिकम्वा।

२. लक्षणविप्रतिपत्तिः। दार्शनिकाः स्वसिद्धान्तनुसारं प्रमाणस्य विभिन्नं लक्षणम्प्रदर्शयन्ति। प्रत्यक्षादीनामपि तथैव विभिन्नरूपेण लक्षणं वर्णयन्ति। सिद्धान्त-भेदादेवलक्षणभेदः। संख्याविप्रत्तिरपि सिद्धान्तभेद-निबन्धनैव।

३. प्रत्यक्षादिप्रमाणेषु विषयविप्रतिपत्तिरपि शास्त्रकारैः प्रदर्शिता। तत्र केषाञ्चिन्मते प्रत्यक्षं स्वलक्षणमात्रग्राहि। केषाञ्चिन्मते च प्रत्यक्षं स्वलक्षणं सामान्य-लक्षणञ्चेत्युभयग्राहि। केषाञ्चिन्मते च स्वलक्षणं प्रधानरूपेण सामान्यलक्षणञ्चा-प्रधानरूपेण प्रत्यक्षविषयो भवति। केषाञ्चिन्मते च प्रत्यक्षं सन्मात्रग्राहि। तथा च प्रमाणविषयेऽपि दार्शनिकानां मतभेद उपलभ्यते।

४. प्रमाणफलविषयेऽपि महान् मतभेद उपलभ्यते। प्रमाणफलं प्रमितिः। इयञ्च प्रमितिः किं विषयसम्वेदनरूपाथवा विषयप्राप्तिरूपेत्यादिरूपेण शास्त्रे महान् मतवैभिन्न्यं दृश्यते।[1]

भाट्टमीमांसकमते "अनधिगतार्थगन्तृ प्रमाणम्" सौत्रान्तिकबौद्धमते साकार-विज्ञाने विषयसारूप्यमेव। वैभाषिकमते निराकारविज्ञानस्यात्मानात्मप्रकाशन-सामर्थ्यमेव प्रमाणम्। विज्ञानं यथा स्वस्वरूपप्रकाशकन्तथैव फलस्वरूपस्यापि प्रकाशकम्। घटविज्ञानं विज्ञानस्य घटस्य च प्रकाशकमित्यात्मानात्मप्रकाशक-मित्युच्यते। आत्मशब्देन स्वरूपस्य अनात्मशब्देन च परस्वरूपविषयादेः प्रकाशकं निराकारं विज्ञानं भवति। एतदेव वैभाषिकमतम्।

नैयायिकानां मते यथार्थोपलब्धिरेव प्रमा तस्याः प्रमायाः साधनं प्रमाणम्।[2]

मीमांसका विचारयन्ति यत् प्रमाणान्तराधिगतेऽर्थे प्रमाणान्तरस्योपयोगो नास्ति, यतः प्रमाणान्तराधिगतेऽर्थे प्रमाणान्तरप्रवृत्तौ किं फलं स्यात्? अर्थाधि-गतिरेवहि फलम्; सा च अर्थाधिगतिः पूर्वत एव सिद्धा। यद्युच्येत प्रमाणाधिग-तस्याप्यर्थस्य प्रमाणान्तराधिगतेरावश्यकता विद्यत एव, यतः, या अर्थाधिगतिः सा परवर्तिकाले नास्ति, परन्तु परवर्तिकालेऽपि तदर्थव्यवहारो भवति।

---

१. चतुर्विधा चात्र विप्रतिपत्तिः, संख्यालक्षणगोचरफलविषयाः। न्या० वि० टी० टं० ३५।

२. केदिाहुरनधिगतार्थगन्तृ प्रमाणमिति। विषयसारूप्यं साकारस्य। विषयसारूप्यं साकारस्य विज्ञानस्येत्यन्ये। विज्ञानस्यैवानाकारस्यात्मात्मप्रकाशनसामर्थ्य-मित्यपरे। उपलब्धि-साधनमिति वृद्धाः। न्या० वा० ता० टी० पृ० १५।

परवर्तिकाले यो ह्यर्थस्य व्यवहारः सः पूर्वतनाधिगतिपूर्वको नास्ति। यतः, पूर्वतनाधिगतिरिदानीं न विद्यते। परवर्तिव्यवहारार्थं प्रमाणान्तराधिगतिरपेक्षितैव। तथा चोत्तरोत्तरव्यवहारनिर्वाहार्थमधिगतार्थस्यापि प्रमाणान्तरेऽधिगतिः स्वीकरणीयैव।[१]

अत्र मीमांसकाः प्रवदन्ति यदधिगतार्थाधिगतिस्वीकारः सर्वथा निष्फलः। प्रथमाधिगतेरुत्पन्नसंस्कारेणाधिगतार्थस्मृतिसन्ततिः स्यात् एवञ्चार्थस्मृतिवशादेव व्यवहार उपपद्येत। अधिगतार्थस्मृतौ अधिगतार्थस्य प्रमाणान्तरेणाधिगतौ अत्र स्मृतौ अधिगतौ च न किमपि वैलक्षण्यम्, उभयोरधिगतार्थविषयकत्वात्। अधिगतार्थविषयकाधिगतेः करणं प्रमाणमपि न भवितुमर्हति, यतः, अधिगतविषयिणी अधिगतिर्न प्रमाणम्। प्रमाणजन्याधिगतेरपि अधिगतविषयकत्वेऽधिगतेरपि स्मृतित्वापत्तिर्दुर्निवारा स्यात्। स्मृतिसन्तत्यैव परवर्तिव्यवहारनिष्पत्तौ प्रमाणजन्याधिगतिसन्ततिकल्पना वृथैव। अधिगतविषयिणी अधिगतिः स्मृतिरेव। प्रमाणान्तरेणाधिगतिकल्पनायां केवलं कल्पनागौरवमेव, पिष्टपेषणमात्रमेतत्स्यादिति।[२]

प्रमायाः करणमेव प्रमाणम्। तथा च प्रमाणं कारणविशेषः। साधकतमं कारणमेव च करणम्। साधकतमं कारणं हि कारणविशेषः, तस्यैव च करणत्वम्। प्रमा साध्या करणञ्च साधकतमम्। एतत्साध्यप्रमाकरणेन सिद्धौ सत्यामेतत्करणसजातीयकरणान्तरस्यैतत्प्रमां प्रति साधकत्वं न भवितुमर्हति। असिद्धसाध्यमेव साधकाकाङ्क्षां कुरुते। सिद्धं न साधकमाकङ्क्षते। यावत्प्रमाऽसिद्धा तावत्क्षणमेव साधकमाकाङ्क्षते। अच्छिन्नच्छेदन एव परशोः साधकत्वम्। अतः छिन्नं प्रति परशुः करणं न भवितुमर्हति। तथा चाप्रमितविषयप्रवृत्तमिन्द्रियादिकं प्रमाणम्। प्रमितविषये प्रवृत्तमिन्द्रियादिकं नैव प्रमाणं भवितुमर्हति। अत एव मीमांसका अनधिगतार्थज्ञापकमेव प्रमाणमङ्गीकुर्वन्ति।[३]

प्रभाकरमतानुसारिणो मीमांसका अनुभवमात्रमेव प्रमेति कथयन्ति। स्मृतिभिन्नं ज्ञानमनुभवः, अनुभवकरणं प्रमाणम्। इमेऽयथार्थज्ञानं न स्वीकुर्वन्ति, अत एव यथार्थानुभवः प्रमेति न वदन्ति। अयथार्थानुभवः न भवत्येव। अत एवानुभवे 'यथार्थत्वम्' इति विशेषणेन कोऽपि व्यावर्त्यो न भवति। व्यावर्तकमेव विशेषणं भवति। व्यावर्त्याभावे विशेषणं कस्य व्यावर्तकं भवेत्? अतः प्रभाकरमतानुसारिणो मीमांसका अनुभवमात्रं प्रमा तत्करणञ्च प्रमाणमिति।

१. अधिगतेऽर्थे प्रमाणान्तरस्य न तावदर्थाधिगमं प्रत्युपयोगस्तस्य प्रागेव प्रमाणसिद्धत्वात्। नाप्युत्तरोत्तरप्रवाहव्यवहारनिर्वाहं प्रति ता० प० पृ० १४५।

२. तस्यापि तज्जन्यसंस्कारप्रभवस्मृतिसन्ततिसिद्धत्वात्। ता० प० पृ० १४५।

३. प्रमाणं हि कारणविशेषः, कारणं च साधकतमम्। न च साध्यसिद्धौ तज्जातीयस्य साधकत्वमस्ति छिन्ने परशोरिव तस्माद्यथाह च्छिन्नविषयतया व्याप्रियमाणः परशुः छेदने भवति, तथाऽप्रमिते विषये व्याप्रियमाणमिन्द्रियादिकं प्रमाणमिति मीमांसकाः। ता० प० पृ० १५२।

सौत्रान्तिकाणां मते प्रमाणस्य फलमर्थप्रतीतिरिति। अर्थप्रतीतिरेव प्रमा। प्रमारूपफलस्य जनकं प्रमाणम्। अर्थे प्रमातिरिक्तमन्यं किमपि कर्तव्यं प्रमाणस्य नास्ति। यद्युच्येतार्थेन सह प्रमाणस्य प्राप्तिरस्ति, अतः, प्राप्तिरेव प्रमातिरिक्ता प्रमाणस्य कर्तव्यभूता। परमेतत्कथनं न सङ्गतम्। प्राप्तिस्तु प्रवृत्तिरेव। प्रवृत्तिरपि प्रवृत्तियोग्यार्थस्य उपलम्भनमात्रम्। उपेक्षणीयार्थविषयकं प्रमाणं प्रवृत्तिजनकं न भवति। तथापि प्रवृत्तियोग्यार्थस्योपलम्भनमुत्पादयति। उपलब्धार्थे हेयत्वस्योपादेयत्वस्य वा बोधाभावे स उपेक्षणीयरूपेण गृहीतो भवति। उपलब्धेऽर्थे यस्योपादेयत्वमवगम्यते तत्र प्रवृत्तिः यस्य च हेयत्वन्ततो निवृत्तिर्भवति। अतः, प्रमाणस्य अर्थप्रतीतिव्यतिरिक्ता प्राप्तिः प्रवृत्तिर्वा अतिरिक्तं नास्ति। तस्मादेव सौत्रान्तिकाः कथयन्ति यत् प्रत्यक्षज्ञानमर्थप्रतीतिरूपमिति प्रमाणफलं प्रमेति वा। प्रमाणमपि तदेव यदर्थव्यवस्थापकम्।[1]

अस्मिन् प्रसङ्गे एतत्तु विशेषरूपेणोल्लेखयोग्यं यदुदयनाचार्यः सौत्रान्तिकाणां प्रमाणफलव्यवस्थाप्रदर्शनवेलायां न्यायविन्दुग्रन्थात्तदीयामुक्तिमविकलामुद्धरति। तदीयटीकाया आशयञ्चानुवदति। अत्र सारूप्यशब्दार्थव्याख्याने धर्मोत्तराचार्यो ब्रूते—"तच्च सारूप्यं सादृश्यम् आकार इत्याभास इत्यपि व्यपदिश्यते" (न्या० वी० टी० पृ० ८१)।

दुर्वेकमिश्रेणास्मिन्प्रसङ्गे एतदुक्तं यत् "ग्राह्याकारोऽर्थसारूपाख्यः आत्मनः संविदमर्थं संविदमादर्शयन्नर्थे प्रमाणम्। अतएव बाह्योऽर्थ प्रमेयः। वस्तुतः संविदपीयमर्थसंबन्धिनी व्यवसीयमानाऽर्थसंवित्तिः फलमिति।[2] वर्धमानोपाध्यायेनोक्तं यत् विषयव्यवस्थापकस्य प्रमाणावात्तादृशस्य चान्यस्याभावात् परिशेषेणाकार एव तादृश इति स एव प्रमाणमित्यर्थः।[3]

अयमाशयः—एक एव नीलाकारसंवेदने नीलाकारः नीलसंवेदनस्य व्यवस्थापक इति प्रमाणम्। नीलसंवेदव्यव्यवस्थाप्यमिति प्रमितिः—अतः एकस्मिन् ज्ञाने प्रमाणं तत्फलञ्च प्रमितिरवसीयते। नीलाकारः प्रमाणम्, नीलप्रमितिः फलम्। एतद्द्वयमपि एकस्मिन्नेव नीलाकारजाने तिष्ठति। एतच्च न न्यायमतसिद्धं करणम्। एतञ्च व्यवस्थापक नीलाकारज्ञाने नीलाकारः पीताकारं व्यावर्त्य एतन्नीलस्यैव ज्ञानमिति व्यवस्थापकं भवति। एकमेव ज्ञानमाकारांशे प्रमाणं ज्ञानांशे फलम्।

१. ..........फलं तावत्प्रमाणस्यार्थ प्रतीतिरेव प्रमारूपत्वात्। यदि प्रमाणस्यार्थे प्रमातिरिक्तमपि किञ्चित्कर्तव्यमस्ति। प्राप्तिरपिप्रवृत्तिरेव। प्रवृत्तिरपि प्रवृत्तियोग्यार्थोपलम्भनमेव। तस्मात् प्रमाणफलस्यार्थप्रतीतातिरिक्तं न किञ्चित्फलमिति। यदाह—तदेव प्रत्यक्षज्ञानं प्रमाणफलमर्थप्रतीतिरूपत्वादिति (न्या० वि० पृ० ७९) प्रमाणमपि तदेव यदर्थं व्यवस्थापयति। ता० प०, पृ० १५२-५३।

२. धर्मोत्तर प्रदीप ८३।

३. न्या० नि० प्र०, पृ० १५३।

न्यायमते प्रमाणं फलञ्चात्यन्तं भिन्नं वस्तु। प्रमितेः करणमेव न प्रमितिः। प्रमाणेन सह प्रमितेः जन्यजनकभावः। जन्यजनकभावयुक्तं प्रमाणं तत्प्रमितिश्च नैकं वस्तु। किन्तु सौत्रान्तिकमते एकमेव ज्ञानं प्रमाणं प्रमितिश्च। एकमेव ज्ञानं व्यवस्थापकव्यवस्थाप्यभावनिबन्धनं प्रमाणं प्रमितिश्च भवति। एकं ज्ञानमेव किञ्चिद्रूपेण प्रमाणं किञ्चिद्रूपेण प्रमाणफलम्। अनयोः रूपद्वययोः व्यवस्थापकः प्रमाणं व्यवस्थाप्यञ्च प्रमितिः।[1] यथा नीलवस्तुनः उत्पन्नं विज्ञानगतं नीलसारूप्यं नीलसम्वेदनव्यवस्थापकमिति तत्प्रमाणम्। एतत्प्रमाणात् अर्थात् विषयसारूप्यात् तस्मिन् ज्ञाने नीलसम्वेदनरूपता व्यवस्थाप्या भवति। रूपभेदादेव एकस्य विज्ञानस्यैव व्यवस्थाप्यव्यवस्थापकभावो नानुपपन्नः। विज्ञानेऽनुभूतं विषयसारूप्यमेव व्यवस्थानहेतुः एवं तेन तस्य विज्ञानस्य नीलसम्वेदनरूपता व्यवस्थाप्यमाना सती प्रमाणफलम्। विज्ञाने विषयसारूप्यमसारूप्यव्यावृत्त्या व्यवस्थाहेतुरिति। एवं नीलसम्वेदनस्यानीलबोधव्यावृत्तिद्वारा नीलबोधरूपेण व्यवस्थाप्यत्वम्। बौद्धप्रदर्शितस्वभावानुमाने यथा एकमेव वस्तु किञ्चिद्रूपेण गम्यं किञ्चिद्रूपेण गमकं भवति। अयं, वृक्षः, शिंशपात्वात्, एतादृशानुमाने वृक्षत्वं गम्यं शिंशपात्वञ्च गमकम्। अशिंशपाव्यावृत्त्या शिंशपात्वं गमकम् अवृक्षत्वव्यावृत्त्या च वृक्षत्वं गम्यं भवति।

सौत्रान्तिकाः कथयन्ति सम्यग्ज्ञाननिबन्धनैवार्थसिद्धिः, मिथ्याज्ञानादर्थसिद्धिर्न भवति। ज्ञानं यदा प्रदर्शितार्थं प्रापयति तदेवार्थसिद्धिर्भवति। सम्यग्ज्ञानमेव अर्थस्य प्रापकं भवति। यद्धि विज्ञानं प्रदर्शितार्थप्रापणे समर्थो न भवति तन्मिथ्याज्ञानम्। अप्रापकं ज्ञानमर्थसिद्धेः निबन्धनं न भवितुमर्हति। प्रापकज्ञानमेवार्थसिद्धेः निबन्धनं भवति। अत एव मिथ्याज्ञानादर्थसिद्धिर्न भवति। सम्यग्ज्ञानदेवार्थसिद्धिर्भवति। अत एव सौत्रान्तिकाः प्रापकज्ञानस्यैव प्रमाणत्वमङ्गीकुर्वन्ति। ज्ञाने या अर्थप्रापिका शक्तिः सा ज्ञानमर्थाविनाभावीति अर्थात् अर्थादुत्पन्नं भवतीति कृत्वा तन्नास्ति। बीजादुत्पन्नमङ्कुरं बीजाविनाभावीति अङ्कुरं बीजस्य प्रापकं न भवति। अत एव ज्ञानस्यार्थादुत्पन्नत्वेऽपि ज्ञानस्यार्थप्रापकव्यापारः भिन्न एव। अर्थाविनाभावित्वमेव न प्रापकव्यापारः। येन व्यापारेण ज्ञानमर्थस्य प्रापकं सत् इति स व्यापार एव प्रमाणफलमर्थात् प्रमितिफलम्। प्रमिति रूपव्यापारस्यानुष्ठानं विधायैव प्रमाणज्ञानं प्रापकं भवति। एतत्प्रापकप्रमाणव्यापारप्रवृत्तिविषयप्रदर्शनभूतः। विषयप्रापक-

---

१. (क) .....प्रमाणमति तदेव यदर्थं व्यवस्थापयति। अर्थमपि तदेव व्यवस्थापयति। यदर्थं प्रतीतिं तदीयता नियमति। ता० प० पृ० १५३।

....,.........न चात्र जन्यजनकभावनिबन्धनः साध्यसाधनभावः, येनैकस्मिन् वस्तुनि विरोधः स्यात्। अपि तु व्यवस्थाप्यव्यवस्थापनभावेन। तत एकस्य वस्तुनः किञ्चिद्रूपं प्रमाणं किञ्चित् प्रमाणफलं न विरुध्यते।

(ख) व्यवस्थापनहेतुर्हि सारूप्यं तस्य ज्ञानस्य; व्यवस्थाप्यं च नीलसम्वेदनरूपम्। न्या० बि० टी० पृ० ८३।

प्रमाणस्य प्रवृत्तिविषयप्रदर्शनमेव व्यापारः। एतत्प्रवृत्तिविषयप्रदर्शनमेव प्रमितिः[1]। प्रवृत्तिविषयप्रदर्शनं प्रमितिः एवं ज्ञाने विषयसारूप्यं सादृश्यं वा प्रमाणम्। यस्माज्ज्ञानाद्यज्ज्ञानमुत्पद्यते तज्ज्ञानं तद्विषयसदृशं भवति। ज्ञाने यद्विषयसादृश्यं तदेव विज्ञानस्य आकार आभासो वा भवति। एतत्सादृश्यज्ञानाद्भिन्नं वस्तु नास्ति। सादृश्यज्ञानाद्भिन्नवस्तुनोऽभावेऽपि विषयसारूप्यवशादेवार्थबोधसिद्धिर्जायते। विज्ञानं नीलाभासो भवतीति नीलप्रतीतिः सिद्ध्यति। चक्षुरादिकरणाद् विज्ञानमुत्पद्यते इति विज्ञानं नीलसम्वेदनरूपतां न भजते। किन्तु विज्ञानं नीलसदृशं भवतीति नील-सम्वेदनरूपेण व्यवस्थितं भवति। प्रदर्शितरूपेण सौत्रान्तिका एकस्यैव विज्ञानस्य प्रमाणरूपतां प्रमितिरूपतां स्वीकुर्वन्ति।[2]

सौत्रान्तिकाः यद्यपि एकविज्ञान एव प्रमाणं फल-भावं च स्वीकुर्वन्ति, तथापि नैयायिका एतस्यात्यन्तं विरोधिनः। एका ज्ञानव्यक्तिः प्रमाणं प्रमितिः फलञ्चेत्युभय-रूपेति नितान्तमसङ्गतम्। यतः नैयायिकाः प्रमाणप्रमित्योः जन्यजनकभावं स्वीकुर्वन्ति। प्रमितिः जन्या प्रमाणं जनकम्। न तु सौत्रान्तिकस्येव केवलं व्यवस्थाप्य-व्यवस्थापकभावः। व्यवस्थाप्यव्यवस्थापकभावस्वीकारे प्रमाणफलभावो नोपपद्यते। नैयायिकसिद्धान्तानुसारमेकस्यां ज्ञानव्यक्तौ प्रमाणफले न सम्भाविते एतादृशदृढसंस्कारवशादेव सांख्यपातञ्जलादिसिद्धान्तेऽपि प्रमाणफले भिन्नज्ञान-व्यक्तावेव भवेतामिति निश्चित्य सांख्यपातञ्जलादिमते प्रमाणफलोपपादने कुसृष्टेराश्रयं गृहीतवान्। सांख्यपातञ्जलमते विषयसारूप्य-निबन्धनमन्तःकरणवृत्तिः प्रमाणम्। तस्यामन्तःकरणवृत्तौ पुरुषप्रतिबिम्बनिबन्धना विषयबोधस्वरूपा प्रमितिः। सौत्रान्तिकमते यथा एकस्यैव ज्ञानस्य प्रमाणफलभावौ उक्तौ, सांख्यपातञ्जलदर्शनेऽपि विषया-

---

१. एतदुक्तं भवति—प्रापकं ज्ञानं प्रमाणम्। प्रापणशक्तिश्च न केवलादर्थाविनाभावित्वाद्भवति। बीजाद्यविनाभाविनोऽप्यङ्कुरादेरप्रापकत्वात्। तस्मात् प्राप्यादर्थादुत्पत्तावप्यस्य ज्ञानस्यास्ति कश्चिदवश्यकर्त्तव्यः प्रापकव्यापारो येन कृतेवार्थः प्रापितो भवति। स एव च प्रमाणफलम् यदनुष्ठानात् प्रापकं भवति ज्ञानम्। उक्तं च पुरस्तात् 'प्रवृत्तिविषयप्रदर्शनमेव प्रापकस्य प्रापकव्यापारो नाम। न्या० वि० टी० पृ० ७९।

२. अर्थ-सारूप्यमस्य प्रमाणम् ॥२॥ अर्थेन सह यत्सारूप्यं सादृश्यम् अस्य ज्ञानस्य तत्प्रमाणम्। इह यस्माद्विषयाद् विज्ञानमुदेति तद्भवति। यथा नीलादुत्पद्यमानं नीलसदृशम्। तस्य सारूप्यं सादृश्यम् आकार इत्याभास इत्यपि व्यपदिश्यते। ननु च ज्ञानादेवातिरिक्तं सादृश्यम् तथा च सति तदेव ज्ञानं प्रमाणं तदेव च प्रमाणफलम्। न चैकं वस्तु साध्यं साधनं चोपपद्यते। तत् कथं सारूप्यं प्रमाणमित्याह—तद्वशादर्थप्रतीतिसिद्धेरिति ॥२१॥ ""अर्थस्य प्रतीतिरूपं प्रत्यक्षं विज्ञानं यतः, तस्मात् नीलस्य प्रतीतिरवसीयते। येभ्यो हि चक्षुरादिभ्यः विज्ञानमुत्पद्यते न तद्वशात् तज्ज्ञानं नीलस्य संवेदनं शक्यतेऽवस्थापयितुं नीलसदृशं तु नीलस्य संवेदनमवस्थाप्यते। न्या० वि० टी० पृ० ८१।२

कारायामेकस्यां चित्तवृत्तौ एव प्रमाणफलभावौ समर्थितौ। विषयसारूप्यनिबन्धना या वृत्तिः प्रमाणम् पुरुषप्रतिबिम्बनिबन्धना सैव वृत्तिः विषयबोधरूपा प्रमा। परन्तु न्यायरीतिमनुसृत्यैव मतद्वयस्य व्याख्यानं बहुभिः क्रियते। प्रमाणफलनिरूपण-प्रसङ्गे भाष्यकारः टीकाकर्तारश्च "पौरुषेयो बोधः प्रमाफलम्" इत्युक्तवन्तः, तत्र पौरुषेयो बोधः किमित्यस्य निरूपणार्थमसङ्गकूटस्थ-पुरुषस्यैव परिणामं स्वीकृत्य पौरुषेयबोधं प्रतिपादयन्ति। विषयकारचित्तवृत्तिः प्रमाणं पुरुषपरिणतिविशेषपौरुषेय-बोधः प्रमा इति निश्चिन्वन्ति, यथार्थ-सांख्यसिद्धान्तरूपेण च वर्णयन्ति। एतत्प्रद-र्शितसिद्धान्तं चरमसिद्धान्तं मत्वा विज्ञानभिक्षुप्रभृतिप्रदर्शितसिद्धान्तमेवानुसरन्ति। प्राचीनभारतीयदर्शनानामानलोचनमेवैतददुराग्रहकारणम्।

वैभाषिकाः निराकारविज्ञानमेवात्मानात्मप्रकाशनसामर्थ्यसम्पन्नम्। विज्ञान-स्यात्मानात्मप्रकाशनसामर्थ्यमेव प्रमाणम्। अर्थप्रकाशनसामर्थ्यव्यापारवत्प्रमाणम्। प्रकाशनं चैतन्यरूपम् अर्थप्रकाशनव्यापारवान् चेतन एव। इद्रियादिकरणं जडस्वरूप-मिति अर्थप्रकाशनरूपव्यापारस्तस्य नैव भवितुमर्हति। ज्ञानातिरिक्तज्ञानाश्रयः चेतनो नैव प्रमाणसिद्धः। नैयायिकाः ज्ञानतिरिक्तः ज्ञानाश्रयः आत्मा चेतन इति स्वीकुर्वन्ति। किन्तु वैभाषिकास्तथा न स्वीकुर्वन्ति। ते विज्ञानस्य चेतनरूपतां वदन्ति। विज्ञानातिरिक्तं न चेतनं वस्तु। एतस्य चेतनविज्ञानस्यैव विषयदर्शनव्यापारात्मक-त्वात् प्रमाणम्। वैभाषिकमते दर्शनव्यापारो व्यापरवच्च विज्ञानं नैव भिन्नं वस्तु। कुत्रापि व्यापारः व्यापारिणो नैव भिन्नः यथा "परशुना वृक्षं छिनत्ति" एतादृश-प्रतीतौ छेदनक्रियाकरणं परशुः एवं वृक्षपरशुसंयोगोव्यापारः वृक्षादिना सह संयुज्य-मानपरशुः संयोगरूपव्यापारेण करणं भवति—एतदेव लोकव्यवहारसिद्धम्। संयुज्य-मानपरशुः करणम्, संयोगः व्यापारः। किन्तु, करणं संयुज्यमानपरशुनाऽत्यन्तं भिन्नम्, विग्रहवान् प्रमाणसिद्धः संयोग इति किमपि वस्तु न उपलभ्यते।[1]

अर्थप्रकाशनव्यापारोऽपि व्यापारिविज्ञानादभिन्नं प्रमाणसिद्धं नास्ति। अतः विज्ञानमेव व्यापारि, दर्शनव्यापाररूपं च एवमेष दर्शनव्यापार एव दर्शनसामर्थ्यं तदेव च प्रमाणम्। एतद्विज्ञानस्य स्वरूपसम्वेदनत्वाद् आत्मानात्मसम्वेदनता विज्ञाने सैव विज्ञानव्यक्तिरपि विषयो भवति एवं विज्ञानव्यतिरिक्तं बाह्यं वस्त्वपि विषयो भवति, अतः निराकारविज्ञानं स्वपरावभासस्वरूपम्। स्वपरदर्शनञ्च विज्ञानस्यैव व्यापारः, एतदेव प्रमाणम्।

---

१. अर्थप्रकाशनं हि यस्य व्यापारस्तदेव प्रमाणम्, प्रकाशनं च चैतन्यरूपं तस्यैव यश्चेतयते। न चेन्द्रियाणि करणानि तथा, जडरूपत्वात्। न हि ज्ञानातिरिक्तः काश्यच्चेतनो नाम? तस्माद्विज्ञानमेव चेतनतया दर्शनव्यापकतया च प्रमाणम्। व्यापार-व्यापारिणोश्चाभेद एव संयुज्यमानपरशुवदिति निराकारवादिनो वैभाषिकादयः ता० प० पृ० १५५।

२. विज्ञानस्यैवानाकारस्यात्मानात्मप्रकाशनसामर्थ्यमित्यपरे। (न्या० वा० पृ० १५)

सौत्रान्तिकाः साकारविज्ञानवादिनो, वैभाषिकाः निराकारविज्ञानवादिनः। विषयस्य प्रत्यक्षत्वस्वीकारकर्तारः विषयसारूप्यं विज्ञाने स्वीकर्तुं न शक्नुवन्ति। अतः, वैभाषिकाः नैयायिकाश्च निराकारविज्ञानवादिनः। साकारविज्ञानस्वीकारे विषयः प्रत्यक्षसिद्धो न भवेत्, यतः विषयाकारः विज्ञानाकारश्चे भवति इति नैवानुभवसिद्धम्। विज्ञानस्य विषयाकारत्वस्वीकारे अनुभूयमानविज्ञानस्यैव आकारः सिद्धः स्यात्, विषयः निराकारः स्यात्। अतः सौत्रान्तिकमते विषयः विज्ञाने स्वीकारसमर्पकरूपेण साकारविज्ञानेन विषयोऽनुमितो भवेत् विषयस्य प्रत्यक्षत्वं सौत्रान्तिकाः नैव स्वीकुर्वन्ति। वासनाजन्यम् एव विज्ञानं साकारं स्यादिति योगाचाराः विज्ञानंव्यतिरिक्तं वस्तुमात्रमेव न स्वीकुर्वन्ति अनुभूयमाननीलपीताद्याकारस्य विषयरूपेण स्वीकर्तृणां मते विज्ञानं निराकारम्।[1]

चक्षुरिन्द्रियादिसाहाय्येन यद्धि प्रत्यक्षज्ञानं जायते, तदभ्रान्तमेवेति कः वक्तुं शक्नुयाति? पथि गच्छता मार्गमध्ये पतितं शुक्तिकाखण्डमवलोक्य रजतखण्डमवगत्य कोऽपि विद्वान् तदादातुं तत्परो न भवेत्? अतः ज्ञानस्य सत्यताम् (Validity) एवं प्रत्यक्षादिप्रयोगस्य प्रयोगं निर्द्धारयितुं केवलं प्रत्यक्षादिप्रमाणोपर्य्येवाश्वासो नैव कर्तुं शक्यते। चक्षुषा दृष्टमिति सत्यमेवेत्यस्य नास्ति किमपि महत्त्वम्। इयमेव समस्या ज्ञानस्य प्रमाणतत्त्वस्य (epistemology) आलोचनाया महती समस्या विद्यते। एतस्याः समाधानार्थं दार्शनिकैः विविधः प्रयासः कृतः। ज्ञानप्रामाण्यस्य प्रश्नः सर्वेषां दार्शनिकानां कृते समान एव पाश्चात्यदार्शनिकानां मते—ज्ञानस्य सत्यतायाः प्रश्नः ज्ञानेन सह तथा घनिष्ठः सम्बद्ध इति ज्ञानस्य सत्यताया अभावे ज्ञानसंज्ञैव न भवितुमर्हति। तेषां भ्रमज्ञानं (false knowledge) ज्ञानमेव न। भारतीयदृष्ट्या ज्ञानं सत्यं मिथ्या चेति द्विविधम्, अत एव सत्यज्ञानावगत्यर्थं 'प्रमा' इत्युच्यते असत्यज्ञानस्य च भ्रमशब्देन निर्देशो भवति। पाश्चात्यमते च विश्वासः (belief) एवं सत्यता (truth) यदि न स्यात्तदा एतज्ज्ञानमेव न। तन्मते ज्ञानशब्दार्थः सत्यज्ञानम्। भ्रमस्थले यथार्थरूपेण पदार्थः यथार्थरूपेण गोचरो न भवतीति तन्मिथ्याज्ञानम्।[2] अतः ज्ञेयविषयस्य रूपमेव ज्ञानस्य सत्यतायाः मिथ्यात्वस्य वा मापयष्टिः। ज्ञानविषयस्याबाधितत्वे ज्ञानेन सह विषयस्य सम्बादस्य सारूप्यस्य वा वर्तमानत्व एव ज्ञानस्य यथार्थत्वम्। प्राग्मेटिक (Pragmitic) मते येषामाश्वासः असौ ज्ञानस्य विषयस्य वा तुल्यतां सारूप्यं वा अवधार्य न सन्तुष्टो भवति। ज्ञानस्य ज्ञेयस्य वा वस्तुनो व्यावहारिकजीवने कियत्पर्यन्तं कार्यकारित्वं फलप्रदं वेति विचार्यैव ज्ञानस्य सत्यतां विश्वसिति। बौद्धमतीय-प्रामात्मकज्ञानविचारपद्धतिरनेकांशे प्रदर्शितपाश्चात्यमतेन सादृश्यं भजते।

---

१. न्या० वा० ता० पृ० १५।

२. यथार्थानुभवः प्रमा यत्र यदस्ति तत्र तस्यानुभवः प्रमा, तद्वति तत्प्रकारकानुभवोवा। त० चि० पृ० ४०।

पाश्चात्यदार्शनिकेषु केचन ज्ञानविषययोः संवादं (heremony or coherence) अथवा अबाधस्य (non-contradiction) ज्ञानसत्यतायाः परिमापकमवधार्यं सिद्धान्तयति (See choherence theory of the western thinkers), केचित् च ज्ञानविषययोः सारूप्यस्य तुल्यरूपताया उपर्य्येवाग्रहं प्रदर्शयन्ति (compare correspondence theory of the weastern Realiststs), केचन नैयायिका एतन्मतपरिपोषकाः सन्ति । ज्ञानविषययोः संवादम् (heromony) अवलोक्य तयोः सारूप्यस्य (correspondence) अनुमानंकर्तुं शक्यते । अस्यां स्थितौ सारूप्यवादस्य (correspondence theory) इत्यस्य स्वतन्त्रमतरूपेण विशिष्टस्थानप्रदर्शनस्य आवश्यकता नास्ति ज्ञानस्य सत्यताया निर्द्धारणार्थं (coherence) विषयस्य अबाधोपर्य्येव निर्भरः करणीयः ।

प्राचीननैयायिकमते स्मृतिः न प्रमाणान्तर्गता । आचार्य उदयनः कुसुमाञ्जलि-चतुर्थस्तवकस्य प्रथमे श्लोके कथयति । यथार्थानुभव एव प्रमा । अवधितविषयिणी स्मृतिरनुभवो नास्ति, अतः, न प्रमा० उद्योतकरः न्यायवर्तिक[1] कारः वाचस्पतिमिश्रश्च तात्पर्यटीकायां स्मृतिभिन्न-यथार्थ-ज्ञानस्यैव प्रमात्वज्ञानं स्वीकरोति । तथा च स्मृतेः यथार्थत्वेऽपि न प्रमा । स्मृतेः प्रमात्वे स्मृतिकरणस्यापि स्वतन्त्रप्रमाणत्वं स्वीकरणीयमिति प्राचीननैयायिकैः स्मृतिभिन्नयथार्थोपलब्धिरेव प्रमेत्युच्यते । यथार्थनुभवकरणञ्च प्रमाणम् । इत्येवं प्रमायाः प्रमाणस्य च लक्षणं प्रदर्श्य तत्खण्डनं चकार । न्यामवैशेषिकमते परतः प्रामाण्यनिरूपणम् :—

न्यायवैशेषिकमते ज्ञानस्य परतः प्रामाण्यवाद एवमुच्यते । ज्ञानस्य यदुपादानं सामग्री वा (Constituents of Knowledge) तेनैव सत्यं मिथ्याज्ञानमेवं ज्ञानस्य प्रामाण्यम-प्रामाण्यं नोत्पद्यते न च ज्ञायते । परतः (Some thing their than the constitvents of Knowledge) अर्थात् ज्ञानस्य यदुपादानं तेन सर्वथा भिन्नं यत् तेन ज्ञानस्य प्रामाण्यमप्रामाण्यञ्चोत्पद्यते ज्ञायते च । ज्ञानप्रामाण्यस्यैवमप्रमाण्यस्य चोत्पत्तिः ज्ञानोपादानेन सामग्र्या एव उत्पद्यते, एतत्सिद्धान्तस्वीकारे अर्थात् स्वतः प्रामाण्यवादस्वीकारे ज्ञानस्य सत्यत्वे मिथ्यात्वे च कोऽपि भेदो न स्यात् । अप्रमा अर्थात् मिथ्याज्ञानमपि प्रमा अर्थात् यथार्थ-ज्ञानमेव स्यात् । यतः मिथ्याज्ञानोदयस्थलेऽपि ज्ञानस्य सर्वविधसामग्री उपादानं स्यादेवेत्यत्र नास्ति सन्देहः । भ्रमज्ञानमपि तु ज्ञानमेव । ज्ञानं द्विविधं सत्यं मिथ्या चेति । सत्यज्ञानस्थलेऽपि यथा ज्ञानस्य सर्वविधसामग्री विद्यते । तथा च ज्ञानस्य यदुपादानं सामग्री वा तदेव ज्ञानप्रामाण्यस्यापि साधनं भवेत्तदामिथ्याज्ञानस्थलेऽपि प्रामाण्यापत्तिः स्यादिति कस्मिन्नपि मते न निषेद्धुं शक्यते । अयमपि प्रश्न उदेति यत् उभयविधज्ञानमपि यदा ज्ञानमेवमुभयस्थलेऽपि यदा ज्ञानस्य सर्वविधसामग्री उपादानं वा तदा एकस्य सत्यत्वमपरस्य

---

१. ततोऽर्थक्रियासमर्थवस्तुप्रदर्शकं सम्यग् ज्ञानम् । यतश्चार्थसिद्धिस्तत्सम्यग्ज्ञानम् । न्या० वि० पृ० १-२ ।

च मिथ्यात्वं कथमिव स्यात्। अस्य प्रश्नस्य समाधानप्रसङ्गे न्यायवैशेषिकाः समादधते, मिथ्याज्ञानस्थले ज्ञानोपादानस्य सर्वमपि सामग्रीजातं विद्यत इति सत्यम्, अन्यथा मिथ्यज्ञानं ज्ञानमेव न स्यात्। अतः ज्ञानसामग्रीसत्त्वेऽपि ज्ञानस्य प्रामाण्यं नोत्पद्यते। चक्षुरादिप्रत्यक्षकारणसद्भाव एव वर्तते कश्चिद् दोषः (Defects) वर्तते। अत भ्रान्तदर्शी चक्षुषः समक्षे पतितं शुक्तिखण्डं दृष्ट्वा शुक्तिखण्डं नावगच्छति अपि तु रजतखण्डमवगच्छति। नयनादिदोषवशादेव भ्रम उत्पद्यते इति सर्वेऽवगच्छन्ति। कस्यापि दोषस्याभावे तु सत्यज्ञानमेवोदेति। तस्मात् प्रमाज्ञानोत्पत्तौ ये हेतवस्ततो व्यतिरिक्तं प्रत्यक्षादिज्ञानस्योपादाने दोषशून्यत्वं कारणमूले वर्तत इति स्वीकारणीयमेव[1]। कारणान्तर्गतदोषमुक्तस्य न्यायवैशिषकाचार्यमते प्रत्यक्षदिप्रामाण्योत्पादककारणस्य 'गुण' शब्देन व्याख्या कृता। अस्मिन् मते प्रमाया अप्रमाया एवं तत्र प्रामाण्यस्य अप्रामाण्यस्योत्पत्तौ उल्लिखितस्य गुणस्यैवं दोषस्य ज्ञानोपादानस्य सामग्र्या वा सहकारित्वात् किं तस्य ज्ञानं प्रमा किन्तावज्ज्ञानञ्चाप्रमेत्यवगमयति जिज्ञासुजनम्। दोषसहकृता ज्ञानसामग्री भ्रमज्ञानस्यैवं गुणसहकृता च सामग्री प्रमाया यथार्थज्ञानस्य जनिका बोधिका च। नैयायिकवैशेषिकसिद्धान्ते ज्ञानस्य प्रामाण्यमप्रामाण्यञ्च परत एव अर्थात् सत्यमिथ्याज्ञानोपानसामग्रीतोऽतिरिक्तमेव वस्तु। उपादानस्य गुणवशतः दोषवशत उत्पद्यते इत्यत्र नास्ति सन्देहः।[2]

---

१. (क) उत्पद्यतेऽपि प्रमा परतः न तु स्वतः ज्ञानसामग्रीमात्रातज्जन्यत्वेनाप्रमापि प्रमा स्यात्। अन्यथा ज्ञानमपि सा न स्यात। त० चि० पृ० २८८।

(ख) यदि च तन्मात्राधीना (ज्ञानसामान्य सामग्रीमात्राधीना) भवेद्, अप्रमाऽपि प्रमा भवेत्। अस्ति च तत्र ज्ञानहेतुः, अन्यथा ज्ञानमपि सा न (कुसु० २ स्त०)।

(ग) प्रमाया ज्ञानसामान्यसामग्रीजन्यतामात्राश्रयत्वे ज्ञानसामान्यसामग्री-जन्यत्वे वाप्रमापि प्रमैव स्यादित्यर्थः। त० चि० पृ० २८८।

(घ) प्रमाज्ञानहेत्वतिरिक्तहेत्वधीना, कार्यत्वे सति, तद्विशेषत्वात्। अप्रमात्व-वत्। कुसु० २ स्स० तत्त्वचि० पृ० २८९।

(सस्मात् प्रमाऽप्रमयोर्वैचित्र्याद् गुणदोषजन्यत्वम् त० चि० २४९)।

2. The question is howdoes a proposition differ by being actually true from what it would be asan entity if it were not true. It is plain farm that true and fulse propositions alike are entities of a kind but the true propositions have a quality not belonging to false one-a quality which may be called being asserted. cp. Russell, principles of Mathematics p. 59. For a true propositions, we may say, involves an element which is not constained in a false propositions, and it is this additional element which constitues its truth. The element in question attaches to the proposition itself, we may adopt Mr. Russelly. Termenology, and all this element 'assertion' cp. to achion Nature of truth p. 38.

सत्यं मिथ्या चेति उभयविधं ज्ञानमेव न्यायवैशेषिकमते इन्द्रियजन्यम्। अतः, सत्यमेवं मिथ्या इत्यनयोर्ज्ञानयोः प्रमायामप्रमायाश्च यत्प्रमाण्यं तयोः कारणमपि यथाक्रममिन्द्रियस्य गुणो दोषश्च। चक्षुषि दोषाभावे चाक्षुषप्रत्यक्षं तदंशे प्रमा= सत्यमेव। चक्षुषः काचकामलादिदोषदुष्टत्वे शुक्लवर्णोऽपि हरिद्रावर्णात्मको दृश्यते, एतज्ज्ञानं न सत्यमपि तु मिथ्यैव, नैव प्रमा अपि तु अप्रमा एव। एतस्या अप्रमायाः मूले द्रष्टुः चक्षुषः कामलरोग एव कारणम्। रोगोऽयं चक्षुः दूषयित्वा हरिद्रावर्तात्मकं पदार्थं दर्शयति। अप्रमायाः मिथ्याज्ञानस्य क्षेत्रे कोऽपि इन्द्रियदोषो वर्तत एव ज्ञानजनकसामग्रीतोऽतिरिक्तालोच्येन्द्रियदोष एवाप्रमायाः मिथ्याज्ञानस्य वा कारणम्। प्रमा अप्रमा चैतद् द्विविधमपि ज्ञानं नैकविधम्, नैकजातोयम् अपि तु विभिन्न-जातीयमिति स्वीकरणीयम्। भिन्नजातीयकारणाभावे भिन्नजातीयं कार्यं नोत्पद्यते। कारणवैजात्यमेव कार्यवैजात्यस्य मूलम्। एकजातीयज्ञानादेव प्रमा, अप्रमा, प्रामाण्यम्, अप्राण्यञ्च ज्ञानमुत्पद्यते इति वक्तुं न शक्यते। घटः, वस्त्रञ्च द्रव्यमेव उभयत्र द्रव्यत्वरूपसामान्य धर्मस्य वर्तमानत्वेऽपि घटस्य वस्त्रस्य च विभिन्न-मुपादानमिति घटः वस्त्रञ्च विभिन्नजातीयपदार्थः इति किं नैव स्वीक्रियेत।[1] एवमेव प्रमा अप्रमा च अनयोः ज्ञानत्वेऽपि उभयोः कारणं विभिन्नमिति एतद् द्वयमपि विजातीयं ज्ञानमिति स्वीकरणीयमेव।

न्यायवैशेषिकाचार्याः सत्यमिथ्याज्ञानयोः फलस्य वैजात्यमभिलक्ष्यैनेवैकं जातीयं कारणं न भवितुमर्हति अपि तु विजातीयमेव कारणम् इति कारणवैजात्य-मनुमिनोति।

अनयोः प्रामाण्याप्रामाण्यव्याख्यायां[2] कारणस्य दोषगुणयोराश्रयः गृहीतः। अतः, द्विविधज्ञानयोः प्रामाण्यमप्रामण्यद्य स्वतः नोत्पद्यत अपि तु परत एव ज्ञान-सामग्रीतो नोत्पद्यते; अपि तु अतिरिक्तसामग्रीत एव। प्रत्यक्षादीन्द्रियज्ञानस्य कारणस्य चक्षुरिन्द्रियादिकस्य विभिन्नगुणाद् दोषादेव जायते।

उत्पत्तिवदेव प्रमायाः सत्यज्ञानस्य प्रामाण्यस्य वा एवमेव मिथ्याज्ञानस्या-प्रामाण्यस्य मिथ्येत्युच्यते तदपि न स्वतोऽपि तु परत एव। ज्ञानस्योपादानात्सामग्र्या एव ज्ञानस्य सत्यत्वं मिथ्यात्वं प्रामाण्यमप्रामाण्यं वा न ज्ञायते। ज्ञानस्य सामग्र्यति-रिक्तानुमानप्रमाणसाहाय्येन ज्ञानं सत्यं न मिथ्येति ज्ञायते। न्यायवैशेषिकमते

१. यत्कार्यं यत्कार्यविजातीयं ततस्कारणविजातीयकारणजन्यम, यथा घटविजातीयः पटः। अन्यथा कार्यवैजात्याकस्मिकत्वावत्तेः। न्या० कु० वर्धमान टीका २ त० पृ० ३।

२. एवमनित्यप्रमात्वमनित्यज्ञानत्वावच्छिन्नकार्यत्वप्रतियोगिकारणताभिन्नकारणता-प्रतियोगिककार्यतावच्छेदकम्। अनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वाद-प्रमात्ववदित्यनित्यप्रमायामप्रमासाधारहेतुव्यावुत्तानुगतहेतुसिद्धिः, त० चि० ३११-१२। प्रका० २ पृ० ४।

मानसप्रत्यक्षवेद्यां या सामग्री उपादानं वा सैव ज्ञानग्राहकसामग्री। मानसप्रत्यक्षवशात् ज्ञानेऽपि एतज्ज्ञानं प्रमाऽप्रमा, सत्यं मिथ्या वा तस्य मानसप्रत्यक्षसाहाय्येन ज्ञानस्योपायोऽन्यो नास्ति। दर्शनानन्तरं दृश्यवस्तुनः ग्रहणार्थं या प्रवृत्तिर्भवति दर्शकचेतसि उदेति तादृशप्रवृत्तिः चेष्टायाः साफल्यं वैफल्यमवलोक्यानुमानवलेनैव ज्ञानस्य प्रामाण्यमप्रामाण्यं वा निश्चितं भवति। ज्ञानग्राहकसामग्री (अनुमानसामग्री) विभिन्नेति निश्चित्य ज्ञानप्रामाण्यस्याप्रामाण्यस्य वा बोधो भवति स परतः अर्थात् ज्ञानग्राहकसामग्र्यतिरिक्तानुमानसामग्रीबलादुत्पद्यते, इति तु स्वीकरणीयमेव। ज्ञानप्रामाण्यविरोधे न्यायवैशेषिकाचार्याणामियं प्रधानापत्तिर्यत् ज्ञानस्य प्रामाण्यं यदि स्वतोऽर्थात् ज्ञानस्योपादानेन सामग्र्या वा साहाय्येनैवोत्पद्येत एवं ज्ञायेत तदा ममेदं ज्ञानं प्रमा यथार्थं न वेति, एतादृशबुद्धिमत्पुरुषस्य कस्यापि वस्तुनः प्राथमिकज्ञानस्य प्रामाण्यसम्पर्के यः संशय उदेति स कथं सम्भाव्येत ? यदि ज्ञानसामग्र्या एव ज्ञानं स्यात्तयैव ज्ञानं सत्यं न मिथ्या अस्ति इत्यपि स्वतः प्रामाण्यवादिसिद्धान्ते ज्ञानसामग्र्या एव निश्चितरूपेण ज्ञातं स्यात्। ज्ञानोदयकाल एव एतज्ज्ञानं सत्यमित्यपि बोध उत्पद्येत। अस्यां स्थितौ ज्ञानस्य स्वतः प्रामाणस्वीकारे, (इदं ज्ञानं प्रमा न बा) एतज्ज्ञानं सत्यं न वेति संशयः सर्वेषां मनीषिणां स्वज्ञानसम्पर्के स्थलविशेषे उदेति—तस्य चोपपादनं कथमपि न स्यात्। अत एव नैयायिकैः परतः प्रामाण्यसिद्धान्तः समर्थ्यते। ज्ञानस्य प्रामाण्यमनुमानविशेषेण ज्ञायत इति ज्ञानस्य परतः प्रामाण्यमेव।[1]

मीमांसकाः यथा ज्ञानं स्वप्रकाशं स्वतः प्रमाणं स्वीकुर्वन्ति नैयायिकास्तथा नाङ्गीकुर्वन्ति। तन्मते न ज्ञानं स्वप्रकाशं न च स्वतः प्रमाणमिति। ज्ञानं परप्रकाशं परतः प्रमाणञ्चेति। चक्षुः सन्निहितशुक्तिखण्डमिदं रजतम् इति ज्ञानं जायते न्यायदृष्ट्या एतज्ज्ञानं व्यवसायज्ञानम्। एतद्व्यवसायज्ञानसाहाय्येन ज्ञेयखण्डस्य प्रकाशनं भवति। शुक्तिखण्डस्यावलोकने एव यदस्माकं ज्ञानमुदेति तत्समय एव ज्ञेयरजतस्य प्रसिभानमपि द्रष्टुः जायते अर्थात् ज्ञानालोकसम्पात एव ज्ञेयरजतमपि मन्निकटे प्रतिभातन्तथापि अप्रकाशितमेव ज्ञानं ज्ञेयविषयं रजतं प्रकाशयति, अनन्तरमिदं रजतमिति व्यवसायज्ञानमलब्ध्य 'रजतज्ञानवानहम्' इति अपरं

---

१. (क) प्रामाण्यं न स्वतो ग्राह्यं संशयानुपपत्तितः (भाषापरिच्छेदः ७५ श्लोक)।
(ख) प्रामाण्यस्य स्वतो ग्रहेऽनभ्यासदशोत्पन्नज्ञाने तत्संशयो न स्यात्, ज्ञानग्रहे प्रामाण्यस्यापि निश्चयात्, अनिश्चये वा न स्वतः प्रामाण्यग्रहः। (त० चि० पृ० १८४)।
(ग) प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात्। अप्रामाण्यवत्। यदि च स्वतो ज्ञायेत, कदाचिदपि प्रामाण्यसंशयो न स्यात्। (कुसु० स्त० ३ पृ० ७)।
(घ) अनभ्यासदशोत्पन्नज्ञानप्रामाण्यं न स्वाश्रयग्राह्यं तदन्यग्राह्यं वा। स्वाश्रये सत्यपि तदुत्तरतृतीयक्षणवृत्तिसंशयविषयत्वात् अप्रामाण्यवत्। (त० चि० पृ० २४०-२४१ वर्द्धमान प्रकाश २ पृ० ९)।

ज्ञानमुत्पद्यते, एतद्द्वितीयं ज्ञानमनुव्यवसायनाम्ना प्रसिद्धम्। एतदनुव्यवसायेन रजतज्ञानं प्रकाशते, अतः, ज्ञानं न स्वकाशमपितु परप्रकाशमेवार्थात् अनुव्यवसाय-प्रकाश्यम्, ज्ञेयविषयस्य प्रकाशमवलोक्य ज्ञानप्रकाशानुमानं भवति। एष सिद्धान्तः वेदान्तिभिः मीमांसकैश्च नाङ्गीक्रियते। एतन्मते ज्ञानालोके आलोकितः दृश्यविषयः ज्ञातुः दृष्टौ प्रस्फुटितो भवति। अप्रकाशितम् एव ज्ञानं विषयं प्रकाशयति। ज्ञान-मेवालोकात्मकमन्यत्सर्वमन्धकारात्मकम् अंशुमालिनः किरणधाराभिः स्नातो विषयो नयनगोचरो भवति। यदि अंशुमालिनोऽशुमाला अप्रकाशिताः स्युः तदा तत्स्पर्शेन जगतः प्रकाशः स्यादिति कैरपि वक्तुं न शक्यते।

न्यायमते च ज्ञेयविषयप्रकाशकं व्यवसायात्मकं ज्ञानम्, एतस्य व्यवसायस्य ज्ञानस्य प्रकाशकमनुव्यवसायात्मकं ज्ञानम्। परं ज्ञानस्य परप्रकाश्यत्वेऽनुव्यवसाय-ज्ञानस्यापि प्रकाशार्थं पुनरपि अन्यस्यानुव्यवसायस्य साहाय्यमपेक्षितम् तत्राप्य-नुव्यवसाय इत्यनवस्थादोषः स्यात्। अतः ज्ञानं स्वप्रकाशं स्वतः प्रमाणं स्वीकरणीयम्।

नैयायिकैः परतः प्रामाण्यसमर्थने कथ्यते यत् सम्मुखस्य शुक्तिखण्डस्य चाकचिक्यमवलोक्य इदं शुक्तिखण्डम्, इदं रजतम् इति च ज्ञानमुदेति। तथा च समयविशेषे 'इदं रजतम्' समयविशेषे च इयं शुक्तिरिति ज्ञानम् पुरुषविशेषस्य जायत एव तथा च भ्रान्तिः सर्वस्य जायते अस्यामवस्थायां प्रथमं ज्ञानं सत्यं द्वितीयञ्च ज्ञानं मिथ्येति इत्यवगतये कस्तावदुपायः? नैयायिकाः कथयन्ति यत् एतादृशस्थले बोधार्थमेक एवोपायो यत् रजतखण्डावलोकनानन्तरं रजतखण्डमस्मद्विशेषप्रयोजन-जनकमिति मनसि विनिश्चित्य तद्धस्तेन ग्रहीतुं चेष्टतेऽनन्तरं रजतखण्डं प्राप्नोति तदासौ जानाति यत् मज्ज्ञानं सत्यम्। रजतस्याप्राप्तौ रङ्गस्य च प्राप्तौ अवगच्छति यत् अस्माकं ज्ञानं मिथ्या रजतज्ञानं सत्यं नास्ति। एवं ज्ञानस्य सत्यत्वस्य, मिथ्यात्वस्य, प्रामाण्यस्य, अप्रामाण्यस्य उपलब्धये नैयायिकाः केवलव्यतिरेक्यनुमानं स्वीकुर्वन्ति।[1] नैयायिकदृष्ट्यनुरूपदृष्टिः प्राग्माटिक (Pragmatic) अर्थात् व्यवहारवादिनः पाश्चात्यस्य दर्शनेऽपि विद्यते। जेम्समहाशयः (James) डिवे (Deway) वाल्ट्स कनिंघमहाशयः (walts conningham) जोयाकिम्महाशयः (Joachim) इत्यादयः पाश्चात्याः भारतीयनैयायिकसम्प्रदायज्ञानस्य प्रामाण्यं परतः (validity of knowledge depen-des upon somethlng other than the constituents of knowledge) इत्येव स्वीकुर्वन्ति। 'ज्ञानविषययोः संवादः (harmany) एवं ज्ञेयविषयस्य व्यावहारिकजीवने कार्यकारिता (pragmatic efficiency) अर्थक्रियाकारित्व-प्रभृतीः अवलोक्य ज्ञानं निश्चीयते।

---

१. (क) पूर्वोत्पन्नं जलादि ज्ञानं, प्रमा सकलप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं यथा अप्रमा। (दीपिका पृ० ३९)।

(ख) इदं, जलादि ज्ञानमप्रमा, विसम्वादिप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं यथा प्रमा। (दीपिका पृ० १८७)।

(ग) तत्त्वचिन्तामणिः पृ० २५०।

नैयायिकमते 'उपलब्धिहेतुत्वमेव प्रमाणत्वम्' वार्तिककृन्मते 'उपलब्धिहेतुः प्रमाणम्', 'उपलब्धिहेतुत्वं प्रमाणत्वम्' (न्यायवा० पृ० १५) तात्पर्यटीकायामपि 'उपलब्धिसाधनं प्रमाणमिति वृद्धाः'[1] उपलब्धिशब्दार्थस्तु "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" (१।१।१५) अस्मिन् न्यायसूत्रे उपलब्धिर्ज्ञानञ्चैकार्थकम्। उपलब्धेः साधनस्यैव प्रमाणत्वे ज्ञानसाधनमेव प्रमाणमिति सिद्ध्यति। संशयस्य विपर्यासरूपस्य वोपलब्धेः कारणस्य प्रमाणत्वं नोपदिष्टम्। अतः उपलब्धेः साधनस्य प्रमाणत्वं कथमिव स्यात्? अर्थवत् प्रमाणम् इति भाष्यकारोक्त्याऽर्थवदुपलब्धिसाधनमेव प्रमाणमिति फलति। संशयस्य विपर्यासस्य उपलब्धित्वेऽपि तयोः नार्थवत्त्वमपि तु अनर्थकत्वमेव? संशयः विपर्यासश्च स्वपदर्शितार्थव्यभिचारी, अतः इमौ अनर्थौ। स्थाणुर्वा पुरुषो वेति संशयेनोपदर्शितवस्तुनः विकल्प्यमानत्वेन तस्यावस्तुत्वम्। स्थाणुपुरुषात्मको न कोऽपि पदार्थः। विपर्यासज्ञानेनापि उपदर्शितवस्तुनोऽर्थक्रियाकारित्वाजनकत्वेन अवस्तुत्वम्, अवस्तुत्वाच्चानर्थकत्वम्। अतः अर्थवदुपलब्धिसाधनस्य प्रमाणत्वस्वीकारेऽनयोर्न प्रमाणत्वम्।[2]

अर्थवदुपलब्धिसाधनस्य प्रमाणत्वे उपलब्धिसाधनसंस्कारस्यापि प्रमाणत्वं स्यात्। तथा च स्मृतिरूपोपलब्धिहेतोरपि प्रमात्वं स्यात्[3] स्मृतिहेतोः संस्कारस्य प्रमाणत्वापत्तिर्न स्याद्यतः प्रमासाधनस्यैव प्रमाणत्वात्। स्मृतिश्च न प्रमा[4]। परन्तु एतच्चिन्तनीयम्, यत्, अर्थवदुपलब्धिसाधनस्य प्रमाणत्वेन संशयविपर्यासयोर्निरासेऽपि, स्मृतिसाधनस्य संस्कारस्यार्थवदुपलब्धिसाधनत्वमेव तथा च स्मृतिसाधनस्य प्रमाणत्वं कथमिव न स्यात्? उपलब्धिशब्दस्यानुभूत्यर्थकत्वे तु, स्मृतेरनुभूत्यर्थकत्वे तु, स्मृतेरनुभूतित्वाभावात् तद्वारणेऽपि, तथा चार्थवदुपलब्धिः प्रमा तत्प्रमायाः साधनं प्रमाणम्। किन्तु सूत्रकृता यज्ज्ञानसमार्थकत्वमुपलब्धेः प्रतिपादितम् तद्विरुध्येत। 'अर्थवत्' पदस्य यथार्थार्थकत्वेऽर्थाव्यभिचारीति फलितं भवति। तदा स्मृतेरप्यर्थाव्यभिचारित्वमेव, यथार्थानुभवात्संस्कारः संस्काराच्च यथार्थस्मृतिरिति तस्या अर्थाव्यभिचारित्वमेव तथा च यथार्थस्मृतिः प्रमा तत्साधनभूतः संस्कारः प्रमाणम्।

आचार्य उदयन एतदापत्तिपरिहारार्थं कथयति स्मृतिः न प्रमा। प्रमाशब्दस्य प्रवृत्तिनिमित्तम् ज्ञानत्वोपलब्धित्वप्रभृतयः तदेव प्रमापदस्य प्रवृत्तिनिमित्तं भवितुं नार्हति। ज्ञानत्वमुपलब्धित्वं वा यत्र वर्तते तदेव प्रमापदवाच्यं भवेत्तदा स्मृतिरपि प्रमापदवाच्या स्यात्। परं यत्र ज्ञानत्वादिधर्मः तस्य प्रमात्वं नास्ति। यद्युच्येत

१. न्यायवा० ता० पृ० १५।
२. न च संशयविपर्यासरूपोपलब्धिकारणयोः प्रसङ्गः, अर्थवदित्यधिकारात्। तयोश्चोपदर्शितार्थव्यभिचारेणानर्थकत्वात्। न्या० वा० ता० पृ० १५।
३. स्यादेतत् स्मृतिहेतोरपि प्रामाण्यप्रसङ्गः। न्या० वा० ता० पृ० १५।
४. मैवम्। प्रमाशब्देन तस्यापास्तत्वात्। प्रमासाधनं प्रमाणं न च स्मृतिः प्रमा। न्या० वा० ता० पृ० १५।

प्रमात्वजातेरनुभवत्वव्यापकत्वेऽपि विपर्ययज्ञानस्य निरासो न भवितुमर्हति। अनुभवत्वं प्रमात्वं च जातिद्वयमेकत्रपदार्थे सत्त्वे एव तयोः व्याप्यव्यापकभाव एव स्यादित्येतादृशनियमस्वीकारस्यावश्यकता नास्ति। व्याप्यव्यापकभावापन्नजातिद्वयमेकत्र न समाविशति, समावेशे च व्याप्यव्यापकभावापन्नमेव स्यादिति नियमः द्रव्यगतजातिसम्बन्ध एव वर्तते। यथा घटत्वपटत्वादिजातयः व्याप्यव्यापकभावानापन्ना एकत्र समाविष्टा नैव भवेयुः। एकस्मिन् द्रव्ये घटत्वं पटत्वं चेति जातिद्वयं न समावेष्टुमर्हति, किन्तु गुणगतजातिप्रसङ्गे एष नियमो नास्ति। व्याप्यव्यापकभावानापन्नं गुणगतजातिद्वयमेकत्र व्यक्तौ समाविशति। ज्ञानञ्च गुणपदार्थः। अनुभवत्वं प्रमात्वं प्रत्यक्षत्वादिकं च गुणगतजातिः। गुणवृत्तिजातिश्च व्याप्यव्यापकभावानापन्नापि एकत्रावतिष्ठते। अतः नास्ति दोषः[1]।

परन्तु एष नियमो नास्ति। द्रव्यवृत्तिजातिसम्बन्धे ये दोषास्त एव गुणवृत्तिजातिसम्बन्धेऽपि। अस्मिन्प्रसङ्गे साङ्कर्यादिदोषमादाय महान् विचार उदयनेन कृतः स पुनः प्रदर्शयिष्यते।

वस्तुतः स्मृतेः यथार्थत्वमेव नास्ति, अतः सा न प्रमा, तथा च तत्साधनस्य संस्कारस्य न प्रमाणत्वम्। अत्रापि महान् विचारस्तार्किकाणं परं नेह तन्यते समयाभावात्। स्मृतौ यथार्थानुभवत्वे सत्यपि यथार्थत्वं नास्ति। अयथार्थानुभवे सति स्मृतेर्यथानुभवत्वेऽपि अयथार्थानुभवजन्या स्मृतिः अयथार्थैव स्यात्। रज्जौ भुजङ्गरूपैव स्मृतिः स्यात्। स्मृतेर्यत् यथार्थत्वं लोक उच्यते तत्र स यथार्थ्यधर्मः न स्वारसिकोऽपि तु याचितमण्डनन्यायप्राप्तः। स्मृतेः याथार्थ्यं परतन्त्रमिति याचितमण्डनरूपं परतन्त्रत्वम्। पारतन्त्र्यञ्चात्र स्मृतिकारणीभूतानुभवानतिरिक्तविषयत्वेन कारणीभूतानुभवयाथार्थ्याधीनयाथार्थ्यमेव पारतन्त्र्यम्; अत एव लिङ्गपरामर्शयाथार्थ्याधीनानुमितेर्याथार्थत्वेऽपि अनुमितेर्याथार्थ्यं न परतन्त्रत्वम्। यतोऽनुमतिस्वकारणलिङ्गपरामर्शादतिरिक्तविषयिकापि सम्भाव्यते। परामर्शस्य अनुमितेश्चैक एव विषयो न भवति। किन्तु स्मृतिः कारणीभूतानुभवातिरिक्तविषयिका न भवति। अतः अनुमितेर्याथार्थ्यं न परतन्त्रत्वम्[2]। प्रत्यक्षरूपभ्रमज्ञाने प्रकारांशेऽयथार्थत्वेऽपि धर्म्यंशे प्रमैव। किन्तु, स्मृतिज्ञानं धर्म्यंशेऽप्यप्रमैवेत्येष न्यायसिद्धान्तः तस्मात् यथार्थानुभव एव प्रमा तत्साधनमेव प्रमाणमिति।

---

१. गुणजातौ परापरभावानुपपत्तिर्न दोषाय। न्या० नि० प्र० पृ० १५९।

२. अत एवानुभवस्यायथार्थत्वे स्मृतिरविपरीतार्थाप्ययथार्थैव यथा रज्जुः भुजङ्गतयाऽनुभूय विद्रुतस्य तथैव स्मृतिः। तस्मात् स्मृतेर्यथार्थत्वं याचिकमण्डनप्रायं नाजानिकम्। इदमेव पारतन्त्र्यपदवाच्यं कैश्चिन्निरुक्तिशून्यैरन्यथोपप्लूयत इति। ......किन्तु करणानुभवानतिरिक्तविषयत्वे सति तद्याथार्थ्यपरतन्त्रमित्यर्थः। तेन क्वचिदनुमितेः स्वकारणलिङ्गपरामर्शयाथार्थ्याधीनयाथार्थ्येऽपि न दोषः; तस्याः स्वकारणलिङ्गपरामर्शविषयत्वातिरिक्तविषमत्वम्। न्या० नि० प्र० पृ० १६६।

सम्प्रदायविदः न्यायाचार्याः स्मृतेरयथार्थत्वं स्वीकुर्वन्ति चिन्तामणिकारः गङ्गेशोपाध्यायोऽन्ययुक्तिबलेन स्मृतेरयथार्थत्वं साधयति । तथाहि :—

विवादपदं स्मृतिः (पक्षः)
स्वविषयवर्तमानत्वविषया (साध्यम्)
अतीतानागताविषयत्वे सति प्रतीतित्वात् (हेतुः)
प्रत्यभिज्ञावत् (उदाहरणम्)

स्मृतिः स्वविषयो वर्तमानताविषयिका भवति न वेति विवादस्पदीभूतम् । ये स्मृतेर्यथार्थत्वं स्वीकुर्वन्ति ते स्मृतेः स्मर्यमाणविषयस्य वर्तमानविषयकत्वं न स्वीकुर्वन्ति । तथा स्वीकारे स्मृतेर्यथार्थत्वं नैव स्यात् । ये स्मृतेर्यथार्थत्वं न स्वीकुर्वन्ति ते स्मृतिः स्मर्यमाणविषयावर्तमानत्वविषयिकेति स्वीकुर्वन्ति । अत एव स्मृतिः विवादास्पदीभूता । स्वविषयस्य वर्तमानत्वविषयकत्वरूपेण सन्देहास्पदीभूता स्मृतिः पक्षः । विवादविषय इति विवादास्पदपदार्थः । विवादशब्दार्थः विप्रतिपत्तिः । विप्रतिपत्तिधर्मी विवादपदम् विवादशब्दार्थश्च सन्देहः । सन्देहस्य विशेष्यमत्र विवादपदम् । 'सन्दिग्धे हि न्यायः प्रवर्तते' एतत्सिद्धान्तदृष्टया सर्वत्र न्यायप्रयोगे 'विवादपदम्' 'विमतम्' इत्यादिपदेन पक्षरूपेण निर्दिष्टं भवति । गङ्गेशोपाध्यायोऽपि अत्र प्राचीनरीतिमवलम्ब्य विवादपदं स्मृतिः इत्येवं रूपेण पक्षं निर्दिशति । प्रदर्शितस्थले सन्देहविशेष्यं स्मृतिः पक्षः । 'स्मृतिः स्वविषयवर्तमानविषयिका भवति । इत्येव साध्यम्, स्मृतिविषयः स्मर्यमाणवस्तु । स्मृतिविषयः स्मर्यमाणवस्तु । स्मृतौ स्मर्यमाणं वस्तु वर्तमानरूपेण भासते । स्मृतिः स्मर्यमाणविषयस्य वर्तमानत्वावगाहिनी भवतीत्येव साध्यम् । यतः स्मृतिः अतीतानागताविषयकप्रतीतिः । न च स्मृतिः अतीतविषयिका नचानागतविषयिका । स्मृतिप्रतीतिः अतीतानागताविषयिका एव प्रतीतिः वर्तमानविषयिका भवति । अत एव अतीतानागताविषयकप्रतीतित्वमत्र हेतुः । प्रत्यभिज्ञा च प्रत्यक्षदृष्टान्तः । 'योऽयं देवदत्तः' इत्यादिप्रत्यभिज्ञाप्रत्यक्षेऽतीतानागताविषयकः हेतुः वर्तते । प्रत्यभिज्ञा नातीगतविषयिका नचानागतविषयिकाप्रतीतिः । प्रत्यभिज्ञा स्वविषयस्य वर्तमानत्वविषयिका भवति । प्रत्यभिज्ञायां प्रत्यभिज्ञायमानं वस्तु वर्तमानरूपेणैव भासते ।

हेतोः विपक्षवृत्तित्वबाधकतर्कप्रदर्शनार्थं गङ्गेशोपाध्यायेनोक्तं यत् प्रतीतिः नियतसमयविशेषे भवति ।[1] कस्यापि प्रतीतौ हेतुः भवेत् साध्यं न भवेत् 'हेतुमान् साध्याभाववान्' एतादृशी शङ्का न भवितुमर्हति । यतः प्रतीतिः समयविशेषविषयिकैव भवति । समयविशेषविषयिकैव भवतीति अतीतानागताविषयकत्वे प्रतीतेः वर्तमानविषयकत्वं सिद्धयति । स्मृतिभिन्नानुभवरूपं ज्ञानमेव प्रमा । अनुभवत्वसमानाधिकरणयथार्थत्वमेव प्रमापदप्रवृत्तिनिमित्तम् एष एव न्यायसिद्धान्तः ।

१. प्रतीतेः समयविशेषविषयकत्वनियमात् (न्या० वि० प्र० पृ० १६४) ।

दिवङ्गतैराचार्यप्रवरैः गुरुवर्यैः श्रीबदरीनाथशुक्लमहोदयैरेतन्मनसि चिन्तितं यत् सम्पूर्णस्य विविधटीकासम्बलितस्य चिन्तामणिग्रन्थस्य विश्वविद्यालयतः नूनमेव प्रकाशनमपेक्षितम्। श्रीमतां डाक्टरोपाह्व श्रीविद्यानिवासमहाशयानां कृपैव एत पुष्पविकाशसाधनम्। स्वर्गतनां पूज्यपादानां श्रीमतां ब्रह्मदत्तद्विवेदिनाम्, दार्शनिकेसार्वभौमदामोदरलालगोस्वामिनाम्, श्रीमतां शीतांशुशेखरवागचिमहाशयानां डा० श्रीशातकरीमुखोपाध्यायानां गुरुवर्य्याणां वात्सल्येन यदुपलब्धं तदेव भूमिकायां सन्निपेशितमिति तेषां वचः स्मारं स्मारमेवैतदामुखाद्विरमति।

अस्य ग्रन्थस्य सम्पादने बिहाराराज्यस्य निदेशकपदमलङ्कुर्वतां श्रीमतां दामोदरठाकुरमहाशयानां साहाय्यं वचसाप्रकाशनाक्षमम्। तदादेशादेवैतस्य प्रकाशनं क्रियतेऽस्माभिरिति सादरं प्रणमामि।

अस्य आमुखलेखने श्रीमतां महामहोपाध्यायडाक्टरयोगेन्द्रनाथवागचिमहाशयानां ग्रन्थेभ्यः महत्साहाय्यमाचरितम् इति गुरुवराणं तेषां चरणौ ध्यायं कृतकृत्योऽयं जनः। श्रीमतामाचार्यं वसिष्ठत्रिपाठिमहाशयैराद्यन्तमामुखमालोक्य स्वमन्तव्यप्रकाशनेन महत्साहाय्यमाचरितामरिते धन्यवादार्हाः।

श्रीमतां प्रकाशनाधिकारिपदमलङ्कुर्वतां श्रीहरिश्चन्द्रमणित्रिपाठिमाशयानां सहयोगमविस्मरणीयमेव। वाराणसीस्थतारायन्त्रालयाधिपतीनां श्रीमतां रमाशङ्करपाण्ड्यानां सततग्रन्थसम्पादनतत्पराणां शुभोदयरविशङ्करपाण्ड्यानां सहयोगस्तु वचसा प्रकाशनानर्हं एवेति। ऐतिहासिकं शास्त्रीयञ्च तुलनात्मकसमीक्षणमपरभागे द्रष्टव्यम्।

महाप्रभुलालगोस्वामी

# विषयसूची

# तत्त्वचिन्तामणिः

## प्रत्यक्षखण्डम्

गुणातीतोऽपीशस्त्रिगुणसचिवस्त्र्यक्षरमय-
स्त्रिमूर्त्तिर्यः सृष्टि[1]स्थितिविलयकर्म्माणि तनुते ।
कृपापारावारः परमगतिरेकस्त्रिजगतां
नमस्तस्मै कस्मैचिदमितमहिम्ने पुरभिदे ॥१॥

आलोकः

ॐ नमस्तस्यै

वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि
दृष्ट्वा दशाननसमागमनभ्रमेण ।
भूयोऽपि शैलपरिवृत्तिभयेन गाढ-
मालिङ्गितो गिरिजया गिरिशः पुनातु ॥१॥

दर्पणः

शङ्करजगदम्बिकयोरङ्के पङ्केन खेलन्तम् ।
लम्बोदरमवलम्बे यं वेद न तत्त्वतो वेदः ॥ १ ॥
पुंसामार्त्तिभिदे कलानिधिकुलोत्तंसाय संसारभी–
विध्वंसाय मुनीन्द्रमानससरोहंसाय कंसारये ।
अङ्कालम्बितशिवयमुज्ज्वलरुचिं गुञ्जावतंसादिना
यं साशङ्कमुपागमत्कमलभूः कृष्णाय तुभ्यं नमः ॥ २ ॥

माथुरी

न्यायाम्बुधिकृतसेतुं हेतुं श्रीराममखिलसम्पत्तेः ।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा ॥ १ ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
विशदीकृत्य दर्श्यन्ते प्रत्यक्षमणिफक्किकाः ॥ २ ॥

निर्विघ्नं प्रारिप्सित'तत्त्वचिन्तामणि'नामग्रन्थसमाप्तिकामनया कृतं महादेव-नमस्काररूपं मङ्गलं शिष्यशिक्षार्थमादौ निबध्नाति 'गुणातीत' इति । तस्मै नमः

१. दर्पणापाठानुरोधेन 'सर्ग' स्थाने 'सृष्टि' रित्येव पाठः स्वीकृतः ।

आलोकः

अधीत्य जयदेवेन हरिमिश्रात् पितृव्यतः ।
तत्त्वचिन्तामणेरित्थमालोकोऽयं प्रकाश्यते ॥२॥

दर्पणः

चतुर्भिरास्यैश्चतुरोऽपि वेदानुच्चारयन्नक्रमतो विरञ्चिः ।
पाठाग्रपश्चात्त्वविशेषमोषसन्तोषिशिष्यः शिवमातनोतु ॥ ३ ॥

धत्ते नावनतिं महीधरसुताभागावरुद्धं शिरो
नैवोदञ्चति चारुसान्त्वनवचो मूकायितेऽर्द्धे मुखे ।
आश्लेषोऽपि यथोचितं न हि भवत्येकाकिना बाहुना
मामव्यादिति विक्लवः प्रियतमामानापनोदे शिवः ॥ ४ ॥

धनाय पद्मां भविकाय दुर्गां गृहाय गौरीमितरे श्रयन्तु ।
अहं महानन्दपदस्य धात्रीं विद्याविधात्रीं गिरमाश्रितोऽस्मि ॥ ५ ।

गौर्या गिरीशादिव कार्तिकेयो यो धीरया चन्द्रपतेरलम्भि ।
आलोकमुद्दीपयितुं नवीनं स दर्पणं व्यातनुते महेशः ॥ ६ ॥

माथुरी

तस्मै कस्मै ? इत्यपेक्षायामाह **गुणातीत** इति । यः, गुणातीतोऽपि—समवायसम्बन्धेन गुणसामान्याभाववानपि, ईशः अप्रतिहतेच्छः, अप्रतिहतत्वम्—अविसंवादित्वम् । 'अपिः' सर्वत्र विरोधाभाससूचनाय । निर्गुणत्वस्य इच्छाविरोधात्[1] । गुणपदस्य साङ्ख्यमतसिद्धसत्त्वरजस्तमोलक्षणगुणपरतया हि विरोधपरीहारसम्भवाद् विरोधाभासत्वम् । सत्त्वादयश्च न्यायनये सृष्टिस्थितिप्रलयोत्पादका अदृष्टभेदा एवेति नाप्रसिद्धिः[2] ।

यो गुणातीतोऽपि **त्रिगुणसचिव** स्वनिष्ठज्ञानेच्छाकृतिसहकारेण कार्यमात्रहेतुः । स्वनिष्ठत्वप्रवेशाद् विरोधः[3] । एवं **गुणातीतोऽपि** इत्यस्य सर्वत्रान्वयः । **त्र्यक्षरमयः** त्रयो ज्ञानेच्छाप्रयत्नाः, अक्षराः—अविनाशिनः यत्र, तन्मयः—तदात्मकः । केचित्तु **त्र्यक्षरमयः** त्रयः—अकारोकारमकाराः, अक्षराः-वर्णाः, तन्मयः—तद्घटितोङ्कारपदाभिधेयः, सङ्केतसम्बन्धेन ॐकाररूपशब्दवानिति यावत् । गुणातीतपदेन

१. विरोधः—असामानाधिकरण्यम्; न तु प्रतिबध्यत्वप्रतिबन्धकत्वान्यतरसम्बन्धेन ज्ञानविशिष्टज्ञानविषयत्वम्, समानप्रकारकयोरेव ज्ञानयोः प्रतिबध्यप्रतिबन्धकभावेन इच्छात्वावच्छिन्नगुणत्वावच्छिन्नाभावज्ञानयोस्तदसम्भवात् ।

२. अन्यथाऽदृष्टविशेषव्यतिरिक्तस्य सत्त्वादेर्न्यायमतेऽसत्त्वेनाप्रसिद्धिः स्यादिति भावः ।

३. अत्र अग्रे च सर्वत्र 'विरोध' इति पूर्वं 'गुणातीतत्वेन' इति योज्यम् ।

दर्पणः

अत्र श्लोकानां व्याख्या टीकाकृता सुकरत्वादुपेक्षिता। सा त्वेवं प्रारिप्सितप्रतिबन्धकविघ्नविघातकं पुरभिन्नमस्काररूपं मङ्गलं शिष्यशिक्षायै निबध्नाति—गुणेति। सत्त्वरजस्तमोरूपान् गुणानतीतो गुणातीतः। यद्यपि नैयायिकमते सत्त्वादयो गुणाः साङ्ख्यादेरिव नातिरिक्ताः, तथापि स्थित्यादिसर्गादिसंहारादिकार्यानुगुणास्मदाद्यदृष्टविशेषा एव सत्त्वरजस्तमांसि इति ध्येयम्। ईशोऽप्रतिहतेच्छुः। त्रिगुणसचिवः ज्ञानेच्छाप्रयत्नरूपगुणत्रयवान्। अक्षरमयः अकारोकारमकारात्मकप्रणववाच्यः। वाच्यतायां मयट्। त्रिमूर्त्तिर्ब्रह्मविष्णुरुद्रात्मकशरीरत्रयवान्। सृष्टिस्थितिविलयरूपाणि कर्माणि कार्याणि यः तनुते विस्तारयति, पुनः पुनः करोतीत्यर्थः। कर्मपदोपादानं कार्यत्वपुरस्कारेण सृष्ट्यादिभिरीश्वरानुमानं सूचयितुम्। ईश्वर एव ब्रह्मविष्णुरुद्रशरीराणि गृह्णातीति मतेनेदम्।

कृपेति। निरुपधिपरदुःखप्रहाणेच्छाया अतिशयिताश्रय इत्यर्थः। त्रिजगतां त्रिजगद्वर्तिप्राणिनाम्, परमगतिः परमहितकर्ता। एकः स्वसमानजातीयद्वितीयरहितः।

पुरभिदे पुरनामकदैत्यभेदनकर्त्रे। अनेन विघ्ननिवारणक्षमत्वं सूचितम्। कस्मैचिद् विशिष्याशक्यनिर्वचनीयमहिम्ने। अत्र हेतुः अमितमहिम्ने। अपिशब्दोऽत्र गुणातीतविशेषणेन सहान्येषां विशेषणानां विरोधाभाससूचनाय। तत्र विरोधस्याभासत्वं व्याख्यानरीत्या। विरोधाभानन्तु सर्वत्र गुणपदस्य वैशेषिकसिद्धगुणसामान्यपरत्वे। ईशत्रिगुणसचिवयोः यथाव्याख्यातयोः मयटः समवायपरत्वे। मूर्ति-

माथुरी

सम्बन्धसामान्यावच्छिन्नगुणसामान्याभाववतो[1] विवक्षितत्वाद् विरोधः। समवायसम्बन्धावच्छिन्नगुणसामान्याभावपरतया सत्त्वादिलक्षणगुणाभावपरतया वा विरोधपरिहार इत्याहुः। त्रिमूर्ति इति। सन्निति शेषः। ब्रह्मविष्णुशिवात्मकशरीरत्रयवान् सन्, सृष्टिस्थितिप्रलयकर्माणि 'तनुते' इत्यर्थः। तनुते विस्तारानुकूलयत्नवान्, अतो विरोधः। एतेन सर्गादिरेव ईश्वरे प्रमाणमिति[2] सूचितम्। 'कृपापारावारः' निरुपधिपरदुःखप्रहाणेच्छा[3] कृपा, तस्या असाधारणाधिकरणमित्यर्थः। अत्रापि इच्छाया गुणत्वाद् विरोधः। त्रिजगताम्, परमगतिः परमहितकर्त्ता, कर्तृत्वस्य गुणत्वाद् विरोधः। एकः अद्वितीयः, नित्यकृतिमद्वृत्तिभेदप्रतियोगितानवच्छेदकैकत्ववानिति विरोधः। एकः अद्वितीयः,

---

१. 'सम्बन्धसामान्येन गुणो नास्ति' इत्याकारकप्रतीतिसिद्धसम्बन्धत्वावच्छिन्नसंसर्गकप्रतियोगिताकगुणसामान्याभाववत इत्यर्थः।

२. अनुमानविधयेति भावः।

३. निरुपधिपरदुःखप्रहरणेच्छेति ग०।

अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम् ।
तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरु-
र्गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम् ॥२॥

दर्पणः

पदस्यावच्छिन्नपरिमाणपरत्वे । बहुव्रीहिलभ्यशरीरसंयोगपरत्वे वा । **तनुत** इत्यत्राख्यातार्थे । **कृपे**त्यत्र यथोक्तार्थे । **परमे**त्यत्र यथोक्तार्थ एव । एकपदस्य सङ्ख्यापरत्वे । सर्वत्र चैकवचनेन एकत्वसङ्ख्यालाभे । **पुरभिद** इत्यत्र यथाव्याख्यातकृतिरूपार्थे । **कस्मैचिदमितमहिम्ने** इत्यनयोर्महत्त्वाख्यगुणपरत्वे इति ।

निजकीर्तेरनुवर्तनाय स्वनाम ग्रन्थनाम च दर्शयन्प्रेक्षावत्प्रवृत्त्यर्थमितरग्रन्थापेक्षया स्वग्रन्थस्य प्रकर्षमाह—**अन्वीक्षेति** । अत्रोभयशास्त्रसाराभिज्ञकृतत्वं दुर्बोधतरन्यायशास्त्र-सिद्धान्तोपदेशगुरुकृतत्वं सङ्क्षिप्तत्वं च प्रकर्षः ।

मणिनामधारणोपयोगि मणिसारूप्यमाह—**यत** इति ।

**प्रसङ्गादिति** । स्मृतस्योपेक्षानर्हत्वादित्यर्थः ।

माथुरी

यावत्[1] । एकत्वस्य गुणत्वाद् विरोधः । तस्मै किम्भूताय ? इत्यपेक्षायामाह **कस्मैचिद्** इति, विशिष्यानिर्वचनीयगुणग्रामायेत्यर्थः-पुनः किम्भूताय ? **अमितमहिम्ने** महिमा—सौन्दर्यकरुणादयः । पुनः किम्भूताय ? **पुरभिदे**—एकदा पुरभेदनकर्त्रे । पुरभिदित्यनेन एकदा पुरत्रयभेदनसमर्थस्य सुतरां विघ्नवारणक्षमत्वं सूचितम् ॥ १ ॥

प्रेक्षावत्प्रवृत्त्यर्थं ग्रन्थान्तरापेक्षया स्वीयग्रन्थस्योत्कर्षं दर्शयन् स्वकीर्त्यनुवृत्तये स्वनाम ग्रन्थनाम च दर्शयति 'अन्वीक्षा' इति । 'गङ्गेशः', अन्वीक्षानयम्' न्यायशास्त्रम्, 'गुरुभिः, आकलय्य' ज्ञात्वा, 'गुरूणां' प्राभाकराणाम्, मतं च गुरुभिर्ज्ञात्वा, 'चिन्तादिव्यविलोचनेन[2] च, चिन्तारूपदिव्यचक्षुषा च, 'तयोः' न्यायगुरुमतयोः, 'अखिलम्'

१. अन्यथा स्वसजातीयद्वितीयराहित्यस्य द्वितीयशब्दार्थत्वे ईश्वरसजातीयस्य द्वितीयस्याभावेन प्रतियोग्यप्रसिद्धया तदभावरूपस्य तद्राहित्यस्याप्रसिद्धिस्तस्य गुणात्मकतया गुणातीतत्वेन तद्विरोधस्यानुपपत्तिश्च स्यात् ।
ईश्वरगतैकत्वस्यापि क्रमज्जीवनिष्ठभेदप्रतियोगितावच्छेदकतया, नित्यस्य जात्यादेराश्रये गगनादौ वृत्तिमतो भेदस्य प्रतियोगितावच्छेदकतया नित्यायां कृतौ वर्तमानस्य भेदस्य प्रतियोगितावच्छेदकतया च नित्य-कृति-मदिति शब्दानामुपादानम् ।

२. चिन्तादिव्यविलोकनेनेति ग० ।

दर्पणः

**केचिदिहो**पोद्घातसङ्गतिः निष्फलस्वोक्त्यसम्भवेनोक्तसिद्धयर्थत्वादेतच्चिन्ताया इत्याहुः ।

**भूमिमिति** । कर्तव्यविचारोपयोगिनयर्थं दर्शयतीत्यर्थः । **एकं** एकजातीयं **वाक्यं** येषान्ते **एकवाक्याः** अविप्रतिपत्तिमन्तः पुरुषाः तेषां भाव **एकवाक्यतेत्य**भिप्रेत्याह—**एकेति** । अनेन समाप्तिकामा मङ्गलाचरणवन्तः सकलशिष्टाविप्रतिपत्तेरिदमनुमानं सूचितं भवतीति भावः ।

**अन्यत्र** वादे । **सर्वहेतुकः** साधारणधर्मदर्शनादिहेतुकस्त्रिविधोऽयमित्यर्थः ।

**नान्वयेत्यादि**साध्ये विनापीति हेतुर्न सङ्गच्छते । व्यभिचारादर्शिनः कारणताग्रहसम्भवादित्य आह—**तत्र विचार इति** । तथा च विचारे सति यदन्वयव्यतिरेकगम्यत्वं प्रमाविषयत्वरूपं तन्निषेधस्य विवक्षितत्वात् नाक्तदोष इति भावः । यद्वा विप्रतिपत्तिजसंशयानावश्यकत्वेऽपि संशयावश्यकत्वादाह—**तत्रेति** ।

**विचारे** संशये । सति सप्तमीयम् । तत्राचार इति पाठः । निमित्तसप्तमी चेयमित्यन्ये । **तत्र** अभिमतकर्मसमाप्ताविति मूलार्थ इति **केचित्** ।

**प्रथमोद्दिष्टत्वेनेति** । पुरः स्फूर्तिकत्वे प्रथमोद्दिष्टत्वं तत्र च कार्यकारणभावो वीजमिति भावः ।

**नान्वयेति** । अन्वयव्यतिरेकयोः स्वरूपसतोर्गमकत्वं नेत्यतः तयोर्ज्ञानं तस्यापि सहकारित्वमतो विशिष्टं साध्यमिति भावः । **यद्यपीति** । कारणताया अंशत्रयमनन्यथा-

माथुरी

निःशेषम्, सारम्' अभिप्रायम्, 'विलोक्य मितेन वचसा श्रीतत्त्वचिन्तामणिं तनुते' इत्यन्वयः । अन्योऽपि 'गङ्गेशः' समुद्रः, 'मितेन वचसा' स्तवादिना, 'चिन्तामणिं तनुते' इत्युपमालङ्कारो व्यङ्ग्यः । गुरुमतस्य प्रायशो निरस्यतया विशिष्य तदुल्लेखः । गङ्गेशः किम्भूतः ? 'दोषगणेन' दोषसमूहेन, 'दुर्गमतरे' अत्यन्तदुर्गमे, 'तन्त्रे' सूत्रादौ, 'सिद्धान्तदीक्षागुरुः' ॥२॥

ग्रन्थस्य चिन्तामणिनामकरणे बीजभूतं मणेः सादृश्यं[1] दर्शयति 'यतो मणे' रिति । इदञ्च सर्वत्र सम्बध्यते । 'प्रचण्डेति' प्रचण्डाः पाखण्डाः—बौद्धाः, त एव तमांसि, तेषां तिरस्क्रिया । मणिपक्षे—प्रचण्डपाखण्डीभूतानि यानि तमांसि तेषां तिरस्क्रियेत्युन्नेयम् । 'विपक्षेति' विपक्षा ये बौद्धादयः, तेषां यः पक्षः—सिद्धान्तः, तत्र, 'न विचारचातुरी' न व्यवस्थानकौशलम्[2] । मणिपक्षे तु 'विपक्षपक्षे चौरादिपक्षे,

१. मणिसादृश्यमिति ख० ।
२. न व्यस्थापनकौशलमिति ख० ।

यतो मणेः पण्डितमण्डनक्रिया
प्रचण्डपाषण्डतमस्तिरस्क्रिया ।
विपक्षपक्षे न विचारचातुरी
न च स्वसिद्धान्तवचोदरिद्रता ॥३॥

इह खलु सकलशिष्टैकवाक्यतया अभिमतकर्म्मारम्भसमये

आलोकः

प्रसङ्गान्मङ्गलस्य समाप्तिहेतुतां स्थापयितुं भूमिमारचयति—इहेति । इह

दर्पणः

सिद्धत्वं नियमः कार्यप्रागभावावच्छिन्नसमयवर्तित्वम् । तत्र नियमस्यान्वयव्याप्तितया न व्यतिरेकसहचारापेक्षाऽऽवश्यकीत्यर्थः ।

तत्रेति । कार्यस्येति शेषः । तथा च व्यतिरेकसहचारज्ञानस्य साक्षादजनकत्वेऽपि व्यभिचारशङ्कानिराकरणद्वारा उपयोगित्वमस्त्येव[1] । यद्यपि व्यतिरेकसहचारग्रहे सत्यपि क्वचिद्व्यभिचारशङ्का तिष्ठत्येव तथापि यत्किञ्चिदधिकरणीयप्रतिबन्धकनिराकरणेऽप्युपयोगित्वसिद्धिः । नियतव्यतिरेकसहचारविवक्षया वा सार्वत्रिकव्यभिचारशङ्कावारणमिति भावः ।

नन्वेवं तुल्यकक्षतयोभयोपादानमसङ्गतमित्यनुशयादाह—**वस्तुत** इति । **नान्वयगम्या** नान्वयसहचारज्ञानसहकृतप्रत्यक्षगम्या । **न व्यतिरेकगम्या** । न व्यतिरेकसहचारज्ञानसहकृतप्रत्यक्षगम्येति मूलमेवं व्याख्येयम् । व्यभिचारज्ञानविरोधिसहचारज्ञानत्वेनोभयोस्तुल्यवदन्वयव्याप्तौ ग्राहकत्वस्य वक्ष्यमाणत्वादिति भावः ।

माथुरी

न विलक्षणचरणचातुरी । मणिप्रभया तमोनिवृत्तेरिति भावः । 'न च स्वेति' स्वस्य-न्यायदर्शनस्य, यानि सिद्धान्तवचांसि तेषां 'न दरिद्रता' । मणिपक्षे स्वस्य—धनस्य, सिद्धः अन्तः—अवसानं वृत्तमिति वचसोऽदरिद्रता न चेत्यर्थः, अकारप्रश्लेषात् । दरिद्रता—प्रयोगाभावः, अनन्तं धनं भवतीत्यर्थः[2] । केचित्तु मणिपक्षे विपक्षेत्यस्य—विपक्षपक्षेनस्य–विपक्षपक्षश्रेष्ठस्य, विचारचतुरी–विलक्षणचरणचातुरी, न चेत्यन्वयः । 'स्वसिद्धे'त्यस्य स्वस्य—साधनस्य, सिद्धः अन्तः—अवसानम्, वृत्तमिति वचसो दरिद्रतेत्यर्थ इत्याहुः । एतन्मते नाकारप्रश्लेषः ॥३॥

---

१. अत एव तदधिकरणीयतद्विरोधिसहचारधियो व्याप्तिग्राहकत्वं वक्ष्यामः । नन्वेवं साध्याभावान्यसाधनाभावसहचारग्रहस्यापि तदधिकरणे साध्याभववति साधनमिति व्यभिचारधीविरोधितया साध्यसाधनव्याप्तिग्राहकत्वापत्तिः । साध्यनिष्ठसाधनव्यभिचारसाधननिष्ठसाध्ये—इत्यधिकः पाठोऽत्रादर्शपुस्तके ।

२. भवतीत्यभिप्राय इति ख० ।

सत्समाप्तिकामा मङ्गलमाचरन्ति तत्र यद्यपि मङ्गलस्य कारणता नान्वयव्यतिरेकगम्या विनापि मङ्गलं प्रमत्तानुष्ठितसमाप्तेः। न च[1] तत्र जन्मान्तरीयतत्कल्पनम्, अन्योऽन्याश्रयात्, लोकावगतकारणेनान्यथासिद्धेश्च।

आलोकः

लोके। खलु वाक्यालङ्कारे। एकवाक्यता अविप्रतिपत्तिरतो भ्रममूलकताशङ्का निराकृता। विवादाङ्गसंशयबीजविप्रतिपत्त्यप्रदर्शनान्न्यूनता च परिहृता। तत्त्वनिर्णिनीषुविचारतयाऽन्यहेतुकसंशयस्यापि भावात्। तदुक्तम्—अन्यत्र[2] सर्वहेतुक इति।

तत्र विचारे। तत्र प्रथमोद्दिष्टत्वेन पुरः स्फूर्तिकतया प्रथमं प्रत्यक्षमेव प्रमाणमाशङ्क्य निषेधति—नान्वयेति। नान्वयव्यतिरेकसहचारज्ञानसचिवाध्यक्षगम्येत्यर्थः। अत्र यद्यपि कारणताशरीरप्रविष्टाया व्याप्तेरन्वयव्याप्तितया न व्यतिरेकसहचारापेक्षा-

दर्पणः

द्वितीयेति। व्यतिरेकसहचारखण्डकतयेत्याशयः। यद्यपि व्यतिरेकसहचारो यथाश्रुते न तेन खण्ड्यते नियतव्यतिरेकसहचारखण्डने तु यदा समाप्तिस्तत्पूर्वमवश्यं मङ्गलमिति नियतान्वयखण्डनमपि स्यादेव। यदि च व्यभिचाराज्ञानसहकृतो व्यतिरेकसहचारः खण्डनीयस्तदाऽन्वयसहचारोऽपि तादृशः खण्डितः स्यादेव। तथापि अभ्युपगमवादेनाह—न हीति। न चायमभ्युपगमवादोऽपि कथं शङ्काया एवानुक्तिसम्भवादिति वाच्यम्, मङ्गलव्यतिरेके सत्यग्रिमक्षणेऽवश्यं समाप्तिव्यतिरेक इति नियतो

माथुरी

स्वयंकृतस्य मङ्गलस्य कदाचित् केनचित् निरर्थकत्वमाशङ्क्येतेत्यतो मङ्गलस्य सफलत्वं व्यवस्थापयितुं प्रथमतो मीमांसकसम्प्रदायमतमुपदर्शयति 'इहे' त्यादिना 'सम्प्रदायविद' इत्यन्तेन[3]। 'इह' अस्मिन् लोके, मनुष्यलोक इति यावत्। 'खलु' अवश्यम्, 'सकलशिष्टैकवाक्यतया' मङ्गलस्य समाप्तिहेतुत्वेन सकलशिष्टसम्मततया। एतेन[4] भ्रममूलकता[5] निराकृता[6]। 'आरम्भसमये' तत्पूर्वसमये। 'तत्समाप्तिकामाः' अभिमतकर्मसमाप्तिकामाः।

ननु समाप्तिहेतुताया मङ्गलवृत्तित्वे किं मानम्? न तावत् प्रत्यक्षम्, यस्य पुरुषस्य प्रमत्तकर्तृकसमाप्तिस्थले ऐहिकमङ्गलविरहनिश्चयो मङ्गले लोका-

१. नापीति ख०।
२. विजिगीषुविचारइति भावः।
३. सम्प्रदाय इत्यन्तेनेति ग०।
४. 'एतेन' इत्यस्य 'मङ्गलस्य समाप्तिहेतुत्वेन सकलशिष्टसम्मतत्वकथनेन' इत्यर्थः।
५. 'मङ्गलस्य समाप्तिहेतुताया' इति 'भ्रममूलकता' इत्येतत्पूर्वं योज्यम्।
६. सर्वेषां शिष्टानां मङ्गलस्य समाप्तिहेतुत्वे भ्रमो न सम्भवतीत्याशयः।

आलोकः

वश्यकी तथापि सति व्यतिरेके हेतोस्तत्र सत्त्वशङ्कया व्यभिचारशङ्काग्रस्ततयाऽन्वयोऽप्यकिञ्चित्कर इति तच्छङ्कानिवृत्त्यर्थं व्यतिरेकापेक्षाप्यस्तीति द्वयमप्युपात्तम् ।

वस्तुतो नान्वयगम्या न व्यतिरेकगम्येति साध्यद्वयम् । न चात्र हेतोर्द्वितीयमात्रीयतया प्रथमसाध्ये हेत्वलाभः । न हि वयं विनाऽपि मङ्गलमित्यादिना ग्राहकाभावमाचक्ष्महे येनैकतरसाध्यमात्रविषयता हेतोः स्यात्, किन्तु यदा समाप्ति-

दर्पणः

व्यतिरेकः मङ्गलतद्व्याप्येतरहेतुसम्पत्तौ मङ्गलतद्व्याप्ययोः सतोरग्रिमक्षणेऽवश्यं समाप्तिरिति नियतोऽन्वयो ग्राहको वाच्यः । 'अनन्यथासिद्धपूर्वोक्तनियतान्वयस्य ग्राह्यपर्य्यवसन्नत्वादि'ति यन्मतं तत्र द्वितीयमात्रीयता सम्भवति । न हि तदितरसकलसमवधाने मङ्गलव्यतिरेके समाप्तिव्यतिरेको मङ्गलव्यतिरेके समाप्तिसत्त्वे सम्भवतीति चरमोपक्रमाणामाद्यमेव द्वितीयमिति प्रथममात्रीयतयेत्यर्थं इति कश्चित् ।

वस्तुतस्तु कारणत्वं नानन्यथासिद्धनियतपूर्ववर्त्तित्वम्, अयोग्यनानापदार्थपतितत्वेन तस्याप्रत्यक्षत्वापत्तेः । तथा च नैतदनुसारेण सहचारो विचार्यः, किन्तु

माथुरी

वगतकारणेन समाप्तिं प्रति अन्यथासिद्धत्वग्रहश्च विद्यमानस्तेन पुरुषेण तदानीं मङ्गलवृत्तितया तस्याः प्रत्यक्षतो निश्चेतुमशक्यत्वात् । अत एव नानुमानाद्यपि, तादृशपुरुषविशेषेण तदानीं तस्यानुमानादिनापि ग्रहासम्भवादित्यत आह 'तत्र यद्यपि' इति । तत्र—आचारे, सप्तम्यर्थो निमित्तत्वं तच्च प्रयोजकत्वम्, अन्वयश्चास्य कारणतायाम्; तथा च तदाचारप्रयोजकीभूता समाप्तिकारणता, यद्यपि तादृशपुरुषविशेषेण तादृशकालविशेषे न मङ्गलस्यान्वयव्यतिरेकगम्येति योजना । एतेन मङ्गलवृत्तिसमाप्तिकारणतात्वेन पक्षत्वे तादृशकारणतायां सिद्धायां विवादाभावः; असिद्धायामाश्रयासिद्धिः । न च मङ्गलवृत्तिकारणतात्वेन पक्षता, न तु समाप्त्यन्तर्भावः, समाप्त्यन्वयव्यतिरेकगम्यत्वाभावश्च साध्यः, कारणतात्वञ्च कारणपदप्रवृत्तिनिमित्तत्वम्, तेन कारणतात्वस्य कार्यभेदेन विभिन्नतया प्रकृतकारणतात्वेन पक्षत्वे आश्रयासिद्धिः, कारणतान्तरत्वेन पक्षत्वे चार्थान्तरमिति दोषस्य नावकाश इति वाच्यम्; तत्रेत्यस्यानन्वयापत्तेः; मङ्गलवृत्तिकारणतायास्तादृशाचारविषयत्वासिद्धेरिति दूषणं प्रत्युक्तम्, समाप्तिकारणतात्वेन पक्षत्वात् । तादृशपुरुषविशेषस्य तादृशकालविशेषे मङ्गलान्वयव्यतिरेगम्यत्वञ्च मङ्गलान्वयव्यतिरेकसहचारज्ञानजन्यमङ्गलवृत्तिताप्रकारकप्रत्यक्षनिश्चयविषयत्वम्; तथा च 'समाप्तिकारणता न मङ्गला-

नापि मङ्गलं सफलम्, अविगीतशिष्टाचारविषयत्वात्, दर्शवदिति

आलोकः

स्तत्पूर्वं मङ्गलमित्येवंरूपव्याप्तिघटितकारणत्वरूपग्राह्याभावग्रहम्। स चोभयसाध्यसाधारण एव। विषयाभावग्रहस्य प्रत्यक्षमात्रे प्रतिबन्धकत्वात्। न च ग्राह्यविरहनिश्चयो नास्त्येव, जन्मान्तरमङ्गलसंशयात् तत्संशयश्च न विरोधी मानमात्रोच्छेदापत्तेरिति वाच्यम्, यद्धीसामग्री यत्र प्रतिबन्धिका विशेषादर्शने सति तत्र तद्धीरपीति

दर्पणः

स्वरूपसम्बन्धविशेषः कारणत्वं तद्ग्रहे च यदा समाप्तिस्तत्पूर्वमवश्यं मङ्गलम्। यदा न मङ्गलं तदा समाप्त्यभाव इत्येवंरूपयोरन्वयव्यतिरेकयोर्मिलितयोरेव ज्ञानस्य जनकत्वमन्वयव्यतिरेकाभ्यामिति यथाश्रुतावेव साध्यहेतू इति सारम्।

**तस्यापि** संशयस्यापि। इदञ्च मतान्तरेण प्रतिबन्धकत्वेन प्रतिबन्धनियतत्वस्य विवक्षया वा। अस्ति हि संशयस्याप्रतिबन्धकत्वेऽपि। तत्सामग्र्यां प्रतिबन्धनियमः। **अव्यभिचारे सति** व्यभिचारज्ञानाभावे सति।

ननु कार्यकारणभावमगृहीत्वापि प्रमत्तनास्तिकानुष्ठितसमाप्तिस्थले प्रमत्तनास्तिकानुष्ठितसमाप्तिर्न मङ्गलपूर्विका, मङ्गलासमवहितसामग्र्यजन्यत्वे सति जन्यत्वादिति

माथुरी

न्वयव्यतिरेकसहचारज्ञानजन्यतत्कालीनतत्पुरुषीयमङ्गलवृत्तिताप्रकारकप्रत्यक्षनिश्चयविषय' इति फलितम्। अखण्डाभावस्य साध्यत्वात्र जन्यान्तभागवैयर्थ्यम्[1]। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया च नांशतः सिद्धसाधनम्। समाप्तिकारणतात्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे मङ्गलावृत्तिसमाप्तिकारणतायामुक्तसाध्यस्य सिद्धतया सिद्धसाधनं स्यादिति भावः।

नन्वनन्यथासिद्धनियतपूर्ववर्त्तिता कारणता, तत्रानन्यथासिद्धत्वज्ञाने न सहचारज्ञानापेक्षा[2], न वा नियमांशज्ञानेऽपि; व्यापकताग्रहे सहचारग्रहस्याहेतुत्वात्[3]। अत धूमत्वादिघटितव्याप्तिग्रह[4] एवान्वयसहचारग्रहस्य हेतुत्वेन व्यवस्थापितत्वात्। अत

१. जन्यान्तभागरहितस्यापि साध्यत्वानुसरणेन यद्यप्यभिमतं सिद्धयति तथापि तदंशरहितस्य तस्याभावान्तरत्वेन तस्य तदंशघटिततादृशाभावात्मकसाध्येऽप्रविष्टतया न तदंशवैयर्थ्यमिति भावः।

२. अन्यथा जलादौ वह्न्यादेरनन्यथासिद्धत्वं न गृह्येत, गृह्यते च 'तद्धर्मावच्छिन्नं प्रति नियतपूर्ववर्तित्वे सति तद्धर्मावच्छिन्नकारणतयाऽव्यवह्रियमाणं यद्यत् तत्तद्भेदकूटवत्त्व' रूपं तदिति भावः।

३. अन्यथा वह्नौ धूमसहचारग्रहणे धूमेऽपि वह्निव्यापकताग्रहः स्यादिति भावः।

४. वह्न्यादिसामानाधिकरण्यावच्छेदकधूमत्वादिरूपव्याप्तिग्रह इत्यर्थः।

फलसिद्धौ[1] प्रारिप्सितसमाप्तेस्तदानीमपेक्षितत्वेन नियमेनोपस्थितत्वात्

आलोकः

दशाविशेषे तस्यापि प्रतिबन्धकत्वात् । प्रकृते चान्वयव्यतिरेकव्यभिचाराभ्यां विशेषदर्शनाभावादिति भावः ।

अन्योन्याश्रयादिति । सिद्धे जन्मान्तरीयमङ्गलेऽव्यभिचारे सति हेतुताग्रहः कार्यकारणभावे च गृहीते समाप्त्या तदनुमानमित्यर्थः ।

ननु समाप्तेः कार्यतया हेतुत्वेनास्तु परिशेषान्मङ्गलानुमानमित्यत आह—लोकावगतेति । तदसमवहितसामग्र्यजन्यत्वात्मकपरिशेषासिद्धेरित्यर्थः ।

दर्पणः

मङ्गलानुमानं कर्त्तुं शक्यमतो नान्योऽन्याश्रय इत्याशयेन शङ्कते—ननु समाप्ते[2]रिति । यदि तु मङ्गलस्य समाप्तिजनकतानुमानकृते इयं फक्किका योज्यते, तदा प्रत्यक्षप्रकरणेऽनुमानोपन्यासे सन्दर्भविरोधो भवतीति ध्येयम् । कार्यतया सत्यन्तसहितकार्यतया । हेतुत्वेनेति । हेतुत्वविशेषितमङ्गलानुमानं पूर्ववर्त्तित्वविशेषितमङ्गलानुमानं मङ्गलपूर्वकेत्यनुमानमिति यावत् । हेतुमत्त्वेनेति पाठे समाप्तेर्विशेषणमिदम् ।

माथुरी

एवान्वयोऽन्वयसहचारधीः, व्यतिरेकश्च व्यभिचारज्ञानव्यतिरेकः, तदुभयजन्यतादृशप्रत्यक्षनिश्चयविषयो नेत्यर्थ इत्यपि निरस्तम् । व्यतिरेकसहचारज्ञानवदन्वयसहचारज्ञानस्याप्यहेतुत्वात् ।

अत्राहुः—तदितरयावत्कारणसत्त्वे तत्सत्त्वेऽवश्यं कार्यम्, तदभावे च कार्याभाव इत्यन्वयसहचारव्यतिरेकसहचारग्रहो विशिष्टकारणतासाक्षात्कारहेतुः, तथैवान्वयव्यतिरेकात्; न त्वंशभेदव्यवस्था ।

नव्यास्तु—अन्वयो हेत्वभाववति कार्यान्वयज्ञानं व्यभिचारज्ञानमिति यावत् । तद्व्यतिरेकजन्यतादृशनिश्चयविषयो नेत्यर्थ इति प्रोचुः[3] । हेतुमाह 'विनापि' इति । तदानीं तत्पुरुषेण विनापि मङ्गलं प्रमत्तानुष्ठितसमाप्त्युत्पत्तिदर्शनादित्यर्थः । तथा च तत्कालीनतत्पुरुषीयमङ्गलव्यतिरेकव्यभिचारग्रहविषयनिरूपितकारणतात्वादिति हेतुर्नातो वैयधिकरण्यम्[4] ।

१. सफलत्वसिद्धाविति ख०, ग०, च ।

२. हेतुमत्त्वेनेति पाठान्तरम् ।

३. इति प्राहुरिति ख० ।

४. पक्षतावच्छेदकेन सह हेतोर्नासामानाधिकरण्यम् । अन्यथा पक्षतावच्छेदकस्य समाप्तिकारणतायां 'विनापि मङ्गलं प्रमत्तानुष्ठितसमाप्त्युत्पत्तिदर्शन' रूपस्य हेतोश्च तत्पुरुषे सत्त्वेन तयोस्तत्त्यादिति भावः ।

आलोकः

**यद्वा कारणताशरीरप्रविष्टव्याप्त्यनन्यथासिद्धयोर्यथायथमसत्त्वं हेतुभ्यामाह—लोकेति न चान्यथासिद्धिषु पञ्चसु तदनन्तर्भावः। अन्यत्र क्लृप्तपूर्ववर्त्तिन एवेत्यादेरवश्यकल्प्यपूर्ववर्त्तिन एव कार्यसम्भवे तत्सहभूतत्वमित्यर्थः। तथा च तत्रैवैतदन्तर्भावादिति भावः।**

दर्पणः

अन्योऽन्याश्रयोपपादकत्वे चास्य ग्रन्थस्य चकारासङ्गतिरित्यरुचेराह—**यद्वेति।** **अवश्यकल्प्येति।** तेन महत्त्वेनानेकद्रव्यवत्त्वस्यान्यथासिद्धिर्भवतीति भावः। यथा चैवमन्यथासिद्धयन्तरवैयर्थ्यं न भवति तथा वक्ष्यते।

**केचित्तु** समाप्तिर्यदि मङ्गलासमवहितसामग्रयजन्या सती मङ्गलजन्या न स्यादजन्या स्यादिति तर्केण व्यभिचारशङ्कानिराशः स्यादत आह—मूले **लोकेति।**

माथुरी

केचित्तु—मङ्गलं न समाप्त्यन्वयव्यतिरेकज्ञानजन्यतत्कालीनतत्पुरुषीयसमाप्तिकारणत्वप्रकारकप्रत्यक्षनिश्चयविषयः, तत्कालीनतत्पुरुषीयसमाप्तिव्यभिचारित्वग्रहविषयत्वादिति समुदितार्थं इत्याहुः।

ननूक्तहेतुरसिद्धः, तस्य हि पुरुषस्य तदानीं प्रमत्तानुष्ठितसमाप्तावैहिकमङ्गलव्यभिचारित्वग्रहेऽपि न तत्र मङ्गलसामान्यव्यतिरेकव्यभिचारित्वग्रहः, तेन पुरुषेण प्रमत्तानुष्ठितसमाप्तिपूर्वं जन्मान्तरीयमङ्गलानुमानादित्यभिप्रायेणाशङ्कते 'न च तत्रे'ति। तत्र—प्रमत्तानुष्ठितसमाप्तिपूर्वम्, 'जन्मान्तरीयतत्कल्पनं' तेन पुरुषेण तदानीं जन्मान्तरीयमङ्गलानुमानम्, 'इयं समाप्तिर्मङ्गलपूर्विका, समाप्तित्वात्, शिष्टानुष्ठितसमाप्तिवदि'त्येवंरूपेणेति भावः। 'अन्योऽन्याश्रयादिति' सिद्धे जन्मान्तरीयमङ्गले व्यभिचारज्ञानाभावे हेतुताग्रहः, हेतुताग्रहे च समाप्तित्वे जन्मान्तरीयमङ्गलानुमानम्, अन्यथा त्वप्रयोजकम्, इत्यन्योऽन्याश्रयादित्यर्थः। नन्वनुकूलतर्को न व्याप्तिग्रहहेतुः, किन्तु क्वचिद् व्यभिचारज्ञाननिवर्तकतया तस्योपयोगः, तथा च कारणत्वग्रहं विनापि व्यभिचारज्ञानसामग्रया असार्वदिकत्वेन समाप्तित्वे स्वतःसिद्धमङ्गलपूर्वकत्वव्यभिचारज्ञानाभावादेव जन्मान्तरीयमङ्गलानुमानसम्भव इत्यस्वरसाद् हेत्वन्तरमाह—'लोकावगतकारणेने'ति कण्ठताल्वाद्यभिघातादिनेत्यर्थः। 'अन्यथासिद्धेश्च' तस्य पुरुषस्य तदानीं मङ्गले समाप्तिं प्रति अन्यथासिद्धत्वज्ञानाच्च। तथा च तत्कालीनतत्पुरुषीयमङ्गलनिष्ठान्यथासिद्धत्वज्ञानविषयनिरूपितकारणतात्वादिति हेतुः।

तस्य पुरुषस्य तदानीमनुमानेनापि मङ्गले न समाप्तिकारणताग्रहसम्भव इत्याह 'नापी' 'त्यादिना, 'कारणताग्रह' इत्यन्तेन। मङ्गलमिति नमस्कारादिकमित्यर्थः।

**फलान्तरस्यातथाभावात् 'विश्वजिन्न्यायेन' फलकल्पने गौरवात्, परिशेषानु-**

आलोकः

अनुमानमाशङ्क्य निषेधति—नापीति। सफलं बलवदनिष्टाननुबन्धीष्टसाधनम्, न त्विष्टसाधनमात्रम्, हेतावविगीतपदव्यर्थतापत्तेरिति भावः। शिष्टपदञ्चाभ्रान्तपरम्। निष्फले चैत्यवन्दनजलताडनादौ वैधरागजप्रसङ्गयोरभावेन वेदानिषिद्धतया अविगीते व्यभिचारवारकम्। भ्रमश्च फलसाधनतांशे विवक्षितोऽतो न बलवदनिष्टाननुबन्धितांश-

दर्पणः

तथा च मङ्गलासमवहितसामग्र्यजन्यत्वात्मकविशेषणासिद्धौ नोक्ततर्कस्य मङ्गलजन्यत्वात्मकविपर्ययपर्यवसानमिति भाव इत्याहुः।

अनुमानं—मङ्गलं समाप्तिफलकं समाप्तीतराफलकत्वे सति सफलत्वादित्याकारकहेतौ विशेष्यासिद्धिमुद्धर्त्तुं मङ्गलं सफलमित्यनुमानम्। तद् व्याचष्टे—सफलमिति। शिष्टपदं चेत्यादेस्तद्विषयक्रियात्वादित्यन्तस्यायं निर्गलितोऽर्थः। अविगीतत्वे

माथुरी

नतिस्तुत्यादिसाधारणस्य मङ्गलत्वस्यैकस्याभावान्मङ्गलपदस्य नानार्थत्वात्। 'सफलमिति' अभीष्टफलजनकमित्यर्थः। अभीष्टत्वञ्च[1] स्वकर्त्तव्यताप्रयोजकेच्छाविषयत्वम्[2]। 'अविगीतशिष्टाचारविषयत्वादिति'। अविगीतो यः शिष्टाचारस्तद्विषयत्वादित्यर्थः। आचारः—प्रवृत्तिः न तु क्रिया, विषयत्वानन्वयात्। शिष्टकृते निष्फलजलताडनादौ व्यभिचारवारणायाविगीतेत्याचारविशेषणम्, 'अविगीतत्वम्' वेदनिषिद्धाविषयकत्वम्, पापाजनकत्वं वा। शिष्टकृतं निष्फलञ्च न तथा।

नित्यनैमित्तिकैश्चैव काम्यैरन्यैरगर्हितैः।
कर्मभिस्तु नयेत् कालं न विप्रः क्षणिको भवेत्॥

इत्यनेन, 'वृथा चेष्टां न कुर्वीत' इति, 'निष्फलानि च कर्माणि नारभेत विचक्षणः' इत्यादिना च तन्निषेधात्[3]। तथापि पश्वादिकृतनिष्फलचेष्टायां व्यभिचारः। 'नित्यनैमित्तिकै'रित्यादिनिषेधविधीनामुपक्रमानुरोधेनाधिकारिमात्रपरतया तदीयवृथाचेष्टाया अनिषिद्धत्वादतः 'शिष्टे'ति। शिष्टत्वञ्च बालपतितान्त्यजाद्यतिरिक्तत्वे सति वेदप्रामाण्याभ्युपगन्तृत्वम्। न च तथापि भोगे व्यभिचारः तस्याप्युद्देश्यतया कृतिविषयत्वादिति वाच्यम्; साध्यत्वेन प्रवृत्तिविषयतायाः[4] फलव्यावृत्ताया एव अत्र

१. अभीष्टफलत्वञ्चेति ख०।
२. स्व मङ्गल तत्कर्तव्यताप्रयोजिका इच्छा समाप्तीच्छा तद्विषयत्वात्समाप्तेरभीष्टफलत्वमित्याशयः।
३. तत्र निषेधादिति ख०।
४. साध्यताख्यायाः प्रवृत्तिविषयताया इत्यर्थः।

मानेन तत्कारणताग्रहः। व्यभिचारेण कारणत्वस्याभावात् उपायसहस्रेणापि ग्रहीतुमशक्यत्वात्।

आलोकः

भ्रममूलके परदाराभिगमनादौ व्यभिचारवारणार्थमुपात्तमविगीतपदमनर्थकमापद्यते। अभ्रान्तत्वञ्च सर्वैकवाक्यतया सुग्रहम्। तदर्थमेव प्राक् तदुत्कीर्त्तनम्।

आचारश्च यद्यपि क्रियैव तथापि विषयत्वश्रुतेः कृतिरेवात्र विवक्षिता। तद्विषयत्वञ्च यद्यपि भोगेऽपि गतमित्यनैकान्तस्तथापि साध्यत्वेन तद्विषयत्वं हेतुः, भोगस्तूद्देश्यतया कृतिविषय इति तत्त्वम्।

दर्पणः

सति इष्टसाधनतांशभ्रमरहितस्य या कृतिः साध्यतया तद्विषयत्वात्। साध्यतयेति स्थाने फलान्यत्वरूपक्रियात्वादिति[1] वा। अत्र दूरस्थसरोऽवगाहनादौ व्यभिचारवारणाय बलवदनिष्टाजनकत्वमविगीतपदेन विवक्षणीयम्[2]।

केचित्तु दूरस्थसरोऽवगाहनवारणाय लौकिकप्रमाणप्रमापितेष्टजनकत्वाभावरूपमलौकिकत्वमधिकं देयम्, अवगीतपदं चैवं श्येने व्यभिचारवारकमिति—तन्न, देवान्मरणफलकेऽश्वमेधीयतुरङ्गमरक्षणे व्यभिचारात्।

माथुरी

प्रवेशात्। एतेन[3] नान्तरीयकस्य प्रवृत्तिविषयत्वाभ्युपगमेऽपि निष्फले भोजनादिनान्तरीयके न व्यभिचारः, तत्र तादृशविषयत्वाभावात्। परमेश्वरकृतेरपि तादृशविषयत्वाभावात्[4] तादृशविषयत्वाभ्युपगमेऽपि प्रवृत्तित्वादिजातेस्तत्राभावाच्च न तामादाय निष्फले जलताडनादौ व्यभिचारस्तदवस्थः। न च तथापि कीर्तनादिना फलाजनके शिष्टकृतयागे व्यभिचार इति वाच्यम्; स्वरूपयोग्यत्वरूपस्य फलजनकत्वस्य विवक्षितत्वात् तस्य च तत्रापि सत्त्वात्।

यद्वा आचारश्चात्र कृतिमात्रम्, तथा च बौद्धकृते निष्फलजलताडनादौ व्यभिचारवारणाय शिष्टेत्याचारविशेषणम्। शिष्टत्वम्—भ्रमाजन्यत्वम्, परमेश्वरकृतेरपि निरुक्तविषयत्वात्तामादाय निष्फले व्यभिचारवारणायाविगीतेत्याचारविशेषणम्। 'अविगीतत्वम्' अनित्यत्वम्।

---

१. साध्यतयेति परित्यागे तद्विषयत्वे सति फलान्यत्वादिति पाठान्तरम्।
२. न तु वेदानिषिद्धत्वमिति तत्त्वमित्यधिकः पाठ कस्मिंश्चित्पुस्तके।
३. साध्यताख्यविषयताप्रवेशेनेत्यर्थः।
४. साध्यत्वेन प्रवृत्तिविषयत्वाभावादित्यर्थः।

आलोकः

यद्वा तद्विषयक्रियात्वादिति हेतुः ।

वस्तुतः शिष्टाचारविषयक्रियात्वादविगीताचारविषयक्रियात्वाद्वेति हेतुद्वयम् । अविगीतत्वञ्च बलवदनिष्टाननुबन्धित्वम् । तेन मधुविषसम्पृक्तान्नभक्षणे न

दर्पणः

यथाश्रु तेऽपीत्यत्र हेतुः—न विप्र इति । ननु इदं प्रमादकृते सविषान्नभक्षणे दूरस्थसरोऽवगाहने च व्यभिचारि, न । नरकाननुबन्धीष्टसाधनत्वस्य प्रवृत्तिविषयतावच्छेदकरूपावच्छेदेन बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वस्य वा साध्यत्वात् ।

वस्तुत इति शिष्टपदं भ्रान्तपरम् । तेनागम्यागमनादौ च व्यभिचारः ।

माथुरी

केचित्तु–अविगीताचारविषयत्वात्, शिष्टाचारविषयत्वादिति हेतुद्वये तात्पर्यम्, निष्फले चैत्यवन्दनादौ व्यभिचारवारणाय प्रथमहेतावविगीतत्वम्, द्वितीयहेतौ च शिष्टत्वमाचारविशेषणम् । अविगीतत्वञ्च इष्टोत्पत्तिनान्तरीयकदुःखभिन्नदुःखाजनकत्वम्, [1]बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनत्वं वा । तद्ग्रहश्च शिष्टैकवाक्यतया, जलताडनादिकन्तु नैतादृशं निष्फलत्वात्, कर्ममात्रस्यैव कष्टत्वाच्च । न तु वेदनिषिद्धाविषयकत्वं पापाजनकत्वं वा अविगीतत्वम्, तावता वैदिककर्माधिकारिणा कृते निष्फले व्यभिचारवारणसम्भवेऽपि पश्वादिकृतवृथाचेष्टायां व्यभिचारस्य दुर्वारत्वात् । 'नित्यनैमित्तिकैरि'त्यादिनिषेधविधीनामधिकारिमात्रपरत्वात् । द्वितीयहेतौ च शिष्टत्वम्= भ्रमाजन्यत्वम् । अन्यत् सर्वं पूर्ववदित्याहुः ।

केचित्तु—सफलमित्यस्य पापाजनकत्वे सतीष्टसाधनमित्यर्थः । तथा च श्येनयागागम्यागमनादौ व्यभिचारवारणायाविगीतेत्याचारविशेषणम् । अविगीतत्वं =पापाजनकत्वम्, निष्फले चैत्यवन्दनादौ व्यभिचारवारणाय 'शिष्टेति' । शिष्टत्वञ्च इष्टसाधनताभ्रमाजन्यत्वम्, न तु भ्रमाजन्यत्वमात्रम्, तथा सति अगम्यागमनाद्याचारस्यापि बलवदनिष्टाननुबन्धित्वभ्रमजन्यतया हेतावविगीतपदवैयर्थ्यापत्तेः । बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्त्यजनकत्वनये भ्रमाजन्यत्वमात्रमेव तत् । न च 'कष्टं कर्म' इति न्यायात् 'वृथा चेष्टां न कुर्वीत' इत्यादिस्मृतेश्च[2] चैत्यवन्दनादावपि पापजनकत्वाच्छिष्टपदवैयर्थ्यमिति वाच्यम्, तद्विलक्षणपापस्यैवात्र प्रवेशात् पश्वादिकृतवृथाचेष्टाया अप्युक्तक्रमेण पापाजनकतया तत्रैव व्यभिचारवारकत्वेन पाप-

१. बलवत्त्वं च इष्टोत्पत्तिनान्तरीयकभिन्नत्वम् ।
२. श्रुतेश्चेति ख, ग, च ।

### आलोकः

**व्यभिचारः। तत्तद्ग्रहश्च पूर्ववत्। क्रियात्वादेव न फले द्वितीयहेतावनैकान्तः। क्रियापदस्य फलान्यपरत्वात्। न चाफले व्यभिचारः। बलवदनिष्टाननुबन्धित्वस्य**

### दर्पणः

**बलवदिति**। न च स्वजन्येष्टापेक्षया यदधिकानिष्टजनकं तद्भिन्नत्वस्य बलवद-निष्टाननुबन्धित्वस्य निष्फलकर्मण्यपि सत्त्वमिति वाच्यम्, स्वजन्यानिष्टापेक्षयाऽन्यून-फलेन यद्रहितं तद्बलवदनिष्टानुबन्धि, तद्भिन्नत्वस्य फलवत्त्वे सत्यधिकानिष्टजनक-भिन्नत्वस्य वा विवक्षितत्वात्।

**विषेति**—प्रमादकृत इति शेषः। दूरस्थसरोऽवगाहनादिकं वाऽत्रोदाहरणम्। अप्रमादकृते यथाश्रुताविगीतपदेनैव व्यभिचारवारणसम्भवादिति।

### माथुरी

सामान्यप्रवेशेऽपि सार्थकत्वसम्भवाच्चेत्याहुः। तदसत्। समाप्तिफलकत्वविचारे विशिष्टसाध्यकरणेऽर्थान्तरत्वापत्तेरिति सङ्क्षेपः।

'इति फलसिद्धौ' इत्यनुमानेन, सफलत्वसिद्धौ जातायाम्, 'परिशेषानु-मानेन तत्कारणताग्रहः' तस्य पुरुषस्य, तदानीं मङ्गले समाप्तिकारणताग्रह इति योजना। परिशेषानुमानञ्च 'मङ्गलं समाप्तिजनकम्, समाप्त्यन्यफलाजनकत्वे सति सफलत्वाद्' इत्याकारकम्। फलत्वञ्च स्वकर्त्तव्यताप्रयोजकेच्छाविषयत्वम्, तेन मङ्गलस्य स्वध्वंसविघ्नध्वंसादिजनकत्वेऽपि न सत्यन्तविशेषणासिद्धिः[1]। एतदनुमाने[2] च पूर्वानु-मानं[3] विशेष्यदल[4]साधकतयोपयुक्तमिति भावः।

ननु 'मङ्गलं न समाप्तिजनकं, समाप्तिविषयककामनावत्पुरुषाकर्तृकत्वाद्, घटादि-विषयककामनावत्पुरुषाकर्तृको यागादिर्यथा न घटादिजनक' इति सामान्यतोदृष्टानु-मानेन[5] मङ्गले समाप्तिजनकत्वाभावज्ञानात् कथमिदं समाप्तिजनकत्वानुमानमित्यत आह 'प्रारिप्सितेति'। 'नियमेनापेक्षितत्वेन' नियमेन मङ्गलकर्त्तुः कामनाविषयत्वेन,

---

१. स्वं मङ्गलं, तत्कर्तव्यताप्रयोजिका इच्छा समाप्तीच्छा, न तु तद्ध्वंसस्य तत्साध्यविघ्नध्वंसस्य वा इच्छा, अतः समाप्तेरेव फलत्वं न तु तयोः। एवं च सत्यन्तशरीरे फलांशानिवेशे समाप्त्यन्यस्मिन् स्वध्वंसे विघ्नध्वंसे च मङ्गलस्य कारणतायाः सम्भवतया विशेषणासिद्धेर्नावकाश इति भावः।

२. 'मङ्गलं समाप्तिफलकम्, समाप्त्यन्याफलकत्वे सति सफलत्वाद्' इत्यनुमाने।

३. 'मङ्गलं सफलम्, अविगीतशिष्टाचारविषयत्वाद्' इत्यनुमाम्।

४. उक्तहेतुघटकसफलत्वरूपविशेष्यदलेत्यर्थः।

५. 'यो यद्विषयककामनावत्पुरुषाकर्तृकः स न तज्जनक' इत्यनुमानेनेत्यर्थः।

दर्पणः

**द्वितीयहेतौ** व्यस्तहेत्वात्मकद्वितीयराशौ । **अफल** इति । बलवदनिष्ठाजनके हस्तचालनादाविति भावः । बलवदनिष्ठेत्यादौ हेतुः—**आचारेति** । **यथाश्रुतेऽपीति** । तथा चानिषिद्धकृतिविषयक्रियात्वं हेतुरित्यर्थः । यथा च बलवदनिष्ठाजनकत्वभ्रमेणागम्यागमनादौ प्रसक्तिस्तथेष्टजनकत्वभ्रमेण निष्फलेऽपि प्रसक्तिरस्तीति निषेधसम्भवादिति भावः ।

माथुरी

'उपस्थितत्वात्' अनुमातुस्तादृशपुरुषस्योपस्थितत्वात्; तथा च समाप्तिजनकत्वाभावसाधकोक्तहेतोरज्ञानासिद्धिरिति[1] भावः ।

ननु तथापि समाप्तिभिन्नस्य ग्रामपशुहिरण्यादेरपि फलत्वज्ञानसम्भवात् सत्यन्तविशेषणज्ञानमेव नास्ति, कुतोऽनुमानमिदमित्यत आह 'फलान्तरस्ये'ति समाप्तिभिन्नस्य ग्रामपशुहिरण्यादेरित्यर्थः । 'अतथाभावात्' अतथाभूतत्वेनोपस्थितत्वात्, मङ्गलकर्त्तुस्तदानीं कामनाया अविषयत्वेनोपस्थितत्वादिति यावत् । तथा च हेतुज्ञानसत्त्वाद् 'मङ्गलं न समाप्तिभिन्नग्रामादिफलकम्, ग्रामादिविषयककामनावत्पुरुषाकर्तृकत्वाद्, घटादिविषयककामनावत्पुरुषाकर्तृको यागादिर्यथा न घटादिफलक' इति सामान्यतोदृष्टानुमानेन ग्रामादिफलकत्वाभावज्ञानमिति भावः ।

नन्वेतादृशानुमानेन समाप्तिभिन्नग्रामादिफलकत्वाभावज्ञानसम्भवेऽपि विश्वजिन्न्यायेन समाप्तिभिन्नस्वर्गफलकत्वज्ञाने बाधकाभावात् कुतः सत्यन्तविशेषणज्ञानम्? स्वर्गकामनां विना समाप्तिकामनाया एवानुपपन्नतया मङ्गलकर्त्तुस्तदानीं स्वर्गकामनाया अप्यावश्यकत्वेनोक्तहेतुना स्वर्गफलकत्वाभावज्ञानसम्भवादित्यत आह—'विश्वजिदि'ति । यथा विश्वजिद्यागस्य स्वर्गरूपफलाश्रवणेऽपि स्वर्गफलकत्वज्ञानं तथेत्यर्थः । 'फलकल्पने' समाप्तिभिन्नस्वर्गफलकत्वज्ञाने गौरवादिति । [2]अनन्तस्वर्गव्यक्तिकल्पनारूपगौरवज्ञानस्य प्रतिबन्धकत्वादित्यर्थः । न च समाप्तित्वापेक्षया लघुतया स्वर्गत्वावान्तरवैजात्यस्य कार्यतावच्छेदकस्य कल्पनेऽनन्तस्वर्गव्यक्तिकल्पनं [3]फलमुखतया न दोषायेति वाच्यम्, फलमुखगौरवस्यापि[4] दोषत्वादिति भावः ।

१. समाप्तेर्मङ्गलकर्तुः काम्यत्वेन मङ्गले कथितहेतोरज्ञानरूपासिद्धिरिति भावः ।

२. मङ्गलस्य स्वर्गफलकत्वस्वीकारे स्वर्गस्य क्षणिकसुखविशेषात्मकतया स्वर्गजनने मङ्गलस्य द्वारभूतमदृष्टं यावदवतिष्ठते तावदेकस्याः स्वर्गव्यक्तेर्दुष्कल्प्यत्वेनानन्तस्वर्गव्यक्तिकल्पनायां गौरवमित्याशयः ।

३. फलोत्तरभाविनो गौरवग्रहस्य पूर्वं फलं प्रति विरोधित्वासम्भवेन फलमुखं गौरवं न दोष इत्याशयः ।

४. मङ्गलं यदि स्वर्गफलकं स्यात्, तदाऽनन्तफलकं स्यादिति दिशा फलविचारवेलायामेव गौरवस्योपस्थिततया तद्ग्रहस्य फलं प्रति विरोधितया निर्बाधतया फलमुखं गौरवमपि दोष इत्यभिप्रायः ।

आलोकः

**फलगर्भतया हेत्वभावात्। आचारविषयस्य फलाजनकस्य बलवदनिष्टजनकत्व-नियमाच्च 'कष्टं कर्म्मे'ति न्यायात्। यथाश्रुतेऽपि तत्र तदभावाच्च। 'न विप्र' इत्यादिना तत्रापि वेदनिषेधात्।**

दर्पणः

यद्वा उक्तानुशयादाह—**वस्तुत** इति। क्वचित्पुस्तके **यथाश्रुतेऽपि तत्र तदभा-वादिति** नास्ति। तत्र बलवदनिष्टजनकत्वनियमे साध्ये **कष्टं कर्मेति, न विप्र इति** च हेतुद्वयाभिधानात् प्रकृते त्वनिषिद्धत्वरूपहेत्वनभिधानान्नोक्तानुशय इति ध्येयम्। अत्र च वेदप्रामाण्यमिष्टसाधनतांशे विवक्षितम्। अन्यथा स्वर्गजनकत्वभ्रमेण कृते

माथुरी

यद्वा स्वर्गमात्रस्य फलत्वे नियमतः समाप्तिकामनया शिष्टानां मङ्गलानुष्ठाना-नुपपत्त्या समाप्तिस्वर्गयोरुभयोः फलत्वकल्पने गौरवमिति गौरवज्ञानस्य प्रतिबन्ध-कत्वादित्यर्थः। स्वर्गकामना च समाप्तिकामनोपपादकतयोपपन्नेति भावः।

नव्यास्तु 'इति फलसिद्धाविति'। तस्य पुरुषस्य तदानीं जायमानायामिति शेषः। तथा चैतदनुमानेन तस्य पुरुषस्य तदनीं सफलत्वसिद्धौ जायमानायां 'परि-शेषानुमानेन' समाप्त्यन्यफलजनकत्वबाधज्ञानसहकारेण, 'तत्कारणताग्रहः' समाप्ति-कारणताग्रहः, इति योजना। 'प्रारिप्सिते'त्यादिग्रन्थस्तु पूर्ववदिति व्याचक्रुः।

'व्यभिचारेण' व्यभिचारज्ञानेन, अन्यथासिद्धत्वग्रहेण चेति शेषः। 'कारण-त्वस्याभावात्' कारणत्वाभावज्ञानात्, तथा च बाध इति भावः। 'उपायसहस्रेण' हेतुसहस्रेण, 'ग्रहीतुमशक्यत्वादि'ति।

न च प्रमत्तानुष्ठितसमाप्तिस्थले जन्मान्तरीयमङ्गलसंशयेन व्यभिचार-संशयादन्यथासिद्धत्वसंशयाच्च बाधसंशय एव, न तु बाधनिश्चयः; स चानु-मानप्रवृत्तावनुकूल एव, न तु प्रतिबन्धक इति वाच्यम्, प्रमत्तानुष्ठितसमाप्ति-स्थले जन्मान्तरमङ्गलस्य साधकाभावेन व्यतिरेकनिर्णये व्यभिचारनिर्णयस्यैव सत्त्वाद्, अन्यथासिद्धत्वस्यापि निर्णयसत्त्वाच्च। न चैवं सिद्धान्ते वेदोऽपि कथं बोधकः स्यात्? बाधनिश्चयसत्त्वेन योग्यताज्ञानविरहादिति वाच्यम्, मीमांसक-नयेऽन्वयप्रयोजकरूप[1]वत्त्वस्यैव योग्यतात्वेन बाधनिश्चयसत्त्वेऽपि योग्यताज्ञान-सम्भवाद् बाधनिश्चयस्य शाब्दबोधाप्रतिबन्धकत्वादिति भावः।

१. एकपदार्थेऽपरपदार्थान्वियस्य योग्यतात्वे तज्ज्ञानं प्रति तदभावात्मकं बाधं गृह्णतो ज्ञानस्य प्रतिबन्धकत्वं युक्तम्, परं तादृशान्वयप्रयोजकरूपस्य योग्यतात्वे तादृशान्वया-भावात्मकबाधज्ञानस्य ग्राह्याभावानवगाहितया न तादृशरूपात्मकयोग्यताज्ञाने प्रतिबन्धकत्वसम्भव इति तात्पर्यम्।

आलोकः

वस्तुतः शिष्टपदं वेदप्रामाण्याभ्युपगन्तृपरम् । तदाचारत्वं तन्नियताचारत्वं तदनभ्युपगमासम्भावितावाचारत्वमिति यावत् । तद्ग्रहश्च पूर्ववत् । अत एव दर्शो

दर्पणः

जलताडनादौ व्यभिचारात् । एवं च रात्रिश्राद्धस्य शिष्टपदेनैव वारणात् । रात्रिश्राद्धादिशब्देन श्येनादिकं विवक्षितत्वात्तद्वारणायाविगीतपदम् । बलवदनिष्टानुबन्धित्वं च तदर्थोऽन्यथाऽश्वमेधीयतुरङ्गरक्षणे दैवान्मरणफलके व्यभिचारापत्तेः ।

नन्विदमपि निष्फलकर्मणि वर्तते तज्जन्यानिष्टाभावात् । तथा हि 'न कलञ्जं भक्षयेदि'-त्यत्र विध्यर्थनिषेधे कर्तव्ये कृतिसाध्यत्वस्येष्टसाधनत्वस्य विद्यमानत्वात्

माथुरी

केचित्तु 'ग्रहीतुमशक्यत्वाद्' इत्यस्य अप्रामाण्यज्ञानानास्कन्दितनिश्चयस्याशक्यत्वादित्यर्थः । व्यभिचारान्यथासिद्धत्वयोः संशयसत्त्वादुत्पन्नायामप्यनुमितावप्रामाण्यसंशयादिति भावः । न चैवं सिद्धान्ते वेदस्यापि तादृशनिश्चयजनकत्वासम्भवः, व्यभिचारादिसंशयसत्त्वेन तत्राप्यप्रामाण्यसंशयसम्भवादिति वाच्यम्, वेदजन्यत्वज्ञानादेव तत्र नाप्रामाण्यसंशय इत्यभिप्रायादित्याहुः, तदसत्; तथा सति वेदानुमाने अप्रामाण्यसंशयस्य दुर्वारत्वादिति ध्येयम् ।

यद्यपि तत्पुरुषस्य तदानीं प्रत्यक्षादितो मङ्गले समाप्तिकारणत्वग्रहासम्भवेऽपि पुरुषान्तरस्य कालान्तरे तस्यैव पुरुषस्य च समाप्तिकारणत्वप्रत्यक्षानुमानसम्भवात् प्रत्यक्षानुमानमपि तत्र प्रमाणं सम्भवति, अन्यथा दण्डादावपि प्रत्यक्षादितो घटादिकारणत्वासिद्धिप्रसङ्गात्, कस्यचित् पुरुषस्य कदाचित् तत्रापि व्यभिचारादिज्ञानसत्त्वात्, तथापि प्रौढिवादेन तादृशपुरुषस्यापि तस्मिन् काले समाप्तिकारणत्वग्रहमुपपादयति 'तथापी'ति । 'तथाविधशिष्टाचारानुमिते'ति अविगीतशिष्टाचारानुमितेत्यर्थः । 'मानमिति' तस्य पुरुषस्य तदानीं प्रमाजनकमित्यर्थः । न चानुमितवेद आनुपूर्वीविशेषानिश्चयेन नार्थप्रत्यये[1] क्षम इति वाच्यम्, विनाप्यानुपूर्वीज्ञानं तदर्थबोधकत्वेन[2] ज्ञातादेव शब्दात्तदर्थबोधादिति भावः । श्रुत्यनुमानञ्च 'नमस्कारादिकं वेदबोधितसमाप्तिसाधनताकम्, समाप्त्युद्देश्यकाविगीतशिष्टाचारविषयत्वाद्' इति । साध्ये विशिष्य समाप्तेः प्रवेशादविगीतशिष्टाचारविषयत्वे सामान्यतो हेतुकृते दर्शादावेव व्यभिचार इति हेतौ समाप्त्युद्देश्यकेत्याचारविशेषणम् । उद्देश्यत्वञ्च विषयताविशेषः । तथा च 'यो यदुद्देश्यकाविगीतशिष्टाचारविषयः स वेदबोधिततत्साधनताकः, यथा दर्शः' इति सामान्यतो व्याप्तिः । शिष्टकृते निष्फले चैत्यवन्दनादौ

१. नार्थप्रत्यायन इति ग० ।

२. तदर्थज्ञापकत्वेनेति ग० ।

आलोकः

दृष्टान्तः। तथा च सति रात्रिश्राद्धादावेव व्यभिचार इत्यविगीतपदम्।

यद्वा वृथा चेष्टात्वेन निष्फलस्यापि विगीततयाऽविगीताचारविषयत्वात् शिष्टा-

दर्पणः

बलवदनिष्टाननुबन्धित्वस्य निषेधो वाच्य इति तत्र दुरितापूर्वं कल्प्यते। निष्फलत्वे त्विष्टसाधनत्वस्यैवाभावान्न दुरितापूर्वं कल्प्यते। न चैवं विशेषणमात्रमेव सम्यक्। स्वजन्येष्टापेक्षाधिकानिष्टजनकभिन्नत्वस्य निष्फलेऽपि गतत्वादिति।

माथुरी

व्यभिचारवारणाया 'विगीते'ति। अविगीतत्वं वेदनिषिद्धाविषयकत्वम्। शिष्टकृतनिष्फ-लञ्च 'वृथा चेष्टां न कुर्वीत' इत्यादिवेदनिषिद्धमेव। पश्वादिकृते निष्फले व्यभिचार-वारणाय 'शिष्टेति'। शिष्टत्वञ्च बालकपतितान्त्यजाद्यतिरिक्तत्वे सति वेदप्रामाण्या-भ्युपगमविशिष्टत्वम्[1], अभ्युपगमो निश्चयः।

न च तथापि वेदप्रामाण्याभ्युपगन्तुर्भोजनादौ व्यभिचार इति वाच्यम्, अलौकिकत्वे सतीत्यनेनापि विशेषणीयत्वात्। अलौकिकत्वञ्च लोकावगतेष्ट-साधनताश्रयान्यत्वम्। वेदतदुपजीविप्रमाणातिरिक्तप्रमाणं लोकः, दर्शादि-रिष्टसाधनत्वस्य वेदेन तदुपजीविना 'यागः स्वर्गसाधनम्, स्वर्गसाधनत्वेन वेदबोधि-तत्वाद्' इत्यनुमानेनैव वा बोधनान्न दृष्टान्तासिद्धयादिः। तावत्पदार्थो-पस्थितिसहकृतमनोजन्यविशिष्टज्ञानमादाय यथा न दृष्टान्तासिद्धयादिस्तथा वेद-लक्षण एव स्फुटीभविष्यति।

न च तथापि भ्रान्त्या स्वर्गफलान्यफलमुद्दिश्य यथोक्तशिष्टकृतयागादौ व्यभि-चारः, तस्य तत्साधनत्वेन वेदाबोधितत्वादिति वाच्यम्, चैत्यवन्दनादिवत् तस्यापि वृथाचेष्टात्वेन वेदनिषिद्धत्वात्। स्वकर्त्तव्यताप्रयोजकेच्छाविषयस्वरूपा-योग्यकर्मण एव वृथाचेष्टात्वात्। वस्तुतस्तु पश्वादितदितरसाधारणकृते चैत्य-वन्दनादिनिष्फलसामान्ये स्वःफलान्यफलमुद्दिश्य कृते यागादौ च व्यभिचार-वारणाय 'शिष्टे'ति। शिष्टत्वम्=भ्रमाजन्यत्वम्। भोजनादौ लौकिककर्मणि व्यभिचार-वारणाया 'विगीतेति'। अविगीतत्वं=लौकिकाविषयकत्वम्, तच्च निरुक्तमेव[2]। न च तथापि उत्पन्नतत्त्वज्ञानिकृते चैत्यवन्दनादौ व्यभिचारः, तस्यापि भ्रमाजन्यत्वादिति वाच्यम्, चैत्यवन्दनादेस्तत्त्वज्ञानिकर्तृकत्वे मानाभावात्; तत्सत्त्वे प्रवृत्त्यन्यथानुपपत्त्या

१. वेदप्रामाण्याभ्युपगन्तृत्वमिति ग०।

२. लोकावगतेष्टसाधनताश्रयाविषयकत्वरूपमित्यर्थः।

आलोकः

चारविषयत्वादिति हेतुद्वयम्। शिष्टत्वञ्चाभ्रान्तत्वमित्युक्तम्। आचारविषयत्वञ्च स्वजनकचिकीर्षाविषयत्वम्। अतो भोगादौ न व्यभिचारः। यद्वा चेष्टसाधनताज्ञानं

दर्पणः

यद्वेत्यारभ्य भोगादौ न व्यभिचार इत्यन्तं क्वचित्पुस्तकेऽस्ति। तच्च यद्यपि यथाश्रुतेऽपीत्यादिना वस्तुतः शिष्टाचारेत्यादिना च गतार्थं तथाऽपि पूर्वं क्रियात्वेन फलवारणमिह तु स्वजनकचिकीर्षाविषयेत्यादिविवक्षयेति भेदः।

माथुरी

भ्रमस्याप्यावश्यकत्वाच्च। तदुद्देश्यकत्वेनाप्याचारो विशेषणीयः, तेन दर्शादौ वेदबोधितसमाप्तिसाधनत्वाभावेऽपि न व्यभिचार इति तत्त्वम्।

उपाध्यायास्तु भोजनादौ व्यभिचारवारणायालौकिकत्वे सतीति पूरणीयम्। अलौकिकत्वञ्च लोकावगतबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताश्रयान्यत्वम्, अविगीतपदसार्थक्याय बलवदनिष्टाननुबन्धित्वमखण्डभेद[1]घटकम्। इत्थञ्चागम्यागमनादौ व्यभिचारवारणाया 'विगीते'ति। अविगीतत्वं=बलवदनिष्टाननुबन्धित्वम्। अत्र निष्फलजन्यानिष्टव्यावृत्तानिष्टस्य प्रविष्टतया चैत्यवन्दनादौ भ्रान्त्या स्वःफलान्यफलमुद्दिश्य कृते यागादौ च व्यभिचारवारणाय 'शिष्टे'ति। बलवदनिष्टसामान्यप्रवेशेऽपि पश्वादिकृतवृथाचेष्टायां व्यभिचारवारणाय 'शिष्टे'ति। शिष्टत्वम्=इष्टसाधनत्वभ्रमाजन्यत्वम्, न तु भ्रमाजन्यत्वमात्रम्; अगम्यागमनाचारस्यापि बलवदनिष्टाननुबन्धित्वभ्रमजन्यतयाऽविगीतपदवैयर्थ्यापत्तेः[2]। बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्त्यहेतुत्वनये तु भ्रमाजन्यत्वमेव शिष्टत्वमित्याहुः[3]।

---

१. अतिरिक्तभेदघटकमित्यर्थः। तथा च हेतावविगीतत्वविशेषणफलादगम्यागमनादिवारणाद्भिन्नस्य फलस्याभावेनालौकिकत्वगर्भे तस्य निष्प्रयोजनत्वेऽपि इष्टसाधनताश्रयान्यत्वातिरिक्तोक्तविशिष्टेष्टसाधनताश्रयान्यत्वघटकतया न वैयर्थ्यं,तथाविधभेदत्वयोः परस्परव्यधिकरणत्वात्; स्वसमानाधिकरणत्वे सति स्वावच्छिन्नीयसाध्यव्याप्यतावच्छेदकत्वे सति, स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वे च सति स्वावच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वसम्बन्धेन स्ववृत्तिधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदक-स्वावच्छिन्नघटकतावच्छेदकधर्मवत्त्वस्यैव स्वावच्छिन्नांशे पारिभाषिकवैयर्थ्यपदार्थत्वात्।

२. शिष्टपदस्य भ्रमाजन्यत्वमात्रार्थकत्वे तत्पदेनैव अगम्यागमनादिवारणसम्भवादिति भावः।

३. यदि प्रवृत्तौ बलवदनिष्टाननुबन्धित्वज्ञानं न हेतुः, किन्तु इष्टसाधनत्वज्ञानमेव, तर्हि अगम्यागमनादेरिष्टसाधनतया भ्रमाजन्ये तत्र व्यभिचारवारणायाविगीतपदसार्थक्यं सम्भवतीति भावः।

तथापि तथाविधशिष्टाचारानुमितश्रुतिरेव मङ्गलस्याभिमतहेतुत्वे

आलोक:

बलवदनिष्टानुबन्धित्वज्ञानाभावश्च प्रवृत्तिहेतुरिति मतं तदाऽविगीताभ्रान्ताचार-निश्चयत्वं हेतुरिति सम्मुख एव ग्रन्थः समीचीन इति स्मर्त्तव्यमिति सर्वमवदातम् ।

अपेक्षितत्वेनेति । प्रवृत्तपुरुषेच्छाविषयत्वेन प्रवर्त्तमानस्योपस्थितत्वादित्यर्थः ।

ननु मा भूदन्यन्नियतोपस्थितिकं स्वर्गस्तु सकलकामनाविषयत्वेन नियतो-पस्थितिकः फलं भवेदत आह –विश्वजिदिति । यथा विश्वजिता यजेतेत्यत्र रात्रि-

दर्पण:

यदा चेति । पूर्वं प्रवृत्तिजनकभ्रमरहितपरे शिष्टपदेऽविगीतपदमनर्थकं स्यादि-त्युक्त्वा इष्टसाधनतांशभ्रमरहितपरतया शिष्टपदं व्याख्यातम् । इदानीन्तु बलवद-निष्टाननुबन्धित्वज्ञानस्याजनकतया अगम्यागमनप्रवृत्तजनकभ्रमरहितपरेऽपि शिष्ट-पदेऽगम्यागमने तदर्थसत्त्वात्तद्वारणायाविगीतपदं व्याख्यायते । बलवदनिष्टाननुबन्धि-त्वञ्च तदर्थः, अन्यथा दूरस्थसरोऽवगाहने व्यभिचारादिति ।

अत्रायं सङ्ग्रहः—बलवदनिष्टाजनकफलांशभ्रमरहितकृतिविषयत्वादित्याद्यो हेतुः । साध्यत्वेन फलान्यत्वरूपक्रियात्वेन वा विशेषणाद् द्वितीयः । समस्ताभ्रान्ताचार-विषयक्रियात्वादिति तृतीयः । बलवदनिष्टाननुबन्धिकृतिविषयक्रियात्वादिति चतुर्थः । यथाश्रुतेऽपीत्यादिनोक्तो वेदानिषिद्धकृतिविषयक्रियात्वादिति पञ्चमः । बलवदनिष्ट-जनकवेदप्रामाण्यानभ्युपगमासम्भावितकृतिविषयक्रियात्वादिति षष्ठः । तृतीयपञ्चम-योरेव क्रियात्वस्थाने स्वजनकचिकीर्षेत्यादिविवक्षया सप्तमाष्टमौ । बलवदनिष्टाननु-बन्धित्वे सति प्रवृत्तिजनकभ्रमरहितकृतिविषयक्रियात्वादिति नवम इति ।

माथुरी

अन्ये तु 'नमस्कारादिर्वेदबोधितबलवदनिष्टाननुबन्धित्वविशिष्टसमाप्तिसाधनताकः, समाप्त्युद्देश्यकाविगीतशिष्टाचारविषयत्वाद्' इत्यनुमानम् । व्याप्तिश्च पूर्ववत्[1] । हेतावविगीतत्वविशेषणसार्थक्याय साध्ये बलवदित्यादि[2] । तथा सति हेतावविगीतविशेषणानुपादाने इष्टानिष्टोभयजनके श्येनादौ व्यभिचारापत्तेः । अविगीतत्वञ्च पापाजनकत्वम् । रात्रिश्राद्धादिवारणाय 'शिष्टे'ति । शिष्टत्वम्—इष्टसाधनत्वांशेऽभ्रान्तत्वम्, न तु अभ्रान्तत्वमात्रम्, अविगीतपदवैयर्थ्यापत्तेः; श्येनादेरपि बलवदनिष्टाननुबन्धित्वभ्रमेणाचरणात् । तथा चेष्टसाधनत्वांशे भ्रमाजन्येति फलितार्थः । बलवद-

१. यो यदुद्देश्यकाविगीतशिष्टाचारविषयः स वेदबोधितबलवदनिष्टाननुबन्धित्वविशिष्ट-तत्साधनताक इति सामान्यव्याप्तिरिति भावः ।

२. साध्ये बलवदितीति ग० ।

**मानम् । न च व्यभिचारः । निष्परिपन्थिश्रुत्या मङ्गलं समाप्तिसाधनमिति प्रमापिते तत्रापि तयैव लिङ्गेन जन्मान्तरीयतदनुमानात् ।**

आलोकः

**सत्रन्यायेनार्थवादादनुपस्थितेऽपीष्टे विधिबोधितेष्टसाधनत्वानुपपत्त्या विशेषतः फलोपस्थितिं विना प्रवर्त्तकत्वान्यथानुपपत्त्या च विशेषतः फले कल्पनीये ग्रामपश्वादीनां गौणप्रयोजनतया स्वर्गापवर्गयोरेव तथात्वेन तयोरप्यपवर्गस्याभावरूपतया गुरूपस्थितिकत्वात् लघुः स्वर्ग एव फलं कल्प्यते तद्वदिहापीत्यर्थः ।**

**गौरवादिति । अधिकारिद्वयकल्पनागौरवान्न त्वनुपस्थितफलकल्पनागौरवात् । ग्रामपश्वादिसाधारणतया पृथक् शङ्कानुत्थापनात् । विश्वजिद्वत् स्वर्गफलकत्वे हि**

दर्पणः

ननु बलवदनिष्ठाननुबन्धीष्टसाधनत्वे साध्यमानेऽर्थान्तरम् । सफलत्वमात्रस्य हेतुनिविष्टतया साधनौचित्यादिति चेत्—

अत्र कश्चित् समाप्तीतरफलकमपि द्विविधम्—बलवदनिष्टानुबन्धि तदननुबन्धि च । तत्राद्यनिरासेन विशेषणांशसिद्धिप्रयोजकतया नार्थान्तरमिति—तन्न । बलवदनिष्टाननुबन्धित्वं हेतुकृतवतो नेदं सिद्धमिति वचने व्याघातात् । तद्घटितहेतुद्वयस्य च दुष्टत्वात् ।

इह कश्चित् **तत्राचार** इति पूर्वं व्याख्यानात् आचारोपयोगिनी बलवदनिष्टाननुबन्धिसमाप्तिजनकताऽत्र साध्या । तत्र च बलवदनिष्टाननुबन्धिफलकत्वमेव हेतुप्रविष्टमिति नार्थान्तरमिति ।

केचित्तु एवं सत्यपि बलवदनिष्टाननुबन्धित्वभागस्य हेतुप्रविष्टस्य सिद्धतया साधनानौचित्यात् परिशेषानुमाने कृतिसाध्यत्वस्यापि साधनापत्तेश्च सफलमात्रं साध्यम्, फलांशभ्रमरहिताचारविषयक्रियात्वमनिषिद्धाचारविषयक्रियात्वञ्च हेतुरित्याहुः ।

माथुरी

निष्टाननुबन्धित्वज्ञानस्य हेतुत्वे च भ्रमाजन्यत्वमात्रं वक्तव्यम् । लौकिकभोजनादौ व्यभिचारवारणायालौकिकत्वे सतीत्यनेनापि विशेषणीयम् । [1]तत्त्वञ्चेष्टसाधनत्वेन लोकावगतान्यत्वम्, लोकश्च वेदतदुपजीविप्रमाणातिरिक्तप्रमाणमेव । यदि च श्राद्धत्वेनामावास्याश्राद्धत्वेन वा रात्रिश्राद्धमपि पितृतृप्तिस्वरूपयोग्यतया वेदबोधितमिति साध्यसत्त्वाद्, अन्यथा तु चैत्यवन्दनादिवन्निष्फलत्वेन पापजनकतया हेत्व-

१. अलौकिकत्वं चेत्यर्थः ।

आलोकः

**प्रधानतया अधिकारिभेदोऽङ्गत्वे च प्रधानाधिकारिकर्त्तव्यत्वेनाधिकाराभेदः। तदुक्तम्—महार्णवे वत्सेश्वरेण। तथाऽप्यभीष्टापूर्वकालाङ्गमङ्गलानुमाने गौरवमतो लाघवादङ्गताबोधकवेदानुमानमेवेति।**

**वस्तुतो मङ्गलस्य विश्वजित्साम्ये तद्वदारम्भसमयनियमो न स्यात्। न चारम्भपूर्वकालाङ्गतयैव तदुपपत्तिः, तस्याधिकारिविशेषणत्वापत्तेः। तथा च**

दर्पणः

**अपेक्षितत्वेनेति** मूलम्। इच्छाविषयत्वेनेत्यर्थः। किमपेक्ष्येत्याकाङ्क्षायां प्रवृत्तपुरुषस्येत्यर्थः। **उपस्थितत्वादिति**। किन्निष्ठोपस्थितिः प्रवर्त्तमानस्येत्यर्थः।

**प्रवर्तमानस्येति**। परिशेषानुमाने प्रवर्त्तमानस्येत्यर्थः। **फलान्तरस्येति** मूलम्। मङ्गलाचारप्रवृत्तपुरुषकामनाविषयत्वाभाववत्त्वेनोपस्थितत्वादित्यर्थः। तथा च मङ्गलं न समाप्तीतरग्रामपश्वादिफलकं तत्कामनां विना क्रियमाणत्वादित्यनुमानान्तरमिहाभिमतम्। समाप्तिफलकत्वव्यतिरेकोऽपि तर्हि एतस्मादेव हेतोः स्यादित्याशङ्कायामुक्तहेतोस्तत्रासिद्धिप्रदर्शनाय **प्रारिप्सितसमाप्तेस्तदानी**मित्यादिमूलमिति ध्येयम्। यथा 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'त्यनेन बोधिते रात्रिसत्रे कामनावाचिपदाभावेन फलत्वविशिष्टाश्रवणेऽपि न स्वर्गः फलं तथा विश्वजित्यपि मास्त्वित्यत आह—**रात्रीति**। तत्र फलत्वाश्रवणेऽपि प्रतिष्ठात्मकफलस्वरूपं प्रतितिष्ठन्तीत्यर्थवादेनोपस्थितम्। अतस्तत्र फलत्वांशमात्रकल्पना। स्वर्गफलकत्वे तु धर्मिधर्मोभयकल्पनेऽतिगौरवान्न स्वर्गफलकत्वम्। विश्वजिति तु न तथा फलस्वरूपमप्युपस्थितमस्तीत्यर्थः।

**विधीति**। विशेषाभावे सामान्यस्यानुपपत्तेरित्यर्थः। **पृथक्शङ्केति**। यद्यपि सामान्यतः फलेऽवगते विशेषतः फलकल्पनावसरेऽन्यत्र विश्वजिन्न्यायावतारो दृष्टः, इह तु तदवतारे किं बाधकमित्येतावन्मात्रजिज्ञासायां विश्वजिदितिग्रन्थः सङ्गच्छत एव, तथाऽपि स्वर्गकामनायाः समाप्तिकामनाप्रयोजकत्वेनानावश्यकत्वात् अनुपस्थितकल्पनागौरवादित्यस्यासिद्धिरेव मुख्यतोऽत्र दोष इति भावः।

माथुरी

सत्त्वादेव न तत्र व्यभिचार इति विभाव्यते, तदा तु लोकावगतेष्टसाधनताश्रयान्यत्वमलौकिकत्वम्। तथा च पश्वादिकृतवृथाचेष्टायां व्यभिचारवारणायैव 'शिष्टे'ति। तच्च निरुक्तमेवेत्याहुः। तदुभयमपि 'स्वीकृतवेदप्रमाणभावः शिष्टः' इत्यग्रिममूलविरुद्धत्वादश्रद्धेयम्।

आलोकः

**पूर्वकालत्वनिश्चयः प्रवर्त्तकः स च पूर्वकालत्वस्य प्रागभावगर्भतया प्रागभावत्वग्रहस्य च भाविनि मानाभावेन अशक्यतया दुःसम्भवः। अत एव दर्शपौर्णमासाभ्यामिष्ट्वा 'सोमेन यजेते'त्यत्र नेष्टौ सोमपूर्वकालत्वविधिरपि तु लक्षितलक्षणया इष्टयुत्तरत्व-विधिरेव क्त्वाप्रत्ययेन सोमे क्रियत इति प्राभाकरा अपि वदन्ति।**

**अस्तु वारम्भणीयादावारब्धचिकीर्षाकालोऽधिकारिविशेषणम्। तथाऽपि तस्य सुनिश्चेयतया तत्त्वसम्भवेऽपि प्राधान्येन तत्समयान्तरविधिरित्यधिकं गौरवम्। न चाङ्गत्वेऽपि तत्तुल्यम्, प्रधानकालेनैवाकाङ्क्षाशान्तेः, किन्तु क्रमाकाङ्क्षामात्रम्।**

दर्पणः

अत्र वदन्ति—स्वर्गस्य समाप्तिकामनाप्रयोजककामनाविषयत्वेऽपि साक्षात् फल-कामनाया एवाधिकारिविशेषणतयाऽधिकारिविशेषणीभूतकामनाविषयत्वाभाववतः फल-कल्पने गौरवादिति विवक्षितोऽर्थः। तथासिद्धिरिति—तन्न। विश्वजिन्न्यायेन स्वर्ग-फलकत्वं वदता स्वर्गकामनाया एवाधिकारिविशेषणतया तदभावस्यासिद्धत्वादिति।

अधिकारिद्वयकल्पनागौरवं विवृणोति—**विश्वजिदिति**। **मानाभावेनेत्यनन्तरं अशक्यतयेति** शेषः। क्वचित्तथा पाठ एव। **लक्षितेति**। **गुरुमते** क्त्वाप्रत्ययस्य समानकर्तृकत्वं वाच्यम्। तदधिकरणावधिकमुत्तरकालीनत्वं लक्ष्यम्। **न्यायमते तु** पूर्वकालीनत्वं शक्यम्। तदधिकरणावधिकमुत्तरकालीनत्वं लक्ष्यमिति परम्परासम्बन्धेन लक्षणैव लक्षितलक्षणेत्यर्थः।

एवं सत्यारम्भणीयादौ का गतिरित्यनुशयादाह—**अस्तु वेति**। **प्रधानकालेनै-वेति**। प्रधानकालसन्निहितकालेनैवेत्यर्थः। **क्रमाकाङ्क्षामात्रमिति**। प्रधानकाल-सन्निहितः कालः पूर्व उत्तरो वेत्याकाङ्क्षामात्रमित्यर्थः। अर्थेति। 'अग्निहोत्रं जुहोति', 'यावगूं पचति' इत्यत्र यथा यवागूपाकस्य पूर्वत्वं दृष्टप्रयोजनानुरोधात्तथेहापीत्यर्थः।

**स्वर्ग** इति। समानवित्तिवेद्यतया चात्र स्वर्गफलकत्वाभावोऽपूर्वमङ्गलगतः सिद्ध्यतीति हृदयम्। यद्यपि एवमपि ग्रामपश्वादिफलकत्वाभावः पूर्वं साधित इदानीञ्च स्वर्गफलकत्वाभाव इति विशेषाभावद्वयसिद्धावपि समाप्तीतरफलकत्वसामान्याभावो न सिद्धः, तथाऽपि विशेषाभावद्वयेन सामान्याभावोऽपि साधनीयो विशेषाभावद्वयस्यैव वा हेतुप्रविष्टत्वमिति भावः।

माथुरी

**'न च व्यभिचारः'** इति प्रमत्तानुष्ठितसमाप्तौ व्यभिचार इत्यर्थः। तथा च विषयबाधेन वेदजस्य ज्ञानस्य भ्रमतया कुतो वेदस्य तत्र प्रमाणत्वमिति भावः। **'निष्परिपन्थीति'** शाब्दबोधविघटकासमवहितेत्यर्थः। बाधसंशयतन्निश्चययोः शाब्द-

आलोकः

साऽपि प्रतिबन्धकध्वंसद्वारकत्वेनाङ्गत्वे ज्ञाते पूर्वकाल एव प्रयोजनसत्त्वेनार्थक्रमन्यायादेव शान्तेति न तद्बोधकविधायकान्तरापेक्षेति सर्वं सुस्थम् ।

परिशेषानुमानेन इतराफलकत्वे सति सफलकत्वानुमानेन । न च गौरवेण सफलकत्वानुमितौ स्वर्गाविषयकत्वेऽपि न स्वर्गफलकत्वाभावः सिद्धः तत् कुतो हेतुसिद्धिरिति वाच्यम्, स्वर्गो न मङ्गलफलं समाप्त्यपेक्षया गुरुत्वादिति गौरवलिङ्गत्वे तात्पर्यात् ।

वस्तुतस्तु समाप्तिमात्रफलकत्वे लाघवम् अन्यफलकत्वे गौरवमिति लाघवप्रतिसन्धाने तत्प्रतिसन्धानोपनीतसमाप्तिमात्रफलकत्वमेव सफलत्वानुमितौ विषय

दर्पणः

ननु समानवित्तिवेद्यता नात्र सम्भवति । अनुमाने व्यापकतावच्छेदकावच्छिन्नस्यैव विषयत्वादित्यनुशयादाह—वस्तुत इति ।

अत्र वदन्ति—एवं परिशेषानुमानं व्यर्थं स्यात् । समाप्तीतराफलकत्वे सति समाप्तिफलकत्वमेव हि समाप्तिमात्रफलकत्वम् । तथा च तत्र लाघवावतारे समाप्तिफलकत्वस्य लाघवादेव सिद्धत्वादिति—मैवम् । समाप्तीतराफलकत्वांशमात्रे लाघवज्ञानदशायां परिशेषानुमानस्य सावकाशत्वादिति ।

ननु लाघवोपनीतस्य न प्रकारत्वमित्यत आह—अथा चेति । तथाऽपीति । स्वतन्त्रप्रमाणामूलकत्वेन विश्वासानास्पदत्वमेवानुमाने दोष इत्यर्थः ।

प्रमत्तनास्तिकसमाप्तिस्थले मानाभावेन मङ्गलव्यतिरेकनिश्चयाद् व्यभिचारनिश्चय एवेत्यभिमानाद् व्यभिचारेणेत्यादिमूलमित्येके ।

अलौकिकेति । अत्र वेदबोधिते बलवदनिष्टाननुबन्धीष्टसाधनताकत्वे साध्ये नान्धपरम्पराशङ्कानिरासः वेदबोधितबलवदनिष्टाननुबन्धित्वसमानाधिकरणनिर्विघ्नसमाप्तिरूपेष्टसाधनताकत्वे साध्ये दर्शादौ व्यभिचार इत्याशङ्क्य सामान्यरूपेणापि निर्विघ्नसमाप्तिकामशिष्टाचारस्यैव हेतुत्वात् पक्षधर्मताबलान्निर्विघ्नसमाप्तिसाधनताबोधक एक वेदः सिध्यतीत्याशयेन हेतावप्रविष्टमपि निर्विघ्नेत्यादिविशेषणमुक्तम् । अत्र च लोकप्रमापितबलवदनिष्टाननुबन्धीष्टसाधनताकभिन्नत्वमलौकिकत्वम् । इष्टसाधनतांशभ्रमरहितत्वं शिष्टत्वम् । वेदादिसिद्धत्वमविगीतत्वम् । भोजनादौ जल-

माथुरी

बोधाप्रतिबन्धकत्वादन्वयप्रयोजकरूपवत्त्वस्यैव योग्यतात्वेन बाधनिश्चयसत्त्वेऽपि योग्यताज्ञानसम्भवाच्चेति भावः । 'प्रमापिते' ज्ञापिते, 'तत्रापि' नास्तिकसमाप्तावपि, 'तयैव' समाप्त्यैव, 'प्रमत्तानुष्ठितसमाप्तिर्मङ्गलजन्या, समाप्तित्वात्, शिष्टानुष्ठित-

आलोकः

इति युक्तः परिशेषः । अत एव लाघवज्ञानं लघुविषयकज्ञाने सहकारीत्युच्यते । यथा चैतत्तथा वक्ष्यते ।

व्यभिचारेण व्यतिरेकव्यभिचारेण । तथा च बाध इत्यर्थः । यद्यप्यत्र व्यभिचारनिश्चयो नास्त्येव तत्संशयस्त्वविरोधी प्रत्युत सन्दिग्धे न्यायप्रवृत्तेरनुगुण एवान्यथा वेदोऽपि मूकः स्यात् अयोग्यतासंशयात् तस्य चेदनुकूलत्वमिहापि तुल्यम् । तथाप्यन्धपरम्परामात्रभिया प्रकारान्तरोपादानम् । अत एव श्रुत्यनुमानाभ्यामित्यग्रे तत्रापि सम्मतिमाहेति ।

दर्पणः

ताडनादावगम्यागमनादौ च व्यभिचारवारणाय । वैधरागजप्रसक्त्यभावेनाविगीततया निष्फलजलताडनादेः शिष्टपदं विना वारणासम्भवादिति व्याख्यानं दूषयति—न त्विति । सविषान्ने प्रमादकृतमधुविषसम्पृक्तान्नभक्षणे ज्ञानकृते विगानात् । भ्रमकृत-दूरस्थसरोऽवगाहनादिकं वात्रोदाहार्य्यम् ।

अत्र वदन्ति—नरकाननुबन्धित्वसमानाधिकरणा लोकप्रमापिता इष्टसाधनता यस्य तद्भिन्नत्वमलौकिकत्वम् । तथा च प्रमादकृतमधुविषसम्पृक्तान्नभक्षणदूरस्थसरोऽव-गाहनयोरनेनैव व्यभिचारवारणादगम्यागमनजलताडनयोश्चाविगीतशिष्टपदाभ्यां व्यभिचारवारणात् स्वस्थोऽयं हेतुः ।

यद्वाऽविगीतपदेन बलवदनिष्टाननुबन्ध्यर्थकेनागम्यागमनमिव तदुभयमपि वार्यत इति—तन्न । प्रथमकल्पे प्रमापितत्वान्तर्भाववैयर्थ्यात् । न च तदनन्तर्भावे निष्फल-स्यालौकिकपदेनैव वारणाच्छिष्टपदं व्यर्थमिति वाच्यम्, स्वर्गजनकत्वबुद्ध्या केनचित् कृते केवलेऽङ्गे व्युत्क्रमकृताश्वमेधादौ च व्यभिचारवारकत्वात् नरकाननुबन्धित्व-भागोऽपि व्यर्थ एव । न चागम्यागमनवारकमविगीतपदं तददाने व्यर्थं स्यादिति वाच्यम्, श्येनवारकतया सार्थकत्वात् । न च वेदबोधितेष्टसाधनत्वमात्रं साध्यं तच्च श्येनेऽप्यस्तीति वाच्यम्, तथा सति बलवदनिष्टाननुबन्धित्वांशेऽन्धपरम्पराशङ्कायां

माथुरी

समाप्तिवद्' इत्यनुमानाकारः[1] । तथा च तत्रापि मङ्गलस्य प्रमाणसिद्धत्वाद्[2] न व्यभिचारः ।

यद्यपि स्वजन्यविघ्नध्वंसोत्पत्त्यवच्छेदकत्वसम्बन्धेन फलीभूतसमाप्तिकर्तृ-शरीरनिष्ठतया मङ्गलस्य, स्वोत्पत्त्यवच्छेदकत्वसम्बन्धेन तादृशशरीरनिष्ठतया

१. अपरसमाप्तिवदित्यनुमानप्रकार इति ग० ।
२. मङ्गले समाप्तिसाधनत्वस्य प्रमाणसिद्धत्वादिति ग० ।

आलोकः

तथाविधेति । **अलौकिकाविगीतनिर्विघ्नसमाप्तिकामशिष्टाचारानुमितेत्यर्थः। अलौकिकत्वञ्च लोकावगतबलवदनिष्टाननुबन्धीष्टसाधनताकाऽन्यत्वं न तु प्रमापितत्वान्तर्भावः, सविषान्नेऽनैकान्त्यात्। न चागम्यागमन एवमपि न व्यभिचार इति वाच्यम्, रात्रिश्राद्धादौ व्यभिचारवारकत्वात्। एवञ्चाविगीतपदमनर्थकं न भवति। लोकपदञ्चादृष्टार्थकवाक्यातिरिक्तमानपरम्। तेन चैत्यवन्दनाद्यपि यदि बौद्धागमप्रामाण्यनिबन्धनप्रवृत्ति, तदा शिष्टपदेन यदि जलताडनादिसाधारणं तदाऽलौकिकपदेन निवार्य्यते। शिष्टपदञ्च पूर्ववन्निष्फलकर्मण्यनैकान्तिकवारकम्।**

दर्पणः

अनिरासात्। द्वितीयकल्पे च विगीतत्वं हि वेदनिषिद्धत्वमिति ग्रन्थविरोधः प्रमापितत्वांशवैयर्थ्यं च।

**एवमपि** लोकावगतेत्यादिविशेषणेनापि। **न व्यभिचार** इति। तथा चाविगीतपदं व्यर्थमिति शेषः। **रात्रिश्राद्धादावि**ति। अतद्गुणसंविज्ञानबहुव्रीहिणा श्येनादापीत्यर्थः। रात्रिश्राद्धस्य निष्फलतया शिष्टपदेनैव वारणात्।

नन्वेवं जलताडनादेरलौकिकपदेनैव वारणात् शिष्टपदं व्यर्थमित्यत आह—**लोकपदञ्चे**ति। **अदृष्टार्थके**ति। तदुपजीवीत्यपि देयमन्यथा स्वरूपासिद्ध्यापत्तेः। अदृष्टार्थकत्वं चादृष्टप्रतिपादकत्वमात्रम्[1]। अलौकिकपदेनैव चैत्यवन्दनवारणे पुनरपि शिष्टपदं व्यर्थमित्यत आह—**शिष्टपदमि**ति। **निष्फले**ति। अदृष्टार्थकप्रतारकवाक्यमूलके जलताडनादौ व्युत्क्रमकृताश्वमेधादौ चेत्यर्थः।

नन्वेवं लोकावगतेष्टसाधनताकभिन्नत्वमेवालौकिकत्वमस्तु बलवदनिष्टाननुबन्धित्वांशस्य वैयर्थ्यादिति चेत्—न। लोकावगतबलवदनिष्टाननुबन्धिताकभिन्नत्वघटिते लोकावगतेष्टसाधनताकभिन्नत्वघटिते च हेतुद्वये तात्पर्यात्।

यद्वा एतदस्वरसादेवाह—**यद्वे**ति। **हेतुद्वयमि**ति। अलौकिकाभ्रान्ताचारविषयत्वम् अलौकिकबलवदनिष्टाननुबन्ध्याचारविषयत्वं चेत्यर्थः। शिष्टपदस्य श्येनादिवारणाया-

माथुरी

मङ्गलजन्यविघ्नध्वंसस्य वा समाप्तिहेतुत्वं वक्ष्यमाणयुक्तेः; तथा च जन्मान्तरीयमङ्गलसत्त्वेऽपि व्यभिचारो दुर्वारः, नास्तिकशरीरे जन्मान्तरीयमङ्गलजन्यविघ्नध्वंसोत्पत्त्यभावात्। तथापि स्वजन्यविघ्नध्वंसवत्त्वसम्बन्धेन मङ्गलस्य, विशे-

---

१. तैरपि क्षणिकोत्तरोत्तरसंस्काररूपादृष्टाङ्गीकारात्। यद्वा शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमितिविषयार्थकं यत् तद्भिन्नत्वरूपं तत्। यस्य च सार्थकत्वं वेदे निरर्थकत्वं च बौद्धागमे सत्त्वात्—इत्यधिकः पाठोऽत्र काशीपुस्तके।

आलोकः

**यद्वा अलौकिकविषयत्वे ध्रुवे प्राग्वदिहापि हेतुद्वयमेव। शिष्टपदस्याभ्रान्तपरत्वे अलौकिकत्वम्, वेदप्रामाण्याभ्युपगन्तृपरत्वेऽविगीतत्वमिति विवक्षाभेदेन हेतुद्वयम्। तदर्थस्तु पूर्वोक्त एवेति वस्तुगतिः।**

**अथ एव वेदानुमापकहेतौ शिष्टपदं वेदप्रामाण्याभ्युपगन्तृपरमिति** प्रकाशः।

**केचित्तु यादृशाविगीतालौकिकशिष्टाचारविषयो यत्तत्तादृशकर्त्तव्यत्वेन वेदविहितमिति सामान्यतो व्याप्त्यवधारणमित्यवश्यं शिष्टकर्त्तव्यतया वेदबोधितमिति साध्यमतो न व्यभिचार इत्याहुः।**

**तादृशपदस्वरसात् उक्त एव हेतुरतो वेदमूलकत्वानुमानमात्रम्, फलविशेषनिश्चयश्च परिशेषादिति तु वयं ब्रूमः।**

दर्पणः

भ्रान्तपरत्वात्। अविगीतपदस्य व्युत्क्रमकृताश्वमेधादिवारणाय बलवदनिष्टाननुबन्धिपरत्वात्। अलौकिकपदं चोभयत्र लोकावगतेष्टसाधनताकभिन्नमात्रपरम्। अतो न पूर्वोक्तदोषः। शिष्टपदं ध्रुवीकृत्याविगीतालौकिकपदयोर्वैकल्पिकोपादानं मनसिकृत्याह—**शिष्टपदस्येति**। यद्यपि अलौकिकाभ्रान्ताचारविषयत्वरूपो हेतुः पूर्वमेव व्याख्यात इति पौनरुक्त्यम्, तथाऽपि वेदप्रामाण्येत्यादिद्वितीयहेतुमादाय भेदः। अविगीतत्वञ्च बलवदनिष्टाननुबन्धित्वम्। अतो व्युत्क्रमकृतयागादौ न व्यभिचारः। **तदर्थः** वेदप्रामाण्येत्याद्यर्थः। पूर्ववद्भोजनादौ व्यभिचारवारणाय तदनभ्युपगमासम्भावितेत्याद्यर्थः। अत एव वेदेति। पूर्वव्याख्याने शिष्टपदस्य वेदप्रामाण्याभ्युपगन्तृपरत्वाभावात् **प्रकाशविरोध** इति भावः।

**केचित्त्विति**। तुशब्दः पक्षधर्मताबलात् साध्यविशेषलाभ इति पूर्वोक्तकल्पव्यवच्छेदाय। **यादृशेति** यत्कामेत्यर्थः। **तादृशेति**। बलवदनिष्टाननुबन्धित्वविशिष्टतत्कामकर्त्तव्यत्वेनेत्यर्थः। **अवश्यमित्यनन्तरं** समाप्तिकामेति शेषः। यदि **भवेद्विशिष्टेति**-पाठस्तदा विशिष्टपदस्यैव समाप्तिकामार्थकत्वान्न शेषः। **अत इति**। सामान्यव्याप्त्यनुसरणादित्यर्थः। **न व्यभिचार** इति दर्शादाविति शेषः।

**पक्षधर्मताबलादेव साध्यविशेषलाभ** इति यत्पूर्वमुक्तं तत्र तत्प्रकारकप्रतीत्यभावादनाश्वासो नापैतीत्येषामाशयः। यत्तत्पदार्थगर्भसामान्यव्याप्तेर्व्यतिरेकपर्यवसानमेवेत्यस्वरसादाह—**तादृशेति**। तादृशं यत्पदं पूर्वोक्तहेतुपरामर्शकं तथाविधपदमित्यर्थः।

माथुरी

षणताविशेषसम्बन्धेन तज्जन्यविघ्नध्वंसस्य चात्मनिष्ठतयैव समाप्तिहेतुत्वमित्येकदेशिमतमाश्रित्यैतत् समाधानम्। यथोक्तहेतुत्वपक्षे च व्यभिचारोऽग्रे निरसनीयः।

आलोकः

**न चेति।** अयोग्यतासंशयो न विरोधी तन्निश्चयो नास्त्येवेति भावः। न चेदानीमानुपूर्वीविशेषविशिष्टवेदानुमापकलिङ्गाभावात्तद्विशेषप्रत्ययाधीनत्वाच्च शाब्दप्रत्ययस्य कथं वेदाधीनप्रत्ययादिदानीन्तनप्रवृत्तिरिति वाच्यम्, इदानीमन्धपरम्परामात्रशङ्कामात्रनिवर्त्तकत्वात्तदनुमानस्य यदा स वेदः प्रत्यक्षः तदाऽऽनुपूर्वीज्ञानमासीदेवेदानीन्तद्बोधकत्वेनानुमानादिति दिक्।

**तत्रापीति।** इदन्त्वनुमानसौकर्य्यादुक्तम्। तदनुमानाभावेऽपि शब्देन तज्जनकताबोधने बाधकाभावात्। न च व्यभिचारज्ञानाभावार्थं तत् शब्दादेव तद्भावादिति बोध्यम्।

दर्पणः

यद्यपि तथाविधपदपरामर्शनीये पूर्वोक्तहेतावलौकिकत्वं नास्ति तथाप्यधिकमिति न्यायेन तथाविधत्वं वर्तत एवेति भावः। यद्यपि चैवं यत्कामेत्यस्य हेतौ प्रवेशेऽपि तथाविधत्वानपायस्तथाप्यणुरपीति न्यायेनेदम्, शिष्टपदं ध्रुवीकृत्यालौकिकत्वाघटितहेत्वभिप्रायेण वेदम्। **अतः** उक्तहेतोः।

नन्वेवं समाप्तित्वांशे वेदमूलकत्वाग्रहादनाश्वासो नापैतीति पूर्वोक्तदूषणं तदवस्थमित्यत आह—**फलेति।** समाप्तिरूपेष्टेत्यर्थः। **परिशेषादिति।** समाप्तीतराफलकत्वे सति वेदबोधितबलवदनिष्टाननुबन्धीष्टसाधनताकत्वादित्यर्थः। अन्यादृशः पाठक्रमोऽत्र प्रमादिकः।

**तद्विशेषेति।** आनुपूर्वीविशेषेत्यर्थः। **अनुमानसौकर्यं** यद्यपि शश्वन्मङ्गलं समाप्तिसमाप्तिनियतपूर्ववर्त्तीति प्रमापिते सिद्धसाधनान्नानुमानसौकर्यं तथापि मङ्गलं समाप्तिनियतपूर्ववर्त्तीति निश्चयेऽपि प्रमत्तकृतमङ्गल इति विशिष्यानिश्चयादनुमानप्रवृत्तिरिति भावः।

**शब्देनेति।** वेदमूलकशब्दापच्छेदकतयाऽनुभानेनेत्यर्थः। शब्दस्येदानीमबोधकत्वात्। एवमग्रेऽपि **श्रुत्यनुमानाभ्यामित्यग्रेतन**मूलस्थश्रुतिपदमप्येतत्परमेव। अथ वाऽनाश्वासवारकत्वमात्रेण सर्वबोधकत्वनिर्देशः वस्तुतो मीमांसकमतेनेदम्। तन्मते तदर्थज्ञापकत्वस्यैव शब्दबोधाङ्गतयाऽनुमितवेदादप्यन्वयबोधादिति।

ननु विश्वजिन्न्यायेनेत्यत्र मङ्गलं यदि फलान्तररहितं स्यादङ्गं स्यात्। यदि वाऽङ्गं स्यात् तदा एकाधिकारिकर्तृकं स्यादिति लाघवमित्युक्तम्—तच्चायुक्तम्। फलान्तररहितत्वस्य प्रधानासधरणत्वेनाङ्गत्वानापादकत्वादित्याशङ्कायां तच्चेत्यादिमूलमवतारयति—**ननु मङ्गलमिति।**

**कुत** इत्यनन्तरं प्रतिसन्धेयमिति शेषः।

**तच्चेदमारब्धकर्माङ्गं कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात्**

आलोकः

**ननु मङ्गलमङ्गं यदि तदाधिकार्थ्यंधलाघवं तदेव तु कुत इत्यत आह— तच्चेदमिति । आरब्धकर्माङ्गमारब्धकर्मसमानाधिकारिकम् ।**

दर्पणः

**आहेति** । तथा च फलत्वसन्निहितत्वादिति विशेषणसहितस्याङ्गत्वप्रसञ्जकत्वान्नोक्तदोषः ।

**केचित्तु** प्रसङ्गसङ्गत्याङ्गत्वानुमानपरं मूलमित्याहुः । **अत्रारब्धकर्माङ्गत्वं** अवान्तरवाक्यरचनादिस्वरूपं न कर्माङ्गत्वम् । **आरब्धकर्माङ्ग**मित्यनन्तरं तथा चेति शेषः । तेनारब्धकर्मसमानाधिकरणमिति प्रयोजननिर्देश एव न त्वारब्धकर्माङ्गत्वस्य व्याख्यानम् । अन्यथा प्रधाने व्यभिचारवारणाय तत्पूर्वमित्यादिविशेषणं व्यर्थं स्यादित्यवधेयम् ।

आरम्भणीयादिवारणाय **कर्मार्थितयेति** विशेषणम् । तत्स्वरूपोपकारकत्वफलोपकारकत्वपक्षयोर्यथासंख्यं व्याचष्टे—**कर्मेत्यादिना** । अत्रावान्तरवाक्यरचनादिस्वरूपमेव विघ्नविघातद्वारा मङ्गलेन क्रियते यागस्वरूपमिवावघातादिद्वारा

माथुरी

यद्यपि मङ्गलस्यारब्धकर्मभिन्नस्यैतावता प्रबन्धेन वस्तुगत्याऽऽरब्धकर्मजन्या या समाप्तिस्तज्जनकत्वं सिद्धम्[1], तथाप्यारब्धकर्माङ्गत्वत्वरूपेणारब्धकर्माङ्गत्वं न सिद्धम्[2]; अतः प्रसङ्गात्तदपि साधयति 'तच्चेदमि'ति । 'आरब्धकर्माङ्गम्' आरब्धकर्मभिन्नत्वे सति आरब्धकर्मजन्यफलजनकम् । न चैवं तद्भिन्नत्वे सति तज्जन्यफलजनकत्वस्य तदङ्गत्वरूपत्वे आरब्धकर्मणोऽपि मङ्गलाङ्गत्वापत्तिः, दर्शस्य प्रयाजाद्यङ्गत्वापत्तिश्चेति वाच्यम्, सहकारित्वरूपस्याङ्गत्वस्य तत्रेष्टत्वात् । मुख्यफलाजनकत्वे सति [3]मुख्यफलजनकव्यापारजनकत्वरूपं लौकिकाङ्गव्यावृत्तपारिभाषिकाङ्गत्वमेव हि न दर्शादौ, किन्तु प्रयाजादावेव, प्रयाजादेरङ्गापूर्वद्वारा परमापूर्वमात्रं प्रत्येव जनकत्वेन स्वर्गं प्रत्यजनकत्वात् । परमापूर्वसाधनताज्ञानात् स्वर्गप्रयोजकताज्ञानाद् वा तत्र प्रवृत्तेः । अङ्गप्रधानव्यवस्थान्यथानुपपत्त्या तथैव कल्पनात् । तदुक्तम्—

१. मङ्गले आरब्धकर्मभिन्नत्वमेतावता प्रबन्धेन वस्तुगत्या आरब्धकर्मजन्या या समाप्तिस्तज्जनकत्वञ्च सिद्धमिति ख०, ग० च ।

२. आरब्धकर्माङ्गत्वं विशिष्टं न सिद्धमिति ख० ग० च

३. रागो मुख्यफलेच्छा तत इति क० ।

**फलान्तराभावे सति फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वाच्च; दर्शे प्रयाजादिवत् ।**

आलोकः

**कर्म्मार्थितया कर्मस्वरूपनिष्पत्त्यर्थितया कर्मफलार्थितया वा ।**

**शिष्टैरभ्रान्तैः । तेन भ्रान्तैः निष्फलकर्मप्राक्कालक्रियमाणे न व्यभिचारः । प्रधानस्यापि प्रधाननिष्पत्तीच्छया क्रियमाणत्वमिति तत्पूर्वमिति विशेषणम् । तदर्थश्च**

माथुरी

'यागे रागादङ्गे वैधी' इति । 'रागात्' मुख्यफलेच्छातः[3] प्रवृत्तिरिति शेषः । 'वैधी'ति । विधिः—अपूर्वम्, तदिच्छा, प्रवर्तिकेति शेषः ।

अथैवं 'फलवत्सन्निधावफलं तदङ्गम्' इति जैमिनिसूत्रस्य[1] का गतिरिति चेत् ? तत्रारम्भणीयादावतिव्याप्तिवारणाय सप्तम्यन्तम्, फलवान् यः सन्निधिस्तदीयमुख्यफलजनको यो व्यापारस्तत्रेति तदर्थः । जनकत्वं सप्तम्यर्थः, अन्वयश्चास्याफलमित्यनेन । अफलत्वञ्च तदीयमुख्यफलाजनकत्वम्, एतच्च स्वस्य स्वाङ्गत्ववारणाय दर्शादिः प्रयाजाद्यङ्गत्ववारणाय च । तदीयमुख्यफलजनकजनकत्वे सति तदीयमुख्यफलाजनकत्वं तदङ्गत्वमित्येव फलितम् ।

न च प्रायश्चित्तादेर्दक्षिणादानादिचरमाङ्गेऽव्याप्तिस्तस्य साक्षादेव पापनाशरूपमुख्यफलजनकत्वादिति वाच्यम्; अङ्गत्वान्यथानुपपत्त्या तत्राप्यङ्गापूर्वाद्युपगमात् । न चाङ्गाङ्गेऽतिव्याप्तिः, तस्याप्यङ्गत्वस्येष्टत्वाद्; अङ्गाङ्गस्याङ्गाङ्गापूर्वजनकतयैवान्यथासिद्धतयाऽङ्गापूर्वजनकत्वे मानाभावाच्च । मुख्यफलत्वञ्च वैधफलत्वम् । न च मीमांसकनये अपूर्वस्यापि विध्यर्थत्वादङ्गस्य च तज्जनकत्वादसम्भव इति वाच्यम्; अङ्गस्याङ्गापूर्वजनकतयैवान्यथासिद्धतया स्वर्गादिमुख्यफलमिव परमापूर्वं प्रत्यजनकत्वाद्, अङ्गापूर्वजनकतामादायैव च सर्वत्र लक्षणसम्भवात्; प्रायश्चित्तस्थलवद् यागादिस्थलेऽप्यङ्गत्वान्यथानुपपत्त्या दक्षिणादानादेश्चरमाङ्गस्यापूर्वजनकत्वाभ्युपगमात् ।

यद्वा यत्कामनात्वेन तदीयफलं प्रति जनकता तत्त्वं तदीयमुख्यफलत्वम्; भवति च स्वर्गादिकामना स्वप्रयोज्यदर्शादिसम्बन्धेन दर्शादिफलस्वर्गादिकं प्रति जनिका । अन्यथा भ्रान्त्या स्वर्गफलान्यफलकामनया कृतादपि दर्शात् स्वर्गोत्पत्त्यापत्तेः; अपूर्वकामना च न तत्त्वेन दर्शादिजन्यस्वर्गजनिका मानाभावात् । पुत्रादिफलान्तरकामनावत् केवलापूर्वकामनया कृतादपि दर्शात् स्वर्गानुत्पत्तेः सकलमीमांसकसिद्धत्वात् ।

---

१. जैमिनेरङ्गलक्षणसूत्रस्येति ख०, ग० च ।

आलोकः

**तत्कालान्यकाल इति । 'तत्' शब्देन कर्मपरामर्शात् । न च कर्मैकदेशे व्यभिचारः । फलजनकतावच्छेदकावच्छिन्नस्य कर्मत्वात् । न चैकदेशे तदिति भावः ।**

**फलान्तराभाव इति । फलान्तरवदारम्भणीयादावनैकान्तिकत्ववारणाय फलान्तराभाव इति ।**

माथुरी

यत्तु अफलत्वं फलान्तराभाववत्त्वं तदीयफलातिरिक्ताफलकत्वमिति यावत् । फलत्वञ्च स्वकर्त्तव्यताप्रयोजकेच्छाविषयत्वमिति । तन्न ; अङ्गप्रधानोभयरूपे शिखादावव्याप्तेः । न च शिखाया न द्वैरूप्यम्, किन्तु **'विशिखो व्युपवीतश्च यत् करोति न तत् कृतम्** इति वचनादङ्गत्वमेवेति वाच्यं; **सदोपवीतिना भाव्यं सदा बद्धशिखेन तु** इति वचनात् प्रधानत्वस्यापि तत्र सत्त्वात् । न चैकस्याः शिखाव्यक्तेर्नोभयरूपत्वम्, किन्तु व्यक्तिभेदेनेति वाच्यम्; तथा सति कर्मपूर्वं नियमतः शिखाद्वयानुष्ठानापत्तेः, प्रधानफलकामनाकृतशिखादिव्यक्तित एव प्रसङ्गादङ्गस्यापि निर्वाह इति सकलशिष्टसम्मतत्वाच्च । न च शिखा प्रधानम्, तत्बन्धनञ्चाङ्गम्; बन्धनस्य क्रियाविशेषरूपस्यास्थिरत्वेऽपि तज्जन्याङ्गापूर्वसत्त्वादेव दिनान्तरबद्धशिखातोऽप्यङ्गनिर्वाह इति वाच्यम्; **विशिख** इति श्रवणेन शिखाया एवाङ्गत्वप्रतीतेः । लौकिकस्थले च सहकारित्वेनैवाङ्गत्वं न त्वन्यद् दुर्वचत्वात् ।

ननु तथापि किन्तावदारब्धं कर्म ? न चोपान्त्यवर्णपर्यन्तवर्णसमूहरूपो ग्रन्थ एवारब्धं कर्म, चरमवर्णस्य समाप्तिः, तस्य चासमवायिकारणविधयोपान्त्यवर्णजन्यत्वेन समाप्तेरारब्धकर्मजन्यत्वमिति वाच्यम्, उपान्त्यवर्णस्य चरमवर्णविजातीयतया तत्रासमवायिकारणत्वासम्भवात्[1], सजातीयस्थलेऽपि कण्ठताल्वाद्यभिघातादिजन्ये चरमवर्णे तस्यासमवायिकारणत्वासम्भवाच्चेति[2] चेन्न; प्रकृते चरमवर्णपर्यन्तवर्णसमूहरूपो ग्रन्थ एवारब्धं कर्म । चरमवर्णजन्यं तद्द्वितीयक्षणोत्पन्नतत्सजातीयं वर्णान्तरं चरमवर्णध्वंसो[3] वा समाप्तिः । न चैवं समाप्तेरारब्धकर्मजन्यत्वमनुपपन्नम्, चरमवर्णस्यासमवायिकारणतया प्रतियोगितया[4] वा यथोक्तसमाप्तिफलकत्वेऽपि[5]

१. सजातीयशब्दस्यैव शब्दासमवायिकारणत्वनियमादिति भावः ।

२. उपान्त्यवर्णस्य शब्दात्मकत्वेन द्विक्षणस्थायितया चरमवर्णकारणीभूतकण्ठताल्वाद्यभिघातादिना नाशात् कारणत्वासम्भव इति भावः ।

३. ननु यत्र चरमवर्णनाशानन्तरमेव तत्सजातीयवर्णान्तरोत्पत्तिस्तत्र न चरमवर्णस्यासमवायिकारणत्वमत आह 'चरमेति' ।

४. चरमवर्णसजातीयवर्णान्तरस्य समाप्तित्वे असमवायिकारणतया, चरमवर्णध्वंसस्य समाप्तित्वे च प्रतियोगितया समाप्तिजनकत्वमिति भावः ।

५. समाप्तिजनकत्वेऽपीति ग० ।

आलोकः

**चैत्यवन्दनादिनियतपूर्वंक्रियमाणे व्यभिचारवारणाय फलवत्कर्मेति। तद्धि न फलवत्कर्मारम्भेच्छावता क्रियते। चैत्यवन्दनादीनामफलकत्वात्।**

दर्पणः

व्रीहिभिरितिस्वरूपोपकारकत्वपक्षः, चरमवर्णध्वंसात्मिका समाप्तिः कीर्त्यादिफलवती विघ्नविघातद्वारा मङ्गलेन क्रियते स्वर्गफलवदिव परमापूर्वमङ्गापूर्वद्वारा प्रयाजेनेति फलोपकारकत्वपक्षः। तत्र च प्रथमकल्पे समाप्तिसाधनत्ववादो विघ्नध्वंसद्वारा प्रधान-कर्मजनकत्वेऽसमाप्तिप्रयोजकत्वे च पर्यवसित इति ध्येयम्। निष्पत्तिः स्वरूपं सङ्कोचि-कावत्प्रागभावघटितत्वाद् गौरवतां परित्यज्य एकान्योन्याभावघटितत्वादल्पायासमभि-प्रेत्याह—**तदर्थं** इति। न च कर्मैकदेशे व्यभिचारः। तत्पूर्वमित्यत्र तच्छब्देन कर्म-परामर्शात्। तथापि यत्किञ्चित्कर्मणोऽपि कर्मत्वात्कर्मैकदेशे व्यभिचारः। तत्पूर्वमित्यत्र

माथुरी

तत्पूर्वंपूर्ववर्णानां तत्राजनकत्वादिति वाच्यम्, पूर्वपूर्ववर्णाजन्यत्वेऽपि चरमवर्ण-जन्यतयैव ग्रन्थत्वाश्रयजन्यतानिर्वाहाद् ग्रन्थत्वपर्याप्त्यधिकरणजन्यत्वस्य प्रकृतेऽ-विवक्षितत्वात्। घटादिस्थले च तत्सामग्रीसम्पादनमेवारब्धं कर्म, घटादिरेव समाप्तिः।

केचित्तु ग्रन्थादिस्थलेऽपि कण्ठताल्वाद्यभिघातदृष्टप्रतिबन्धकाभावा-दिरेव पुरुषप्रयत्नसाध्यतया आरब्धं कर्म, चरमवर्णपर्यन्तवर्णसमूहरूपग्रन्थादिरेव समाप्तिः।

अन्ये तु चरमवर्णपर्यन्तवर्णसमूहरूपो ग्रन्थ एवारब्धं कर्म, चरमवर्णांशे लौकिक-प्रत्यक्षात्मकमानुपूर्वीविशेषविशिष्टतावद्वर्णविषयकसमूहालम्बनानुसन्धानं[1] समाप्तिः; तस्य च विषयविधया चरमवर्णजन्यत्वेन ग्रन्थत्वाश्रयजन्यत्वमित्याहुः।

**कर्मार्थितये'ति** आरब्धकर्मजन्यफलेच्छयेत्यर्थः, न त्वारब्धकर्मनिष्पत्तीच्छये-त्यर्थः। **दर्शे प्रयाजादिवद्** इति दृष्टान्तासङ्गतेः, प्रयाजस्य दर्शानिष्पादकत्वात्। **शिष्टैः** अभ्रान्तैः **तत्पूर्वम्** आरब्धकर्मपूर्वम्; तथा च तद्विषयककृतिपूर्वकालीन-भ्रमाजन्यताफलेच्छाजन्यकृतिविषयत्वादिति हेतुः। यत् तद्विषयककृतिपूर्वकालीन-भ्रमाजन्यताफलेच्छाजन्यकृतिविषयो भवति, तत् तदङ्गं भवतीति सामान्यतो व्याप्तिः। दर्शप्राक्क्रियमाणायामारम्भणीयायां समिदाहरणादौ च व्यभिचारवारणाय तत्फले-च्छाजन्येति, तत्र तत्फलार्थितयाऽप्रवृत्तेः। दर्शादिफलसाधनताभ्रमेण तत्प्राक् कृते तदनङ्गे व्यभिचारवारणाय भ्रमाजन्येति। प्रधानस्यापि प्रधानफलेच्छया क्रियमा-णत्वमिति तत्र व्यभिचारवारणाय कालीनान्तम्।

१. अनुसन्धानं हि स्मरणात्मकज्ञानलक्षणसन्निकर्षजन्यं ज्ञानम्।

आलोकः

**केनचित् सफलकर्म्मारम्भेच्छावता तत्पूर्वं क्रियमाणेऽनङ्गे व्यभिचारवारणाय नियमत इति। तद्धि तदारम्भेच्छावता नियमतो न क्रियते, सर्वैरकरणात्।**

दर्पणः

तच्छब्देन कर्मपरामर्शात्। तथापि यत्किञ्चित्कर्मणोपि कर्मत्वात्कर्मैकदेशे व्यभिचारः कर्मपरामर्शान्न कर्मैकदेशे व्यभिचार इत्ययुक्तम्, तथाऽपि तत्र गतत्वादित्यत आह—**फलेति**। प्रधानतापर्याप्त्यधिकरणस्येत्यर्थः।

**चैत्येति**। न च चैत्यवन्दनादेः फलाप्रसिद्धया प्रधानफलातिरिक्तफलाभावस्याप्रसिद्धया कथमियं व्यभिचारशङ्केति वाच्यम्, प्रयत्नफलत्वाभिमतातिरिक्तफलाभावस्य तदादित्वात्। **नियमत** इति **यद्यपि** व्यक्तिविशेषे उक्तस्थलेऽपि नियमोऽस्त्येव। सामान्य-

माथुरी

न चैवमैन्द्रदधिपयोयागत्रितयात्मकस्य[1] दर्शस्य पूर्वप्रतीके व्यभिचारः। 'यत् फलजनकतावच्छेदकपर्याप्त्यधिकरणयद्विषयककृतिपूर्वकालीनभ्रमाजन्यतत्फलेच्छाजन्यकृतिविषयो भवति, तत् तदङ्गं भवती'ति विवक्षितत्वात्। ऐन्द्रादिप्रत्येकयागस्तु न फलजनकताच्छेदकदर्शत्वपर्याप्त्यधिकरणं तस्य त्रितयनिष्ठत्वादिति न व्यभिचारः फलत्वञ्च स्वकर्त्तव्यताप्रयोजकेच्छाविषयत्वमिति।

हेत्वन्तरमाह **फलान्तराभावे सतीति**। दर्शप्राक्क्रियमाणारम्भणीयायां व्यभिचारवारणाय सत्यन्तम्, तदजन्यफलजनकान्यत्वे सतीति तदर्थः। न चेदमप्रसिद्धम्, नमस्कारादेरपि फलान्तरस्य स्वध्वंसविघ्नध्वसादेर्जनकत्वादिति वाच्यम्, फलपदस्य स्वकर्त्तव्यताप्रयोजकेच्छाविषयपरत्वात्। अत एव नमस्कारस्यानुषङ्गिकफलान्तरसत्त्वेऽपि नासिद्धिः। नियमतश्चैत्यवन्दनादिनिष्फलप्राक्क्रियमाणे केशोल्लुञ्चनादौ न तदङ्गत्वमिति तत्र व्यभिचारवारणाय तत्पूर्वमित्यत्र तत्पदार्थस्य फलवत्त्वविशेषणलाभार्थं **फलवत्कर्मारिप्समानेनेति** फलवत्कर्मेच्छावतेत्यर्थकम्; तथा च तदजन्यफलाजनकत्वे सति नियमतः फलवत्तत्पूर्वं क्रियमाणत्वादिति समुदितार्थः। फलत्वञ्च स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम्, अन्यथा चैत्यवन्दनादेरपि ध्वंसादि-[2]लक्षणफलसत्त्वेन व्यभिचारतादवस्थ्यात्। प्रधानत्वाभिमतपूर्वं कदाचित् क्रियमाणे निष्फले कर्मणि अनेकान्तवारणाय[3] **नियमतः** इति। प्रधानकर्मणि व्यभिचारवारणाय तत्पूर्वमिति।

---

१. ऐन्द्रयाग- दधियाग- पयोयागश्चेति यागत्रयरूपस्येत्यर्थः।

२. आदिपदेन प्रत्यक्षपरिग्रहः। ध्वंसं प्रति प्रतियोगिनः प्रत्यक्षं प्रति विषयस्य च कारणतया ध्वंसादेश्चैत्यवन्दनादिफलत्वमित्याशयः।

३. व्यभिचारवारणायेत्यर्थः।

**आचारमूलकश्रुत्यनुमानाभ्यां[1] तदर्थितया तत्कर्त्तव्यत्वबोधनात्**

आलोकः

**प्रधाने व्यभिचारवारणाय तत्पूर्वमिति। अत्र तच्छब्द आरब्धकर्मपरः। यदवच्छिन्नं कर्मारब्धमिति।**

**नन्विदमसिद्धम्। नमस्कारादीनामेव मङ्गलत्वात् तेषां च बहुशः फलान्तर-**

दर्पणः

नियमस्तु मङ्गलेऽपि नास्ति। न हि सर्वत्र कर्मारम्भे मङ्गलं क्रियत एव तथाऽपि कामनान्तरेधितनिर्विघ्नसमाप्तेः फलतया तादृशकर्मारिप्सोः मङ्गलं नियतमेव। मङ्गलं विना कर्मणस्तत्फलासिद्धेरिति।

वस्तुतः फलवत् कर्मारिप्समानस्य नियमो निश्चयोऽङ्गत्वनिश्चयोऽङ्गत्वमभ्यर्ण-मिति यावत्। तेन क्रियमाणत्वादिति मूलार्थः। **यथाश्रुते त्विति।**

ननु फलान्तरसत्त्वासत्त्ववत्प्रतिसन्धानाप्रतिसन्धाने अपि विरुद्धे व्यक्तिभेद-मादाय चाविरोधे प्रधानीभूतशिखाबन्धनस्थलेऽनेनैवाङ्गापवादान्निरङ्गतादोषोद्धारे च सत्त्वासत्त्वाभ्यां किमपराद्धमिति चेत्—

माथुरी

ननु नियमतो यत्किञ्चित्प्रधानव्यक्तिप्राक्कृते प्रतारकशिक्षितेऽनङ्गभूते निष्फले व्यभिचार। न च तद्व्यक्तिवृत्तिफलजनकतावच्छेदकाश्रयफलोपहितसकल-कर्मव्यक्तिप्राक्क्रियमाणत्वं विवक्षितम्, प्रयाजं विनापि केनचिद् भ्रान्त्यादिना दर्शानुष्ठानाद् दृष्टान्तासिद्धिवारणाय फलोपहितेति कर्मविशेषणमिति वाच्यं; तथा सति सत्यन्तवैयर्थ्याद् आरम्भणीयामकृत्वापि कस्यचिद् दर्शकरणसम्भवेन तत्रोक्तहेतोरभावात्, कस्यापि मङ्गलस्य न तादृशसकलव्यक्तिप्राक्क्रियमाणत्व-नित्यसिद्धेश्च।

अत्राहुः **नियमतः** इत्यस्य भ्रमं विनेत्यर्थः। अन्वश्चास्य कृधात्वर्थंकृतौ। न चैवं **फलवत्कर्मारिप्समानेनेति** व्यर्थं केशोल्लुञ्चनादेर्भ्रमजन्यकृतिविषयत्वादिति वाच्यम्, फलजनकतावच्छेदकपर्याप्त्यधिकरणतद्व्यक्तिपूर्वलाभार्थं तदुपादानाद्, अन्यथा ऐन्द्राद्येकदेशे व्यभिचारापत्तेः। फलत्वञ्च पूर्ववत् न च तथाप्यङ्गाङ्गे व्यभिचार इति वाच्यम्, अङ्गापूर्वस्यैव तत्फलत्वेन फलान्तराभाववत्त्वस्यैव तत्रा-भावादिति सङ्क्षेपः।

प्रथमहेतौ **कर्मार्थितयेति** विशेषणस्य **फलान्तराभावे सतीति** विशेषणस्य चासिद्धिं परिहरति **आचारमूलकश्रुत्यनुमानाभ्यामिति।** एतद्द्वयं यथासङ्ख्येन **तदर्थि-**

---

१. आचारश्रुत्यनुमानाभ्यामिति क०।

तत्फलकत्वबोधनाच्च । दर्शारम्भसमये नियमेन क्रियमाणाया अप्यारम्भ-

आलोकः

श्रुतेरिति चेत्—न । फलान्तराभाव इति । फलान्तरप्रतिसन्धानाभाव इत्यर्थः । तथा च नियमतस्तत्पूर्वकरणे फलान्तरप्रतिसन्धानं न यत्र हेतुरित्यर्थः । पर्यवस्यति । अस्ति च तथा ग्रन्थादिपूर्वक्रियमाणप्रणामादौ आरम्भणीयादौ च तत्कालकरणे फलान्तर-प्रतिसन्धानं बीजं दर्शारम्भकालत्वेनैव फलान्तरश्रुतेः । अत एव शिखाबन्धनमङ्गं प्रधानञ्चेति सर्वसिद्धान्तः । फलान्तरप्रतिसन्धानाप्रतिसन्धानाभ्यामुभयोपपत्तेः । यथाश्रुते तु एकस्य फलान्तरसत्त्वासत्त्वयोरसम्भवेन कथमङ्गप्रधानभावो घटेतेति सर्वं सुस्थम् ।

वस्तुतो यथाश्रुत एव हेतुः मङ्गलीभूतनत्यादिव्यक्तीनां फलान्तराभावेना-सिद्धत्वाभावादिति प्रागुक्तयुक्तेरनुमानमपि अविकलमिति श्रुत्यनुमानाभ्यामित्युक्तम् ।

दर्पणः

सत्यम् । फलान्तरसत्त्वासत्त्वयोरपि प्रतिसन्धानाप्रतिसन्धाने एव प्रयोजके इत्युपजीव्यत्वादिदमेवादृतमिति ।

यद्वा फलान्तराप्रतिसन्धानपदेन स्वसन्निहितकर्मफलवत्त्वप्रतिसन्धानमुक्तम् । तथा च प्रधानफलवत्त्वप्रतिसन्धानं स्वतन्त्रफलवत्त्वप्रतिसन्धानञ्चाङ्गप्रधानभाव-नियामकमेकव्यक्तावपि अङ्गलक्षणं चात्र कल्पे प्रधानोपकारकत्वमात्रमिति ।

वस्तुत इति । यद्यपि हरिनमस्कारादावनुद्देश्यमपि फलं भवत्येव तथाप्येतादृशमेव मङ्गलं पक्षीकर्तव्यमित्याशयः ।

ननु फलान्तराभावगर्भितहेतुनाऽङ्गत्वे सिद्धे हेतुनिष्ठव्याप्तिः सिद्ध्येत, अन्यथा अनुकूलतर्कविरहकालीनव्यभिचारसंशयेन प्रतिबन्धाद्व्याप्तिरशक्यैव स्यात्, सिद्धायां च

माथुरी

तया तत्कर्त्तव्यत्वबोधने, तत्फलकत्वबोधने चान्वितम् । आचारमूलकत्वम् समाप्त्यु-द्देश्यकाविगीतशिष्टाचारानुमितत्वम् । तदर्थितया तत्कर्मजन्यफलार्थितया[१] । यद्यपि वेदोऽपि विवक्षितफलार्थिकर्त्तव्यत्वं न बोधयति, तथापि समाप्तिसाधनतायां बोधितायामर्थात् तत्सिद्धिरिति भावः । तत्फलकत्वबोधनात् तत्फलमात्रफलकत्व-बोधनात्, तत्फलान्याफलकत्वबोधनादिति यावत् । यथाश्रुते फलान्तराभावस्यैव हेतुघटकतया तत्फलकत्वबोधनस्यानुपयुक्तत्वापत्तेः । तत्फलान्याफलकत्वानुमानञ्च 'मङ्गलं नारब्धकर्माजन्यफलजनकं समाप्त्युद्देश्यकशिष्टाचारविषयत्वाद्, आरब्धकर्मवद्'

१. तज्जन्यफलार्थितयेति ग० ।

**णीयायास्तदर्थितया अक्रियमाणत्वात् फलान्तरश्रवणाच्च प्रधानत्वमिति न तया व्यभिचारः ।**

**ननु मङ्गलमलौकिकं लौकिके नाङ्गं भवति, लोकावगतकारणत एव**

आलोकः

**अयं च प्रतिसन्धानाकार इत्यवधेयम् । तेनायमर्थः—**यदिदं फलान्तराभावे सति फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणं **स्यात् तदा प्रधानसमानाधिकारिकं स्यात् । एवञ्च लाघवमन्यथा गौरवमित्युक्तमेवानेन विव्रियत इति भावः । अतो नान्योऽन्याश्रयः ।**

दर्पणः

व्याप्तौ अनुमानादङ्गत्वसिद्धिरित्यन्योऽन्याश्रय इत्यत आह—**अयं चेति** । प्रतिसन्धीयते व्यभिचारसंशयनिरासघटितव्याप्तिरनेनेति तर्कस्तदाकारस्तत्स्वरूपम्, तदेत्यनन्तरसङ्ग स्यात् ततश्चेति पूरणीयम् ।

**नान्योऽन्याश्रय** इति । अङ्गत्वानुमानपरतयैव यैरिदं व्याख्यातं तेषामङ्गत्वे फलान्तराभावनिश्चयः तस्मिंश्च सत्यङ्गत्वानुमानमित्यन्योऽन्याश्रयः । स चात्र व्याख्याने नास्तीत्यर्थः । फलान्तराभावे लाघवमैतावन्मात्रं यत्र प्रतिसंहितं तत्राङ्गत्वनिश्चयात् पूर्वं फलान्तरभावो निश्चेतुं शक्यत एवेत्यन्योन्याश्रयदोषोऽस्यमायातः, किन्तु पूर्वोक्तानुगुणतयैव सङ्गतौ प्रसङ्गसङ्गतिर्नादरणीयेति प्रतिसन्धानाकारतया व्याख्यानमिति भावः ।

ननु **कर्मार्थितयेति** विशेषणस्य **फलान्तराभाव**विशेषणस्य च साधनायाचारेत्यादिमूलं तन्न प्रतिसन्धाकारपक्षे युक्तम्, असिद्धस्यैव प्रसञ्जकत्वादित्याशङ्क्य नेदं हेतुसाधनाय मूलमपि तु लाघवप्रतिसन्धानस्य प्रमाणसहकारेण फलान्तराभावफलपर्यवसायित्वकथनपरमित्याह—**बोधनादिति** ।

**अत्र स्वरूपासिद्धिमिति** । लाघवगम्यस्य फलान्तराभावस्वरूपस्य बाधितत्वादसिद्धिरित्यर्थः । प्रसञ्जनपक्षे यथाश्रुतस्वरूपासिद्धेरसङ्गतिरित्यवधेयम् ।

माथुरी

इत्याकारकम् । फलत्वञ्च निरुक्तमेव । **उभयहेतौ** प्रथमविशेषणप्रयोजनमाह[1] **दर्शेति** । **दर्शारम्भसमये** दर्शारम्भपूर्वसमये, **आरम्भणीयायाः** यागस्य, **आग्नेयाष्टाकपालं चरुं निर्वपेद्, दर्शपौर्णमासावारिप्समानः** इति श्रुतिवचनेन दर्शपौर्णमासपूर्वकाले क्रियमाणत्वम्; न तु तदर्थितया; न वा फलान्तराभाव इति भावः ।

मङ्गलस्य समाप्तिजनकत्वे **अलौकिकं लौकिके नाङ्गम्** इति तक्षसूत्रं बाधकमाशङ्कते **नन्विति** । **अलौकिकं मङ्गलं लौकिकेऽङ्गं न भवति** इति योजना; भवति-

१. दर्शपूर्वसमये इति ख०, ग० च ।

**तदुपपत्तेः । अत एव गृहस्थादावारे भग्ने इन्द्रवाहुर्बद्धव्यः, पायसं ब्राह्मणो**

आलोकः

बोधनात् प्रकृतलाघवसहकारेण बोधनसम्भवात् ।

अत्र स्वरूपासिद्धि शङ्कते—ननु मङ्गलमिति ।

यत्तु मङ्गलं नाङ्गमलौकिकत्वादिति प्रतिरोधमलौकिकत्वरूपपक्षधर्मावच्छिन्न-साध्यव्यापकं लौकिकानङ्गत्वमुपाधिं वा शङ्कत इति—तन्न । विश्वजिन्न्यायात् स्वर्गः फलमित्युत्तरग्रन्थविरोधात् । न ह्यसिद्धेन प्रतिरोधस्तुल्यबलत्वाभावात् । न वा साधन-व्यापक उपाधिः । साधनव्यापकता कथमुपाधेः ? साधनस्य लौकिकाङ्गभूतलौकिककर्म-ण्यपि सत्त्वादिति चेत्–न । अलौकिकत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकस्य

दर्पणः

नाङ्गमिति । न लौकिककर्माङ्गमित्यर्थः । लौकिककर्माङ्गे साध्याव्यापकत्वा-दाह—पक्षधर्मेति । अलौकिकत्वरूपेत्यर्थः ।

न ह्यसिद्धेनेति । स्वर्गः फलमित्यनेन पूर्वानुमानस्य हीनबलत्वान्न तेन प्रतिरोध इत्यर्थः[१] ।

अत्र केचित्—अङ्गत्वसाधकहेतोरुभयसिद्धतया बलवत्त्वशङ्कायां स्वमते तद-सिद्धिप्रदर्शनाथ विश्वजिदिति । ततश्च सत्प्रतिपक्षत्वमप्यसदुत्तरमिति वदन्ति, तन्न । अलौकिकत्वस्याप्युभयसिद्धतया पूर्वहेतोरुभयसिद्धत्वमादायधिकबलवत्त्वशंकाया अनु-त्थानात् । प्रतिसन्धानाकारपक्षे सत्प्रतिपक्षायोगाच्च शंकते—साधनव्यापकतेति । तथा च साधनव्यापकत्वाभावः[२] ।

स्वोक्तां स्वरूपासिद्धि व्युत्पादयति—साध्यव्यापकेति । लौकिककर्माङ्गत्व-

माथुरी

सम्भवति; अलौकिकं लौकिके नाङ्गं भवति इति तक्षसूत्रविरोधापत्तेः । तत्सूत्रेणा-लौकिकत्वस्य लौकिकानङ्गत्वव्याप्यत्वबोधनात् । अलौकिकत्वञ्च वेदबोधितेष्टसाधन-ताककर्मत्वम् ; लौकिकानङ्गत्वञ्च न लौकिककर्मजन्यफलाजनकत्वम्, यागादेरपि शरीरात्मादिसहकारेण चन्दनसंयोगादिसहकारेण च स्वर्गादिफलजनकतया तत्रैव व्यभिचारापत्तेः, किन्तु लौकिकफलाजनकत्वम् ; फलनिष्ठलौकिकत्वञ्च मानसेतर-लौकिकसाक्षात्कारविषयत्वम्, समाप्तिश्च तथा । घटादिजनकादृष्टजनककर्मणश्च न घटादिजनकत्वम्, मानाभावात् । नापि यागादेः स्वर्गादिजनकशरीरतच्चन्दनसंयोगादि-जनकत्वम्, तेन न तेषु व्यभिचारः । न च तथापि वृष्टिपुत्रादिरूपलौकिकफलजनके

१. पाठोऽयं काशीपुस्तके नास्ति ।
२. पाठोऽयं काशीपुस्तके नास्ति ।

आलोकः

तदवच्छिन्नसाधनव्यापकत्वात् । यदवच्छिन्नसाध्यव्यापकस्तदवच्छिन्नसाधनाव्याकस्योपाधित्वात् । अन्यथा महानसत्वावच्छिन्नवह्निव्यापकस्य व्यञ्जनत्वादरेप्युपाधित्वापत्तेः । साध्यव्यापकनिवृत्त्या साध्यनिवृत्तिस्तया च तदव्याप्यसाधननिवृत्तिरित्थैवास्तु न किञ्चिदनुपपन्नम् । न चैवं साध्याभावस्यैव दोषत्वेऽग्रे हेत्वभावसाधनमनुचितम्, दत्तोत्तरकल्पत्वात् । समाप्तिफलकत्वव्यवस्थापनस्यात्र प्रकृतत्वेन फलान्तरविरहस्यैव मुख्यतः प्रतिपाद्यत्वात् । हेत्वभावं विना बाधासम्भवाच्च । बाधप्रयोजकव्यापकाभाववत् साध्यसाधकहेतोरपि सत्त्वात् ।

दर्पणः

व्यापकं लौकिकत्वम् । तन्निवृत्त्या लौकिकर्माङ्गत्वनिवृत्तिर्वैदिककर्माङ्गत्वव्यतिरेकश्च ग्रन्थादिप्राक्क्रियमाणमङ्गले सिद्ध एवेत्यङ्गत्वसामान्याभावेन फलान्तराभावे सतीत्यादेर्व्याप्यस्य व्यतिरेकः सिद्ध्यन् विशेष्यभागस्य सत्त्वात्फलान्तरभावरूपविशेषणाभावे पर्यस्यतीत्यर्थः । अत्र साध्यसाधनपदे आपाद्यापादकपरे । अग्रे हेतुपदमप्यापादकपरम् ।

**केचित्तु** अलौकिकत्वावच्छिन्नसाध्यव्यापकलौकिकानङ्गत्वनिवृत्त्येत्यर्थमाहुः—तन्न । लौकिकानङ्गत्ववादिनो मङ्गले तन्निवृत्तेरसिद्धेः ।

**न चेति** । फलान्तराभावाङ्गत्वसमानाधिकारिकत्वक्रमेण लाघवावतारे सन्निहितलाघवोपपादकस्याङ्गत्वस्यैव खण्डनं दूषणमुच्यतामिति न चेत्यर्थः ।

माथुरी

कारीरीपुत्रेष्ट्यादौ, रोगनाशादिरूपलौकिकफलजनके भेषजपानाभिमन्त्रणादौ च व्यभिचार इति वाच्यम्, व्यापारीभूतावग्रहनिवृत्त्यादेरलौकिकस्यैव तेषां फलत्वात्, न तु वृष्ट्यादेः । **वृष्टिकामो यजेत** इत्यादौ च वृष्ट्यादिप्रयोजकत्वस्यैव विध्यर्थत्वात् । एवं यत्र यत्र लौकिकं फलं श्रूयते तत्रैव प्रयोजकत्वं विध्यर्थः, तज्जनकव्यापार एव फलमिति न क्वापि व्यभिचारः । फलत्वं तु स्वकर्त्तव्यताप्रयोजकेच्छाविषयत्वमिति भावः ।

केचित्तु 'तच्चेदमारब्धकर्माङ्ग'मिति पूर्वोक्तानुमाने बाधकमाशङ्कते **ननु मङ्गलमिति** । **मङ्गलं यतः अलौकिकम्**, अतो लौकिकफलजनकं न भवतीत्यर्थः । तथा चालौकिकत्वेन हेतुना लौकिकफलजनकत्वाभावसिद्धौ तेनैव हेतुनाऽऽरब्धकर्माङ्गत्वाभावसिद्धेः पूर्वोक्तानुमाने बाध इत्याहुः, तदसत्; समानबलतया तत्प्रतिपक्षत्वेन बाधासम्भवात् । न च वक्ष्यमाणगृहरथाद्यधिकरणविरोधप्रसङ्गलक्षणानुकूलतर्केणास्याधिकबलवत्त्वमिति वाच्यम्, तावता लौकिकफलजनकत्वाभावसाधकहेतावधिकबलवत्त्वेऽप्यारब्धकर्माङ्गत्वाभावसाधकहेतावधिकबलवत्त्वाभावात् ।

**भोजयितव्य इत्यत्र तदुभयं नाङ्गं किन्तु नैमित्तिकम्; तद्वदिदमप्यारम्भसमय-**

आलोकः

ननु अङ्गं सवकारिभेदो न च मङ्गलं न तथा। तद्विना फलासिद्धेरित्यत आह—लोकेति। तथा च तद्विना फलासिद्धिरसिद्धैवेत्यर्थः।

इन्द्रवाहुः आयसवायसः। आरम्भसमयनिमित्तकं तत्समयनियतकर्त्तव्यताकं न तु नैमित्तिकमेव।

आरं भग्न इतिवन्निमित्तसम्बन्धश्रुतेरकरणे प्रत्यवायाश्रवणाच्च।

दर्पणः

मुख्यत इति। तथा च नन्वित्यादिपूर्वपक्षवादिनोऽपि मुख्यतः फलान्तरविरह एव बाध्य इति भावः। बाधेति। यद्यपि बाधासिद्धौ तद्द्वारा हेत्वभावनिर्णयः कथम् ?[1] अधिकबलवत्त्वेन तत्सिद्धौ तु साध्यासाधकेत्यादिकमलग्नकम्, तथा च यथाश्रुतमिदमनुपपन्नम्, तथाप्येवं व्याख्येयम्। हेत्वभावं फलान्तरभावरूपापादकाभावनिश्चयं विना बाधासम्भवाल्लाघवज्ञानबाधासम्भवात्। अङ्गत्वनिराकरणमुखेन लाघवज्ञानबाधप्रयोजकः, व्यापकस्य लौकिकत्वस्याभावो यथास्ति तथा साध्यस्य प्रतिसन्धेयस्य साधकोऽनुगुणो हेतुः फलान्तराभावस्तस्य सत्त्वात्। अयं भावः—अङ्गत्वे बाधिते तत्प्रणाल्या लाघवप्रतिसन्धानं मास्तु फलातिरोभावस्य बाधे तन्मूलकफलैक्यलाघवप्रतिसन्धानं स्यादेवेति।

माथुरी

नन्वेवं कुतः समाप्तिरित्यत आह लोकेति। ननु तत्सूत्रमप्रयोजकमित्यत आह अत एवेति। अलौकिकस्य लौकिकफलाजनकत्वादेवेत्यर्थः। आरः लौहकीलः, गृहरथादिचक्रमित्यन्ये। इन्द्रबाहुः लौहकाकः, तदुभयमिति लौहकाकबन्धनब्राह्मणभोजने इत्यर्थः। नैमित्तिकमिति अपूर्वद्वारा आरभङ्गनिमित्तकपापनाशजनकमित्यर्थः। तच्च पापमनिष्टान्तरजनकम्। न च तस्य पापनाशफलत्वे प्रायश्चित्तवत् साक्षादेव तत्सम्भवेनापूर्वद्वारत्वाभ्युपगमो व्यर्थ इति वाच्यम्, क्रियाविशेषरूपस्य बन्धनादेराशुविनाशितया दक्षिणादानाद्युत्तराङ्गपर्यन्तमवस्थानासम्भवेनापूर्वस्य व्यापारत्वावश्यकत्वात्। अत एव प्रायश्चित्तस्थलेऽपि पापनाशार्थमपूर्वमावश्यकमिति भावः।

नन्वेवं प्रकृतानुपयोगित्वे आरम्भसमये नियमतः शिष्टैर्नानुष्ठीयेतेत्यत आह तद्वदिति। इन्द्रवाहुबन्धनादिकं यथा आरभङ्गोत्तरकालसहकारेणैव स्वर्गफलजनक-

---

१. कथमापादकाभावनिर्णयः—इति काशीपुस्तके पाठः।

**निमित्तकमस्तु विश्वजिन्न्यायात् स्वर्गफलमिति चेत्, न; तस्यापूर्वरूपो-**

आलोकः

तस्येति । **अङ्गत्वावच्छिन्नलौकिकाङ्गत्वव्यापकमपूर्वरूपोपकारजनकत्वमुपाधि-रित्यर्थः । तथा च व्यापकत्वाभावे तदभावान्न साध्याभाव इति भावः ।**

दर्पणः

**ननु मंगलमित्यादिना** तक्षसूत्राधिकरणविरोधं शङ्कते इति **केचित्** ।

वस्तुतो लौकिककर्मप्राक्क्रियमाणत्वावच्छिन्नाङ्गत्वव्यापकं लौकिकत्वमुपाधि शङ्कते—**मूले नन्विति** । **अंगत्वावच्छिन्नेति** । लौकिकत्वनिवृत्त्या लौकिकव मर्ङ्गत्वा-भावे साध्येऽपूर्वरूपोपकारजनकत्वमुपाधिरित्यर्थः । प्रधानीभूते लौकिके कर्मणि शुद्ध-साध्याव्यापकत्वादाह—**अंगत्वेति** ।

माथुरी

व्यापारजनकम्, तथा मङ्गलमपि आरम्भसमयसहकारेणैव स्वर्गफलजनकव्यापारजनक-मित्यर्थः । **आरम्भसमयः** कर्त्तव्यकर्मचिकीर्षासमयः । ननु मङ्गलस्य समाप्त्यजनकत्वे तस्य किं फलम् ? को वा व्यापारः ? इत्यत आह **विश्वजिदिति** । अपूर्वञ्च व्यापारः, अन्यथानुपपत्त्या तथैव कल्पनादिति भावः ।

**तस्येति । अलौकिकं लौकिके नाङ्गम्** इति तक्षसूत्रस्येत्यर्थः । **अपूर्वरूपेति । उपकारः** व्यापारः, अपूर्वद्वारा स्वफलजनककर्मविषयत्वादित्यर्थः; स्वफलत्वं स्वकर्त्तव्यता-प्रयोजकेच्छाविषयत्वम्, तेन समाप्तिमुद्दिश्य कृतस्य दक्षिणादानाद्यङ्गकस्य कस्य-चिन्मङ्गलस्यापूर्वद्वारा विघ्नध्वंसजनकत्वेऽपि न क्षतिः, समाप्तेरेव निरुक्ततत्फल-त्वात्, तत्र चापूर्वस्याद्वारत्वात् । न च तत्सूत्रस्य तादृशकर्मविशेषपरत्वे मानाभाव इति वाच्यम्, तस्यालौकिककर्ममात्रपरत्वे **वृष्टिकामो यजेत** इत्यादिविधीनामप्रामाण्या-पत्तेः, समभिव्याहृतफलजनकत्वस्यैव विध्यर्थतायाः सकलमीमांसकसिद्धत्वादिति भावः ।

ननु तथापि मङ्गलस्य लौकिकसमाप्तौ जनकत्वासम्भव एव मङ्गलस्याशुविना-शितया चिरकालानन्तरभाविसमाप्तिं प्रति साक्षाज्जनकत्वासम्भवेनापूर्वद्वारजनक-ताया वाच्यत्वा[1]दित्यत आह **अयन्त्विति**[2] मङ्गलाजन्यस्त्वित्यर्थः । **प्रतिबन्धकाभावरूपः** विघ्नाभावरूपः, प्रतिबन्धकपदस्य विघ्नेऽपि प्रयोगात्, न तु कारणीभूताभावप्रतियोगि-त्वमत्र प्रतिबन्धकत्वं **तस्य चे**त्यादिग्रन्थानुत्थितेः । ननु विघ्नाभावस्य कुतो व्यापा-रत्वं समाप्तौ तस्याजनकत्वादित्यत आह **तस्य चेति** विघ्नाभावस्य चेत्यर्थः । **सह-कारिता** समाप्तिजनने सहकारिता, क्लृप्तैव । **प्रतिबन्धके सति** विघ्ने सति, विघ्नत्वञ्च मङ्गलनाश्यतावच्छेदकोऽदृष्टनिष्ठो जातिविशेषः[3] ।

१. अपूर्वस्य द्वारताया अवश्यवाच्यत्वादिति ख० ।
२. अयञ्चेतीति ग० ।
३. धर्मविशेष इति ग० ।

**पकारजनकाङ्गविषयत्वात् । अयन्तु प्रतिबन्धकाभावरूप उपकारः, तस्य च लोकावगतकारणसहकारितैव, प्रतिबन्धके सति तस्मात्तर्कानुत्पत्तेः ।**

आलोकः

अयं मङ्गलजन्यः इत्यर्थः । **उपाधेः साध्यव्यापकताग्राहकमनुकूलतर्कमाह—तस्य चेति** । यद्यपि अदृष्टस्य साक्षाज्जनकत्ववत् साक्षात् प्रतिबन्धकत्वमप्यसम्भवि, न हि दृष्टसम्पत्तावदृष्टप्रतिबन्धकत्वं पश्यामः, तथापि नापूर्वजनकत्वं यथाश्रुतमेव

दर्पणः

**तथा च व्यापकत्वाभाव** इति । लौकिकत्वनिवृत्तिं प्रति लौकिककर्माङ्गत्वाभावस्य व्यापकत्वाभावात् लौकिकत्वस्य निवृत्तेरङ्गत्ववादिनां यत्साध्यं लौकिककर्माङ्गत्वं तदभावो नेत्यर्थः । यद्वा व्यतिरेके उपाधिमत्तया लौकिकत्वस्य लौकिककर्माङ्गत्वं प्रति व्यापकत्वाभावे तदभावाल्लौकिकत्वाभावान्न लौकिककर्माङ्गत्वरूपसाध्याभावः इत्यर्थः । उपाधेः पक्षे साधनाव्यापकत्वप्रदर्शनाय **अयं त्विति** मूलम् । तद् व्याचष्टे—**अयमिति** । **उपाधेरिति** । अपूर्वरूपोपकारजनकत्वस्योपाधेरंगत्वावच्छिन्नलौकिककर्मांगत्वाभावं प्रति व्यापकताग्राहकमाहेत्यर्थः ।

अयमाशयः—अंगस्य लौकिककर्मांगत्वाभावः स्यादपूर्वरूपोपकारजनकत्वाभावश्च स्यादित्यप्रयोजकत्वशङ्का न संगच्छते । अंगस्यापूर्वरूपोपकारजनकत्वाभावे हि

माथुरी

नन्वेवं यत्र लौकिकं फलं श्रूयते तत्रापि तज्जनकत्वमेव विध्यर्थः, अन्यथा सूत्रस्य विशेषपरत्वे मानाभावात् । तथा च **पुत्रकामो यजेत** इत्यादिपुत्रेष्ट्यादिविधीनामप्रामाण्यापत्तिः, तस्यापूर्वद्वारकत्वेन भवन्मतेऽपि पुत्रादिलौकिकफलजनकत्वासम्भवादित्यत आह **अपूर्वन्त्विति । न तथेति** । न लौकिकफलजनने यागादेर्व्यापारः, किन्तु प्रतिबन्धकीभूतपापनाश एव तस्य व्यापार इत्यर्थः, तथा च यत्र यत्र लौकिकं फलं श्रूयते, तत्रैव तत्प्रतिबन्धकपापनाशो व्यापार इति भावः ।

ननु विघ्नाभावस्य कुतो मङ्गलव्यापारत्वमत्यन्ताभावरूपस्य तस्य नित्यत्वादित्यत आह **विघ्नध्वंसेति** । **अङ्गं** समाप्तिकारणम् । मङ्गलस्यापूर्वविशेष एव समाप्तिजनने व्यापारः, न तु विघ्नध्वंसः, विघ्नध्वंसत्वमपेक्ष्यापूर्वविशेषत्वस्य लघुत्वात् ।

विघ्नध्वंसस्य व्यापारत्वे विघ्नानुरोधेन मङ्गलकर्त्तुस्तज्जनककर्मकल्पनापत्तेः, अपूर्वविशेषस्य व्यापारत्वे मङ्गलकर्त्तुर्विघ्नसत्त्वे मानाभावेन तज्जनककर्मणोऽप्यकल्पनादिति केचिन्मीमांसका वदन्ति, तन्मतं दूषयति **न त्विति** । न तु[1] मङ्गलमलौकिकं लौकिके नाङ्गमिति पूर्वपक्षिणामपूर्वद्वारकत्वाशङ्कायामेतद्ग्रन्थावतारः, **अपूर्वद्वारकत्वे लौकिकाङ्गत्वविरोधः** इत्यग्रिमदूषणासङ्गतेः । तेन लौकिकानङ्गत्वस्यैवा-

१. 'न तु' इत्यस्य अग्रिमेण 'एतद्ग्रन्थावतारः' इत्यनेनान्वयः ।

**अपूर्वन्तु न तथा, विघ्नध्वंसद्वारा चेदमङ्गम्, न त्विडो यजतीत्यादिविधिबोधितप्रयाजाद्यङ्गयागवददृष्टद्वारा, मङ्गलजन्यादृष्टं विनापि स्वतः सिद्धविघ्नविरहवद् आरब्धनिर्वाहात् । न चैवं विघ्नध्वंसद्वारापि नेदमङ्गं तत्रैव व्यभिचारादिति वाच्यम्, सति विघ्ने तद्ध्वंसद्वारा तस्याङ्गत्वात् ।**

आलोकः

**किन्त्वनपेक्षणीयजनकत्वम् । अपेक्षा च साक्षात् परम्परया वेति न कश्चित् विशेषः । तथा च परम्पराप्रतिबन्धकस्याप्यदृष्टस्याभावोऽपेक्षणीयो भवत्येवेति कथं तज्जनकमङ्गले नोपाध्यभाव इति भावः ।**

दर्पणः

प्रतिबन्धकाभावरूपोपकारजनकत्वमेव वाच्यम् । प्रतिबन्धकाभावस्य च लौकिककर्मसहकारितया तज्जनकस्य लौकिककर्मांगतावश्यम्भावापत्तेरिति ।

ननु वैदिकाङ्गमङ्गलव्यक्तौ यथाश्रुतोपाधेः साध्यव्यापकतया लौकिककर्मसहकार्युपकारजनकत्वम् उपाधिर्वाच्यस्तथा च पक्षेऽप्युपाधिसत्त्वेन साधनव्यापकत्वमिति शङ्कते—**यद्यपीति**[1] ।

माथुरी

भ्युपगमात् । **इडः** इति द्वितीयाबहुवचनम्, इडादयो देवताभेदाः । **मङ्गलजन्यादृष्टं विनापीति** ।

यद्यपि जन्मान्तरीयमङ्गलजन्यादृष्टस्यैव सुवचत्वात् कुतोऽस्य दोषः ? तथापि जन्मान्तरकृतमङ्गलस्यादृष्टद्वारा जन्मान्तरीयसमाप्त्युपधायकत्वे जन्मान्तरीयग्रन्थसमाप्तिमुद्दिश्यापि मङ्गले शिष्टप्रवृत्तिप्रसङ्ग इति वक्ष्यमाणदोषापत्तिः । अतो जन्मान्तरीयमङ्गलस्य जन्मान्तरीयसमाप्त्युपधायकतावारणाय स्वोत्पत्त्यवच्छेदकतासम्बन्धेन समाप्तिकर्त्तृशरीरनिष्ठतयैव मङ्गलजन्यादृष्टस्य समाप्तिहेतुत्वं वाच्यम्; स्वोत्पत्त्यवच्छेदकत्वञ्च स्वोत्पत्तिसमानाधिकरणं स्वावच्छेदकत्वमित्यभिप्रायेणायं दोषः, जन्मान्तरीयमङ्गलजन्यादृष्टस्य नास्तिकशरीरे स्वोत्पत्त्यवच्छेदकतासम्बन्धेनाभावात् एवञ्च **मङ्गलजन्यादृष्टं विनाऽपि** मङ्गलजन्यादृष्टस्य स्वोत्पत्त्यवच्छेदकतासम्बन्धेनाभावेऽपि, **स्वतः सिद्धविघ्नविरहवतः** स्वावच्छेदेन मङ्गलानुष्ठानं विनापि सिद्धविघ्नाभावकस्य नास्तिकशरीरस्य, स्वं नास्तिकशरीरम्, **आरब्धनिर्वाहात्** आरब्धकर्मसमाप्तेरिति ग्रन्थार्थः । इदमुपलक्षणम्, युवादिशरीरे मङ्गलानुष्ठानाद्

---

१. अयं भावः मङ्गलं प्रतिबन्धकाभावरूपं लौकिककर्मसहकारिणमुपकारं जनयति । तस्य लौकिककर्मसहकारित्वं कथमित्याकाङ्क्षायाम् अदृष्टस्य साक्षाज्जनकत्वात्साक्षात्प्रतिबन्धकत्वमपि न सम्भवति ।

**न चैवं प्रयाजादेरपि दुरितध्वंस एव द्वारम्; कल्प्यदुरितध्वंसतोऽपूर्वस्य लघुत्वात् ।**

आलोकः

**अपूर्वमिन्द्रबाहुबन्धनादिजन्यम् ।** न तथा—न **लोकावगतकारणसहकारि । साक्षात् परम्परया वाऽनपेक्षणीयत्वादित्यर्थः ।**

दर्पणः

लौकिककर्मानपेक्षणीयोपकारजनकत्वमादाय समाधत्ते—**तथापीति ।** नापूर्वजनकत्वं यथाश्रुतमेवेत्यनन्तरं यन्नालौकिककर्मासहकार्युपकारजनकत्वमिति शेषः[१] ।

**अनपेक्षणीयेति ।** लौकिककर्मानपेक्षणीयेत्यर्थः । एवं चोपाधिनिर्वचनेऽयं **त्विति तस्येति च** मूलफक्किके साधनाव्यापकत्वपरे एव । तत्र च सहकारितैवेति—अपेक्षणीयतैवेत्यर्थ इति ध्येयम् ।

माथुरी

वृद्धादिशरीरे यत्र समाप्तिस्तत्रापि व्यभिचारो बोध्यः **दुरितध्वंसद्वारापीति** विघ्नध्वंसद्वारापि, **इदम्** मङ्गलम्, **नाङ्गम्** न समाप्तिजनकमित्यर्थः । **तथैव** स्वतःसिद्धविघ्नविरहवतो नास्तिकशरीरस्य समाप्तावेव **व्यभिचारात्** स्वोत्पत्त्यवच्छेदकतासम्बन्धेन विघ्नध्वंसस्य व्यभिचाराद्; उक्तातिप्रसङ्गवारणाय त्वयापि स्वोत्पत्त्यवच्छेदकतासम्बन्धेन फलीभूतसमाप्तिकर्त्तृशरीरनिष्ठतयैव मङ्गलजन्यविघ्नध्वसस्य समाप्तिहेतुताया वाच्यत्वादिति भावः । **सति विघ्ने** इति । विघ्नस्थलीयसमाप्ताविति अर्थः, **तस्य** मङ्गलस्य, **अङ्गत्वात्** विघ्नध्वंसद्वाराङ्गत्वात् । प्रमत्तादिशरीरकर्त्तृकसमाप्तिश्च न विघ्नस्थलीया, विघ्नस्य फलाभावोन्नेयतया विघ्नस्थलीयत्वस्य तत्र विरहात् । भवन्नये तु विघ्नस्थलीयत्वस्य न कार्यतावच्छेदकत्वसम्भवः, त्वया कर्त्तुर्विघ्नाख्यादृष्टविशेषानभ्युपगमात् । विघ्नस्थलीयत्वञ्च विघ्नविशिष्टत्वम्, वैशिष्ट्यञ्च स्वोत्तरत्वे सति स्वाश्रयशरीरकर्त्तृकत्वं तच्च संसर्गविधया प्रविष्टम् । अतः स्वत्वस्याननुगततयाऽननुगतत्वेऽपि न क्षतिः[२] ।

अत्रैकस्मिन्नेव शरीरे पूर्वाह्णे मङ्गलं विनापि प्रारब्धकर्मसमाप्तिः, मध्याह्नोत्पन्नविघ्नेन प्रतिबन्धाच्चापराह्णे न प्रारब्धकर्मसमाप्तिस्तत्र भाविविघ्नवच्छरीरकर्त्तृकपूर्वाह्णजातसमाप्तौ व्यभिचारवारणाय सत्यन्तम् । वस्तुतस्तु तत्रापराह्णे प्रारब्धकर्मसमाप्त्यभावस्य लोकावगतकारणाभावादेव सुवचतया तस्य[३] विघ्नप्रयुक्तत्वे माना-

१. धर्मजनकत्वरूपं व्यापकं निवर्त्तमानम् अङ्गत्वावच्छिन्नलौकिकानङ्गत्वरूपव्याप्यमादाय निवर्त्तत इति भावः ।

२. विघ्नस्थलीयत्वस्य कार्यतावच्छेदकत्वासम्भवेन विघ्नस्थलीयसमाप्तौ विघ्नध्वंसद्वारा मङ्गलस्य कारणत्वानुपपत्तिरूपा क्षतिः, न, विघ्नविशिष्टसमाप्तित्वस्य कार्यतावच्छेदकत्वात् ।

३. तस्य—अपराह्णे प्रारब्धकर्मसमाप्त्यभावस्येत्यर्थः ।

आलोकः

**अनङ्गत्वमसहकारित्वम्, तद्विलम्बेन फलाविलम्बादवसेयम्। न च मङ्गले तदिति परमार्थः।**

**ननु अपूर्वाजनकत्वे मङ्गलस्यापेक्षणीयाजनकत्वमुपाधिरपक्षवृत्तिः स्यात्तदेव तु कुत इत्यत आह—**विघ्नेति। **यद्वा प्रसङ्गादाह—**विघ्नेति।

दर्पणः

ननु यथाऽपेक्षणीयाजनकत्वादलौकिकमपि मङ्गलं लौकिककर्माङ्गं तथेन्द्रबाहुवन्धनादिकमपि लौकिककर्माङ्गमस्त्विति शङ्कायामपूर्वं त्वितिमूलं तद्व्याचष्टे—**अपूर्वमिति**। यद्वा साध्याधिकरणीभूते प्रयाजादौ उपाधेः सत्त्वप्राप्त्यनिरासार्थमपूर्वं त्विति मूलं तद्व्याचष्टे—**अपूर्वमिति**। अत्र च अङ्गत्वावच्छिन्नलौकिकानङ्गत्वरूपसाध्याधिकरणत्वाभावात्।

**केचित्तु** तस्यापूर्वरूपोपकारजनकेत्यादिमूलम्। लौकिकानङ्गत्वेऽपूर्वरूपोपकारजनकत्वलक्षणप्रयोजनकोपदर्शनमुखेनालौकिकत्वहेतोरप्रयोजकपरमित्याहुः।

**अपेक्षणीयाजनकत्वमिति**। पूर्वोक्तमप्यनपेक्षणीयजनकत्वं नञ्व्यत्यासादपेक्षणीयाजनकत्वपरमेव। अन्यथा मङ्गलध्वंसादेर्लौकिककर्मानपेक्षणीयजनकत्वेन

माथुरी

भावात् सत्यन्तमयुपादेयमेव। न चैवं मङ्गलस्यापि किं समाप्तिहेतुत्वेन? मङ्गलविरहस्थलेऽपि लोकावगतकारणाभावादेव समाप्त्यभावस्य सुवचत्वादिति वाच्यम्; शिष्टाचारतः कल्पितविघ्यन्यथानुपपत्त्या एव मङ्गलस्य हेतुत्वकल्पनात्। तथा च विघ्नवच्छरीकर्तृकत्वमेव विघ्नस्थलीयत्वम्, न तु स्वत्वघटितमिति भावः।

**केचित्तु**—विघ्नध्वंसजन्यत्वं विघ्नस्थलीयत्वं नास्तिकादिकर्तृकसमाप्तिश्च न विघ्नध्वंसजन्यः, तत्त्वस्य फलबलकल्प्यत्वादित्याहुः, तदसत्; प्रतिबन्धकीभूतविघ्नाभावस्य यदि विघ्नसामान्यात्यन्ताभावत्वेन हेतुत्वं तदा समाप्तेर्विघ्नध्वंसजन्यत्वस्यैवासिद्धेः। अथ विघ्नसंसर्गाभावत्वेन तथा, तदा नास्तिककर्तृकसमाप्तेरपि जन्मान्तरोत्पन्नविघ्नध्वंसजन्यता व्यभिचारतादवस्थ्यादिति ध्येयम्।

**न चैवमिति**। **एवम्**—ध्वंसस्यापि व्यापारत्वे। **कल्प्येति**। दर्शजन्यपरमापूर्वं प्रति कारणत्वेन कल्पनीयो यो दुरितध्वंसस्तमपेक्ष्येत्यर्थः। तस्य[1] कारणत्वेन क्लृप्तत्वे तदेव[2] विनिगमकं[3] स्यादिति हृदयम्। **लघुत्वादिति** लघुशरीरत्वादित्यर्थः। प्रकृते[4]

१. तस्य—दुरितध्वंसस्येत्यर्थः।
२. तदेव—कारणत्वेन क्लृप्तत्वमेवेत्यर्थः।
३. विनिगकम्—अपूर्वापेक्षया दुरितध्वंसस्य द्वारत्वे युक्तिरित्यर्थः।
४. प्रकृते—मङ्गलेन समाप्तिजनन इत्यर्थः।

**वस्तुतस्तु प्रायशो विघ्नसंशये तन्निश्चये वा नियमेन शिष्टानां**

### आलोकः

सतीति। **यद्यपि सति विघ्नेऽपूर्वद्वारेदमङ्गमिति न दुर्वचम्**[1], **तथापि तदपूर्वं विघ्नं निवर्त्यारब्धनिर्वाहकमनिवर्त्यं वा, नान्त्योऽसम्भवात्। न हि सति प्रतिबन्धके हेतुसहस्रमप्यलम्। उत्तेजकत्वेऽपि अदृष्टस्य विशिष्टाभावो हेतुर्वक्तव्यः, तदपेक्षया विशेष्यविरह एव लघीयान्। आद्ये तन्निवर्त्तकत्वस्यावश्यकत्वे तदेव द्वारमावश्य-**

### दर्पणः

साधनव्यापकत्वं स्यात् तेन व्यत्यासोऽयमिति भावः। अत एव ध्वंसाद्यनपेक्षणीय-जनकत्वेन मङ्गलेऽप्युपाधिसत्त्वात् साधनव्यापकत्वमिति नाशङ्कितव्यमिति भावः। **सति** इत्यारभ्य **गौरवादि**त्यन्तमेतद्व्याख्या। यद्यपि मङ्गलजन्यादृष्टस्योत्तेजकत्वपक्षे विघ्ननिवृत्तिं विनापि कार्यं सम्भवति, तथापि विघ्नाभावापेक्षया मङ्गलजन्यादृष्टा-भावविशिष्टस्य विघ्नात्यन्ताभावो गुरुरिति न स हेतुरित्याह—**उत्तेजकत्वेऽपीति**। यद्यपि वर्षं देवदत्तग्रन्थो मा समाप्यतामिति सत्यायाम् उद्देश्यत्वज्ञानाहितसंस्कारकालोपाध्यो-र्मङ्गलादनाशे समाप्त्यभावप्रसङ्गेन तत्रोत्तेजकत्वमवश्यं वाच्यम्, तथापि विघ्न-पूर्वकसमाप्तौ न तथात्वमिति[1] भावः।

### माथुरी

चापूर्वस्य द्वारत्वासम्भवादनायत्या गुरुरपि व्यापारः स्वीक्रियत इति भावः। इद-मुपलक्षणम्। प्रयाजादिस्थले विघ्नध्वंसस्य व्यापारत्वे स्वतः सिद्धविघ्नाभावस्थले प्रयाजादिकं विनापि कर्मसाङ्गतापत्तेः, प्रकृते च नेदृशी क्षतिरित्यपि बोध्यम्।

ननु मयाऽप्यनायत्या मङ्गलकर्तुर्विघ्नोऽभ्युपेयः। तथा च तत्स्थलीयसमाप्तावेव फलीभूतसमाप्तिकर्तृशरीरनिष्ठतया मङ्गलजन्यमपूर्वं कारणमतो नोक्तव्यभिचार इत्यस्वरसादाह **वस्तुतस्त्विति**। **अभिमतः** अनुमितः, **आकाङ्क्षितः** इति पाठेऽप्ययं-मेवार्थः। अनुमानञ्च **मङ्गलं विघ्नध्वंसजनकं विघ्नाजनकत्वे सति विघ्नज्ञानवतामेव भ्रमाजन्यतत्प्रवृत्तिविषयत्वाद्** इत्याकारकम्। समाप्त्युद्देश्यकप्रवृत्त्यनुपपत्त्या विघ्ना-जनकत्वस्य सिद्धत्वात्। सिद्धे विघ्नध्वंसे फले समाप्त्युद्देश्यकप्रवृत्त्यनुपपत्त्यैव तस्य मुख्यफलत्वे निरस्ते परिशेषाद् द्वारत्वनिर्णय इति भावः। **इति कामनया** इत्युद्दिश्य, **तत्करणपक्षे** तस्य शिष्टाचारविषयत्वपक्षे, **श्रुतित** इति निर्विघ्नसमाप्तिकामो मङ्गल-माचरेदिति तादृशाचारानुमितविघ्नध्वंसविशिष्टसमाप्तिजनकताबोधकवेदादेवेत्यर्थः।

---

१. अदृष्टस्यानुत्तेजकत्वमिति भावः।

**मङ्गलाचरणे विघ्नाभाव एव द्वारत्वेनाभिमतः। निर्विघ्नं समाप्यतामिति कामनया तत्करणपक्षे श्रुतित एव द्वारत्वनिर्णयः।**

**आलोकः**

**कत्वात्। न त्वन्तरापूर्वं जनयित्वा तद्द्वारा विघ्नध्वंसो द्वारम्, गौरवादिति मनसि कृत्याह—वस्तुत इति।**

श्रुतित एवेति। **वेदादेव। पूर्वत्र कल्पे व्यापारः कल्पनीयोऽत्र तु शाब्द इति भेदः। तदुक्तं वत्सेश्वरेण—"वेदश्चानुमीयमानो मङ्गलं प्रारिप्सितसाधनमित्याद्याकारः। प्रकारजिज्ञासायां पारिशेष्यात् प्रतिबन्धकदुरितक्षयरूपो ज्ञायते। यद्वा तदन्तर्भावेणैव वेदानुमानमि"ति।**

**दर्पणः**

यद्वा सत्यनया तत्रादृष्टं विघ्नरूपं जन्यते, तदेव मङ्गलेन नाश्यते, न तु संस्कारकालोपाधी प्रति मङ्गलस्योत्तेजकतेति भावः। **कल्प्येति मूलम्।** प्रयाजादिजन्यापूर्वं विना दर्शाद्यदर्शनात् प्रयाजादेर्दर्शादिकं प्रतीति शेषः, सामान्यत एव हेतुत्वम्। तेन तत्रापूर्वस्यैव द्वारत्वं लाघवादिति। मङ्गलस्य तु तन्नियतापूर्वं विनाऽपि प्रमत्तादिसमाप्तिदर्शनात्तस्य विघ्नस्थलीयसमाप्तावेव हेतुत्वम्। तत्र च विघ्नध्वंसस्यैव द्वारत्वौचित्यात् नेदं प्रकृते लाघवमिति भावः।

**माथुरी**

न च तज्जन्यत्वे सति तज्जन्यजनकत्वस्य द्वारत्वस्य न वेदादुपस्थितिः, निर्विघ्नपदस्य जन्यतासम्बन्धेन विघ्नध्वंसविशिष्टार्थकतया समाप्तौ विघ्नध्वंसजन्यत्वस्य मङ्गले तद्विशिष्टसमाप्तिजनकत्वस्यैव च, तस्मात्[1] प्रतीतेरिति वाच्यम्, विशिष्टनिरूपितकारणताग्राहकमानेन विशेषणं प्रत्यपि कारणताग्रहनियमाद्, विघ्नध्वंसं प्रत्यपि मङ्गलस्य तेन कारणताग्रहादिति भावः।

ननु नियमतो विघ्नज्ञानसत्त्व एव शिष्टैस्तत्करणं निर्विघ्नं समाप्यतामिति कामनया शिष्टैस्तत्करणञ्चासिद्धमित्यरुचेराह **किञ्चेति। अपूर्वद्वारत्वे** अपूर्वद्वारा फलजनकत्वे, **लौकिकाङ्गत्वविरोधः** लौकिकफलजनकत्वाभावप्रसङ्गः; **क्लृप्तकारणादेव** अपूर्वद्वारकफलजनककारणातिरिक्तकारणादेव **तदुत्पत्तेः** तदुत्पत्तिनियमात्, लौकिकफलोत्पत्तिनियमादिति यावत्। **अलौकिकं लौकिके नाङ्गम्** इति तक्षसूत्रस्यापूर्वद्वारा स्वफलजनककर्मविषयत्वादिति भावः। **इन्द्रबाहुबन्धनवदिति।** तादृशनियमादिन्द्रबाहुबन्धनस्य यथा लौकिकफलजनकत्वाभाव इत्यर्थः। **इदमुपलक्षणम्।** अपूर्वधर्मिकल्पनां तस्य समाप्तिकारणत्वकल्पनाञ्चापेक्ष्य प्रतिबन्धकाभावतया समाप्तिकारणत्वेन क्लृप्तस्य विघ्नध्वंसस्य मङ्गलजन्यत्वमात्रकल्पने लाघवात्, नाशकान्तरकल्पने गौरवात्, तस्य समाप्तिजनकताया अपि क्लृप्तत्वाच्चेत्यपि बोध्यम्।

विघ्नध्वंसविशिष्टसमाप्तेर्मङ्गलाचारोद्देश्यत्वगते[2] बाधकमाशङ्कते—**नन्विति।**

१. तस्मात्—वेदादित्यर्थः। २. मङ्गलोद्देश्यत्वमते इति ख०।

**किञ्चापूर्वद्वारत्वे लौकिकाङ्गत्वविरोधः, क्लृप्तकारणादेव तदुत्पत्तेरिन्द्रबाहुबन्धनवत् । ननु विघ्नसन्देहे कथं तन्नाशार्थं प्रवृत्तिः ? दुरितध्वंसार्थिप्रवृत्तौ तन्निश्चयस्य हेतुत्वात् प्रायश्चित्तवदिति चेत्, न; विघ्नसंशये निश्चये वा नियमेन शिष्टानां मङ्गलाचाराद् विघ्नज्ञानं प्रवर्त्तकम् । तादृशाचारानुमितविधिनापि विघ्नज्ञानवानारब्धसमाप्तिकामोऽधिकारी**

आलोकः

किञ्चेति । **तथा चाधिकारिद्वयकल्पनाभियाऽपि नापूर्वं द्वारमित्यर्थः ।**

**ननु अपूर्वद्वारकत्वं न तत्र तन्त्रम्, अपि तु अनपेक्षितजनकत्वमित्युक्तम् । तथा**

दर्पणः

ननु मङ्गलजन्यापूर्वस्य समाप्तिसामान्यहेतुतायां न व्यभिचारनिश्चयः । प्रमत्तादिस्थलेऽपि जन्मान्तरीयमङ्गलसंशयादित्यस्वरसादाह—**वस्तुत** इति मूलम् । तत्र च विघ्नाभावद्वारकत्वे प्रतिपाद्यमानेऽपि नापूर्वद्वारत्वबाधो लभ्यते अपूर्वं जनयित्वा विघ्नाभावजननसम्भवादित्यत आह—**इति मनसि कृत्येति** । विघ्नाभावस्यावश्यकत्वमेव मनसि निधायेत्यर्थः **कल्प** इति **मङ्गलं** विघ्नतत्कादचित्काभावान्यतरजनकं विघ्नज्ञानवतैव क्रियमाणत्वादिति सामान्यतो ज्ञाने समाप्तिकामप्रवृत्त्यनुपपत्त्या विघ्नजनकत्वे निरस्ते प्रागभावस्याजन्यतया तज्जनकत्वे च निरस्ते विघ्नध्वंसजनकत्वे व्यवस्थिते

माथुरी

**तन्नाशार्थम्** तन्नाशमुद्दिश्य, **दुरितध्वंसार्थिप्रवृत्ताविति** दुरितध्वंसोद्देश्यकप्रवृत्तावित्यर्थः । **तन्निश्चयस्य** दुरितनिश्चयस्य **प्रायश्चितवत्** प्रायश्चित्तप्रवृत्तिवत् ।

ननु **दुरितध्वंसार्थिप्रवृत्तौ** इत्यादेः कतमोऽर्थः ? किं पापध्वंसार्थिप्रवृत्तौ पापनिश्चयो हेतुः ? किं वा सामान्यतोऽनिष्टध्वंसार्थिप्रवृत्तावनिष्टनिश्चयो हेतुः ? किं वा तदुद्देश्यकप्रवृत्तौ तदुपधायकत्वनिश्चयो हेतुः ? प्रकृते च विघ्नसन्देहेन विघ्नध्वंसोपधायकत्वसन्देहात् कथं तदर्थिप्रवृत्तिरिति ? तत्र नाद्य इत्याह **विघ्नसंशय** इति । **विघ्नज्ञानम्** विघ्नज्ञानसामान्यम्, **प्रवर्त्तकम्** मङ्गले प्रवर्त्तकम् । तथा च पापध्वंसार्थिप्रवृत्तौ पापनिश्चयो हेतुरिति व्याप्तिरप्रयोजिकेति भावः । इदमुपलक्षणम् ।

**संवत्सरञ्चैकमपि**[1] **चरेत्कृच्छ्रं द्विजोत्तमः ।**
**अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य च विशेषतः ॥**

**इत्येतद्वचनबोधितपापसंशयजन्यप्रायश्चित्तविशेषप्रवृत्तौ शौचाचमनादिलक्षणदुरितध्वंसहेतुक्रियाविशेषप्रवृत्तौ च व्यभिचारोऽपि बोध्यः ।**

---

१. प्रतिसंवत्सरञ्चैकमिति क० ।

**बोध्यते। प्रायश्चित्ते तु तन्निश्चयवान्[1] तथैव विधिबोधनात्। अत एवाधिकारिविशेषणं विघ्न इति, तत्सन्देहे कथं प्रवृत्तिः? वैदिकेऽधिकार-**

आलोकः

**चापूर्वद्वारकत्वेऽपि मङ्गलस्य तज्जन्यापूर्वविलम्बेन फलविलम्बादङ्गत्वं स्यादित्यत आह—क्लृप्तेति।** तद्विलम्बात्कार्यविलम्बोऽसिद्ध एवेत्यर्थः।

इन्द्रबाहुबन्धनवदिति। **षष्ठीसमर्थाद्वतिः।**

दर्पणः

समाप्तिकामप्रवृत्त्यनुपपत्त्यैव तस्य समाप्त्यन्यफलत्वे बाधिते परिशेषाद्विघ्नध्वंसस्य द्वारत्वमित्यर्थः।

**शाब्द** इति। यद्यपि द्वारत्वमत्रापि कल्प्यम्, तथापि पूर्वं द्वारद्वारत्वयोः कल्प्यत्वमिह तु द्वारस्य शाब्दत्वमिति भेदः। मूले च द्वारत्वपदेन द्वारमेवाभिहितम्।

**केचित्तु** विघ्नध्वंसविशिष्टसमाप्तिं प्रति वेदेन मङ्गलस्य कारणत्वबोधनात् विघ्नध्वंसे मङ्गलजन्यत्वं समाप्तिजनकत्वं च संसर्गमर्यादया भासत इति शब्दादेव द्वारत्वनिश्चयमाहुः।

माथुरी

नन्वेवं विधिनापि विघ्नज्ञानवन्मात्रकर्त्तव्यत्वेन **बोध्येते**त्यत्रेष्टापत्तिमाह **तादृशाचारेति** विघ्नस्य संशये निश्चये च शिष्टाचारेत्यर्थः। अनुमानञ्च 'मङ्गलं विघ्नज्ञानवन्मात्रकर्त्तव्यत्वेन[2] वेदबोधितं विघ्नस्य संशये निश्चये च शिष्टाचरणाद्'[3] इत्याकारकमिति भावः।

**अधिकारी, बोध्यते** कर्तृत्वेन बोध्यते, तत्कर्त्तव्यत्वेन मङ्गलं बोध्यत इति यावत्। **विघ्नज्ञानवान् समाप्तिकामो मङ्गलम् कुर्याद्** इत्येवानुमितवेदशरीरमिति भावः। **प्रायश्चित्ते तु** प्रायश्चित्तविशेषे तु, **तन्निश्चयवा**निति पापनिश्चयवानित्यर्थः। कर्त्तेति शेषः। तथा च विधिना यत्र पापनिश्चयमात्रवत्कर्त्तव्यत्वं बोध्यते तत्रैव पापनिश्चयो हेतुः, अन्यत्र पापज्ञानसामान्यमेवेति भावः। **अत एवेति** **इत्यपास्तम्** इत्यनेनान्वितम्, 'अधिकारिविशेषणमि'ति अधिकार इत्यर्थः। यत् प्रवर्तमानपुरुषनिष्ठतया ज्ञायमानं सत् प्रवृत्तिहेतुः सोऽधिकारः, यथा शौचतत्कालजीवीत्यादिः। शौचभ्रमाद्यत्र प्रवृत्ति-स्तत्रापि भ्रमविषयीभूतं व्यधिकरणशौचमेव प्रवृत्तिहेतुरिति भावः। विघ्नस्य मङ्गलेऽ-

१. सा तु' इति पाठान्तरम्।
२. विघ्नज्ञानमात्रवत्कर्त्तव्यत्वेनेति क०, ग० च।
३. विघ्नसंशयनिश्चयकालीनालौकिकशिष्टाचारविषयत्वादिति ख०; विघ्नसंशयनिश्चय-कालीनशिष्टाचारविषयत्वादिति ग०।

४

**निश्चयादेव प्रवृत्तेरित्यपास्तम्[१]। यतः प्रधानाधिकारिण एवाङ्गेऽधिकारो न स्वतन्त्रः, अङ्गत्वभङ्गप्रसङ्गात् ।**

**न च प्रधाने प्रारिप्सिते दुरितमधिकारिविशेषणम्, विरोधात् । किन्तु समाप्तिकामना सा तु निश्चितैव ।**

आलोकः

दुरितेति । **यद्यपीदं शौचाचमनादिलक्षणदुरितध्वंसहेतुक्रियाप्रवृत्तौ व्यभिचारी, तथापि दुरितज्ञानमात्रवदनधिकारिकतदर्थक्रियात्वादिति विवक्षितम् । शौचादौ तत्संशयेऽपि बोधनात् तज्ज्ञानमात्रमधिकार इति हेत्वभावादेव न व्यभिचार इति भावः ।**

विघ्नसंशयेऽपि । **तथा चात्रापि विशेषणासिद्धिरिति भावः । विरोधादिति फलहेतोरधिकारतयाऽधिकारत्वं प्रतिबन्धकत्वञ्च विरुद्धमित्यर्थः ।**

दर्पणः

**प्रकारेति** । द्वारेत्यर्थः । **न तन्त्रमिति** । लौकिकानङ्गत्वे इत्यर्थः । **तथा चेति** । अपूर्वद्वारत्वेऽप्यङ्गत्वं स्यादेवेति भावः । लौकिकाङ्गत्वविरोध इत्यस्यान्वयार्थमाह—**षष्ठीति** । तथा च इन्द्रग्राहुबन्धनस्येवेत्यर्थः । **तज्ज्ञानमात्रमधिकार** इति । प्रवृत्तिप्रयोजक इत्यर्थः । अन्यथा तन्निश्चयहेतुत्वापत्तेरित्यवधेयम् ।

**केचित्तु** स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यत्वज्ञानानुरोधेन परमते सर्वेषामधिकारिविशेषणानामवश्यनिश्चयत्वेऽपि नैयायिकमते न तथा प्रवृत्तिं प्रति साक्षाद-

माथुरी

धिकारत्वमेव नास्तीत्याह **यतः** इति, **प्रधानाधिकारिण एव** प्रधानाधिकारस्यैवेति यावत् ।

**अङ्गेऽधिकारः** तदीयवैदिकाङ्गेऽधिकारत्वम्, तदीयवैदिकाङ्गत्वञ्च तज्जन्यफलजनकत्वप्रकारेण वेदबोधितत्वम्, भवति च प्रयाजादिस्तथा । अङ्गविधयो हि तावत् प्रधानसहकार्य्याकाङ्क्षायां प्रवर्तन्ते, न तु फलजनकत्वमात्राकाङ्क्षायाम्, प्रधानविधितः प्रधानज्ञानादेव तदुच्छेदात्, तथा च यदाकाङ्क्षया यत्प्रवर्त्तते स तस्यार्थ इति सकलमीमांसकमतसिद्धतया दर्शादिसहकारित्वस्याप्यङ्गविध्यर्थत्वात् । न च **विधौ न परः शब्दार्थः** इति न्यायादङ्गविधेरपीष्टसाधनत्वमेवार्थ इति वाच्यम्, शाब्दबोधस्याकाङ्क्षानुरोधितया **न विधौ** इत्यस्य प्रधानविधिपरत्वात्, तथैव मीमांसकैरभ्युपगमादिति भावः । **न स्वतन्त्रः** न तदधिकारातिरिक्तः, तदीयवैदिकाङ्गेऽधिकारः, **अङ्गत्वभङ्गप्रसङ्गादिति** वैदिकाङ्गत्वभङ्गप्रसङ्गादित्यर्थः । तदधिकारातिरिक्तानधि-

१. विघ्नसन्देहवत्त्वेनेतिभावः ।

**यस्त्वन्यत्र निश्चिताधिकारकर्तृकत्वेऽपि मङ्गलं सन्दिग्धाधिकार-कर्तृकमेव विघ्नसन्देहवतां शिष्टानामाचारानुमितवेदेन तथैव बोधनादिति,**

आलोकः

अपि चेति। **अनिष्टतावच्छेदकरूपावच्छिन्नसंशयेऽपि प्रवृत्तिर्दृश्यते। तत्रोक्त-व्याप्तेर्बाधकत्वं परोक्तमसम्भवि दुरितध्वंसत्वेनोद्देश्यत्वे तद्व्याप्तेः। इह तु प्रारब्ध[2] प्रतिबन्धकध्वंसत्वं तच्चादृष्टतदन्यसाधारणमित्यर्थः।**

दर्पणः

नुपयोग्यधिकारिविशेषणस्यैव निश्चयापेक्षणात्, ज्ञानकामनादीनान्तु साक्षादेवो-पयोगादिति यथाश्रुतमेवाहुः।

तन्न। समाप्तिकामनाऽधिकारिविशेषणम्। सा च निश्चतैवेति ग्रन्थविरोधात्। **अत एवेत्यादिमूले** वैदिकेऽधिकारिविशेषणनिश्चयस्यावश्यकतया विघ्ननिश्चय आनीयते। अत्रेति शेषः। पूर्वं तु दुरितध्वंसार्थिप्रवृत्तिं प्रति दुरितनिश्चयस्य हेतुत्वेनेति भेदः। **तथा चात्रापीति।** शौचाचमनादाविव दुरितज्ञानमात्रवदनाधि-कारिकत्वे सतीति निशेषणासिद्धिमङ्गलेऽपीत्यर्थः। फलहेतुत्वमाकाशादौ व्यभिचारीत्यत

माथुरी

कारकत्वस्य निरुक्ततदीयवैदिकाङ्गत्वव्यापकत्वादिति[1] भावः। यद्यपि प्रारब्धकर्मण्य-नधिकारस्यापि शौचादेर्मङ्गलेऽधिकारत्वान्नायं नियमः, तथापि तदतिरिक्ताधिकारेऽयं नियमो बोध्यः।

नन्वेतावता प्रकृतेऽपि किमायातमित्यत आह **न चेति। प्रधाने स्वजन्यफल-**जनकत्वेन वेदबोधितमङ्गलके, स्वपदं प्रारिप्सितकर्मपरम्, **अधिकारिविशेषणम्** अधिकारः, **विरोधादिति** अधिकारत्वफलप्रतिबन्धकत्वयोर्विरोधस्य सर्वसिद्धत्वा-दित्यर्थः। तथा च तदीयवैदिकाङ्गे मङ्गले कुतो विघ्नस्याधिकारत्वमिति भावः।

न च समाप्तिकामो मङ्गमाचरेदित्याकारकः, निर्विघ्नसमाप्तिकामो मङ्गल-माचरेदित्याकारको वा विधिः, तथा च प्रारब्धकर्मजन्यफलजनकत्वप्रकारेण वेदबोधि-तत्वरूपं तदीयवैदिकाङ्गत्वं कुतो मङ्गलस्येति वाच्यम्, प्रारब्धकर्मजन्यसमाप्तिर्मे जायता-मित्युद्दिश्य शिष्टप्रवृत्तेर्निर्विघ्नप्रारब्धकर्मजन्यसमाप्तिकामो मङ्गलमाचरेदित्याकारक-स्यैव विधेरुन्नयनाद्, विधेः समाप्तिकामो मङ्गलमाचरेदित्याकारकत्वेऽपि प्रारब्धकर्म-सहकार्याकाङ्क्षयैव तत्प्रवृत्तेः प्रारब्धकर्मसहकारित्वस्य तदर्थत्वाच्च। मीमांसकनये आकाङ्क्षानुरोधित्वाच्छब्दानामिति भावः।

---

१. व्यापकाभावेन व्याप्याभावसिद्धिरित्याशयः।

तन्न; विघ्नवत्त्वेनाधिकाराभावात्, क्वचित् तन्निश्चयेऽपि प्रवृत्तेश्च।

आलोकः

**स्फ्याश्लिष्टेज्याधिकरणविरोधं शङ्कते—नन्विति।** 'यत् स्फ्या आश्लिष्येत् तदधोऽपमृज्यात् विष्णवे उरुविक्रमाय चरुं निर्वपे'दित्यादिना विहितस्फ्याश्लिष्टेज्यादेर्दर्शपौर्णमासप्रकृतित्वेन 'प्रकृतिवद्विकृति' रित्यतिदेशप्राप्तदर्शधर्मग्रहे तदङ्गदेवतावाहनस्य पूर्वदिनेऽननुष्ठानमित्यर्थः।

दर्पणः

आह—**पुरुषेति**। पुरुषविशेषणतया निश्चितस्य प्रवृत्तिद्वारा फलहेतुत्वमधिकारत्वम्। तच्च विघ्ने न सम्भवतीत्याह—**फलहेतोरिति। सा च निश्चतैवेति** मूलम्। यद्यपि स्वरूपसत्या कामनया प्रवृत्तिसम्भवे किमर्थं तन्निश्चयधावनम्, तथाप्यधिकारिविशेषणत्वमेव प्रवृत्तिजनकनिश्चयविषयतावच्छेदकमुक्तरीत्या निश्चयघटितमेव वाधिकारिविशेषणत्वमिति भावः। निश्चितत्वफलहेतुत्वांशावपहाय पुरुषगतत्वेन ज्ञातस्य प्रवर्त्तकत्वमधिकारत्वमिति मन्वानस्य मतं **यत्त्विति** मूले निबद्धम्। **विघ्नवत्त्वेनेति** मूलम्। विरोधादिति भावः।

माथुरी

ननु कस्तर्ह्यधिकारः? इत्यत आह। **किन्त्वति, सा त्विति** स्वर्गकामस्याग्निष्टोमः कार्यः, अहमपि तथेति प्रतिसन्धानेन प्रवृत्तेः कामनाज्ञानमपि प्रवृत्तिहेतुरित्यभिमानेनेदम्।

वस्तुतस्तु कामना फलं प्रति, प्रवृत्तिं प्रति च स्वरूपसत्येव हेतुः, न तु ज्ञातम्, मानाभावात्। न चैवमधिकारत्वानुपपत्तिः; यत् स्वनिष्ठतया ज्ञातं सत्पुरुषं प्रवर्त्तयति तस्याधिकारत्वादिति वाच्यम्, यद्धर्मविशिष्टेन कृतस्य कर्मणः फलजनकत्वं सोऽधिकार इति तल्लक्षणात्। न चाधिकारनिश्चयः फलाङ्गमिति वाच्यम्, स्वरूपसत एव तस्य तथात्वात्। अन्यथा शौचादिभ्रमात् कृतमपि सुकृतमर्जयेत्। न च तत्प्रमा तथा, मानाभावात्। न चैवं प्रायश्चित्तविशेषादौ पापानिश्चयेऽपि प्रवृत्तिः स्यात्, स्याच्च तन्निश्चयं विना कृतादपि तस्मात् फलोत्पाद इति वाच्यम्, तत्र पापनिश्चयस्याधिकारत्वात्, निश्चितपापकर्तृकत्वेन वेदबोधनात्। न च कामनाभिलाषं विना काम्यकर्मणः फलानिष्पत्तेः कामनाज्ञानमपि प्रवर्त्तकमिति वाच्यम्, तावता फलं प्रति तस्य हेतुत्वेऽपि प्रवृत्तिं प्रति तस्य हेतुत्वे मानाभावात्। न हि काम्यकर्मप्रवृत्तिं प्रति कामनाभिलाषो हेतुः, भ्रान्त्या अभिलाषमकृत्वा केनचित् काम्यकर्मानुष्ठानात्, फलं प्रति कामनाभिलाषस्यैव हेतुतया कामनाज्ञानस्य हेतुत्वे मानाभावाच्च वाक्यप्रयोगं प्रति वाक्यार्थज्ञानस्याहेतुतया प्रयोजत्वस्याप्यसम्भावितत्वादित्यन्यत्र विस्तरः।

अन्यत्र प्रायश्चित्तविशेषादौ, **निश्चिताधिकारकर्तृकत्वेऽपीति** अधिकारनिश्चयस्यैव प्रवर्त्तकत्वेऽपीत्यर्थः। **मङ्गलं सन्दिग्धाकारकर्तृकमेव** इति मङ्गले विघ्नरूपाधिकार-

अपि च शङ्कितानिष्टवारणार्थमपि प्रवर्त्तन्ते परीक्षकाः, यथा सर्पादिदंशजन्यविषयसंशये तन्नाशाय भेषजपानादौ।

किञ्च फलस्य संशयेऽप्युपायत्वनिश्चयाद् यथा कृष्यादौ प्रवृत्तिः, तथा मङ्गलेऽपि। यदि च वृष्ट्यादौ सति कृष्यादितोऽवश्यं फलमिति

आलोकः

यथेति। व्रीहीनवहन्तीत्यत्र व्रीहिपदस्य यवादिसाधारण्यार्थमहजहत्स्वार्थ-लक्षणया नियोगसाधनीभूतद्रव्यमात्रपरत्वे 'कृष्णलं श्रपयेत्' इति श्रुत्या नियोगसाधन-त्वेन बोधितकृष्णलस्यापि तत्प्राप्तौ वैतुष्यद्वारबाधेऽवघातबाधो यथा तथेत्यर्थः।

कृष्णलः सुवर्णमाषः। न च कृष्णलेऽवघातबाधे तद्विकृतौ नीवारेऽपि तद्बाधा-पत्तिः। कृष्णलेऽवघातबाधेऽपि तत्प्रसङ्गाबाधात्।

दर्पणः

क्वचिदिति मूलम्। मङ्गलं सन्दिग्धाधिकारिकर्त्तृकमेवेत्यस्मिन् कल्पे दूषणम्। यथाश्रुते ज्ञानसामान्यप्रयोजकतायां विवक्षितायां पूर्वोक्तमेव विघ्नवत्त्वेनाधिकाराभा-वादिदमेव दूषणं द्रष्टव्यम्।

नन्वपि चेति मूलमसङ्गतम्। दुरितध्वंसार्थिप्रवृत्तौ दुरितनिश्चयहेतुत्वस्य पूर्वप-क्षितत्वादत आह—अनिष्टेति। तत्र दर्शने सति। असम्भवीति—अप्रयोजकत्वादिति भावः।

माथुरी

संशय एव प्रवर्तक इत्यर्थः। विघ्नवत्त्वेनेति विघ्नस्याधिकारत्वाभावदित्यर्थः। अभ्युवपगम्याह क्वचिदिति। तथा च विघ्नसंशय एव प्रवर्तक इति नियमोऽसिद्ध इति भावः।

द्वितीयविकल्पे व्यभिचारमाह अपि चेति। यथाश्रुते दुरितध्वंसार्थिप्रवृत्तावेव दुरि-तनिश्चयहेतुतायाः पूर्वं शङ्कितत्वादनिष्टध्वंसार्थिप्रवृत्तावनिष्टनिश्चयव्यभिचारा-भिधानस्यासङ्गतत्वापत्तेः।

केचित्तु पूर्वत्रैव[1] दुरितध्वंसार्थिप्रवृत्तावित्यादौ दुरितपदमनिष्टमात्रपरम्, अतो नासङ्गतिरित्याहुः, तदसत्; तथापि 'किञ्च' त्यादिवक्ष्यमाणदोषासङ्गतेः। इदमुपलक्षणम्। एतत्कल्पेऽपि 'संवत्सरञ्चैकमपी' त्यादिवचनबोधितप्रायश्चित्त-प्रवृत्त्यादौ व्यभिचारोऽपि बोध्यः।

---

१. सर्वत्रैवेति ख०।

**तर्कात् तत्र प्रवृत्तिः, तदा सति विघ्ने मङ्गलादवश्यं फलमिति तर्कादत्रापि प्रवृत्तिः ।**

आलोकः

**वस्तुतस्तु कृष्णलविकृतित्वेऽपि नीवारस्य नावघातबाधः । तथा हि न तावत् 'प्रकृतिवद्विकृतिरित्यतिदेशः' सर्वधर्माणाम् । सर्वयागानां दर्शपौर्णमासात्मकतापत्तेः । किन्त्वनुपदिष्टयावद्धर्म्मातिदेशः । एवञ्चाजहत्स्वार्थलक्षणया व्रीहियवकृष्णलनीवारादिषु लाघवादेवावघातविधिरितीहापि नावघातातिदेशः, साक्षादुपदेशात् । तथा च**

दर्पणः

ननु अनौपाधिकत्वमेव विपक्षबाधकं स्यादत आह—**दुरितेति** । दुरितध्वंसत्वनियतधर्मप्रकारकेच्छापूर्वकत्वमुपाधिरित्यर्थः । प्रारब्धप्रतिबन्धकध्वंसत्वमुद्देश्यतावच्छेकमिति शेषः । **तद्वचाप्तेरिति** । यत्र दुरितध्वंसार्थिप्रवृत्तित्वं तत्र दुरितनिश्चयसाध्यत्वम् । अस्यां व्याप्तौ दुरितध्वंसत्वेनोद्देश्यत्वमुपाधिरित्यर्थः । साधनाव्यापकत्वं दर्शयति—**इह त्विति** ।

**अदृष्टतदन्येति** । अदृष्टतदन्यध्वंसेत्यर्थः । वस्तुतो ननु विघ्नसंशय इत्यादिपूर्वपक्षे विकल्पनीयं किं पापध्वंसार्थिप्रवृत्तौ पापनिश्चयस्य हेतुत्वमुत सामान्यत एवानिष्टध्वंसार्थिप्रवृत्तौ अनिष्टनिश्चयस्य हेतुत्वमिति । आद्ये **विघ्नसंशय** इत्यादिमूलम् । द्वितीये **अपि चेति** मूलम् ।

माथुरी

तृतीयकल्पमभिप्रेत्याह'**किञ्चे**'ति । '**फलस्य**' फलोपधायकत्वस्य, **उपायत्वनिश्चयात्** स्वरूपयोग्यत्वनिश्चयात् । '**वृष्टयादौ**' इत्यादिपदादुक्तप्रायश्चित्तविशेषादिपरिग्रहः । '**तथा मङ्गलेऽपी**'ति विघ्नध्वंसरूपफलोपधायकत्वसंशयेऽपि, प्रवृत्तिरिति शेषः ।

ननु सति वृष्ट्यादौ कृष्यादावपि सामान्यतः फलावश्यभावनिश्चयोऽस्त्येवेत्यत आह '**यदि चे**'ति । '**तर्कात्**' निश्चयात्, '**सति विघ्ने**' इति विघ्नसमवहितमङ्गलमवश्यं विघ्नध्वंसोपधायकमिति निश्चियादित्यर्थः । न च कृष्यादौ सामान्यतो निश्चयस्य हेतुत्वेऽपि वैदिके विशिष्य तन्निश्चयो हेतुरिति वाच्यम्, अन्तरा कर्मनाशाजलस्पर्शकरतोयापारगमनादिशङ्कया तत्रापि[1] विशिष्य तत्संशयात्[2] । न च व्यापारवति वैदिके व्यापारावश्यम्भावनिश्चयस्तथा, तत्राप्युत्तराङ्गनिर्वाहसंशयेन संशयादिति भावः ।

ननु वैदिके द्वारवैपरीत्यज्ञाने न प्रवृत्तिः; । अत एव '**यतस्फ्या आश्लिषेत् तदधोऽपमृज्यात्, विष्णवे उरुविक्रमाय चरु[3] निर्वपेत्**' इत्यनेन विहितस्य स्फ्यस्य भक्ताश्लेषनिमित्तकस्य यागस्य इष्टित्वेन दर्शप्रकृतिकत्वात् '**प्रकृतिवद्विकृतिः**' इति

१. वैदिकेऽपीत्यर्थः ।
२. फलोपधायकत्वसंशयादित्यर्थ ।
३. द्वादशकपालं चरुमिति ग० ।

ननु स्पयस्य भक्ताश्लेषनिमित्तकेज्यायामिष्टित्वेन दर्शधर्मत्वे[1] सत्यतिदेशागतपूर्वदिनकर्तव्यदेवतावाहनस्याङ्गस्य स्पयाश्लेषद्वार-संशयेऽनुष्ठानमुक्तम्, यथा कृष्णले द्वारबाधे। अतो विघ्नसंशयात् तद्ध्वंस-

आलोकः

प्रकृतावववघातबाधेऽपि न विकृतौ तद्बाधः। प्रकृतिविकृतिन्यायप्राप्तस्यैव प्रकृतिबाधे विकृतिबाधात्।

अत्र शङ्कते[2]। नियोगसाधनीभूतसतुषद्रव्यत्वेनैवाजहत्स्वार्थलक्षणाऽस्तु। तथा चाप्रसङ्ग एव न तु बाधः। निषेधस्य प्रसङ्गपूर्वकत्वात्। मैवम्। व्रीहिभिर्यजेत, व्रीहीनवहन्ति, व्रीहीन् प्रोक्षतीत्यत्र यागावघातप्रोक्षणानां सामानाधिकरण्यमनुभूयते। तच्च तुल्यप्रकारोपस्थितिं विना न सम्भवति। न वा साकाङ्क्षत्वञ्चेत्येकप्रकारोप-

दर्पणः

ननु फलावश्यम्भावनिश्चयः प्रवर्त्तकः विघ्नध्वंसात्मकद्वारसन्देहे च नास्तीत्याशङ्कायां मूलं किञ्चेति। **नियोगोऽदृष्टम्। तत्प्रसङ्गबाधादिति।** प्रकृतिप्रसङ्गमात्रेण विकृतावतिदेश इति भावः। **सर्वयागानामिति।** सर्वासामिष्टीनामित्यर्थः। तासां दर्शपूर्णमासप्रकृतिकत्वादिति भावः। **सामानाधिकरण्यमिति।** एकधर्मावच्छिन्नान्वयित्वमित्यर्थः। अनुभवे विवादादाह—**न वेति** नियोगसाधनद्रव्येण यागः कथमित्याकाङ्क्षायां नियोगसाधनसतुषद्रव्यमवहन्तीति नाकाङ्क्षिताभिधानमित्यर्थः।

माथुरी

न्यायेन दर्शधर्मकत्वेऽपि पूर्वदिने देवतावाहनस्य दर्शधर्मस्य स्पयाश्लेषरूपद्वारसंशयादननुष्ठानमुक्तं, तथा च मङ्गले दुरितध्वंसरूपसंशयात् कथं प्रवृत्तिरित्याशङ्कते **नन्विति।** **'स्पयः'** खदिरकाष्ठनिर्मितखड्गः[3], **'इज्या'** यागः, **'दर्शधर्मत्वे सति'** दर्शप्रकृतिकत्वे सत्यपि, **'दर्शधर्मग्रहे सति'** ति पाठेऽप्ययमेवार्थः। **'अतिदेशे'**ति प्रकृतिवद्विकृतिरित्यतिदेशेत्यर्थः। स्पयाश्लेषेज्यायां देवतावाहनस्याननुष्ठाने दृष्टान्तमाह **'यथे'**ति। **'कृष्णलः'** सुवर्णकलापः, **'द्वारबाधे'** वैतुष्यरूपद्वाराभावनिश्चये, अवघाताननुष्ठानमिति शेषः। **'व्रीहीन् प्रोक्षति, व्रीहीनवहन्ति'** इत्यत्र यवादिसाधारण्यार्थं व्रीहिपदस्याजहत्स्वार्थलक्षणया घृतादिव्यावृत्तनियोगसाधनताश्रयद्रव्यमात्रपरत्वेन[4] **'कृष्णलं श्रपयेत्'** इति श्रुत्या तादृशनियोगसाधनत्वेन बोधिते कृष्णलेऽप्यवघातप्राप्तावपि वैतुष्यद्वारबाधाद् यथाननुष्ठानमित्यर्थः। **'अत'** इति द्वारसंशयेऽननुष्ठानवचनाद् वैदिकप्रवृत्तौ द्वारसंशयस्य प्रतिबन्धकत्वकल्पनादिति भावः।

---

१. दर्शधर्मसंग्रहे इति क०।
२. 'ननु' इति काशीपुस्तकपाठः।
३. खादिरकाष्ठनिर्मितचररूपकणविशेष इति ख० ग० च०।
४. व्रीहिपदं घृतान्यप्रयोगसाधने लाक्षणिकम् लाक्षणा चेयमजहत्स्वार्था, तादृशसाधनत्वरूपलक्ष्यतावच्छेदकस्य शक्यलक्ष्योभयवृत्तित्वात्।

**द्वारसंशये कथं मङ्गलानुष्ठानमिति चेत्, न; नैमित्तिके हि निमित्तवान-धिकारी[1], यथा भिन्ने जुहोतीत्यत्र पात्रभेदवान्; तथेहाश्लेषवानधिकारीति**

आलोकः

**स्थितिर्वाच्या। न च प्रोक्षणादावपि सातुष्यन्तन्त्रमित्येकत्र सातुष्याप्रवेशेऽवघातेऽपि न तत्प्रवेश इति प्रसङ्गसम्भवे बाध एवेतितत्त्वमिति।**

**यद्यपि उदाहरणयोर्द्वयोरपि साध्यवैकल्यम्, प्रथमे संशयोऽस्ति न द्वारगोचरः किन्तु निमित्तगोचरः। द्वितीयेऽस्ति द्वारगोचरो न तु संशयः, किन्तु बाधः, तथापि व्यतिरेकनिश्चयः प्रतिबन्धक इत्यत्र कृष्णल उदाहरणम्। तस्य निश्चयत्वेन न प्रतिबन्धकता, किन्तु ज्ञानत्वेन। यद्विरहनिश्चयो यत्प्रवृत्तिप्रतिबन्धकस्तत्र तत्-**

दर्पणः

मङ्गलप्रतियोगिकप्रवृत्तिः द्वारसंशये प्रतिबन्ध्या, द्वारसंशयस्थलीयप्रवृत्तित्वात्, देवतावाहनवत्कृष्णलवदित्यत्र शङ्कते—**यद्यपीति**।

**व्यतिरेकनिश्चयो** द्वारव्यतिरेकनिश्चयः। **कृष्णल** उदाहरणं प्रदर्शनस्थलम्। देवतावाहनमुदाहरणं दृष्टान्तः तदयमर्थः—यद्व्यतिरेकनिश्चयो यत्र प्रतिबन्धकस्तत्संश-योऽपीत्यादिव्याप्तिग्रहार्थं देवतावाहनं दृष्टान्त उक्तः। ततश्च द्वारसंशयः प्रतिबन्धकः प्रतिबन्धकीभूतव्यतिरेकनिश्चयसमानविषयकसंशयत्वादित्यनुमाने विशेषणांशसत्त्व-प्रदर्शनार्थं कृष्णलप्रदर्शनमिति। **स्फ्यः** खादिरः खड्गः।

माथुरी

**'यथा वे'**ति वाकारसम्बलितपाठपक्षे विघ्नध्वंससन्देहे मङ्गलानुष्ठानानुपपत्तौ हेत्वन्तरमाह **'यथा वे'**ति। **'यथा वा'**येन वा यतो वेति यावत्। यथाश्रुते **'अत'** इत्येननान्वयापत्तेः। शेषस्तु पूर्ववत् **'अत'** इति द्वारस्य संशये व्यतिरेकनिश्चये वाननुष्ठानाद्, द्वारवैपरीत्यज्ञानमात्रस्यैव प्रतिबन्धकत्वकल्पनादिति भावः। वस्तुतो मूले वाकरः प्रामादिक इति ध्येयम्।

स्फ्याश्लेषो हि निमित्तमतो निमित्तनिश्चयाभावादेव तत्र न प्रवृत्तिः, न तु द्वारसन्देहात्, स्फ्याश्लेषस्य द्वारत्वाभावादित्याशयेन सिद्धान्तयति **'नैमित्तिके ही'**ति। **'निमित्तवान्'** निमित्तनिश्चयवान्, **'अधिकारी'** अनुष्ठाता, निमित्तनिश्चयो निष्कम्पप्रवृत्तिहेतुरित्यर्थः। **'पात्रभेदवान्'** पात्रभेदनिश्चयवान्, पात्रभेदनिमित्तकहोमे पात्रभेदनिश्चयो यथा निष्कम्पप्रवृत्तिहेतुरित्यर्थः। **'इह'** स्फ्याश्लेषनिमित्तकेज्यायाम्, **'आश्लेषवान्'** आश्लेषनिश्चयवान्, **'अधिकारी'** अनुष्ठाता, आश्लेषनिश्चयो निष्कम्प-प्रवृत्तिहेतुरित्यार्थः। आश्लेषस्य निमित्तत्वादिति भावः। **'युक्तमननुष्ठानमि'**ति युक्तं पूर्वदिने देवतावाहनाननुष्ठानमित्यर्थः।

---

१. निमित्तनिश्चयवानिति क०।

**पूर्वदिने आश्लेषनिश्चयाभावाद् युक्तमननुष्ठानम् ।**

आलोकः

**संशयोऽपीति व्याप्तेस्तत्र देवतावाहनमुदाहरणमिति मन्तव्यम् । तदुक्तं—वत्सेश्वरेण—"द्वाराभावनिश्चये इवाप्रवृत्ते"रिति ।**

**यद्विरहनिश्चय इत्यादिव्याप्तेः कृष्यादिप्रवृत्तावेव व्यभिचाराद्भङ्ग इति निमित्तसंशयत्वेनैव प्रतिबन्धकत्वं वाच्यम् । न चेह तत् सम्भवतीति मनसिकृत्य निमित्तसंशये प्रवृत्त्यभावमुपपादयति—नैमित्तिके इति ।**

दर्पणः

**वाकारश्च** मूले प्रामादिक इत्यवधेयम् । **वस्तुतस्तु**--मूले ज्ञातप्रयोजकमध्यवर्त्ति-व्यतिरेकज्ञाने पूर्वकर्मणोऽनुष्ठानमित्यत्र दृष्टान्तद्वयम् । तेन क्वचिद् **वाकारो**ऽपि सङ्गच्छत इति ।

**नैमित्तिके** हीत्यादिग्रन्थेन पूर्वोक्तव्याप्तेरबाधनादसङ्गतिमाशङ्क्याह—**यद्विरहेति** ।

**निमित्तसंशयत्वेनैवेति** । मङ्गलप्रतियोगिकप्रवृत्तिः दुरितध्वंसलक्षणद्वारसंशय-प्रतिबध्या द्वारसंशयस्थलीयप्रवृत्तित्वादित्यत्र निमित्तसंशयत्वमुपाधिरित्यर्थः ।

माथुरी

रफ्याश्लेषनिमित्तनिश्चयस्य प्रधाने प्रवर्त्तकत्वेनाङ्गेऽपि प्रवर्त्तकत्वात् । तत्र प्रवर्त्तकस्य तदीयवैदिकाङ्गेऽपि प्रवर्त्तकत्वनियमात् । अत एव प्रधानाचिकीर्षाया एव वैदिकाङ्गे प्रवर्त्तकत्वम्, प्रकृते च विघ्नध्वंसो न निमित्तम्, किन्तु व्यापार एव । अतस्तत्सन्देहेऽनुष्ठाने न किञ्चिद् बाधकमिति भावः ।

ननु यत्राप्तवाक्यदिना पूर्वदिने भक्ताश्लेषनिश्चयस्तत्रावाहनप्रसङ्गः । न च निमित्तस्य स्वरूपसतो हेतुत्वेन तत्रापि न तदनुष्ठानमिति[1] वाच्यम्, तथा सति क्षयाहनिमित्तकश्राद्धादौ पूर्वदिने क्षयाहाभावात् तदङ्गनिरामिषभोजनाद्यकरणा-पत्तेरिति चेत्, न; यत्र पूर्वदिने भक्ताश्लेषनिश्चयः, तत्र पूर्वदिने देवता-वाहनस्येष्टत्वात् ।

प्रकारान्तरेणापि पूर्वदिने देवतावाहनाननुष्ठानमुपपादयति **अपि चे'ति** । **तदङ्गानुष्ठानं** तदीयवैदिकाङ्गस्य देवतावाहनस्यानुष्ठानम्, प्रधानकर्त्तव्यतानिश्चयस्य

---

१. तादृशानुष्ठानमिति घ० ।

**अपि चेज्याकर्त्तव्यतानिश्चये तदङ्गानुष्ठानम्, न चाश्लेषसंशये तन्निश्चयः पूर्वदिने। अतः प्रधानेऽधिकाराभावान्नाङ्गेऽधिकार इति नावाहनं पूर्वदिने।**

आलोकः

**आश्लेषनिश्चयाभावादित्यत्र निश्चयग्रहणमधिकारनिश्चयार्थम्। वस्तुतो निश्चयपदमयुक्तमधिकाराभावस्यैव सम्भवादिति ध्येयम्।**

**नन्वेवं क्षयाहनिमित्तकश्राद्धादावपि नैकवारभोजनादेरङ्गस्य प्रसङ्ग इत्यस्वरसादाह—अपि चेति।**

दर्पणः

**प्रवृत्त्यभावमिति**। तद्व्याप्तिभङ्गे नैमित्तिकेऽपि निमित्तसंशयदशायां प्रवृत्तिः स्यादित्याशङ्क्य प्रकारान्तरेण तत्र प्रवृत्त्यभावमुपपादयतीत्यर्थः। प्रधाने नैमित्तिके भक्ताश्लेषरूपं निमित्तमधिकारः प्रधानाधिकारिण एव चाङ्गेऽधिकार इति देवतावाहनेऽपि भक्ताश्लेष एवाधिकारः। तस्य च पूर्वदिनेऽसत्त्वाद् देवतावाहनस्याननुष्ठानमिति **नैमित्तिके हीति**मूलस्यार्थः।

नन्वेवमाश्लेषाभावादित्येव वक्तव्ये निश्चयग्रहणं किमर्थमित्यत आह—**निश्चयेति**। यथाऽधिकाराभावो बाधकस्तथाऽधिकारनिश्चयाभावोऽपीति स एवोपात्त इति भावः।

माथुरी

**वैदिकाङ्गे** निष्कम्पं प्रवर्तकत्वात्, **कर्त्तव्यमिति निश्चित्य** इत्यादिस्मृतेरिति भावः। **तन्निश्चयः** इज्याकर्त्तव्यतानिश्चयः। न चैवं क्षयाहनिमित्तकश्राद्धादावप्यशौचादिसन्देहेन कर्त्तव्यतासन्देहात् पूर्वदिने तदङ्गनिरामिषभोजनाद्यकरणापत्तिरिति वाच्यम्, तत्रापि तर्कादिना मानसकर्त्तव्यतानिश्चयात्।[1] अन्यथा न निष्कम्पं क्रियत एव। यद्वा सकलशिष्टाचारान्यथानुपपत्त्या तत्र उत्कटकोटिककर्त्तव्यतासंशयस्यैव प्रवर्त्तकत्वम्, तदतिरिक्तस्थले च तन्निश्चयो हेतुरिति।

वस्तुतस्तु इदमभ्युपगमवादेन; प्रधानकर्त्तव्यतानिश्चयस्य वैदिकाङ्गप्रवृत्तौ तदङ्गफले वा कारणत्वे मानाभावात्। अतः प्रथमपक्षमेवोपसंहरति **अत इति**। **प्रधाने** रथ्याश्लेषेज्यायां, यः **अधिकारः** निष्कम्पं प्रवर्त्तकः रथ्याश्लेषनिमित्तनिश्चयः, तस्य पूर्वदिनेऽभावाद् न तदीयवैदिकाङ्गे देवतावाहने **अधिकारः** निष्कम्पं प्रवर्त्तक इत्यर्थः।

---

१. कर्तव्यत्वानिश्चये निष्कम्पं क्रियत एवेति नेत्यर्थः।

यदि च 'यदि न स्यादि'ति न्यायेन कुर्यात् तदा अनधिकृत-कर्तृकत्वेन निष्फलं स्यात्। स्पयाश्लेषे सतीज्याकर्त्तव्यतानिश्चयेऽपि

आलोकः

वस्तुतः स्पयाश्लिष्टेज्यया समं साम्यमेव न। तथा हि—सा हि विकृतित्वेनैव प्रकृतिधर्मग्राहिणी, प्रकृतौ चावाहनं निश्चिताधिकारिकर्त्तृकमेवोपकारकं ज्ञातमिति तद्बाधे बाध एव न्याय्यो न पुनः कल्पनान्तरम्। मङ्गले त्वधिकारो न 'प्रकृति-

दर्पणः

एवं सति प्रयासगौरवादाह— **वस्तुत** इति। आश्लेषाभावात्तन्निश्चयाभावादिति हेतुद्वयमिहाभिप्रेतमिति तत्त्वम्।

**नन्वेवमिति**। प्रधाने क्षयाहस्य निमित्ततया तदङ्गैकभुक्तेऽपि तस्याधिकारित्वात्तदभावेऽनुष्ठानं न स्यादित्यधिकारासत्त्वप्रयुक्तोऽननुष्ठाने दोष इत्यर्थः।

**अपि चेतीति**। कर्तव्यतानिश्चयाविषयताभाव एवाननुष्ठाने बीजं न तु निमित्तत्वाभाव इति भावः। शुद्धत्वविहितकालजीवितत्वरूपसामान्याधिकारिविशेषणवता

माथुरी

यद्वा अधिक्रियतेऽनेन इत्यधिकारः कर्त्तव्यतानिश्चयः, तेन प्रधाने कर्त्तव्यतानिश्चयाभावाद् नाङ्गे देवतावाहने **अधिकारः** निष्कम्पं प्रवर्त्तक इत्यर्थः। तथा च चरमपक्षस्यैवायमुपसंहार इति ध्येयम्।

ननु तथापि स्फ्याश्लेषरूपनिमित्तनिश्चयाभावेऽपि **यदि न स्यात्, ततः किं स्याद्** इति न्यायेन सकम्पप्रवृत्तौ बाधकाभावेन तादृशप्रवृत्त्या पूर्वदिनजनितदेवतावाहनात् फलोत्पत्तिप्रसङ्ग इत्यत आह **यदीत्यादि**।

**सन्दिग्धे परलोकेऽपि त्याज्यमेवाशुभं जनैः[1]।**
**यदि न स्यात् ततः किं स्यादस्ति चेन्नास्तिको हतः॥**

इति न्यायेनेत्यर्थः। **कुर्यात्** पूर्वदिने सङ्कल्पं करोति; **तदा** तथापि, **अनधिकृतकर्तृकत्वेन** निष्कम्पप्रवृत्तिजनकनिमित्तनिश्चयाभाववत्कर्तृकत्वेन, **निष्फलं स्यादि'ति** निष्फलं भवतीत्यर्थः। निमित्तनिश्चयस्य स्वप्रयोज्यनैमित्तिकेज्याद्वारा तज्जन्यव्यापारं प्रति हेतुत्ववत्तदीयवैदिकाङ्गजन्यव्यापारं प्रत्यपि स्वप्रयोज्यतदङ्गद्वारा हेतुत्वात्। न चैवमुपरागश्राद्धादावपि निमित्तीभूतोपरागादिसंशयात् कृतस्य तद्वैदिकाङ्गपूर्वदिननिरामिषभोजनस्य निष्फलत्वापत्तिरिति वाच्यम्, दृष्टत्वात्।

यद्वा तत्रोपरागसंशयेऽपि शिष्टाचारादुत्कटकोटिकनिमित्तज्ञानमेव हेतुः, तदतिरिक्तस्थल एव निमित्तनिश्चयो हेतुरिति भावः।

---

१. बुधैरिति ख०।

**नावाहनम्, पूर्वदिनस्याङ्गस्याभावादितीज्यायामावाहनबाध एव । मङ्गले तु विघ्नज्ञानवानधिकारीत्युक्तम्, तच्च संशयेऽप्यस्ति । प्रधाने**

आलोकः

**विकृतिरिति' न्यायलभ्यः, किन्तु कल्पनान्तराधीन एवेति संशये सत्यपि अधिकारः कल्प्यते । कल्पन्तारस्यावश्यकत्वादाचारविरोधाच्चेति ।**

दर्पणः

मयाऽवश्यमिदं कर्त्तव्यमित्येवंरूपनिश्चयस्य श्रद्धादौ मनसा सम्भवादिति भावः । **मूलेऽधिकाराभावात्** । कर्तव्यतानिश्चयाभावात् । मूले **नाङ्गेऽधिकारो** नाङ्गानुष्ठानमित्यर्थः । अन्यथा कर्त्तव्यतानिश्चयस्याधिकारत्वे तन्निश्चयस्य प्रवर्त्तकत्वापत्तेः । न च पूर्वोक्तनिमित्तरूपाधिकाराभावोपसंहारोऽयम्, युक्तमननुष्ठानमित्यादिनैव तदुपसंहारादिति । **पूर्वदिनस्येति** मूलम् । यद्यपि यत्किञ्चिदङ्गहानेरुभयत्र साम्ये साक्षादङ्गदेवतावाहनबाधापेक्षयाऽङ्गाङ्गपूर्वदिनबाधस्यौचित्याद्देवतावाहनमर्हत्येव तथाऽप्यधिकृतस्य किञ्चिदङ्गहानावपि कर्मनिर्वाहः कालहानौ तु नाधिकृतत्वमस्ति कालस्याधिकारिविशेषणत्वादित्यवधेयम् ।

**अधिकार** इति मूलम् । अनुष्ठातेत्यर्थः ।

माथुरी

ननु तथाप्युत्तरदिने स्फ्याश्लेषेज्याकर्त्तव्यतानिश्चये जाते देवतावाहनकरणसम्भवात् तदपि देवतावाहनं फलजनकं स्यादित्यत आह **स्फ्याश्लेष** इति, **निश्चयेऽपीति** सतीति शेषः । **नावाहनं** नोत्तरदिनकृतमावाहनम्, फलजनकमिति शेषः । **अङ्गस्य** तज्जनिताङ्गापूर्वजनकस्य, **आवाहनबाध एव** आवाहनस्य सफलत्वबाध एव ।

ननु पूर्वदिने देवतावाहनाकारणे स्फ्याश्लेषेज्यातः फलं फलसिद्धिः ? अङ्गहानेर्न भवत्येव फलमिति चेत्, न ; सकलवैदिकमीमांसकैः पूर्वदिने तदकृत्वापि तद्यागानुष्ठानात् । न चात एव न तत्र तस्याङ्गत्वमिति वाच्यम्, प्रकृतिवद्विकृतिरिति न्यायेन तदङ्गत्वस्यावश्यकत्वात्, न्यायलब्धसहकारित्वस्यापि मीमांसकैर्विधौ भानाभ्युपगमात् । न च नित्यवन्नैमित्तिकेऽपि किञ्चिदङ्गहानावपि फलसिद्धिरिति वाच्यम्, तर्हि पूर्वदिनस्याङ्गस्य बाधेऽप्युत्तरदिने देवतावाहनापत्तेः, किञ्चिदङ्गहानावपि कर्मनिष्पत्त्यभ्युपगमे तत एव यागनिष्पत्तिसम्भवेन प्रयत्नगौरवादङ्गाननुष्ठानापत्तेश्चेति, मैवम्; स्फ्याश्लेषसंशयस्थले तस्यानङ्गत्वात् प्रकृतिवद्विकृतिरिति न्यायेनाङ्गत्वे कल्प्यमाने यत्र न बाधकं तत्रैव कल्पनात् । अत्र त्वधिकाराभावस्यैव बाधकत्वात् । यत्र त्वाप्तवाक्यादिना स्फ्याश्लेषनिश्चयस्तत्र पूर्वदिने तत्कर्त्तव्यमेवान्यथाङ्गबाधात् । अत एवैकादशाहक्रियमाणेऽधिवासाङ्ग-

**कर्त्तव्यतानिश्चयोऽस्त्येवेति द्वारसन्देहेऽपि युक्तमनुष्ठानम् । भविष्यद्विवाहादावाभ्युदयिकेऽपि तज्ज्ञानवानाधिकारी तथैवाचारात् । नन्वङ्गानां प्रधानविधिविधेयत्वम्, न च ग्रन्थादिसमाप्तौ प्रधानविधिरस्ति । न च तत्कर्त्तव्यता-**

आलोकः

अङ्गानां वैदिकाङ्गानाम् । प्रधानविधिविधेयत्वम् **प्रधानविधिसापेक्षविधिविधेयत्वम् ।**

दर्पणः

ननु च इष्टौ देवतावाहनमङ्गमित्यत्र यथेष्टिपदं स्फ्याश्लिष्टेज्यातिरिक्तपरं तथा पूर्वदिने देवतावाहनमित्यत्र देवतावाहनपदं स्फ्याश्लिष्टेज्यादेवतावाहनातिरिक्तपरमस्तु—मैवम् । प्रथमे लाघवादिति व्यापकाभावेनाङ्गत्वबाधार्थम् ।

**नन्विति** मूलम् । तत्र च प्रधानविधिविधेयत्वं लौकिकाङ्गेषु नास्तीत्यत आह—**वैदिकेति** ।

**प्रधानेति** मूलमयुक्तम् । न हि प्रधानविधिरेवाङ्गं विधत्ते इत्याशङ्क्य **तस्य** शास्त्रस्य **निरपेक्षत्वादिति** मूलानुसारेण सापेक्षपदसहितं साध्यं व्याचष्टे—**प्रधानेति** ।

माथुरी

गोयागविकृतीभूते वृषोत्सर्गेऽधिवासो नाङ्गम्, कार्त्तिक्यादिक्रियमाणे त्वङ्गमेव । एवमशौचमध्यक्रियमाणे कर्मणि सन्ध्याया नाङ्गत्वम्, तदतिरिक्तस्थले त्वङ्गत्वमेव । प्रकृतिविकृतिन्यायेनाङ्गत्वे कल्प्यमाने अत्राशौचादि बाधकान्तरं वा न वर्त्तते तत्रैवाङ्गत्वस्य कल्पनादिति दिक् ।

प्रकृतेऽनुष्ठानमुपपादयति **मङ्गले त्विति, विघ्नज्ञानवानिति** विघ्नज्ञानमात्रं कारणमित्यर्थः । न चैवं द्वाराभावनिश्चयत्वेन प्रतिबन्धकत्वे गौरवम्, लाघवात् [1]तज्ज्ञानत्वेनैव प्रतिबन्धकत्वस्यैवोचितत्वादिति वाच्यम्, आचारानुमितश्रुत्या विघ्नज्ञानमात्रस्य कारणत्वे बोधिते प्रामाणिकगौरवस्यादोषत्वादिति भावः ।

ननु 'नैमित्तिके निमित्तनिश्चयवानधिकारी'त्युक्तं तत्कथं विवाहादिनिमित्तसंशयेऽपि नैमित्तिकश्राद्धानुष्ठानम्? इत्यत आह **भविष्यदिति** । तत्राचार- बलाद् निमित्तज्ञानमात्रमेवाधिकार इत्यर्थः । **नैमित्तिके निमित्तनिश्चयवानधिकारीति** नियमो वृषोत्सर्गादाविति भावः । न च विवाहो न निमित्तम्, किन्तु सीमन्तोन्नयनादिवद्विवाहे श्राद्धमङ्गमेव, तथा च तत्सन्देहेऽपि तत्र प्रवृत्तौ न किञ्चिद् बाधकमिति कथं **भविष्यदिति** ग्रन्थोत्थितिः इति वाच्यम्, नूतनगृहप्रवेशादौ लौकिकविवाहादौ च वृद्धिश्राद्धं नाङ्गम् ।

१. द्वाराभावज्ञानत्वेनैवेत्यर्थः ।

**बोधकस्य लौकिकप्रमाणस्य शास्त्रमेकदेशो युज्यते, तस्य तन्निरपेक्षत्वादिति चेत्, न; अपूर्वजनकाङ्गानां तथात्वाद्, आचारानुमितश्रुत्या प्रधानविधि**

आलोकः

ननु प्रधानबोधकसापेक्षविधिविधेयत्वे नियमो लाघवात् न तु प्रधानबोधकस्य विधित्वमित्यह आह—न चेति। एतदपि नास्तीत्यर्थः। एकदेशः सापेक्षः।

दर्पणः

केचित्तु प्रधानकर्तव्यताबोधकविध्यपेक्षीयविधिबोध्यकर्त्तव्यताकत्वं प्रधानकर्त्तव्यताबोधकविध्येकवाक्यतापन्नविधिबोध्यकर्त्तव्यताकत्वं वा मूलार्थ इत्याहुः[1]। तत्र प्रथमे एकदेशः अपेक्ष्यः। तस्य लौकिकप्रमाणस्य कर्त्तव्यताबोधने शास्त्रनिरपेक्षत्वात्। द्वितीये एकदेशः एकवाक्यतापन्नः। तस्य शास्त्रस्य तन्निराकाङ्क्षत्वादिति वाच्यम्। मङ्गलं प्रधानबोधकविधिसापेक्षविधिबोध्यकर्त्तव्यताकं वैदिकाङ्गत्वादित्यस्मिन्ननुमाने अपूर्वेत्यादिनाऽप्रयोजकत्वमुपाधिर्वा आचारेत्यादिना च बाधो मूले विवक्षितः।

माथुरी

इष्टे पुंसवने चैव सीमन्तोन्नयने तथा।
एतेष्वेव प्रधानेषु श्राद्धकर्माङ्गमिष्यते॥

इति वचनान्नैमित्तिकमेवेत्यभिप्रायात्।

अन्ये तु ननु इज्याकर्त्तव्यतानिश्चयाभावात् पूर्वदिने तदङ्गानुष्ठानमित्ययुक्तम्, विवाहसन्देहेऽपि तदङ्गाभ्युदयिकाचरणादित्यत आह **भविष्यदितीत्याहुः**। मङ्गले व्यापकाभावात् प्रारब्धकर्मीयवैदिकाङ्गत्वासम्भवमाशङ्कते **नन्विति, अङ्गानां** तदीयवैदिमाङ्गानाम्। तदीयवैदिकाङ्गत्वञ्च प्राङ्निरुक्तमेव[1], यथाश्रुते लौकिकाङ्गे[2] व्यभिचारापत्तेः, यागदेरपि शरीरात्मादेः यत्नादेश्च सहकारितारूपाङ्गत्वाश्रयतया तत्रापि व्यभिचारापत्तेश्च। **ग्रन्थादिसमाप्तौ** ग्रन्थादिसमाप्तिस्थले, **प्रधाने विधिरस्ति प्रधाने**—मङ्गलविधिप्रकारीभूतमङ्गलनिष्ठस्वसहकारिताके प्रारब्धकर्मणि[3], **विधिरस्ति,** तथा च तत्कर्त्तव्यताबोधकविधिसाकाङ्क्षविधिबोधितत्वस्य तदीयवैदिकाङ्गत्वव्यापकतया व्यापकाभावान्मङ्गले प्रारब्धकर्मवैदिकाङ्गत्वासम्भव इति भावः।

ननु प्राथमिकं विधित्वमतन्त्रम्, गौरवात्। किन्तु तद्बोधकप्रमाणसाकाङ्क्षविधिविधेयत्वमेव तदीयवैदिकाङ्गत्वव्यापकं लाघवात्। तच्चानुमानादिलौकिकप्रमाणादावपि सम्भवत्येवेत्यत आह **न चेति** न वेत्यर्थः। **शास्त्रम्** मङ्गलबोधक-

१. प्रधानफलातिरिक्तफलाजनकत्वे सति प्रधानजनकव्यापारजनकत्वेन वेदबोधितत्वरूपम्।
२. नैमित्तिकाङ्गे इति क०।
३. प्रधानकर्मणीति क०।

**विनापि तदङ्गत्वविधानाच्च ।**

**अपि च प्रधानकर्त्तव्यताबोधकबोध्यकर्तव्यताकत्वं प्रयोजकम्, तच्चेहाप्यस्ति; प्रतिबन्धकाभावस्य सकलकार्यहेतुत्वेन लौकिकप्रमाणस्यापि तत्सापेक्षत्वात् ।**

आलोकः

**ननूक्तलाघवेनाग्रेऽपि विधित्वं त्यज्यतामित्याह**—प्रधानेति ।

**ग्रन्थादिसमाप्ताविति** मूलम् । समाप्तिस्थल इत्यर्थः ।

दर्पणः

**तदङ्गत्वविधानादिति** मूलम् । लाघवसहकारेणाङ्गत्वपर्यवसानादिति भावः । समाप्त्यर्थं वाक्यरचनादिव्यापारः कर्त्तव्य इति लौकिकं प्रमाणं प्रतिबन्धके सति कथं समाप्तिः स्यादित्याकाङ्क्षामुत्थापयति । ततश्च प्रतिबन्धकाभावसम्पादकोऽपि व्यापारः कर्त्तव्य इति मङ्गलविषयं प्रमाणं प्रवर्त्तमानं भवतीति तत्सापेक्षमित्याह—मूले **प्रतिबन्धकेति** ।

माथुरी

वेदः, **एकदेशः** साकाङ्क्षः, **तस्य** लौकिकप्रमाणस्य, **निरपेक्षत्वादिति** आकाङ्क्षायाः शब्दमात्रधर्मतया आकाङ्क्षाया अनिरूपकत्वादित्यर्थः । तथा चैतदपि मङ्गले नास्तीति भावः । **अपूर्वजनकाङ्गानाम्** अपूर्वद्वारा तदीयवैदिकाङ्गानाम्, **तथात्वात्** तद्विधिविधेयत्वनियमात्,[1] तथा चोक्तनियमोऽप्रयोजक इति भावः ।

केचित्तु तथा चापूर्वद्वारकत्वम्[2] उपाधिरिति भाव इत्याहुः; तदसत्, योगाङ्गप्राणायामादौ भेषजपानाङ्गभेषजाभिमन्त्रणादौ च साध्याव्यापकत्वात् तेषां पापनाशादिद्वारैवाङ्गत्वात् ।

व्यभिचारमप्याह **आचारेति** । **प्रधानविधिं विनापि** प्रारब्धकर्मविधिं विनापि, **तदङ्गत्वविधानाच्च** तथाविधाचारानुमितश्रुत्या मङ्गलस्य प्रारब्धकर्मजन्यसमाप्तिजनकत्वप्रकारेण बोधनाच्च । तथा च साध्याभाववतो मङ्गलस्यैव निश्चितहेतुमत्त्वात् तत्रैव व्यभिचार इति भावः । यथा च मङ्गलविधेः प्रारब्धकर्मजन्यसमाप्तिजनकत्वप्रकारेण बोधजनकत्वं तथोपपादितमधस्तात् ।

उभयत्रैव विधित्वमतन्त्रं गौरवादित्याशयेनाह **अपि चेति** । **प्रधानेति** प्रधानकर्त्तव्यताबोधकापेक्षणीयबोध्यकर्तव्यताकत्वमित्यर्थः । **प्रयोजकम्** वैदिकाङ्गत्वव्यापकम् । **इहापि** मङ्गलेऽपि, **प्रतिबन्धकाभावस्य** मङ्गलजन्यविघ्नध्वंसस्य, **सकलकार्यहेतुत्वेन** सकलप्रारब्धकर्मजन्यसमाप्तिहेतुत्वेन, **लौकिकप्रमाणस्यापि** प्रारब्धकर्म-

१. प्रधानविधिविधेयत्वनियमादित्यर्थः ।

२. अपूर्वजनकत्वमिति ख०, ग० च ।

**ननु यागादिवत् प्रधानदेशकालान्वयस्तदङ्गे मङ्गले स्यादिति चेत्, न; असाधारणेऽपूर्वजनके चाङ्गे तदन्वयात् ।**

दर्पणः

मूले **लौकिकेति** । लौकिकाङ्गत्वाल्लौकिकत्वं मङ्गले मङ्गलगोचरोक्तप्रमाणस्येत्यर्थः । व्याख्यानान्तरे तु लौकिकप्रमाणस्य वाक्यरचनादिगोचरस्य प्रवृत्तौ जन्यायां प्रतिबन्धकाभावसम्पादकगोचरप्रमाणसापेक्षत्वादिति व्याख्येयम् । **यागादिवदिति** पाठे

माथुरी

कर्त्तव्यताबोधकलौकिकप्रमाणस्यापि, **तत्सापेक्षत्वात्** मङ्गलकर्त्तव्यताबोधकसापेक्षत्वात् । एतच्चापाततोऽपेक्षाया दुर्वचत्वात् ।

ननु तद्देशकालसहकारेणैव व्यापारजनकत्वस्य तदीयवैदिकाङ्गत्वव्यापकतया मङ्गलस्य प्रारब्धकर्मवैदिकाङ्गत्वे[1] तद्देशकालसहकारेणैव विघ्नध्वंसजनकत्वं स्यात्, न चेष्टापत्तिः, देशान्तरे कालान्तरेऽपि शिष्टैर्मङ्गलाचरणादित्याशङ्कते **यागादिवदिति** अङ्गयागादिवदित्यर्थः । **प्रधानदेशकालान्वयः** प्रारब्धकर्मदेशकालसहकारेणैव व्यापारजनकत्वम्, **तदङ्गे** तदीयवैदिकाङ्गे । क्वचित्तु वतिशून्यः पाठः, तत्र यागादि यत्प्रधानं तद्देशकालान्वयो यागाद्यङ्गे स्यादित्यर्थः ।

यद्यपि स्थूलदेशकालावादाय मङ्गलस्यापि तदुभयान्वयसम्भवः, सूक्ष्मदेशकालावादाय प्रयाजादेरप्यसम्भवः, तथापि प्रधानकर्त्तव्यताबोधकप्रमाणेन यादृशापराह्णादिकाले दक्षिणाप्लवनादिदेशे प्रधानानुष्ठानं बोधितम्, तदीयवैदिकाङ्गानां तथाविधदेशकालसहकारेणैव व्यापारजनकत्वनियम इत्यर्थः । लौकिकस्य प्रधानत्वे तु देशकालनियमः केनापि न बोधित इति भावः ।

**असाधारण इति** । **अङ्गे** वैदिकाङ्गे, **तदन्वयात्** प्रधानदेशकालसहकारेणैव व्यापारजनकत्वनियमात् । अत्रापूर्वजनकाङ्गत्वमात्रं शिखाबन्धने व्यभिचारीति तद्वारणाय **असाधारणेति**, असाधारणत्वञ्च न यावद्वैधकर्माङ्गान्यत्वम्[2], शिखाबन्धनस्यापि वामागमबोधिताद्यनङ्गत्वेन तथात्वात्; किन्तु [3]वैधफलजनकतावच्छेदकद्वयावच्छिन्नस्यानङ्गत्वम् । न च शिखाबन्धनं तथा, बहुतरकर्माङ्गत्वात् । दक्षिणागमबोधितयावत्कर्मानङ्गत्वं वा तत् । शिखाङ्गकयावत्कर्माङ्गान्यत्वं तदिति केचित् । असाधारणत्वमात्रं पापक्षयद्वारा यागाङ्गभूते आसनप्राणायामादौ व्यभिचारीति तद्वारणाय **अपूर्वजनकेति** । अपूर्वजनकाङ्गत्वञ्च

१. प्रारब्धकर्माङ्गकत्वे इति क० ।

२. यावतां वैधकर्मणां यदङ्गं तदन्येषामित्यर्थः ।

३. वैधेति फलाद्यवच्छिन्नान्तस्य विशेषणम् ।

दर्पणः

वैदिकप्रधानकर्माङ्गभूते मङ्गले वैदिकप्रधानदेशकालान्वयः स्यादित्यर्थो वाच्यः, लौकिककर्माङ्गे उक्तनियमाभावात्। तत्र च प्रधानपदस्य वैदिकत्वविशेषणपरत्वे याग-पदस्याङ्गपरत्वे च गौरवाद् वतिरहितं प्रधानीभूते यागे प्रधानदेशकालान्वयित्वाभावा-दिति भावः। तस्मादङ्गपरत्वमेव पाठं विनिश्चित्याह--**यागादिवदिति**। मूलकृता **असाधारण** इत्यादिना प्रधानदेशकालान्वयित्वे प्रयोजकान्तरं दर्शयता वैदिकाङ्गत्वं तत्राप्रयोजकमित्युक्तम्। समव्याप्तोपाध्यभिधानमेतदित्यन्ये।

माथुरी

अपूर्वद्वाराङ्गत्वम्, अन्यथा समाप्तिकामनया दिनान्तरक्रियमाणे शिवपूजादिरूप-मङ्गले[1] आनुषङ्गिकादृष्टजनके व्यभिचारापत्तेः। न च पूर्वदिनविहिताधिवासाश्व-मेधाङ्गभूताश्वरक्षण-लक्ष्मीपूजाङ्गचतुष्पथदीपदानादौ[2] व्यभिचार इति वाच्यम्, विशेषविधिं विनेति विशेषणात्।

ननु केशस्य त्रिवृतसंयोगविशेषः शिखा, तद्बन्धनञ्च तदनुकूलक्रिया, सा च नाङ्गम्, किन्तु **शिखैव**, **विशिख** इति श्रवणात्, तस्याश्च नापूर्वद्वाराङ्गत्वम्, स्थिरत्वे परमापूर्वकालपर्यन्तस्थायित्वात्। तथा च किमसाधारणत्वविशेषणेन ? अपूर्वजनकत्व-दानेनैव वारणात्। न च शौचादिहेतुमृद्ग्रहणादौ व्यभिचारवारणाय तदिति वाच्यम्, तस्याप्यपूर्वाजनकत्वाद्, [3]अशुद्ध्यात्मकवैधकर्मप्रतिबन्धकादृष्टध्वंसरूपत्वात् शौचपदार्थस्येति। मैवम्; शिखामात्रं हि नाङ्गम्, किन्तु मन्त्रविशेषविशिष्टैव, अन्यथा मन्त्रोपदेशवैयर्थ्याद्, विशिष्टा च न परमापूर्वपर्यन्तस्थायिनी, मन्त्रस्यास्थिरत्वात्; अतोऽदृष्टं द्वारमावश्यकम्।

न च विशिष्टस्य तावत्कालानवस्थायित्वेऽपि न क्षतिः, कारणतावच्छेदकपूर्व-सत्त्वस्यानपेक्षितत्वादिति वाच्यम्, [4]तत्पूर्वसत्त्वमप्यपेक्षितमित्यन्यत्र[5] व्यवस्थापितत्वाद्, [6]अन्यथा व्यभिचारात्। [7]मास्तु वा कारणतावच्छेदकपूर्वसत्त्वमपेक्षितम्, तथापि

१. शिवनमस्कारादिरूपमङ्गले इति ख०, ग० च।
२. अश्वरक्षणादाविति ख०, ग० च।
३. अशुद्ध्यात्मकप्रतिबन्धकाधर्मध्वंसरूपत्वादिति क०।
४. कारणतावच्छेदकस्य पूर्वसत्त्वमित्यर्थः।
५. श्रोत्रस्य श्रावणहेतुत्वोपपादनस्थल इत्यर्थः।
६. कारणतावच्छेदकस्य पूर्वसत्त्वानपेक्षणे श्रोत्रगतायाः श्रावणकारणताया अवच्छेदिकायाः कर्णशष्कुल्या असत्त्वदशायां तदवच्छिन्नाकाशात्मनः श्रोत्रस्य सत्त्वेऽपि श्रावणानुत्पत्त्या अन्वयव्यभिचार इति भावः।
७. श्रोत्रस्य कर्णशष्कुलीविशिष्टाकाशत्वेन न कारणता, तादृशाकाशत्वेनाकाशविशिष्टकर्ण-शष्कुलीत्वेन वा कारणतेत्यत्र विनिगमकाभावेन गुरुतरकार्यकारणभावद्वयापेक्षया आकाशकर्णशष्कुल्योर्द्वयोरेव कारणतया कर्णशष्कुल्याः कारणतानवच्छेदकत्वेनोक्तरीत्या कारणतावच्छेदकस्य पूर्वसत्तायाः समर्थयितुमशक्यत्वादित्याशयः।

**अत एव बद्धशिखत्वादौ न प्रधानदेशकालान्वयः। न च दुरिताभावे स्वतः सिद्धे साङ्गमङ्गलानुष्ठानं निष्फलमिति तद्वेदाप्रामाण्यम्।**

आलोकः

यागादीति। **यागादि यत् प्रधानं तस्य विशेषविधिं विनेति पूरणीयम्। अतो देवतावाहनादौ नानेकान्तः।**

दर्पणः

**अत एवेति मूलम्।** असाधारणत्वरूपविशेषणादेवेत्यर्थः। **व्यापारकल्पनायोगादिति।** तथा च हेतोरभावान्न व्यभिचार इति भावः। इदमुपलक्षणम्। साध्य-

माथुरी

मन्त्रपूर्वकशिखाबन्धनानन्तरं जुटिकाबन्धनादिकाले कराभिघातादिना मन्त्रपूर्वकसंयोगविशेषात्मकशिखानाशेऽपि कर्मणोऽङ्गवैगुण्यवारणायादृष्टं द्वारमावश्यकम्। न चादृष्टस्य द्वारत्वेऽदृष्टोत्पत्त्यनन्तरं शिखामोक्षणेऽपि कर्म साङ्गं स्यादिति वाच्यम्; मोक्षणस्य स्वप्रतियोगिजन्यत्वसम्बन्धेनादृष्टनाशकत्वात्। मोक्षणञ्च न मन्त्रपूर्वकतत्संयोगविशेषध्वंसमात्रम्, तथा सति जुटिकाबन्धनादिकाले कराभिघातादिना तादृशसंयोगविशेषनाशेऽदृष्टनाशात् कर्मणो निष्फलत्वापत्तितादवस्थ्यम्[1], किन्तु ता[2]दृशसंयोगविशेषसामग्र्यसमवहितोत्पत्तिकमन्त्रपूर्वकतत्संयोगविशेषनाश एव मोक्षणमिति भावः।

[3]त्वन्तानुयायिनस्तु निरुक्तमोक्षणं न तददृष्टनाशकम्, किन्त्वङ्गापूर्ववत् स्वजन्यपरमापूर्वान्तरमेव तददृष्टनाशकम्, मोक्षणेऽपि कर्म साङ्गं भवत्येव, किन्तु **सदोपवीतिना भाव्यं सदा बद्धशिखेन तु** इत्यनेन सार्वकालिकशिखाधारणस्यापि विहिततया [4]तदकरणात् पुरुषस्य प्रत्यवायमात्रम्। न च स्वजन्यपरमापूर्वस्य तदपूर्वनाशकत्वे यत्रैकयैव शिखया नानाकर्मानुष्ठानम्, तत्र प्रथमकर्मजन्यपरमापूर्वेणैव तज्जन्यापूर्वनाशाद् द्वितीयादिकर्मणोऽङ्गवैगुण्यापत्तिरिति वाच्यम्, प्रथमकर्मजन्यपरमापूर्वेण तदपूर्वनाशेऽप्यवस्थितशिखया पुनरपूर्वान्तरजननात्। न च मन्त्रपूर्वकशिखाया उत्पत्तिसम्बन्धेनैवापूर्वजनकत्वम्, अन्यथा धारावाहिकापूर्वोत्पत्तिप्रसङ्गादिति कथमवस्थितशिखयाऽपूर्वान्तरोत्पत्तिरिति वाच्यम्, शिखाजन्याङ्गापूर्वं प्रति शिखाजन्याङ्गापूर्वस्य प्रतिबन्धकत्वादेव धारावाहिकापूर्वानुत्पत्तेः, क्रमिक-

---

१. कर्मणोऽङ्गवैगुण्यतादवस्थ्यादिति ख०, ग० च।

२. तादृशेत्याद्युत्पत्तिकान्तं नाशस्य विशेषणम्। तदुपादानेन जुटिकाबन्धनस्थलीयस्य कराभिघातादिजस्य शिखानाशस्य न मोक्षणत्वम्, तस्य जुटिकात्मकतादृशसंयोगविशेषसामग्र्या समवहितत्वात्।

३. त्वन्तं 'किन्तु' इति, तदनुयायिनः तेनोक्तस्य शिखामात्रं नाङ्गम्, किन्तु 'मन्त्रविशिष्टैव शिखा' इति मतस्यानुयायिन इत्यर्थः।

४. शिखाधारणस्याकरणादित्यर्थः।

**लोकावगतकारणे हि दुरिते सति वेदेन तस्य तद्ध्वंसजनकत्वं बोध्यते; न तु तदुल्लङ्घ्य । अत एव तत्त्वज्ञानवतो भोगार्थं निषिद्धानुष्ठानं**

आलोकः

असाधारण इति । अत्र बहवः । **प्रत्येकनियमपक्षः साधुः । विशिष्टे व्यर्थविशेषणत्वात् । न चापूर्वजनकत्वमात्रं शिखाबन्धने व्यभिचारीति वाच्यम्, 'विशिख' इति श्रवणेन 'सदेति' श्रवणेन**[2] **च शिखाया एवाङ्गत्वप्रतीत्या तस्याश्च प्रधानापूर्वोत्पत्तिकालस्थायितया व्यापारकल्पनायोगात् । न च प्रत्येकनियमे मङ्गलस्यासाधारणतया देशकालान्वयापत्तिः । तस्य क्रियामात्राङ्गत्वादिति व्याचक्षते ।**

दर्पणः

सत्त्वादपि न व्यभिचार इत्यपि द्रष्टव्यम् ।

ग्रन्थविरोधमपि दर्शयति—**ततो हीति** ।

माथुरी

शिखाद्वयस्थले द्वितीयशिखयाऽपूर्वाजननेऽपि क्षतिविरहात् प्राथमिकशिखाजन्यापूर्वत एव कर्मसाङ्गतोपपत्तेरित्याहुः ।

**बद्धशिखत्वादाविति** शिखाबन्धनादावित्यर्थः । यद्वा बद्धशिखादावित्यर्थः, तेन बन्धनस्यानङ्गत्वेऽपि न क्षतिः । **न प्रधानदेशकालान्वयः** न प्रधानदेशकालसहकारेणैवाङ्गापूर्वजनकत्वनियमः । **न चेति, स्वतः सिद्धे** दुरितकारणाभावप्रयुक्ते, **निष्फलं** विघ्नध्वंसानुपधायकम्, ध्वंसं प्रति प्रतियोगिनोऽपि हेतुत्वादिति भावः । **तद्वेदाप्रामाण्यमिति** विशेषणीभूतविघ्नध्वंसं प्रत्यपि जनकताबोधकस्य **निर्विघ्नसमाप्तिकामो मङ्गलमाचरेद्** इति विशिष्टसमाप्तिकारणताबोधकवेदस्याप्रामाण्यमित्यर्थः ।

यद्यपि फलोपधायकत्वं न विध्यर्थः, किन्तु स्वरूपयोग्यत्वम्, तस्य च सहकारिविरहेण क्वचित् फलानुपधानेऽपि सम्भवात् कुतोऽप्रामाण्यम्? तथापि साङ्गवैदिककर्मत्वव्यापकं फलोपधानम् । अतस्तदभावेन साङ्गे तस्मिन् साङ्गवेदबोधितकर्मत्वाभावः सिध्यन् तद्बोधकविधेर्वेदत्वा[2]भावमादाय सिध्यति, वेदत्वाभावश्च सिध्यन् शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थके तस्मिन् प्रमाणत्वाभावमादायैव पर्यवस्यतीति क्रमेणाप्रामाण्यं स्यादिति भावः ।

---

१. सम्प्रदायविद इति ख० ।
२. वेदत्वं च नाम शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकप्रमाणशब्दत्वम् ।

दोषाभावान्नाधर्मजनकमिति न तद्वेदाप्रामाण्यम् । प्रमाणान्तरात् स्वतः सिद्धदुरिताभावावगतौ मङ्गलाकरणे नित्यवदनुष्ठानं शिष्टानां भज्येतेति चेत्, न; विघ्नज्ञानवतो नित्यवदनुष्ठानादिति सम्प्रदायः[1] । नैवम् मङ्गलं विनापि प्रमत्तानुष्ठितसमाप्तेः ।

आलोकः

तत्—न, अत एवेत्यग्रिमग्रन्थविरोधात् । ततो हि शिखायाः कालानन्वयः प्रतीयते । शिखायाश्चाङ्गत्वे तत्र कालान्वयनियमात् । तस्मात् शिखाबन्धनं मन्त्रविशेषविशिष्टा शिखा वाऽङ्गम् । तच्चास्थिरतयाऽपूर्वजनकं कालानन्वयि चेति युक्तो विशिष्टनियमः । न चासाधारण इत्येवास्तु, शौचादिहेतुमृद्ग्रहणादौ अनैकान्तिकत्वात् ।

माथुरी

लोकावगतकारणे हीति । हि यस्मात्, लोकावगतकारणे दुरिते सतीति योजना, वेदेन वेदसहकृतप्रामाणान्तरेण, वेदस्य फलोपधायकत्वाबोधकत्वाद् यथाश्रुतासङ्गतेः । तस्य मङ्गलस्य, तद्ध्वंसजनकत्वं दुरितध्वंसोपधायकत्वम्, न तु तदुल्लङ्घ्य न लोकावगतकारणदुरितं विना । तथा च दुरितध्वंसजनने दुरितस्याप्यङ्गतया साङ्गत्वाभावादेव तत्र विशिष्टाभावसिद्धिः, न तु वेदस्य प्रामाण्याभावादिति भावः । एतदेव दृष्टान्तेन द्रढयति अत एवेति । निषिद्धानुष्ठानम् इत्युपलक्षणम् । विहितानुष्ठानमपि न धर्मजनकमित्यपि बोध्यम् । मङ्गलाकरण इति, निष्फलत्वादिति[2] भावः । विघ्नज्ञानवत इति, तथा च सर्वेषां शिष्टानां नित्यवदनुष्ठानमेवासिद्धमिति भावः । सम्प्रदायः मीमांसकसम्प्रदायः ।

इह खलु 'सकलशिष्टैकवाक्यतया' इत्यारभ्य सम्प्रदायमतम्[3], तद् दूषयति नैवमिति । मङ्गलव्यापारीभूतस्य तज्जन्यविघ्नध्वंसस्य स्वोत्पत्त्यवच्छेदकजातीयतासम्बन्धेन फलीभूतसमाप्तिकर्तृशरीरनिष्ठतया समाप्तिकारणत्वम्, उत आश्रयतासम्बन्धेन तादृशात्मनिष्ठतया[4] वा ? आद्ये व्यभिचारमाह मङ्गलं विनापीत्यादिना । मङ्गलं विनापि ऐहिकमङ्गलं विनापि, प्रमत्तानुष्ठितेति, प्रमत्तनास्तिकशरीरे कर्तृता-

---

१. सम्प्रदायविद इति ख० ।

२. कष्टैकफलत्वादितीति ग० ।

३. सम्प्रदायविदां मतमिति ख० ।

४. फलीभूतसमाप्तिकर्तृनिष्ठतयेत्यर्थः ।

न च तेन विनापि सिद्धतस्तदङ्गम् । न च जन्मान्तरीयं तत्, जन्मान्तरीयग्रन्थादिकमुद्दिश्य शिष्टैस्तदकरणात् ।

आलोकः

न हि तस्य साधारणत्वं वामागमादावनन्वयात् । नापि अपूर्वजनकत्वं प्रतिबन्धकाधर्मध्वंसरूपत्वाच्छुद्धिपदार्थस्य । अपूर्वजनकत्वञ्चापूर्वद्वाराङ्गत्वमिति यावत् ।

वस्तुतो योगाङ्गभूतासनप्राणायामादौ रोगपातकनाशकाङ्गऽसाधारणत्वमात्रं व्यभिचारीति विशिष्टनियमः ।

सदेतिवचनात् सर्वकालीनशिखाधारणं प्रधानं शिखाबन्धनं कर्माङ्गमिति विभागोऽन्यथा शिखाया एव द्वैरूप्यानुपपत्तेः । फलान्तरसत्त्वासत्त्वयोः प्रधानाङ्गभावप्रयोजकयोरेकत्रासम्भवादित्यन्ये । तस्माद्व्यभिचारान्न तदङ्गमिति ।

ननु न व्यभिचारः, समाप्तिमात्रे तथात्वेऽपि विघ्नस्थलीयसमाप्त्यवच्छेदेनाव्यभिचारात् ।

दर्पणः

**नाप्यपूर्वजनकत्वमि**ति । शौचादिना शुद्धिरेवोत्पाद्यते न त्वपूर्वं जन्यते । तथा च तत्र न व्यभिचार इति भावः । ननु गङ्गाजलाचमनेन शुद्धिं जनयताऽप्यानुषङ्गिकमदृष्टं जन्यत एवेति तत्र व्यभिचारादाह—**अपूर्वजनकत्वञ्चे**ति ।

नन्वेवं शिखाबन्धने व्यभिचारतादवस्थ्यम् । तस्यापि **वामागमा**नन्वयिनोऽसाधारण्यादिति किञ्चिद्वैदिककर्मानन्वयित्वमसाधारण्यं वाच्यम् । तच्च मृद्ग्रहणादावपि नास्तीत्यपूर्वजनकत्वपदं व्यर्थमित्यस्वरसादाह—**वस्तुत** इति ।

प्रसङ्गादेकदेशिमतमाह—**सदे**ति । अत्रान्य इत्यस्वरसोद्भावनम् । तद्बीजन्तु खादिरतादेरिव एकस्यपि पुरुषार्थत्वक्रत्वर्थत्वसम्भवः । फलान्तरसत्त्वासत्त्वे हि तत्र न

माथुरी

सम्बन्धेन समाप्त्युत्पत्तेरित्यर्थः । तथा चैहिकमङ्गलाभावेन समाप्तिकर्त्तरि तच्छरीरे वा विघ्नध्वंसस्योत्पत्तेरवश्यम्भावात् स्वोत्पत्त्यवच्छेदकजातीयत्वसम्बन्धेन विघ्नध्वंसो व्यभिचारीति भावः ।

ननु जन्मान्तरीयशरीरकृतमङ्गलादेव प्रमत्तादिशरीरे विघ्नध्वंशोत्पत्तिरित्यतो न व्यभिचार इत्यत आह **न चे**ति **तेन विनापि** अव्यवहितपूर्वक्षणे तेन विनापि, **सिद्धतः** उत्पद्यमानस्य, 'तदङ्गम् तत्कारणम्, तथा च जन्मान्तरकृतमङ्गलान्नास्तिकशरीरे विघ्नध्वंसोत्पादे विघ्नध्वंसं प्रति मङ्गलं कारणमेव न स्याद्, अव्यवहितपूर्ववर्तित्वस्य कारणताशरीरत्वादिति भावः । अन्त्यमभिप्रेत्य शङ्कते **नचेति** : जन्मान्त**रीयमि**'ति जन्मान्तरीयमङ्गलाज्जन्मान्तरोत्पन्नं विघ्नध्वंसवत्त्वमित्यर्थः । तत्

ननु यथा पुत्रेष्टौ कर्मसाद्गुण्ये ऐहिकफलाभावे आमुष्मिकं फलम्, तथा साङ्गेऽपि मङ्गले यत्र न फलं तत्रामुष्मिकफलमिति चेत्, न; तत्र पुत्रमात्रस्य कामनाश्रवणात् । इह तु प्रारिप्सितसमाप्तिकामनया मङ्गलाचार इति, तथैव वेदानुमानात् कारीरीवदासन्नसमयारब्धसमाप्तिः फलम् ।

आलोकः

सति विघ्ने तस्याङ्गत्वादिति ग्रन्थपर्यालोचनया तथा विशेषलाभात् । न च समाप्त्या जन्मान्तरीयतदनुमानमितिग्रन्थविरोधः । विघ्नध्वंसपूर्वकत्वविशेषण-निश्चयस्यापि कचिद् भावात् । न चेदं समाप्यतामिति कामनया सदाचारात्तदनुमापिता श्रुतिः 'समाप्तिकामो मङ्गलमाचरे'दित्याकारिकैवेति । ततः समाप्तित्वमवच्छेदकं प्रतीतम्, न त्वन्यदिति वाच्यम्, निर्विघ्नं समाप्यतामिति कामनया तदाचारान्नि-र्विघ्नसमाप्तिकाम इत्याद्याकारिकाया एव श्रुतेरुन्नयनात् ।

अस्तु वा समाप्तिकाम इत्याद्याकारश्रुत्यनुमानम् । न चैतावता समाप्तित्वा-वच्छेदकत्वलाभः, तत्र शब्दासामर्थ्यात् । स्वर्गत्वाश्वमेधजन्यत्वसामानाधिकरण्य-मात्रमेव हि शब्देनान्यत्रापि प्रतीयते, न तु स्वर्गत्वस्यावच्छेदकत्वमपि, असामर्थ्याद-सम्भवाच्च । स्वर्गत्वस्य तदजन्यवृत्तित्वादतिप्रसक्तत्वात् । तद्वदिहापि सामानाधि-करण्यमात्रं प्रतीत्य तत्रावान्तरजात्यवच्छेदकत्ववत् निर्विघ्नसमाप्तित्वमवच्छेदकं

दर्पणः

प्रयोजके किन्तु पुरुषक्रतूपकारकत्वे । फलान्तराभावे सतीत्यादौ च यदुक्तं तदेकदेशि-मतमाश्रित्येति ध्येयम् ।

माथुरी

प्रमत्तकर्तृकसमाप्तौ कारणम्, जन्मान्तरीग्रन्थमुद्दिश्ये'ति[1] जन्मान्तरीयग्रन्थसमाप्तिमुद्दि-श्येत्यर्थः । तथा च जन्मान्तरीयग्रन्थसमाप्तिमुद्दिश्य मङ्गले शिष्टप्रवृत्त्यापपत्त्या यथोक्त-क्रमेण मङ्गलस्य[2] न समाप्तिकारणत्वमिति भावः ।

पुत्रेष्टिरपि जन्मान्तरीयपुत्रमुद्दिश्य न क्रियत इति भ्रमेणाशङ्कते ननु यथेति । तथा च तत्र यथा जन्मान्तरीयपुत्रमुद्दिश्य शिष्टैः करणप्रसङ्गरूपबाधकसत्त्वेऽप्यात्म-निष्ठतया व्यापारीभूतस्यादृष्टस्य हेतुत्वम् तथात्रापि विघ्नध्वंसस्यात्मनिष्ठतयैव हेतुत्वमिति भावः । भ्रमं निराकृत्य दूषयति तत्रे'ति । कामनाश्रवणादित्यस्य जन्मान्तरीयपुत्रमुद्दिश्यापि शिष्टैः कारणादिति शेषः ।

इह त्वि'ति फलमित्यन्तमेको ग्रन्थः, प्रारिप्सितसमाप्तिकामनया मङ्गलाचारः प्रारिप्सितसमाप्तिकामनयैव मङ्गलाचारः । जन्मान्तरीयग्रन्थसमाप्तिमुद्दिश्य[3] न

---

१. जन्मान्तरीयग्रन्थादिकमुद्दिश्येतीति ग० ।
२. मङ्गलजन्यविघ्नध्वंसस्येति ख० ।
३. स्वोक्तेवकारव्यवच्छेद्यमाह जन्मान्तरीयेति ।

नन्वासन्नसमयस्तत्सम्बन्धो वा न मङ्गलजन्य इति समाप्तिमात्रं जन्यम्, तच्चैहिकामुष्मिकसाधारणमिति चेत्, न; आसन्नसमयस्य स्ववृत्ति-

आलोकः

कल्प्यतामिति को दोषः। न च स्वर्गपदं विशेषपरम्, इहापि समाप्तिपदे तथात्वस्य सुवचत्वात्।

वस्तुतस्तस्य विशेषपरत्वेऽपि न हेतुताग्रहे तदुपयोगः। तद्ग्रहेण तत्परत्व-निश्चयात्। अगृहीतायां तस्यां जातिभेद एव न मानं क्व तत्परत्वे।

ननु कार्यतावच्छेदकेऽगृहीते अतिप्रसक्तधर्मसामानाधिकरण्येनापि कारणताग्रहो यदि शब्दादौ तदा कुत एतन्न प्रत्यक्षेऽपीति चेत्—न, ग्राहकाभावात्। अन्वय-व्यतिरेकौ हि तत्र तद्ग्राहकौ, न चातिप्रसक्तेन द्रव्यत्वादिना दण्डान्वयव्यतिरेकग्रहो यत्र दण्डाभावस्तत्र द्रव्याभावाभावात्, यत्र द्रव्यं तत्र दण्ड इति नियमाभावाच्च। अत एव यत्र ग्राहकं तत्रातिप्रसक्तधर्मसमानाधिकरण्येन तृणजन्यत्वमपि वह्नौ सुग्रहम्।

दर्पणः

आसन्नसमयारब्धसमाप्तिः फलमिति मूलम् फलत्वेन वाच्यम्। तत्र च प्रमत्तादिसमाप्तौ व्यभिचार इति भावः।

उपलक्षकत्वादिति मूले कार्यतावच्छेदकप्रविष्टत्वादित्यर्थः। समाप्त्येति। समाप्तिसामान्यस्य मङ्गलाजन्यत्वे तदनुमापकत्वासम्भवादिति भावः। सामान्यशब्दस्य विशेषपरत्वमभिप्रेत्य तदज्ञानं परिहरति—विघ्नेति। असामर्थ्यात्—अपदार्थत्वात्, अवाक्यार्थत्वाच्चेत्यर्थः। असम्भवं व्युत्पादयति—स्वर्गत्वस्य तदजन्येति। तद्ग्रहेणेति। कार्यकारणताग्रहेणेत्यर्थः। तत्परत्वेति। विशेषपरत्वमर्थः। तस्यामिति कारणतायामित्यर्थः।

क्व तत्परत्व इति। मानमिति शेषः।

नियतान्वयव्यतिरेकयोर्ग्राहकत्वमभिप्रेत्याह—ग्राहकाभावादिति।

मा ग्राहि—मा गृह्यतामिति। किं बाधकमिति। चिन्तमणिकारमतेऽपि विघ्नध्वंसकामो देवतानतिमाचरेदितिविधौ प्रथमं सामानाधिकरण्यमात्रबोधके विघ्न-विशेषध्वंसत्वात्मककार्यतावच्छेदककल्पनमौत्तरकालिकमेवेति भावः।

माथुरी

मङ्गलाचार इति यावत्। तथैव स्वोत्पत्त्यवच्छेदकजातीयत्वसम्बन्धेन फलीभूत-समाप्तिकर्तृशरीरनिष्ठतया मङ्गलजन्यविघ्नध्वंसस्य समाप्तिकारणताबोधकत्वेनैव। वेदानुमानानात् वेदस्यानुमेयत्वात्, आसन्नसमये'ति मङ्गलानुष्ठानसन्निहित-समयेत्यर्थः। फलं फलोपधानात्मकमङ्गलजन्यताश्रयः।

**समाप्त्युपलक्षकत्वात् । अन्यथा कारीर्य्यपि नासन्नसमयफला स्यात् । तस्माद् व्यभिचारान्न तदङ्गमिति ।**

आलोकः

**समानप्रकारकं हि विरोधिज्ञानं प्रतिबन्धकम्[1] । तथा च स्वर्गत्ववह्नित्वावच्छेदेन व्यभिचारग्रहात् तदवच्छेदेन नियतपूर्ववर्त्तित्वम्मा ग्राहि तदाश्रयधर्मिणि तु हेतुताग्रहे किं बाधकमिति ।**

**अत्राहुः—विघ्नाभावस्य तदद्वारत्वे कामनायान्तदनुल्लेखापत्तेः । अन्यथा-सिद्धत्वात्, स्वर्गकामनायामपूर्ववत् । न च विघ्नाभावजन्यसमाप्तावेव मङ्गलजन्यत्वात् फलतावच्छेदकोल्लेखनियमात् कामनायास्तदुल्लेखो न द्वारतयेति वाच्यम्, श्रौतधर्मा-वच्छेदेनैव हि वैदिके कामनानियमात् । अन्यथा स्वर्गत्वस्य फलत्वानवच्छेदकतया स्वर्गत्वेऽपि कामनोल्लेखानुपपत्तेः ।**

**वस्तुतो विघ्नाभावः कार्यतावच्छेदक एव न, जनकत्वात्तयोर्विरोधात् । न च विघ्नपूर्वकतामात्रमवच्छेदकम्, अतिप्रसङ्गात् । नापि मङ्गलसमानकालविघ्नध्वंस-जन्यकार्यविशेषनियतत्वेन विघ्नसमानकालीनसमाप्तिद्वयेऽन्यतरप्रतिबन्धकविघ्ननिवर्त्त-**

दर्पणः

अन्यथेति । कामनायाः फलतावच्छेदकोल्लेखनियमे । साक्षात्परम्परोदासीनं तावत्कारणत्वमात्रं तच्च स्वस्वव्यापारान्यतराऽव्यवहितपूर्वत्वगर्भितं तथा च तदुल्लेखेनैव विशिष्य विघ्नध्वंसानुल्लेखेऽपि कारणत्वोल्लेखपर्याप्तेरित्यर्थः । द्वितीयं दूषयति—न चेति ।

ननु निर्विघ्नसमाप्तिकाम इति श्रुतिपक्षे निर्विघ्नत्वस्य श्रौतत्वादेव कामना-वच्छेदकत्वम् । समाप्तिकाम इति श्रुतिपक्षेऽपि अधिकारविशेषणीभूतकामनायामेव ।

माथुरी

आसन्नसमयस्य विशेषणत्वमभिप्रेत्य शङ्कते नन्वि'ति । 'स्ववृत्ती'ति, आधेयतया मङ्गलफलीभूतसमाप्तीनां परिचायकत्वादित्यर्थः । तथा च तत्र मङ्गलकार्यत्व-न्वयेऽपि न क्षतिरिति भावः । तस्मादि'ति, व्यभिचारात् नास्तिकसमाप्तौ स्वोत्प-त्त्यवच्छेदकजातीयत्वसम्बन्धेन मङ्गलजन्यविघ्नध्वंसस्य व्यभिचारात्, न तदङ्गमि'ति न स्वोत्पत्त्यवच्छेदकजातीयत्वसम्बन्धेन फलीभूतसमाप्तिकर्त्तृशरीरनिष्ठतया समाप्ति-जनकीभूतं विघ्नध्वंसं द्वारीकृत्य मङ्गलं समाप्तिजनकमित्यर्थः ।

यद्यपि सति विघ्ने तद्ध्वंसद्वारा तस्याङ्गत्वादिति पूर्वमभिधानाद् विघ्नस्थलीय-समाप्तित्वमेव कार्यतावच्छेदकम्, तथा च नास्तिककशरीरकर्तृकसमाप्तौ व्यभिचारेऽपि

1. 'विरहज्ञानं समानप्रकारकज्ञानविरोधि' इति काशीपुस्तकपाठः ।

आलोकः

कमङ्गलस्यापराजनकत्वेनातिप्रसङ्गतादवस्थ्यात्। अन्यथा काशीमरणादीनां तत्त्वज्ञानविशेषजन्यमोक्षहेतुत्वसम्भवे यथाश्रुतश्रुतिसमर्थने तत्त्वज्ञान एवोपक्षयं कल्पयित्वा हेतुताबोधिका श्रुतिः प्रयोजकपरतया न समर्थ्येत।

न च तत्त्वज्ञानविशेषो नोपस्थित इति वाच्यम्, तर्हि तत्रापि काशीमरणाद्यहेतुतापत्तेः। उत्तरकालं कल्पना यदि तदा समानम्।

ननु ज्ञानविशेषजन्यत्वं मोक्षमात्रे दुर्ग्रहम्। मोक्षविशेषे च स्फुरिते तदवच्छेदेनैव हेतुता किमन्तर्गडुना ज्ञानेनेत्युभयथा व्यापारो नावच्छेदक इति चेत्—तुल्यम्।

ननु काशीमरणज्ञानविशेषयोर्हेतुमद्भावग्रह एव तदवच्छेदकत्वशङ्का, अन्यथा ज्ञानविशेषजन्यत्वस्यातिप्रसक्त्या तद्दोषतादवस्थ्यात्। तथा च तद्ग्रहाशक्यत्वे क तदवच्छेदकत्वम्। शक्यत्वे वाऽन्यं प्रति पूर्ववर्त्तित्वग्रहाज्जनकं प्रति पूर्ववर्त्तित्वग्रहाच्चान्यथासिद्धतया हेतुतायामेव बाधादिति चेत्—इदमपि तुल्यम्।

दर्पणः

श्रौतधर्मावच्छिन्नत्वनियमो न तु सर्वस्याम् अत इवादृष्टेऽपीष्टसाधनताज्ञाने कामनास्त्येव। तथा च निर्विघ्नसमाप्तिकामनायाः अधिकारिविशेषणत्वाभावेऽपि तत्स्वरूपे बाधकाभाव इत्यस्वरसादाह—वस्तुत इति।

**तयोः** जनकत्वाकार्यतावच्छेदकत्वयोः।

माथुरी

न क्षतिः, तत्कर्तृकसमाप्तेः कार्यतावच्छेदकानाक्रान्तत्वात्। न च तादृशसमाप्तित्वस्य कार्यतावच्छेदकत्वं वेदेन न बोध्यत इति वाच्यम्, कारणतामात्रं हि वेदो बोधयति, कार्यतावच्छेदकञ्चोत्तरकालकल्प्यम्, तथापि विघ्नस्थलीयत्वं विघ्नवज्जातीयशरीरकर्त्तृकत्वम्, तच्च तादृशशरीरनिष्ठकृतिजन्यत्वम्। तथा च कृतौ समाप्विजनकतायां गृहीतायामेव मङ्गले समाप्तिकारणताग्रहसम्भवादन्यथासिद्धिः, अतो न तत् कार्यतावच्छेदकम्, किन्तु समाप्तित्वमात्रम्। अतो नास्तिकसमाप्तिरपि कार्यतावच्छेदकाक्रान्तेति भावः। एतच्चोपलक्षणम्; विघ्नवज्जातीयशरीरनिष्ठकृतिजन्यत्वस्य चानुगतस्य अभावादनन्तकार्यकारणभावापत्तेश्चेत्यपि बोध्यम्।

मीमांसकैकदेशिमतमाह **अन्ये त्वि**ति। प्रधानम् आरब्धकर्मणो नाङ्गम्, न आरब्धकर्मजन्यसमाप्तिजनकमिति यावत्। आरब्धकर्मजन्यसमाप्तिश्च चरमवर्णरूपा, तद्ध्वंसरूपा वा। एतच्चापूर्वद्वारकत्वे लौकिकफलाङ्गत्वविरोध इति पूर्वोक्तदोष-

**अन्ये तु मङ्गलं प्रधानम्, अदृष्टद्वारा आरब्धकर्मसमाप्तिः फलम्, तत्कामोऽधिकारी; क्वचित्तु फलाभावः, कर्मादिवैकल्यात्, कारीरीवत् ।**

आलोकः

**वस्तुतः काशीमरणादौ हेतुतावबोधकश्रुत्यादेः प्रत्यक्षतया तत्र हेतुताशङ्काऽपि, प्रकृते तु हेतुताबोधकमेव दुर्लभम्, सुतरां तदधीनमवच्छेदककल्पनम् । तथा हि न तावत्तद्बोधिका प्रत्यक्षा श्रुतिरस्ति, किन्तु आचारेण कल्प्या । न चाचारो हेतुताग्रहाधीनो येन तद्बोधकं वेदमाक्षिपेत् । किन्तु कारणकारणेऽपि प्रवृत्तिदर्शनेन फलान्वयव्यतिरेकशालित्वज्ञानस्य तद्धेतुतया तेन विनाऽनुपपद्यमानः तज्ज्ञानजनकम् । स चोभयथा सम्भवन्न कार्यतावच्छेदकं कल्पयति । किन्तु क्लृप्तत्वात् लाघवाच्च समाप्तौ विघ्नाभावं तन्मात्रे मङ्गलमित्यलं विस्तरेण । अन्यथा मणिध्वंसजन्यवह्निदाहादौ मण्यवयवविभागस्यापि हेतुतापत्तेः । अत एव कारीरीतः प्रत्यवग्रहनिवृत्तिमात्रं वृष्टिस्तु**

दर्पणः

अत्राप्रयोजकत्वमित्यस्वरसादाह—**न चेति** । इत्यारभ्य समाप्तिनिष्ठं मङ्गलजन्यताच्छेदकं नास्तीत्यत्र अतिप्रसङ्गतादवस्थ्यादित्यन्तस्यतात्पर्यम् ।

**अतिप्रसङ्गादिति** । विघ्नात्यन्ताभावस्थलीयसमाप्तावित्यर्थः ।

**नापि मङ्गलेति** । मङ्गलसमानकालीनो यो विघ्नस्तद्ध्वंसपूर्वकसमाप्तित्वं यथा नावच्छेदकं तथा विघ्नसमानकालीनं यन्मङ्गलं तत्पूर्वकसमाप्तित्वमपि नावच्छेदकमित्यर्थः ।

**प्रतिबन्धकस्येति** । स्वतः सिद्धविघ्नाभावपूर्विका एका मङ्गलजन्यविघ्ननिवृत्तिपूर्विका चापरा समाप्तिः तुल्यकालमेव यत्र तत्राद्यायामुक्तधर्मद्वयमतिप्रसक्तमित्यर्थः ।

ननु मङ्गलजन्यविघ्नध्वंसविशेषजन्यसमाप्तित्वमवच्छेदकमस्त्वित्यत आह—**अन्यथेति** । **तत्रापीति** । तत्त्वज्ञानविशेषस्यानुपस्थितत्वादित्यर्थः । **कल्पनेति** । कारणताग्रहोत्तरकाले विशेषकल्पनेत्यर्थः । **तदा समानमिति** । काशीमरणजन्यतत्त्वज्ञानविशेषजन्यमोक्षत्वेन मोक्षं प्रति हेतुत्वे समानमित्यर्थः । **तुल्यमिति** । मङ्गलस्थलेऽपीत्यर्थः । **तदवच्छेदकताशङ्केति** । कार्यतावच्छेकत्वशङ्केत्यर्थः ।

माथुरी

वारणायाभिहितम् । **आरब्धकर्मसमाप्तिः** आरब्धकर्मोत्पत्तिः, **फलं** तस्य फलम्, सा चातीन्द्रियत्वेनालौकिकी एवेति भावः ।

नन्वेवं विघ्नध्वंसकामनया मङ्गले शिष्टप्रवृत्तिर्न स्यादित्यत्रेष्टापत्तिमाह **तत्काम** इति । आरब्धकर्मोत्पत्तिकामनैव मङ्गले शिष्टप्रवृत्तिजनिका, न विघ्नध्वंसकामनेत्यर्थः । तथा च श्रुतिरपि तथैवोन्नेया, न तु **निर्विघ्नसमाप्तिकामो मङ्गलमाचरेद्** इत्याकारिकेति भावः । **कर्मादीत्यादिपदात्** कर्तृसाधनयोः

**न चान्यथापि करणम्, नियतकालीनतादृशाचारेण 'फलवत्कर्मारिप्समान-स्तत्समाप्तिकामो मङ्गलमाचरेद्' इति श्रुत्या आरम्भसमयकर्त्तव्यता-बोधनात्। यथा "अग्नावैष्णवमेकादशकपालं चरुं निर्वपेद् दर्शपूर्णमासा-वारिप्समानः" इति श्रुत्या आरम्भणीयेष्टेः प्रधानाया दर्शारम्भसमय-**

आलोकः

स्वहेतोरेवेति सिद्धान्तः अन्यथा तत्राप्युक्तरीत्यापत्तेः। प्रतिबन्धकध्वंसस्य कार्य-पूर्ववर्त्तिताग्रहान्तरं तज्जनककारीरीमङ्गलयोः पूर्ववर्त्तित्वग्रहेण कुलालपितृवदन्यथा-सिद्धतया हेतुत्वाग्रहादिति साधूक्तम्—व्यभिचारान्न तदङ्गमिति।

विहितेति। अत्रातिशयत्वमदृष्टत्वम्। न च विहितपदवैयर्थ्यम्, पापे व्यभिचारात् फलस्येष्टरूपत्वात्। न च तदेवास्तु न तु प्रधानपदम्, अङ्गापूर्वं व्यभिचारात्।

दर्पणः

अन्यथेति। हेतु हेतुमद्भावाग्रह इत्यर्थः। अन्यं प्रति जनकं प्रतीत्यन्यथासि-द्धिभ्यां तत्त्वज्ञानविशेषेण काशीमरणं मोक्षं प्रति यथाऽन्यथासिद्धं तथा मङ्लमपि समाप्तौ विघ्नध्वंसविशेषेणान्यथासिद्धमिति इदमपि तुल्यमित्यन्तस्यार्थः।

वस्तुत इति। काशीमरणे कारणताबोधकमापाततोऽप्यस्ति प्रकृते तदपि न। आचारस्य प्रयोजकत्वमात्रबोधकश्रुत्याक्षेपकत्वादिति प्रघट्टकार्थः। तद्धेतुतयेति। ज्ञाने हेतुतयेत्यर्थः। तेनेति। ज्ञानेनेत्यर्थः। तज्ज्ञानजनकमिति। वेदमाक्षिपेदित्य-नुषङ्गः। कल्पयतीति। आचार इतिशेषः।

क्लृप्तत्वात् लाघवाच्चेति। तथा चावश्यक्लृप्तेत्याद्यन्यथासिद्ध्याऽपि न मङ्गलं हेतुरिति भावः। पूर्वं काशीमरणदृष्टान्तेन मङ्गलस्यान्यथासिद्धिरुक्ता तामेव मण्यव-यवविभागादिदृष्टान्तेन दृढीकरोति—अन्यथेति। विभागग्रहणञ्चैकदेशिनाऽवयव-विभागस्य द्रव्यनाशकत्वस्वीकारात्।

माथुरी

अन्यदापि आरब्धकर्मप्राक्कालातिरिक्तकालेऽपि, करणमिति अपूर्वं जन-यत्विति शेषः। आरम्भसमयकर्त्तव्यताबोधनादिति आरब्धकर्मपूर्वसमयकर्तव्यता-बोधनादित्यर्थः। तथा च तज्जन्यापूर्वं प्रति तादृशसमयस्यापि हेतुत्वादन्यथा तत्करणान्नापूर्वमिति भावः। अग्नावैष्णवमिति छान्दसः, अग्नौ वैष्णवमेकादशकपालं चरुं निर्वपेदित्यर्थः। यद्वा अग्निदेवताकविष्णुदेवताकमेकादशकपालं तत्र संस्कृतं चरुं निर्वपेदित्यर्थः; अग्निश्च विष्णुश्च अग्नाविष्णू, तौ देवते अस्येति व्युत्पत्तेः। प्रधानायाः दर्शजन्यफलाजनिकायाः कर्त्तव्यत्वमिति बोध्यत इति शेषः।

**कर्त्तव्यत्वम्, कामनोपाधिकार्यत्वेऽप्यारम्भसमये[1] नियतमनुष्ठानम्, आरब्धकर्मसमाप्त्यर्थिनोपायत्वेनावश्यं तदनुष्ठानात् ।**

**न च काम्यत्वे परिसमाप्तिकामनां विना फलवत्कर्मारम्भेऽपि**

आलोकः

**वस्तुतस्तु तत्त्वेन जनकत्वं विवक्षितम् । अन्यथा शिखोपवीतधारणापूर्वादौ व्यभिचारात् । तस्याङ्गप्रधानोभयरूपत्वात् । अत एवोभयपदसार्थकता, अपूर्वविशेषं**

दर्पणः

अत्र वदन्ति—अन्यं प्रतीत्याद्यन्यथासिद्धिद्वयसम्बद्धमेव । अवच्छेदकनिरपेक्षेण श्रुत्या कारणत्वबोधने गृहीत एवेति नियमघटिततल्लक्षणायोगात् ।

यत्तु स्वतः सिद्धविघ्नविरहस्थलेऽवश्यकल्पनीयेन विघ्नाभावेन मङ्गलमन्यथासिद्धमिति—तदपि न । श्रुत्या मङ्गलकारणतां बोधयन्त्याऽनन्यथासिद्धत्वं बोधितमिति तद्रक्षायै च स्वतःसिद्धविघ्नविरहस्थलीयसमाप्तौ सुकृतसम्पत्तेरेव हेतुत्वात् । इह च विघ्नस्थलीयसमाप्तौ तस्या असत्त्वेनावश्यकल्प्यकारणेनोपपत्त्यभावादिति ।

यच्च काशीमरणकारीरीमण्यवयवविभागवन्मङ्गलमन्यथासिद्धमिति—तन्न । काशीमरणकारीर्योः मोक्षविशेषे वृष्टिविशेषे च हेतुत्वस्यैवाभ्युपगमात् । अत एक कारीरीजनितवृष्टौ जातिभेद एवेति मूलम् ।

यच्च काशीमरणादेः कारणत्वं क्वचिद् दूष्यते तत्र तत्त्वज्ञानं विना स्वातन्त्र्येण हेतुत्वं नास्तीत्यभिप्रायः । मण्यवयवविभागस्य च कारणत्वे प्रामाणाभावात् । इह च श्रुतेरेव प्रमाणत्वात् ।

माथुरी

ननु मङ्गलस्याङ्गत्वेऽङ्गवैगुण्यभिया अनायत्यां आरम्भसमयेऽवश्यं तत्करणं घटते, अनङ्गत्वे चारम्भसमयेऽवश्यं कथं तत्करणम् ? न ह्यारम्भणीया दर्शसमयेऽवश्यं क्रियत इति नियम इत्यत आह **कामनोपाधिकार्यत्वेऽपीति** फलान्तरकामनाधीनेच्छाजन्यकृतिविषयत्वेऽपीत्यर्थः । **आरम्भसमये** आरब्धकर्मपूर्वसमये, **आरब्धकर्मसमाप्त्यर्थिना** आरब्धकर्मोत्पत्त्यर्थिना आरब्धकर्मकर्त्रा, **उपायत्वेन** तादृशोत्पत्तिरूपेष्टसाधनत्वेन, **अवश्यं तदनुष्ठानादिति** अवश्यमारब्धकर्मपूर्वसमये तस्य ज्ञानादित्यर्थः । तथा चेष्टसाधनताज्ञाननियमेन इच्छानियमात् प्रवृत्तिनियम[2] इति भावः ।

---

१. आरम्भकाले इति क० ।

२. यत्र विशेष्यतासम्बन्धेनेष्टसाधनताज्ञानं-तत्रैव विशेष्यतासम्बन्धेनेच्छा प्रवृत्तिश्चेति नियम इत्याशयः ।

**तदनुष्ठानं न स्यादिति वाच्यम्, समाप्तं कर्म फलायालमिति फलार्थिनः समाप्तौ कामनावश्यम्भावादिति। तन्न, कारीरीजन्यातिशयवद्विहितप्रधानजन्याति-शयत्वान्मङ्गलजन्यापूर्वस्यापि फलसम्पादकाशेषकारणसम्पादकतया**

आलोकः

**प्रति विहितप्रधानत्वेनैव जनकत्वादपूर्वसामान्यं प्रति तु विहितत्वेनेति भावः।**

दर्पणः

यदपि आचारस्य प्रयोजकत्वमात्रबोधकत्वमिति श्रुत्याक्षेपकत्वं तदपि न। एवं सति प्रत्यक्षविधेरपि आचारजनकज्ञानविषये शक्ततयाऽश्वमेधादेरपि कारणत्वाभाव-प्रसङ्गात्। न च प्रयोजकत्वमात्रे श्रुत्या बोधितेऽपि अन्यथासिद्ध्यनुपलम्भात् अश्वमेधादेः कारणता पर्यवस्यतीति वाच्यम्, मङ्गलेऽप्यन्यथासिद्धिविरहस्य प्रदर्शित-त्वादिति।

**अत्र ब्रूमः**—अवश्यकल्प्येत्याद्यन्यथासिद्धिसत्त्वान्न मङ्गलं कारणम्। विघ्नसंसर्गा-भावकारणताया आवश्यकत्वात्। न च मङ्गलाप्रयुक्तविघ्नविरहस्थलीयसमाप्तौ सुकृत-सम्पत्तेर्हेतुत्वमङ्गीकृत्य तद्द्वारः कृत एवेति वाच्यम्। न हि समाप्त्यादिरूपे कार्ये सुकृतस्य साक्षाज्जनकत्वं बन्ध्यासंप्रयोगादाविव दृष्टसम्पत्तावदृष्टविलम्बेन विलम्बा-भावात्। किन्तु मङ्गलस्यैव विघ्नध्वंसविशेषद्वारा। तथा च विघ्नात्यन्ताभाव-स्थलेऽवश्यक्लृप्ताद्विघ्नसंसर्गाभावात् द्वयोरप्यन्यथासिद्धिः। किञ्चैकस्मिन् विशेषे कारणविशेषस्वीकारे तदितरविशेषे कारणान्तरमावश्यकमिति प्रमाणगुणजन्यत्व-व्यवस्थापनावसरे मूलकृदेव वक्ष्यति। तथा च विघ्नात्यन्ताभावस्थलेऽपि कारणविशेषो वक्तव्यः। स च दुर्वचः। कारीर्याश्च कारणत्वोक्तिरेकदेशिमतेन।

यच्चोक्तं प्रयोजकत्वमात्रे विधेरर्थेऽश्वमेधादिकारणता कथमिति—तन्न।

माथुरी

नन्वेवं यत्रोत्पत्तिकामनां विनैव कर्मारब्धम्, तत्र मङ्गलं नानुष्ठीये-तेत्याशङ्कते न **चेति**। **काम्यत्वे** आरब्धकर्मोत्पत्तिकामनाधीनकामनाविषयत्वे, **परिसमाप्तिकामनां विना** आरब्धकर्मोत्पत्तिकामनाविरहेण, **समाप्तं कर्म** उत्पन्नं कर्म, **अलं** समर्थम्, **फलार्थिनः** ग्रन्थप्रयोजनकीर्त्यर्थिनः, **समाप्तौ** उत्पत्तौ, **अवश्यम्भावादिति** तदभावेऽननुष्ठानमिष्टमेवेति भावः। **विहितेति** विहितजन्य-प्रधानापूर्वत्वादित्यर्थः। विहितजन्यप्रधानापूर्वस्य फलसम्पादकाशेषकारणसम्पाद-कत्वनियमादिति भावः। अत्र फलपदस्येष्टपरतया[1] पापे व्यभिचारवारणाय

१. अन्यथा फलपदस्येष्टानिष्टसाधारणफलसामान्यपरत्वे पापस्याप्यनिष्टसम्पादकाशेष-कारणसम्पादकतया तत्र व्यभिचारो न स्यादिति भावः।

आरब्धकर्मसमाप्त्यवश्यम्भावापत्तेः फलावश्यम्भावनिश्चयं विना वैदिक-कर्माननुष्ठानात् । न चैवम्, भूयसि साङ्गेऽपि मङ्गले क्वचिदारब्ध-समाप्त्यभावात् । न च तत्रामुष्मिकं फलम्, ऐहिकमात्रफलत्वात्, वैदिक-कर्मणः फलावश्यम्भावेनागन्तुकदुरितेनाप्यप्रतिबन्धात् ।

किञ्च, यथा कारीर्य्यादिकमग्निमपुरुषव्यापारं विनैव फलहेतुः, तथा मङ्गलमपि तेन विनैव हेतुः स्यात् । न चैवम् ।

दर्पणः

अवश्येत्याद्यन्यथासिद्धेरत्रैव तत्राभावेन कारणतायामेव विधेः पर्यवसानात् । अश्वमेधे-नेतिकरणत्ववाचितृतीयायाः प्रत्यक्षत्वाच्च ।

वस्तुतो भवतु कारणत्वं विधेरर्थः, तथापि विघ्नवंसकाम इत्येव श्रुतेरुन्नयनं लाघवात् । न च कामनाविषयत्वेनोपस्थितसमाप्तेर्न विधौ त्याग इति वाच्यम् । तथा सति समाप्तेः स्वतोऽपुरुषार्थतया सुखादेरपि कामनाविषयतया तत्फलकताबोधकोऽपि विधिः कल्प्येन । तत्र चेत् गौरवमिहापि तच्च समानम् । तस्मादप्रत्यक्षे विधौ लाघ-वादिसहकारेण विधिं कल्पयित्वा फलावधारणम् प्रत्यक्षे तु यथाश्रुतविधिमादायेति ।

यच्च विघ्नान्यूनसंख्यात्मावच्छेदकमादायान्वयव्यभिचारनिवारणम्—तन्न । बलवत्तरैकविघ्नस्य बहुभिरपि मङ्गलैरनिराकरणात् । एकेनापि बलवता मङ्गलेन बहु-विघ्ननिराकरणादितिदिक् ।

माथुरी

**विहितजन्येति ।** विहितत्वं बलवदनिष्टाननुबन्धित्वेन वेदबोधितत्वम् । तेन श्येनजन्यपापे न व्यभिचारः[1] । विहितजन्यत्वमात्रोक्तौ फले व्यभिचार इत्यतः 'प्रधानापूर्वे'ति, अजनितप्रधानापूर्वाङ्गापूर्वे व्यभिचारवारणाय प्रधानेत्यपूर्वविशेषणम्, प्रधानेत्यस्य विहितेन सहान्वयेऽङ्गप्रधानोभयरूपशिखादिना[2] अङ्गविधया जनितेऽपूर्वे व्यभिचारापत्तेः । फलशिरस्कापूर्वमेव प्रधानापूर्वम् । तेन दक्षिणा-दानादिविनाकृतप्रधानजन्यापूर्वे न व्यभिचारः । कीर्त्तनाद्यनाश्यत्वमप्यपूर्वविशेषणम्, तेन तन्नाश्ये न व्यभिचारः । फलोपधायकत्वस्य साध्यत्वात् स्वरूपयोग्यत्वस्य मङ्गलजन्यादृष्टेऽपि सत्त्वात् । यदि च सत्यपि अपूर्वे सत्प्रतिपक्षवत् प्रतिकृत्या[3]

---

१. विहितत्वस्य वेदबोधितत्वमात्ररूपत्वे श्येनजन्यपापे व्यभिचारः स्यात्, श्येनस्यापि वेदबोधितत्वादित्याशयः ।

२. आदिना उपवीतपरिग्रहः ।

३. प्रतिकृत्या-दुरितेनेत्यर्थः ।

लोकावगतकारणत्वात् तदपेक्षेति चेत्, तर्हि स एव हेतुरस्तु, किमनेन ? आरब्धकर्मजनकदृष्टकारणसम्पत्तौ पुत्रेष्टिवत्तत्समाप्तिसाधनत्वं[1]

आलोकः

मेघसंचारवदग्निमपुरुषव्यापारमदृष्टमेव घटयेदित्यरुचेराह—किञ्चेति[2]। अत्रापि यद्यपि मङ्गलस्य समाप्तिविशेषे तदन्यविशेषे समाप्तिसामान्ये वा सुकृतसम्पत्ते-र्हेतुत्वादेकविषयत्वाभावान्न वैकल्पिकता तथापि विघ्नाभावस्यानवच्छेदकतया विशेषान्तरस्य चासम्भवेन विघ्नाभावापेक्षायामपूर्वे मानाभावेन चायं प्रकारो न घटत इति भावः।

दर्पणः

अन्ये त्विति मूलम्। न च प्रधानीभूतग्रन्थादिफलसमाप्त्या फलवत्त्वमभ्युपग-तमेव स्यादिति वाच्यम्, दण्डचक्रादिवत् परस्परसहकारित्वं नाङ्गीभाव इत्याशयात्।

ननु मङ्गलस्य कामिकार्यत्वे कामनाया अनियमात् न नियतं तत्करणं स्यादित्यत आह—कामनेति मूलम्।

माथुरी

प्रतिबन्धाद्[3] न फलोदय इत्युपगम्यते, तदा [4]तदप्रतिरुद्धत्वेनाप्यपूर्वं विशेषणीय-मिति। न च मङ्गलजन्यापूर्वाप्रसिद्ध्या पक्षाप्रसिद्धेः कथमिदमापादनमिति वाच्यम्; मङ्गलं यदि विहितत्वे सति प्रधानापूर्वजनकं स्यात्, तदा फलसम्पादकाशेष-कारणसम्पादकापूर्वजनकं स्यादित्यापादनात्। पापजनके कर्मणि व्यभिचार-वारणाय सत्यन्तम्, [5]पक्षतावच्छेदकावच्छेदेनापाद्यसिद्धेरुद्देश्यत्वादिति दिक्।

'आरब्धकर्मसमाप्त्यवश्यंभावापत्तेरि'ति मङ्गले कृते सर्वत्रैवारब्धकर्मोत्पत्त्यापत्ते-रित्यर्थः। नन्विदमप्रयोजकमित्यत आह 'फलावश्यम्भावे'ति तन्निश्चयश्च नोक्तनियमं विनेति भावः।

इष्टापत्तिमाशङ्क्याह 'न चैवमि'ति। न च मङ्गले कृतेऽवश्यमारब्धकर्मो-त्पत्तिरित्यर्थः। 'भूयसी'ति प्रौढ्या। समाप्त्यभावात् उत्पत्त्यभावात्[6], ऐहिक-

१. तत्समाप्तिकारणत्वमिति ख०।

२. 'अपि चे'ति काशीपुस्तकपाठः।

३. सत्प्रतिपक्षरूपदुरितेन प्रतिबन्धादिति क०; प्रतिकृत्या प्रतिरोधादिति ख०।

४. सत्प्रतिपक्षभूतदुरिताप्रतिबद्धत्वेनेत्यर्थः।

५. पक्षतावच्छेदकसामानाधिकरण्येनापाद्यसिद्धेरुद्देश्यत्वे उक्तापादनं न सम्भवति, तादृश्या-पाद्याभावनिश्चयस्य मङ्गलविशेष उक्तापाद्याभावस्य सत्त्वेन सुलभत्वादिति भावः। पक्षतावच्छेदकावच्छेदेनापाद्यसिद्धेरुद्देश्यत्वे चोक्तापादनं निर्बाधं सङ्गच्छते। तादृशसिद्धावपेक्षितस्य पक्षतावच्छेदकसामानाधिकरण्येन आ-पाद्याभावनिश्चयस्यापेक्षितत्वात्, मङ्गलविशेषमापाद्यसिद्धौ पक्षतावच्छेदकावच्छेदेनापाद्याभावनिश्चयस्य दुर्घटत्वात्। मङ्गलत्वावच्छेदेन फलसम्पादकाशेषकारणसम्पादकापूर्वजनकत्वा-उक्तापाद्यस्य सत्त्वेन भावनिश्चयस्य

६. प्रारब्धसमाप्त्यभावात् तदुत्पत्त्यभावादिति क०।

श्रुत्या बोध्यत इति चेत्, न; तत्र दृष्टकारणसम्पत्तौ पुत्रानुत्पादाददृष्टद्वारा पुत्रेष्टेस्तज्जनकत्वमस्तु। न च कर्मनिर्वाहे दृष्टसकलहेतुसम्पत्तौ विलम्बः,

दर्पणः

ननु समाप्तावेव न कामनानियम इत्याशङ्क्य निराकरोति—न चेति मूलम्। विशिष्टहेतुत्वावगमे विशेषणीभूतसमाप्तावपि इष्टसाधनतावगमनियमात्कामनावश्यम्भाव इत्यर्थः।

अत्रेति। अतिशयपदस्यादृष्टपरत्वाभावे ध्वंसादावनैकान्त्यादिति भावः। कलिकापूर्वभिन्नत्ववेदबोधितनाशकानाश्यत्वाप्रतिरुद्धत्वादि विशेषणान्याग्नेयजन्यस्य कीर्तनंनष्टस्य प्रतिकृत्या प्रतिरुद्धस्यापूर्वस्य वारणाय देयानि।

माथुरी

मात्रे'ति स्वोत्पत्त्यवच्छेदकजातीयत्वसम्बन्धेन फलीभूतारब्धकर्मोत्पत्तिजनककर्तृशरीरनिष्ठतयैव मङ्गलजन्यापूर्वस्यारब्धकर्मोत्पत्तिहेतुत्वाभ्युपगमादित्यर्थः। अन्यथा स्वावच्छेदकत्वसम्बन्धेन शरीरनिष्ठतया, समवायसम्बन्धेन तादृशात्मनिष्ठतया वा आरब्धकर्मोत्पत्तिजनकत्वे जन्मान्तरीयग्रन्थोत्पत्तिमुद्दिश्यापि मङ्गले शिष्टप्रवृत्त्यापत्तेरिति भावः। ननु मङ्गलपूर्वोत्पन्नेन मङ्गलानन्तरोत्पन्नेन वा दुरितेन प्रतिबन्धान्न फलम्; असमन्नये मङ्गलस्य दुरितानाशकतया तत्पूर्वोत्पन्नेनापि प्रतिबन्धसम्भवादित्यत आह **वदिकेति**। **फलावश्यम्भावेन** फलावश्यम्भावनियमेन। **आगन्तुकेति** मङ्गलपूर्वोत्तरोत्पन्नेत्यर्थः।

ननूक्तनियमोऽप्रयोजकः, इतरसकलकारणसत्त्वे फलावश्यम्भावनिश्चयरूपायाः श्रद्धाया एव वैदिककर्मप्रवृत्तौ हेतुत्वादित्यस्वरसादाह **किञ्चेति**। **यथेति**, कारीर्य्यपि अदृष्टद्वारा हेतुरिति मतेनेदम्। वस्तुतस्तु अवग्रहनिवृत्तिरेव तत्फलमित्यन्यत्र सुव्यक्तम्। **हेतुः स्यादिति** प्रधानापूर्वजनकविहितकर्मणोऽग्रिमपुरुषव्यापारानपेक्ष्यफलजनकत्वनियमादिति भावः। **न चैवमिति** च्छेदः।

शङ्कते **लोकेति**। **तदपेक्षा** कण्ठाभिघातादेरारब्धकर्मजनकत्वे कण्ठादिक्रियाद्यपेक्षा। तथा च प्रधानापूर्वजनकविहितकर्मत्वं लोकावगतकारणेतराग्रिमपुरुषव्यापारानपेक्ष्य फलजनकत्वस्यैव व्याप्यम्, अन्यथा पुत्रेष्टौ भोजनादिद्वारा भोगजनकादृष्टजनककर्मणि च व्यभिचारादिति भावः। **स एवे**'ति कण्ठाभिघातादिरेवेत्यर्थः। **किमनेन** किं मङ्गलेन, दृष्टकारणसाकल्येऽदृष्टविलम्बेन कार्यविलम्बाभावादिति भावः। **तत्समाप्तिसाधनत्वमिति** मङ्गलस्य तदुत्पत्तिजनकत्वमित्यर्थः। **कर्मनिर्वाहे** कर्मोत्पत्तौ, **येनेति** तथा च बाधेन तादृशश्रुतिरप्यसिद्धैवेति भावः। **मङ्गलं विनापि** ऐहिकमङ्गलं विनापि, **प्रमत्तनास्तिकेति** प्रमत्तनास्तिकशरीरकर्तृकप्रारब्धकर्मोत्पत्तेरित्यर्थः। तथा च ऐहिकमङ्गलाभावेन स्वोत्पत्त्यवच्छेदकजातीयतासम्बन्धेन मङ्गलजन्यापूर्वासम्भ-

**येन मङ्गलजन्यादृष्टापेक्षा स्यात् । अपि च मङ्गलं विनापि प्रमत्तनास्तिका-नुष्ठितसमाप्तेः न तत्तत्र कारणम् ।**

दर्पणः

नन्‌ साङ्गप्रधानत्वेन प्रधानजन्यातिशयस्येत्यवश्यं वाच्यम् । अन्यथा शिखा-बन्धनादिजन्याङ्गापूर्वे व्यभिचारात् । यत्रोत्तराङ्गं दक्षिणादि न कृतं प्रधानं न चातिशयो जनितस्तत्र व्यभिचारः । तथा च विहितपदमप्रसिद्धिवारकमेवास्तु । प्रधानत्वेन जनकत्वस्याप्रसिद्धेः किमिति फलपदस्य विशेषपरताक्लेश इत्यभिप्रेत्याह--- **वस्तुत** इति ।

माथुरी

वेऽपि आरब्धकर्मोत्पत्तेः; तेन सम्बन्धेन मङ्गलजन्यापूर्वं तत्र व्यभिचारीति भावः । **न तत्तत्र कारणमिति** न तादृशसम्बन्धेन फलीभूतकर्मोत्पत्त्यवच्छेदकशरीरनिष्ठतया मङ्गलजन्यादृष्टं कर्मोत्पत्तिकारणमित्यर्थः ।

शङ्कते **जन्मान्तरीयेति पुण्यसम्पत्तिः** प्रारब्धकर्मसमाप्तिकामनाकृतमहादेव-पूजादिजन्यपुण्यसम्पत्तिः, **तथापि व्यभिचारादिति** स्वोत्पत्त्यवच्छेदकत्वसम्बन्धेन मङ्गलजन्यादृष्टस्य व्यभिचारादित्यर्थः ।

शङ्कते **क्वचिदिति** विघ्नस्थलीयेतरारब्धकर्मोत्पत्तौ कर्मान्तरजन्यपुण्यविशेष-सम्पत्तिर्हेतुः, विघ्नस्थलीयारब्धकर्मोत्पत्तौ मङ्गलजन्यमदृष्टं स्वोत्पत्त्यवच्छेदक-जातीयत्वसम्बन्धेन फलीभूतारब्धकर्मोत्पत्त्यधिकरणशरीरनिष्ठतया हेतुरित्यर्थः, शिष्टाचारानुरोधादिति भावः ।

नन्वेवं येन तत्कर्मान्तरं मङ्गलञ्चोभयमेव कृतं तस्य विनिगमकाभावात् परस्परविरुद्धकार्यद्वयप्रसङ्गः द्वयोरेव कारणसत्त्वादित्यत आह **व्रीहियववदिति** । तत्र यथा परस्पराभावविशिष्टत्वेन व्रीहिकरणकयवकरणकयागयोः कारणत्वम्, तथा प्रकृतेऽपि विघ्नस्थलीयेतरसमाप्तौ स्वोत्पत्त्यवच्छेदकजातीयत्वसम्बन्धावच्छिन्नप्रति-योगिताकमङ्गलजन्यपुण्यविशेषाभावविशिष्टकर्मान्तरजन्यपुण्यविशेषत्वेन कारणत्वम् । विघ्नस्थलीयसमाप्तौ च कर्मान्तरजन्यपुण्यविशेषाभावविशिष्टमङ्गलजन्यपुण्य-विशेषत्वेन कारणत्वम्, वैशिष्ट्यञ्च एककालावच्छेदेन एकशरीरवृत्तित्व-मित्यर्थः । अत एव कृतेऽपि साङ्गे मङ्गले क्वचित् फलाभावः, तत्र फलबलेन कर्मान्तरजन्यपुण्यविशेषस्य कल्पनादिति भावः । **तत्सत्त्वसम्भावनयेति** जन्मान्तरीय-कर्मान्तरजन्यपुण्यसत्त्वसम्भावनयेत्यर्थः । एकाभावविशिष्टापरस्यैव फलजनकत्वा-दिति भावः । **यवप्रयोगे** यवकरणकयागे, **उभयस्य** मिलितस्य, **अशास्त्रार्थत्वात्** शास्त्रबोधितफलाजनकत्वात् । एतच्चोपलक्षणम्, शिवपूजादिकर्मान्तरमङ्गलोभय-

दर्पणः

शिखेति। शिखाबन्धनादिजन्याङ्गापूर्वादावित्यर्थः। अत्र कल्पेऽतिशयपदं कार्यसामान्यपरमेव, ध्वंसादौ तत्त्वेन जनकत्वाभावादिति। वेदबोधितेत्यादिविशेषण-द्वयमिहापि देयम्।

ननु मङ्गलजन्यापूर्वाप्रसिद्धौ पक्षाप्रसिद्धया कथमापादनमिति चेत्—न। मङ्गलं यदि साङ्गप्रधानत्वे सति शब्दबोधितनाशकानाश्यापूर्वद्वारकं स्यादावश्यकफलकं स्यादित्यापादनात्। अप्रयोजकत्वं निरस्यति—फलेति मूलम्।

माथुरी

करणादपि समाप्तिदर्शनाद्, विघ्नस्थलीयत्वस्योक्त[1]क्रमेणान्यथासिद्धिसम्पादकतया अ[2]ननुगततया च कार्यतावच्छेदकत्वासम्भवाच्चेत्यपि बोद्धव्यम्।

ननु व्रीहियवादिविकल्पस्थले कथं कार्यकारणभावः? एकजातीयदर्शजन्यापूर्वविशेषे तज्जन्यस्वर्गविशेषे चोभयोः प्रत्येकं कारणत्वे व्यभिचाराद् एकस्मादपि तादृशकार्यविशेषोत्पत्तेः। न चोभयत्र दर्शजन्यतावच्छेदकं वैजात्यद्वयमस्ति, तदवच्छिन्नं प्रत्येव प्रत्येकं हेतुत्वं तृणादिवदिति वाच्यम्; उभयकरणकयागादेरपि फलोत्पत्त्यापत्तेः। न चेष्टापत्तिः, अशास्त्रार्थत्वात्। भिन्नभिन्नावच्छिन्नं प्रति कारणतापि यदि वैकल्पिकी, तदा अश्वमेधवाजपेययोः स्वर्गजनकताया अपि तथात्वापत्तेः। अथ व्रीहिकरणकयवकरणकयोरुभयोरेव दर्शात्मकत्वादपूर्वविशेषं प्रति स्वर्गविशेषं प्रति च दर्शत्वेनैवोभयोरनुगतहेतुता, दर्शत्वञ्च जातिविशेषः। न चैवमुभयकरणकदर्शादपि फलोदयप्रसङ्ग इति वाच्यम्, जनकतावच्छेदकदर्शत्वस्य तद्व्यावृत्तत्वात्। एकधर्मावच्छिन्नं प्रत्युभयोर्जनकत्वमेव वैकल्पिककारणता। अत एव अश्वमेधवाजपेययोर्न विकल्प इति चेत्, न; उभयकरणकेऽपि दर्शव्यवहारात्, तत्रापि दर्शत्वसत्त्वात्। न च दर्शत्वेन न कारणता किन्तूभयकरणकदर्शव्यावृत्तेन दर्शत्वव्याप्यजातिविशेषेण, न हि दर्शत्वस्य कारणतावच्छेदकत्वपर्यन्तं वेदो बोधयतीति वाच्यम्; कारणतावच्छेदकैक्येऽपि यदि वैकल्पिककारणता, तदा दण्डयोर्घटजनकत्वस्यापि तथात्वप्रसङ्गात्, परस्परविरुद्धवैजात्याश्रययोर्द्वयोर्वैकल्पिककारणतास्थले एकरूपेण कारणत्वस्य वक्तुमशक्यत्वाच्च।

अत्राहुः—व्रीहिकरणकयागयवकरणकयागयोरुभयोर्जन्यतावच्छेदकमपूर्वनिष्ठवैजात्यद्वयमस्ति, अतो न परस्परं व्यभिचारः। कारणत्वञ्च तदुभयावच्छिन्नं

१. कर्मान्तरजन्यपुण्यविशेषसत्त्वसम्भावनया तादृशपुण्यादेव समाप्तेरुत्पत्तिसम्भवेन मङ्गलत्वमन्यथासिद्धमिति भावः।

२. नानाविधस्य विघ्नस्यानुगतानतिप्रसक्तरूपशून्यतयेत्यर्थः।

दर्पणः

आपत्तिमाशङ्क्याह—न चैवमिति मूलम्। आगन्तुकेति मूलम्। प्रतिकृत्यादि-जनितविघ्नेनेति शेषः।

ननु प्रतिकृत्यादिजनितविघ्नान्तरेण प्रतिरुद्धत्वात् स्वरूपासिद्धिरित्यस्वरसात्—किञ्चेति मूलम्। तत्रास्वरसमाह—मेघेति।

तर्हि तत्सम्भावनयेति मूलम्। तत्र शङ्कते—अत्रेति। एकविषयत्वाभावात् एकधर्मावच्छिन्नोपस्थितिविषयत्वाभावात्। अतोऽग्रे व्यवस्थाप्यस्य विकल्पे भिन्न-विषयत्वस्य न विरोधः। विकल्पेऽपि एकधर्मावच्छिन्नं प्रत्येव द्वयोर्जनकत्वमित्येक-देशिमतेन वा शङ्क्येयम्।

माथुरी

प्रति प्रत्येकं व्रीहिकरणकयागाभावविशिष्टयवकरणकयागत्वोपकरणकयागाभाव-
विशिष्टव्रीहिकरणकयागत्वाभ्याम्, अतो नोभयकरणकयागादपूर्वोत्पत्तिः; न
वाश्वमेधवाजपेययोः कारणतापि वैकल्पिकी, एकाभावविशिष्टापरत्वेन कारणताया
एव तथात्वात्। व्रीहियवकरणकत्वञ्च तज्जन्यपुरोडाशविषयकत्वं तच्च दर्शनिष्ठ-
परस्परव्यावृत्तजातिद्वयपरिचायकम्। न च परस्पराभावविशिष्टत्वेन कारणत्वे
व्रीहिकरणकदर्शाव्यवधानकृतयवकरणकदर्शादपूर्वानुत्पत्तिप्रसङ्गः[1], उत्पत्तिसम्बन्धेन
यागादेरदृष्टजनकतया क्षणविलम्बस्य[2] वक्तुमशक्यत्वादिति[3] वाच्यम्; बहुतर-
व्यापारसाध्यतया अव्यवधानेन तादृशद्वयोत्पत्तेरसम्भवात्। न च विशिष्टस्य
कारणतावच्छेदकत्वे विशेष्यविशेषणभावे विनिगमकाभावेन गुरुतरकार्यकारण-
भावचतुष्टयापत्तिरिति वाच्यं "व्रीहिभिर्यजेत" इत्यादिश्रुतेरेव विनिगमकत्वात्,
तदृशश्रुत्या यागस्यैव कारणत्वबोधनात्, न त्वभावस्य[4]। न च तथापि
व्रीहिकरणकयागाभावादिविशिष्टत्वयवकरणकयागत्वाद्योर्धर्मयोर्विशेष्यविशेषणभावे विनि-
गमकाभाव[5] इति वाच्यम्, लाघवात् तयोरेवैकत्र द्वयमिति न्यायेनैव यागनिष्ठतया
व्यासज्ज्यवृत्त्यवच्छेदकत्वाभ्युपगमात्। न च परस्परव्यावृत्तवैजात्यद्वयस्य कार्यताव-
च्छेदकत्वे वाजपेयाश्वमेधयोरिव व्रीहिकरणकयवकरणकयोरुभयोरेव तुल्यवदनुष्ठा-
नापत्तिरिति वाच्यम्, तादृशापूर्वयोर्द्वयोरेव कामनासत्त्वे इष्टापत्तेः।

---

यागोत्पत्तिक्षणं यावत्पूर्वयागस्य सत्त्वेन
१. यागद्वितीयक्षणेऽपूर्वजन्यायामुत्पत्तिप्रसङ्गो व्रीहिकरणकयागाभावविशिष्टयवकरणकयागस्याभावादित्याशयः।
२. यागतृतीयक्षणेऽदृष्टोत्पत्तिस्वीकारस्येत्यर्थः।
३. द्वितीयक्षणे यागस्योत्पत्तिसम्बधेनासत्त्वादित्यभिप्रायः।
४. अतो मानाभावादेकयागविष्टिस्यापरयागाभावस्य हेतुत्वमसम्भवदुक्तिकमिति भावः।
५. तयोरुभयोर्याग एव विद्यमानतया विनिगमनाऽसम्भवादित्याशयः।

## दर्पणः

**न वैकल्पिकत्वेनेति**। तथा च वैकल्पिककारणतानभ्युपगमादेकदेशिना विकल्पपदेन भिन्नभिन्नकार्यजनकत्वमात्रस्याभिधानात् तर्हीत्यादिमूलमसङ्गतमिति शङ्कार्थः।

**अनवच्छेदकतयेति**। अन्यथासिद्धिभिया समाप्तित्वेनोपस्थितां समाप्तिं प्रत्येव मङ्गलस्य प्रथमं हेतुत्वग्रहो न तु विघ्नाभावपूर्वकसमाप्तित्वेनेति भावः।

**विघ्नाभावापेक्षायामिति**। विघ्नध्वंसजन्यसमाप्तित्वस्यावच्छेदकत्वे आवश्यकविघ्नध्वंसस्यैव द्वारत्वेऽपूर्वे मानाभावेनापूर्ववादिनामेकदेशिनां नेयं शङ्का घटत इत्यर्थः।

## माथुरी

केचित् तादृशवैजात्यद्वयावच्छिन्नं प्रति प्रत्येकं लाघवाद् व्रीहिकरणकयागत्वयवकरणकयागत्वाभ्यामेव कारणत्वम्, न तु परस्पराभावविशिष्टत्वेन व्यासज्ज्यवृत्त्यवच्छेदकतायाः सिद्धान्तासिद्धत्वाद् गौरवाच्च। परस्परकार्यतावच्छेदकावच्छिन्नापूर्वं प्रति परस्परस्य प्रतिबन्धकतया च नोभयकरणदर्शादपूर्वोत्पत्तिः। न चैवमतिरिक्तप्रतिबध्यप्रतिबध्यकभावान्तरकल्पने गौरवमिति वाच्यम्, तस्य कार्यकारणभावग्रहोत्तरकल्प्यत्वेन फलमुखत्वात्। यत्र परस्परं परस्परकार्यतावच्छेदकावच्छिन्नं प्रति प्रतिबन्धकं तत्रैव वैकल्पिकी कारणता। तेनश्वमेधवाजपेययोर्जनकता न वैकल्पिकी। न चैवम् तत्तदभावव्याप्यपरामर्शयोर[1]प्यनुमितिं प्रति कारणतापि वैकल्पिकी स्यादिति वाच्यम्, तयोः परस्परकार्यतावच्छेदकावच्छिन्नं[2] प्रति अप्रतिबन्धकत्वाद् विशिष्टबुद्धित्वस्यैव[3] तयोः प्रतिबध्यतावच्छेदकत्वादित्याहुः।

यत्तु दर्शजन्यस्वर्गविशेषनिष्ठमेवोभयजन्यतावच्छेदकं जातिद्वयम्, परस्परस्य परस्परकार्यतावच्छेदकावच्छिन्नस्वर्गं प्रति प्रतिबन्धकत्वान्नोभयकरणकदर्शात् स्वर्गोत्पत्तिरिति वदन्ति, तदसत्; उभयकरणकदर्शादपि स्वर्गोत्पत्त्यापत्तेः, यागस्याशुविनाशितय स्वर्गोत्पत्तिसमये प्रतिबन्धकासत्त्वात्। परस्परजन्यापूर्वस्य प्रतिबन्धकत्वे च व्रीहिकरणकदर्शोत्तरकृतयवकरणकर्शात् स्वर्गानुत्पत्तिप्रसङ्गात्।

अन्ये तु सामान्यतो दर्शत्वेनैव व्रीहिकरणकदर्शयवकरणकदर्शयोरुभयोरपूर्वविशेषं प्रति स्वर्गविशेषं प्रति च हेतुत्वम्, न तु तयोर्विशेषतोऽपि हेतुत्वम्,

---

१. तद्व्याप्यतदभावव्याप्यपरामर्शयोरित्यर्थः।

२. तत्साध्यकतदभावसाध्यकानुमितित्वावच्छिन्नमित्यर्थः।

३. उपनीतप्रत्यक्षानुमितिशब्दबोधादिसारण्यानुरोधादिति भावः।

जन्मान्तरीयपुण्यसम्पत्तिस्तत्र हेतुरिति चेत्, न; तथापि व्यभिचारात्। क्वचित् पुण्यसम्पत्तिः, क्वचिन्मङ्गलं हेतुरिति व्रीहि-यववद्विकल्प एवेति चेत्, तर्हि तत्सत्त्वसम्भावनया नियतं मङ्गलानुष्ठानं न स्याद् यवप्रयोगे व्रीहेरिव, विकल्पे चोभयस्याशास्त्रार्थत्वात्।

ननु विधिवाक्यं न फलनियतपूर्वसत्त्वं बोधयति, किन्तु मङ्गलात् फलावश्यम्भावमिति चेत्, न; इष्टसाधनत्वस्य विध्यर्थत्वात्। अथान्वय-

आलोकः

ननु जातिभेदकल्पनायामविशेषादश्वमेधवाजपेययोः स्वर्गजनकत्वे किन्न विकल्पः। मैवम्। वाशब्देनान्यतरकोटिप्रतिक्षेपवाचिना यत्रान्यतरसत्त्वमपरकार्योत्पत्तिप्रतिबन्धकं तत्र विकल्पो नेतरस्मिन्निति वस्तुस्थितिरिति।

दर्पणः

यद्यपि समाप्तिकामो मङ्गलमाचरेति मङ्गलस्य समाप्तित्वेनोपस्थितं प्रति कारणताग्रहात् मङ्गलाप्रयुक्तविघ्नविरहस्थलीयसमाप्तौ तदनुरोधेन सुकृतकारणताबोधकश्रुतिकल्पनात् शङ्का सम्भवत्येव तथाप्यवश्यककल्प्यप्रतिबन्धकसंसर्गाभावेनान्यथा-सिद्धेः श्रुतेः प्रयोजकत्वमात्रपरतया हेतुताग्राहकमानाभावच्च नायं कल्प इति भावः।

मैवमिति। परस्पराभावसहकृतयोर्द्वयोर्यत्र कार्यविशेषौ प्रति जनकत्वं परस्पराभावकालीनौ कार्यविशेषौ प्रति वा यत्र द्वयोर्जनकत्वं तत्र विकल्पः। स चायं तत्रैव

माथुरी

किन्तु दर्शसामान्यजन्यतावच्छेदकापूर्वनिष्ठवैजात्यव्याप्यं व्रीहिकरणकदर्शयवकरणक-दर्शयोः प्रतिबध्यतावच्छेदकं परस्परव्यावृत्तवैजात्यद्वयम्। तेन सामान्यसामग्रीसत्त्वेऽपि प्रतिबन्धकाभावरूपविशेषसामग्र्यभावादेव नोभयकरणकदर्शात् फलावाप्तिः।

वस्तुतस्तु प्रत्येकं व्रीहिकरणकदर्शत्वयवकरणकदर्शत्वाभ्यां प्रतिबन्धकतापि न वाच्या, प्रतिबध्यतावच्छेदकवैजात्यद्वयकल्पने प्रतिबध्यप्रतिबन्धकभावद्वयकल्पने च महागौरवात्। परन्तु दर्शसामान्यजन्यतावच्छेदकापूर्वनिष्ठवैजात्यावच्छिन्नं प्रत्येव व्रीहियवोभयकरणकदर्शत्वेन प्रतिबन्धकत्वम्। अत एवाव्यवधानेन व्रीहियवप्रत्येक-मात्रकरणकयागद्वयसम्भवेऽपि द्वितीयादपूर्वोत्पत्तौ न बाधकम्। न च तवापि व्रीहियवोभयकरणकयागाव्यवहितोत्पन्नप्रत्येकमात्रकरणकयागान्नापूर्वोत्पत्तिः स्याद्, उत्पत्ति-सम्बन्धेनयागादेरपूर्वजनकतया क्षणविलम्बस्यापि वक्तुमशक्यत्वादिति वाच्यम्, इष्टत्वादुभयकरणकयागानन्तरं क्षणैकविलम्बोत्पन्नप्रत्येकमात्रकरणकयागादेवा-पूर्वोत्पादादित्याहुः।

**व्यतिरेकाभ्यां तद्ग्रहे व्यभिचारो दोषाय, न त्वागमेन तद्ग्रहे[1]। तदुक्तम्–"आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषाय" इति। अत**

आलोकः

**यद्यपि वाशब्दोऽत्र नास्ति तथाप्येकसाधनावरुद्धतया विकल्पमुख्या एवान्यसाधनाकाङ्क्षायाः सम्भवेन तथैव हेत्वन्तरान्वयादिति भावः।**

दर्पणः

**यत्रैकधर्मावच्छिन्नोपस्थितिकं कार्यं प्रति एकं कारणमुक्त्वा वाशब्दप्रयुक्तमेकमेकप्रकरणाम्नातं वा कारणान्तरं विधीयते। न चैतद्वाजपेयादिषु, वाशब्दाभावादेकप्रकरणानाम्नानाच्चेति प्रघट्टकार्थः।**

माथुरी

यत्तु यागं प्रत्येव व्रीहियवयोर्वैकल्पिकी कारणतेति, तदसत्; स्वत्वध्वंसजनिकाया 'अनेन देवताप्रीतिर्भवतु' इत्याकारिकाया 'इदं द्रव्यं देवताया भवतु' इत्याकारिकाया वा इच्छाया यागत्वेन, तत्र व्रीह्यादेर्हेतुत्वे मानाभावाद् **व्रीहिभिर्यजेत** इत्यादौ व्रीह्यादिजन्यपुरोडाशविषयकत्वस्यैव तृतीयार्थत्वात्, कृतावेव तृतीयाविभक्तेः शक्ततया जन्यत्वार्थकत्वेऽपि लाक्षणिकत्वाविशेषात्। यागं प्रति व्रीह्यभावविशिष्टयवत्वादिना कारणत्वस्य व्रीहित्वादिना प्रतिबन्धकत्वस्य वा वक्तुमशक्यत्वाच्च। अनुगताननतिप्रसक्तवैशिष्ट्यस्य प्रतिबन्धकतावच्छेदकसम्बन्धस्य च दुर्वचत्वादिति संक्षेपः।

**नन्विति, विधिवाक्यम्** मङ्गलबोधकविधिवाक्यम् **फलं** समाप्तिः। **किन्त्विति। मङ्गलात्** स्वजन्यादृष्टोत्पत्त्यवच्छेदकत्वसम्बन्धेन मङ्गलसत्त्वात्। यद्वा स्वोत्पत्त्यवच्छेदकत्वसम्बन्धेन मङ्गलजन्यादृष्टसत्त्वात् **फलावश्यम्भावं** [2]तदितरसकलकारणसमवधाने सति फलावश्यम्भावम्, तथा च व्यतिरेकव्यभिचारो[3] न दोषायेति

१. इष्टसाधनताग्रह इत्यर्थः। तत्सत्त्वे तदितरयावत्कारणसत्त्वेऽवश्यं कार्यमित्यन्वयव्याप्तेः, तदभावे कार्याभाव इति व्यतिरेकव्याप्तेश्च निश्चयतो जायमाने कारणताग्रहे 'तदभावेऽपि कार्यम्' इति व्यतिरेकव्यभिचारज्ञानं विरोधि भवितुमर्हति, तत्सत्त्वे उक्तव्यतिरेकव्याप्तिनिश्चयस्य दुर्घटतया कारणबाधात्। परमागमजन्ये कारणताग्रहे तस्य विरोधित्वमयुक्तम्, तत्रोक्तव्याप्तिनिश्चयस्यानपेक्षणादिति भावः।

२. मङ्गलेतरसकलसमाप्तिकारणसमवधाने मङ्गले सत्यवश्यं समाप्तिरूपं फलं जायत इति भावः।

३. 'यत्र मङ्गलं नास्ति तत्र समाप्तिर्नास्ति' इति मङ्गलाभावे समाप्त्यभावस्य व्याप्तेर्विरोधि 'मङ्गलाभावेऽपि नास्तिकादौ समाप्तिः' इत्येवंविधं व्यतिरेकव्यभिचारज्ञानं न दोषः, उक्तव्याप्तेरेवानभिमतत्वात्। अभिमतायाः स्वेतरयावत्समाप्तिकारणसमवहिते मङ्गले सत्यवश्यं समाप्तिरिति व्याप्तेस्तु क्वचिन्मङ्गलाभावे समाप्तेरुत्पत्तावप्यक्षुण्णत्वाच्चेत्याशयः।

**एव यागादेः स्वर्गसाधनतेति चेत्, न; नियतपूर्वसत्त्वस्य[1] ग्राह्यस्याभावादागमेनाऽपि बोधयितुमशक्यत्वात् । यागजनितस्वर्गे कारीरीजनितवृष्टौ च जातिविशेष एवास्ति[2] ।**

**अपरे तु मङ्गलस्यारब्धनिर्वाहकत्वं विघ्नसंसर्गाभावद्वारा, तथैव**

दर्पणः

**केचित्तु** यागाकाङ्क्षाप्रवृत्तिविधिबोध्यत्वेन द्वयोरनुगतेन रूपेण एकजातीयं प्रत्येव जनकत्वं वैकल्पिककारणतामाहुः—तन्न। यवप्रयोगे व्रीह्युपादानप्रसङ्गादिति ।

ननु वैकल्पिककारणद्वयं कथमेकत्र न प्रयुज्यत इत्यत आह—**विकल्प** इति मूलम् । तत्कारणद्वयस्य परस्परप्रतिक्षेपणैव प्राप्ततया परस्पराभाववत एव जनकत्वादित्यर्थः । **इष्टेति** मूलम् । साधनत्वञ्च नियतप्राक्तत्त्वघटितम् । तद्ग्रहे व्यतिरेकव्यभिचारग्रहो विरोध्येवेति भावः ।

**अशक्यत्वादिति** मूलम् । अयोग्यतानिश्चयस्य शाब्दग्रहपरिपन्थित्वादिति भावः । **तथैवेति** । विकल्पनेत्यर्थः ।

माथुरी

भावः । **तद्ग्रहे** कारणताग्रहे, **व्यभिचारः** व्यतिरेकव्यभिचारज्ञानम्, **आगमेन** वेदेन, **तदुक्तमिति** द्रव्यकिरणावल्यामाचार्यचरणैरिति शेषः । **आगममूलत्वादिति** । **आस्यार्थस्य** मङ्गले समाप्तिकारणत्वग्रहस्य, **आगममूलत्वात्** आगमजन्यत्वाद्, **व्यभिचारः** व्यभिचारज्ञानम्, **न दोषाय** इति तदर्थं इत्यभिमानः । **स्वर्गसाधनता** वेदेन स्वर्गसाधनताग्रहः, अन्यथा गङ्गास्नानादितोऽपि स्वर्गोत्पत्त्या व्यभिचारेण कारणताग्रहो न स्यादिति भावः । **आगमेनापि बोधयितुमशक्यत्वाद्** आगमेन प्रमापयितुमशक्यत्वाद्, आगमजन्यज्ञानस्याप्रामात्वापातादिति यावत् । नन्वेवं यागादौ कथं वेदेन [3]स्वर्गसाधनप्रमा इत्यत आह **यागजनितेति** । **कारीरी** इतीदं परमतेन । वस्तुतस्त्ववग्रहनिवृत्तेरेव तत्फलत्वादिति बोध्यम् ।

मङ्गलमपूर्वं जनयति, तेन चापूर्वेण विघ्नसंसर्गभावो जायते । विघ्नसंसर्गाभावाच्च समाप्तिरिति क्रमेण स्वजन्यापूर्वजनितविघ्नसंसर्गाभावद्वारा मङ्गलस्य समाप्तिहेतुत्वमिति केचिन्मीमांसका वदन्ति, तन्मतमुपन्यस्यति **अपरे त्विति** । **निर्वाहकत्वं** समापकत्वम्, **विघ्नसंसर्गाभावेति** स्वजन्यापूर्वजनितविघ्नसंसर्गाभावद्वारेत्यर्थः । **तथैव** विघ्नसंसर्गाभावत्वेनैव, **प्रतिबन्धकाभावस्य** विघ्नाभावस्य,

---

१. व्यतिरेकव्यभिचारज्ञान कारणताग्राहकव्यतिरेकव्याप्तिनिश्चयविरोधितया न कारणताग्रहे बाधकम्, किन्तु साक्षादेव तस्य ग्राह्यकारणताघटककार्यनियतपूर्वसत्त्वाभावावगाहित्वादतस्तत्सत्त्वे आगमतोऽपि कारणताग्रहो न भवितुमर्हतीति भावः ।

२. यागो विजातीय एव स्वर्गे कारीरीयागश्च विजातीयायामेव वृष्टौ हेतुः अतस्तयोरभावेऽन्यजातीयस्वर्गवृष्ट्योरुत्पत्त्याऽपि न तयोस्तादृशस्वर्गवृष्टिजनकत्वग्रहे किञ्चिद्बाधकम् ।

३. स्वर्गसाधनताग्रह इति ख० ।

**प्रतिबन्धकाभावस्य हेतुत्वात्[1]। स चाभावः सतो विघ्नस्य ध्वंसोऽनागतस्यानुत्पादश्च कर्मनिर्वाहसमस्थायी। विघ्नकारणविनाशद्वारा प्रागभावस्य साध्यत्वम्, यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके**

आलोकः

यस्मिन् सतीति। **यदा यदवच्छिन्ने सति यदधिकरणक्षणोत्तरक्षणे यदधिकरणत्वम्, यदा यदवच्छिन्नाधिकरणक्षणोत्तरक्षणे वा यदवच्छिन्नाधिकरणत्वम्, तदनधिकरणक्षणोत्तरक्षणे च तदनधिकरणत्वं तदा तदेव तदवच्छिन्नस्य तदवच्छिन्नजन्यत्वमित्यर्थः।**

दर्पणः

**यदा यदवच्छिन्ने सतीति**। यस्यामवस्थायां यासु यावतीषु व्यक्तिषु सतीष्विति यावत्। यज्जातीयाधिकरणक्षणोत्तरक्षणे यज्जातीयाधिकरणत्वं तस्यामेवावस्थायां तासु तावतीषु व्यक्तिषु सतीष्विति यावत्। यज्जातीयानधिकरणक्षणोत्तरक्षणे यज्जातीयानधिकरणत्वं तज्जातीयजन्यत्वं तज्जातीयस्येत्यर्थः। अत्रान्वयव्यतिरेकमात्रोक्तौ रासभजन्यतापि घटे स्यादिति एकस्यामवस्थायामन्वयव्यतिरेकावुक्तौ। तदपि यथाश्रुत-

माथुरी

**'अनुत्पादः'** प्रागभावः, **'कर्मनिर्वाहसमयस्थायी'** कर्मसमाप्तिकालस्थायी। ननु विघ्नप्रागभावस्य किंविधया मङ्गलजन्यत्वमित्यत आह **'विघ्नकारणे'**ति। **'विघ्नकारणम्'** मङ्गलप्रागभावः, तद्ध्वंसविधयेत्यर्थः। **'प्रागभावस्य'** विघ्नप्रागभावस्य, **'वाध्यत्वम्'** मङ्गलजन्यत्वम्, [2]यथाश्रुते विघ्नकारणस्य निषिद्धकर्मणो मङ्गलेन नाशासम्भवादलग्नकतापत्तेः।

ननु तथापि प्रागभावस्याजन्यत्वात् कथं मङ्गलजन्यत्वमित्यत आह **'यस्मिन् सती'**ति। **'असत्त्वम्'** व्यतिरेकः। एवञ्च मङ्गलसत्त्वे विघ्नप्रागभावसत्त्वं विघ्नप्रतिबन्धकसत्त्वेन विघ्नानुत्पत्तेः, मङ्गलव्यतिरेके च विघ्नप्रागभावव्यतिरेकः प्रतिबन्धकाभावसत्त्वेन विघ्नप्रागभावस्तज्जन्य इति भावः।

ननु यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वमित्यत्र यद्व्यतिरेके यस्यासत्त्वमित्यत्र च सति सप्तम्याः सामानाधिकरण्यमात्रमर्थो व्यापकत्वं वा ?

नाद्यः, अतिप्रसङ्गात्; सामग्रीक्षणे उदासीनसत्त्वेऽपि कार्यसत्त्वात्, यत्किञ्चित् कारणाभावस्थले उदासीनाभावादपि कार्याभावात्। न च स्वस्वव्याप्येतरयावत्कारणसमवधाने यत्सत्त्वे यत्सत्त्वं यद्व्यतिरेके यद्व्यतिरेक इति वक्तव्यम्; स्वपदञ्च कारणत्वाभिमतपरमिति वाच्यम्, विघ्नप्रागभावादेः कारणाभावेनाव्य-

---

१. कारणत्वादिति ख०।
२. विघ्नकारणतया मङ्गलप्रागभावस्याग्रहणे इत्यर्थः।

आलोकः

अस्ति च दण्डेतरयावद्घटहेतुसमवधानकाले दण्डजातीयाधिकरक्षणोत्तरक्षणे घटजातीयाधिकरणत्वं तदनधिकरणक्षणोत्तरक्षणे च घटजातीयानधिकरणत्वमिति तद्वदेव यावद्विघ्नहेतुसाकल्ये मङ्गलत्वावच्छिन्नाधिकरणक्षणोत्तरक्षणे विघ्नप्राग-

दर्पणः

मनुपपन्नम्। वेमाभावाद्युदासीनावस्थामेकामादाय रासभे उभयसत्त्वात्। अतो यासु यावतीष्वित्युक्तम्।

माथुरी

प्त्यापत्तेः[1], यत्सत्त्वे यत्सत्त्वमित्यन्वयदलस्य [2]व्यर्थतापत्तेश्च। नह्यकारणस्य स्वेतरयावत्कारणकाले स्वाभावेन कार्याभावः।

नान्त्यः,[3] विघ्नप्रागभावादेर्मङ्गलाद्यजन्यत्वापत्तेस्तद्व्यतिरेकेऽपि[4] तस्यानादित्वेन[5] पूर्वक्षणे सत्त्वात्, घटाद्यव्याप्त्यापत्तेश्च दण्डादिविरहेऽपि घटाद्यनुवृत्तेः। न च व्यतिरेकः प्रागभावः,[6] ज्ञानादेरात्माद्यजन्यत्वापत्तेः[7], प्रागभावेऽव्यप्त्यापत्तेश्च[8]। अत[9] एवासत्त्वमुत्पत्तिव्यतिरेक इति परास्तम्। किञ्च, यथा तथास्तु व्यतिरेकपदार्थोऽसत्त्वपदार्थश्च सर्वथैव [10]युगपदुत्पन्नविनष्टेष्वन्यथासिद्धेषु[11] चाति-

१. विघ्नप्रागभावादेरकारणकत्वेन तत्कारणत्वाभिमतस्य तत्कारणस्य चाप्रसिद्धया स्वस्वव्याप्येतरयावत्कारणघटितोक्तजन्यत्वस्य दुर्घटतया तत्राव्याप्तिरिति भावः।

२. यद् यस्य कार्यस्य न कारणं तस्याभावेऽपि तदितरतत्कार्ययावत्कारणसमवधाने तत्कार्यव्यतिरेकस्याभावेन व्यतिरेकदलादेव तत्कार्ये तदकारणजन्यत्वापत्तेर्वारणसम्भवेन 'यत्सत्त्वे यत्सत्त्वम्' इत्यन्वयदलं व्यर्थमित्याशयः।

३. सति-सप्तम्या व्यापकत्वमर्थ इति पक्ष इत्यर्थः।

४. मङ्गलव्यतिरेकेऽपीत्यर्थः।

५. विघ्नप्रागभावस्येत्यर्थः।

६. तथा च दण्डादिव्यतिरेके घटादिप्रागभावस्य सत्त्वान्न घटादावव्याप्तिरिति भावः।

७. आत्मव्यतिरिक्ते ज्ञानादिप्रागभावस्यासत्त्वादिति हृदयम्।

८. प्रागभावस्य प्रागभावाभावादित्याशयः।

९. प्रागभावेऽव्याप्त्यापत्तेरेवेत्यर्थः।

१०. यत्कार्यव्यवत्या सहैव ये पदार्था उत्पद्यन्ते विनश्यन्ति च, तेषु तत्कार्यकारणत्वे सत्त्वस्य तत्कार्यकारणव्यतिरेकेऽसत्त्वस्य च सत्त्वेन तत्कार्यकारणजन्यत्वापत्तिरिति भावः।

११. अन्यथासिद्धिनिरूपकेषु इत्यर्थः। तथा च घटादौ दण्डत्वतद्व्याप्येतरयावद्घटकारणसत्त्वे दण्डत्वादिसत्त्वे सत्त्वस्य दण्डत्वादिव्यतिरेकेऽसत्त्वस्य च सत्त्वेन दण्डत्वादिजन्यत्वापत्तिरित्याशयः।

दर्पणः

अत्र चासम्भववारणाय स्वस्वव्याप्यातिरिक्तास्विति विशेषणं देयम्। अन्यथा यस्यामवस्थायां दण्डादिव्यक्तिषु सतीषु दण्डानन्तरं घटसत्त्वं तस्यामवस्थायां दण्डानधिकरणक्षणोत्तरक्षणे घटासत्त्वमप्रसिद्धं स्यात्।

माथुरी

व्याप्तिः, स्वस्य स्वजन्यतापत्तिश्च [1]अन्वयदलव्यर्थतापत्तिश्च।

अत्राहुः—यदधीनो यस्य समयसम्बन्धो यद्व्यतिरेकप्रयुक्तो यद्व्यतिरेकस्तदेव तज्जन्यमित्यर्थः अधीनत्वञ्च **'घटस्यैतत्समयसम्बन्धो दण्डाधीन'** इत्यादिविलक्षणप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः। प्रयुक्तत्वमपि **'दण्डाभावाद् घटाभाव'** इत्यादिप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः। न चान्यतरदलवैयर्थ्यम्, न ह्यकारणाधीनं कार्यसत्त्वम्, अकारणाभावप्रयुक्तो वा कार्याभाव इति वाच्यम्, [2]लक्षणद्वये तात्पर्यात्।

वस्तुतस्तु स्वस्वव्याप्येतरप्रागभावनाशकसकलसमवधाने सति यद्व्यतिरेकेऽग्रिमक्षणे यस्य व्यतिरेकः, यस्य सत्त्वेऽग्रिमक्षणे यस्य सत्त्वम्, तत्तज्जन्यत्यिर्थः। स्वपदं कारणत्वेनाभिमतपरम्, अस्ति च क्वचिद्दण्डदण्डव्याप्येतरघटप्रागभावनाशकसाकल्ये दण्डव्यतिरेकेऽग्रे घटव्यतिरेकः, दण्डसत्त्वे च घटसत्त्वमिति स तत्साध्यः। रासभादौ तु नैवम्, रासभतद्व्याप्येतरसकलघटप्रागभावनाशकस्य यावद्घटोत्पादकस्य समवधाने सति क्वचिदपि रासभव्यतिरेकेण घटव्यतिरेकासिद्धेः। अत्र प्रागभावपदं न [3]साध्यत्वेनाभिमतप्रागभावपरम्, विघ्नप्रागभावादावव्याप्त्यापत्तेः, प्रागभावस्य प्रागभावाभावात्। न वा यत्किञ्चित्तत्प्रागभावपरमुदासीनेऽव्यतिव्याप्तेर्घटसामग्र्यभावस्थले घटप्रागभावनाशकसकलसमवधान उदासीनव्यतिरेकेणापि घटव्यतिरेकात्। न वा प्रागभावसामान्यपरम्, असम्भवात्; कुत्रापि तन्नाशकसकलसमवधानाभावात्। किन्तु साध्यत्वेनाभिमतं यत्तदितरतदीयभिन्नप्रागभावान्यप्रागभावपरम्। घटादिस्थले साध्यत्वाभिमतो घटादिः, तदितरस्तदीयभिन्नप्रागभावः[4] पटादिप्रागभावः, तदन्यो घटप्रागभाव एव। विघ्नप्रागभावस्थले तु साध्यत्वाभिमतो विघ्नप्रागभावः, तदितरस्तदीयभिन्नप्रागभावः पटादिप्रागभावः, तदन्यप्रागभावो विघ्नप्रागभाव एव।

---

१. कार्यव्यतिरेकस्याकारणव्यतिरेकव्यापकत्वाभावाद् व्यतिरेकदलेनैव कार्येऽकारणजन्यत्वापत्तेर्वारणसम्भवेनान्वयदलस्य वैयर्थ्यमिति भावः।

२. यदधीनो यस्य समयसम्बन्धः स तज्जन्य इत्येकं लक्षणम् यद्व्यतिरेकप्रयुक्तो यद्व्यतिरेकः स तज्जन्य इति चापरं लक्षणमित्याशयः।

३. साध्यत्वेनाभिमतस्य प्रागभावपरमित्यर्थः।

४. तदीयभेदवतः प्रागभाव इत्यर्थः।

दर्पणः

वस्तुतो नेदं विशेषणं देयम्। आकाशादिजन्यशब्दादिसंग्रहाय व्यतिरेकभागस्यापादनरूपत्वात्। अधिकरणत्वानधिकरणत्वे च स्वस्वव्यापारान्यतरस्य विवक्षिते। अतो न यागादिजन्यस्वर्गाद्यव्याप्तिरिति। **यदवच्छिन्ने** यज्जातीये। **सति** विद्यमाने। **यदधिकरणेति** यत्पदं तदेव तज्जन्यत्वमित्यनेन सम्बध्यते। अधिकरणं चार्थाद्यज्जातीयाधिकरणमेवेति नोक्तार्थेऽक्षरविरोधः।

माथुरी

यद्वा साध्यत्वाभिमतं यत्तन्निष्ठत्वतन्निरूपितत्वयोरन्यतराश्रयस्य [1]प्रतियोगि-
त्वस्य निरूपको यः प्रागभावः, तत्परम्। घटादिस्थले साध्यत्वाभिमतो घटादिः, तन्नि
ष्ठत्वतन्निरूपितत्वयोरन्यतराश्रयप्रतियोगित्वं घटादिनिष्ठप्रतियोगित्वमेव; तन्निरूपक-
प्रागभावो घटादिप्रागभावः। विघ्नप्रागभावस्थले तु साध्यत्वाभिमतो विघ्न-
प्रागभावः, तन्निष्ठत्वतन्निरूपितत्वयोरन्यतराश्रयप्रतियोगित्वं विघ्नप्रागभाव-
निरूपितप्रतियोगित्वमेव; तन्निरूपकप्रागभावो विघ्नप्रागभाव एव। घटप्राग-
भावनाशकसकलसमवधाने दण्डव्यतिरेक एवासिद्धः, दण्डस्यापि यावन्मध्य-
पातित्वाद् अतः 'स्वेतरेति'। घटप्रागभावनाशकचक्रभ्रम्यादिरूपदण्डव्यापार-
चक्रादिसकलकारणसमवधाने दण्डव्यतिरेके घटव्यतिरेकोऽसिद्धः, भ्रम्यादिसत्त्वे
दण्डासत्त्वेऽप्यवश्यं घटोत्पत्तेः अतः 'स्वव्याप्येतरे'ति।

न च मङ्गलतद्व्याप्येतरविघ्नप्रागभावनाशकसकलसमवधाने मङ्गल-
सत्त्व इति विरुद्धम्, मङ्गलाभावस्यापि विघ्नप्रागभावनाशकयावन्मध्यपातित्वात्;
मङ्गलस्य विघ्नप्रतिबन्धकतया तदभावस्य विघ्नोत्पादकत्वेन तत्प्रागभाव-
नाशकत्वादिति वाच्यम्, स्वाभावेतरत्वेनापि तद्विशेषणात्। मङ्गलतद्व्याप्य-
तदभावेतरविघ्नप्रागभावनाशकसकलसमवधानदशायां मङ्गलव्यतिरेके विघ्नप्राग-
भावव्यतिरेको विरुद्धः, विघ्नप्रागभावस्यापि विघ्नप्रागभावनाशकयावन्मध्य-
पातित्वात्। एवं तादृशप्रागभावनाशकसकलसमवधानदशायां दण्डसत्त्वे घटसत्त्वमपि
विरुद्धम्, घटप्रागभावस्यापि घटप्रागभावनाशकयावदन्तर्गतत्वाद्, अतोऽग्रिमक्षण इति।
अन्वयदलमात्रोपादाने उदासीनजन्यतापि घटे स्यात्, घटप्रागभावनाशक-
सकलसमवधाने उदासीनसत्त्वेऽपि घटसत्त्वाद्, अतो व्यतिरेकदलम्। व्यतिरेक-
दलमात्रोपादाने रासभादिसाध्यत्वमपि विघ्नप्रागभावे स्यात्, विघ्नप्रागभावनाशक-
सकलसमवधाने रासभव्यतिरेके सति तदनन्तरं विघ्नोत्पादेन तत्प्रागभाव-
व्यतिरेकावश्यम्भावादन्वयदलोपादानम्, तदुपादाने च यथोक्तसकलसमवधाने
रासभसत्त्वेऽपि विघ्नस्यैवोत्पादेन विघ्नप्रागभावासत्त्वान्नातिप्रसङ्गः।

1. प्रतियोगिताया निरूपकः प्रागभाव इत्यर्थः।

**चासत्त्वं तदेव तस्य तज्जन्यत्वम्, न त्वसतः सत्त्वम्, गौरवात् । अस्ति च विघ्नकारणनाशे सति विघ्नप्रागभावस्य तथात्वम् । तावति समये दुरितानुत्पादश्च न साक्षान्मङ्गलजन्य इत्यदृष्टद्वारा तथा । एवं निर्विघ्नं समाप्यतामिति कामनया तदाचारोऽपि सङ्गच्छते ।**

आलोकः

**भावत्वावच्छिन्नाधिकरणत्वं तदनधिकरणक्षणोत्तरक्षणे तत्प्रागभावानधिकरणत्वम् । तथा चोभयत्र तदा तज्जन्यत्वमविशिष्टम् । एतच्च यद्यन्यथासिद्धिसाधारणं तदा**

दर्पणः

**यदा यदवच्छिन्नाकरणेत्यादि** पाठः तत्स्पष्टार्थ एव । अत्र चावस्थैक्यवत्क्षणैक्यमपि विवक्षितम् । तेन यस्यामवस्थायां यदधिकरणं यत्क्षणोत्तरयत्क्षणे यदधिकरणत्वं

माथुरी

न च घटादेर्दण्डावयवचक्रावयवादिजन्यत्वापत्तिरिति वाच्यम्, अनन्यथासिद्धयद्व्यतिरेक इति विवक्षितत्वात् । इदञ्चानित्यानां जन्यताया लक्षणम्, अतो घटादेर्नेश्वरबुद्धयाद्यजन्यत्वापत्तिरिति संक्षेपः ।

ननु यस्मिन् सत्यग्रिमक्षणे यस्योत्पत्तिः, यद्व्यतिरेके चानुत्पत्तिः, तत्तज्जन्यमित्येव जन्यतालक्षणम्, न तु यथोक्तम् । तथा च विघ्नप्रागभावस्योत्पत्तिविरहात् कथं मङ्गलजन्यत्वमित्यत आह **न त्विति । असतः सत्त्वम्** असतः सत्त्वघटितम्, उत्पत्तिघटितमिति यावत् । विघ्नप्रागभावेऽन्वयदलं सङ्गमयति **'अस्ति चेति, विघ्नकारणेति, विघ्नकारणम्** मङ्गलप्रागभावः, तद्ध्वंसो मङ्गलं तस्मिन् सतीत्यर्थः । **तथात्वं** सत्त्वम् । **तावति समय** इति आरम्भानन्तरं यावता कालेन समाप्तिः, तावत्समयवृत्तित्वविशिष्टविघ्नप्रागभावश्चेत्यर्थः । **न साक्षादिति** मङ्गलस्याशुतरविनाशित्वेन तावत्कालानवस्थायित्वादिति भावः । **तथा** विघ्नसंसर्गाभावस्य द्वारता ।

नन्वदृष्टाभ्युपगमे तदेव साक्षात् समाप्तिजनकमस्तु, किं विघ्नसंसर्गाभावस्य द्वारत्वेनेत्यत आह **एवमिति** । संसर्गाभावस्य द्वारत्वेनेत्यर्थः । **निर्विघ्नमिति, इति कामनया** इत्युद्दिश्य, **आचारोऽपि** मङ्गले शिष्टप्रवृत्तिरपि । तथा च विघ्नसंसर्गाभावविशिष्टसमाप्त्युद्देश्यकमङ्गलगोचरशिष्टप्रवृत्तिरपीत्यर्थः । शिष्टत्वं भ्रमाजन्यत्वम् । **सङ्गच्छत** इति । अन्यथा विघ्नसंसर्गाभावस्य मङ्गलाजन्यत्वे विशिष्टसमाप्त्युद्देश्यकप्रवृत्तौ विशेषणीभूतविघ्नसंसर्गाभावस्याप्युद्देश्यतया तत्प्रवृत्तेर्नियमतोऽशिष्टत्वापत्तेः, तदुद्देश्यकतत्प्रवृत्तौ तत्साधनताज्ञानस्य हेतुतया भ्रमरूपस्य विघ्नसंसर्गाभावसाधनताज्ञानस्य तत्र हेतुत्वादिति भावः ।

**अत एव यत्र विघ्नाभावः स्वतःसिद्धः, तत्र मङ्गलस्या-**

आलोकः

**तदन्यत्वेनापि विशेषणीयम्। एतेन यथाश्रुतेऽसत्त्वस्य प्रागभावात्यन्ताभावविकल्पेन**

दर्पणः

तस्यामवस्थायां तदनधिकरणं तत्क्षणोत्तरतत्तत्क्षणे तदनधिकरणत्वं ध्येयम्। तेन दण्डादिस्थले दण्डाधिकरणक्षणाव्यवहितोत्तरक्षणग्रहणात् प्रकृते मङ्गलाधिकरणक्षणावधिकतृतीयक्षण[1]-ग्रहणाद् वैषम्यं न देयम्।

माथुरी

ननु तथापि विघ्नध्वंस एव व्यापारोऽस्तु, किमजन्यस्य विघ्नप्रागभावस्य व्यापारत्वेन? विशिष्टसमाप्त्युद्देश्यकप्रवृत्तौ विघ्नप्रागभावस्योद्देश्यत्वे मानाभावादित्यत आह **अत एवेति**। यत एव विघ्नप्रागभावस्यापि व्यापारत्वम् अत एवेत्यर्थः। **अकिञ्चित्करत्वेन** विघ्नसंसर्गाभावरूपव्यापारानुपधायकत्वेन, **वेदाप्रामाण्यमिति** विशेषणीभूतविघ्नसंसर्गाभावस्यापि मङ्गले कारणताग्राहकस्य "निर्विघ्नसमाप्तिकामो मङ्गलमाचरेत्" इति मङ्गले विशिष्टसमाप्तिसाधनताबोधकवेदस्याप्रामाण्यमित्यर्थः।

यद्यपि फलोपधायकत्वं न वेदार्थः, किन्तु स्वरूपयोग्यत्वम्; तच्च क्वचित् फलानुपधानेऽपि सम्भवति, इति कुतो वेदस्याप्रामाण्यम्? तथापि साङ्गवेदबोधितकर्मत्वव्यापकं फलोपधानम्, अतस्तदभावेन साङ्गे तस्मिन् साङ्गवेदबोधितकर्मत्वाभावः सिध्यन् तद्बोधकविधेर्वेदत्वाभावमादाय सिध्यति। वेदत्वाभावः सिध्यन् शब्दतदुपजीविप्रमाणातिरिक्तप्रमाजन्यप्रमित्यविषयार्थके तस्मिन् प्रमाणत्वाभावमादायैव पर्यवस्यतीति क्रमेण वेदस्याप्रामाण्यमिति भावः। **तत्रापि** मङ्गलेऽपि **अनागतविघ्नाभावस्य**[2] अनागतविघ्नप्रागभावोपधायकत्वस्य, **साध्यत्वात्** वेदबोधितत्वात्।

ननु मङ्गलजन्यापूर्वस्य स्वोत्पत्त्यवच्छेदकजातीयत्वसम्बन्धेन मङ्गलकर्तृशरीरनिष्ठतयैव कारणत्वं वाच्यम्, अन्यथा समवायसम्बन्धेनात्मनिष्ठतया कारणत्वे जन्मान्तरीयग्रन्थसमाप्तिमुद्दिश्यापि मङ्गले शिष्टप्रवृत्त्यापत्तेः। तथा च प्रमत्तशरीरानुष्ठितसमाप्तिः कथं स्यात्? तच्छरीरे तेन सम्बन्धेन मङ्गलजन्यापूर्वविरहादित्यत आह **सर्वे विघ्ना इति**। 'पाठः' तदनुकूलकण्ठाभिघातादिः, **तत एव** तज्जान्यापूर्वत एव, **तदाचारात्** जन्मान्तरे तदाचरणात्।

१. ततो विघ्नकारणनाशक्षणो द्वितीयः। ततः प्रागभावक्षणः तृतीयः।

२. अनागतविघ्नानुत्पादस्येति ख०, अनागतविघ्नप्रागभावस्येति ग०।

**किञ्चित्करत्वेन वेदाप्रामाण्यमिति निरस्तम्। अनागतविघ्नाभावस्य[1] तत्रापि साध्यत्वात्। "सर्वे विघ्नाः शमं यान्ति" इति यत्र विनायकस्तवपाठादौ श्रुतिमस्ति, तत्र तत एव प्रमत्तानुष्ठितसमाप्तेरनादौ संसारेऽवश्यं तदाचारात्, तथा च तेन समं मङ्गलस्य विकल्प एव।**

**यत्र च साङ्गे मङ्गले सत्यपि न फलं तत्र विघ्नभूयस्त्वादिति, तन्न; विघ्नानुत्पादस्य व्यापारत्वे मानाभावात्, संसर्गाभावत्वेन हेतुत्वात्।**

दर्पणः

नन्वेवं विघ्नप्रागभावस्य मङ्गलसाध्यता न स्यात्तद्व्यतिरेकेऽपि तस्यानादित्वेन पूर्वक्षणे सत्त्वादिति चेत्—न। साध्यत्वेन यदभिमतं तत्प्रतियोग्यनुयोगित्वरूपसम्बन्धा-

माथुरी

नन्वेवं यथोक्तसम्बन्धेन मङ्गलजन्यादृष्टं व्यभिचार्येवेत्यत आह **तथा चेति**। **मङ्गलस्य** मङ्गलजन्यापूर्वस्य **विकल्प एव** इति मङ्गलनाश्यतावच्छेदकवैजात्याक्रान्तविघ्नस्थलीयसमाप्तिं प्रति मङ्गलजन्यापूर्वं हेतुः, तादृशस्थलीयेतरसमाप्तिं प्रति च विनायकस्तवपाठादिजन्यमपूर्वं हेतुः, कारणत्वञ्च व्रीहियवकरणकयागवत् परस्पराभावविशिष्टत्वेन, तेन नोभयोरनुष्ठाने परस्परविरुद्धतत्कार्यद्वयप्रसङ्ग इत्यर्थः। न च विनायकस्तवपाठादिजन्यापूर्वस्य सामान्यतः समाप्तिमात्रं प्रत्येव हेतुत्वमस्तु, सर्वत्रान्ततो जन्मान्तरीयस्यैव तस्य सुवचत्वात्।

एवञ्च व्रीहियववत् परस्पराभावविशिष्टत्वेन कारणत्वानभ्युपगमेऽपि न क्षतिरिति वाच्यम्, सर्वत्र विनायकादिस्तत्रपाठादिजन्यापूर्वकल्पने गौरवात्, फलमुखगौरवस्यापि दोषत्वादिति भावः।

समाप्तिं प्रत्यन्वयव्यभिचारमुद्धरति **यत्रेति**। **साङ्गे** सकलवैदिकाङ्गसम्पन्ने, **न फलम्** न समाप्तिः, **विघ्नभूयस्त्वात्** भूयोजातीयविघ्नसत्त्वात्, यन्मङ्गलं कृतं तदनाश्यजातीयविघ्नसत्त्वादिति यावत्। नतिस्तुत्यादिभेदेन मङ्गलस्य विभिन्नतया मङ्गलत्वस्य सर्वसाधारणस्यैकस्य दुर्वचतया परस्परव्यावृत्तविघ्ननिष्ठवैजात्यानामेव प्रत्येकं नाश्यतावच्छेदकत्वादिति भावः। न चैवं[2] [3]कारणान्तराभावेन क्वचित् [4]फलानुपधाने समाप्तिसाधनताबोधक-

---

१. मङ्गलमात्रमिति ख०।

२. साङ्गे मङ्गले सत्यपीत्यर्थः।

३. विद्यमानमङ्गलानाश्यविघ्नसत्तया विघ्नसामान्याभावरूपकारणाभावेत्यर्थः।

४. समाप्त्यनुत्पाद इत्यर्थः।

आलोकः

प्रकृताव्याप्त्याकाशातिव्याप्तिप्रसङ्गो मङ्गलपूर्वमपि विघ्नप्रागभावसत्त्वे व्यभिचार इत्यादिदूषणमलग्नकमिति दिक् ।

दर्पणः

श्रयो यः प्रागभावस्तन्नाशकस्वस्वव्याप्तेतरसकलसमवधाने सति यस्मिन् सतीत्यादि विवक्षितम् । तादृशश्च घटादिस्थले साध्यत्वाभिमतघटादिप्रतियोगिकप्रागभावः । प्रकृते तु साध्यत्वाभिमत एव प्रागभावः । उक्तरूपेण त्वनुगमः ।

माथुरी

वेदस्योक्तक्रमेणा[1]प्रामाण्यसिद्धिप्रसङ्ग[2] इति वाच्यम्, समाप्तिजनने विघ्नसामान्याभावस्याप्यङ्गतया साङ्गत्वाभावादेव[3] साङ्गवेदबोधितकर्मत्वाभावसिद्धिसम्भवेनाप्रामाण्यासिद्धेरिति हृदयम् ।

प्राञ्चस्तु विघ्नभूयस्त्वादित्यस्य कृतमङ्गलमपेक्ष्य विघ्नानां भूयस्त्वादित्यर्थः । तथा च विघ्नसमसङ्ख्यमङ्गलत्वेन विघ्ननाशकतया कृतमङ्गलतस्तत्समसङ्ख्यविघ्ननाशेऽपि विघ्नान्तरसत्त्वान्न समाप्तिः, मङ्गलत्वञ्च शक्तिविशेषसम्बन्धेन मङ्गलपदवत्त्वम्, विघ्नत्वञ्च मङ्गलनाश्यतावच्छेदकतया सिद्धा नतिस्तुत्यादिनाश्यसकलादृष्टसाधारण्येकैव जातिरिति भाव इत्याहुः, तदसत्, समान्यतो विघ्न समसङ्ख्यमङ्गलत्वेन नाशकत्वेऽप्येकमङ्गलतः सर्वविघ्ननाशस्य दुर्वारत्वात्, एकमङ्गलस्याप्येकविघ्नसमसङ्ख्यत्वात् । न चैकविघ्ननाशं प्रत्येकमङ्गलत्वेन, विघ्नद्वयनाशं प्रति मङ्गलद्वयत्वेन, विघ्नत्रयनाशं प्रति मङ्गलत्रयत्वेनेत्यादिप्रातिस्विकरूपेण नाश्यनाशकभाव इति वाच्यम्, तथापि भूयोविघ्नस्थले एकद्वयादिमङ्गलत एकद्वयादिविघ्न [ नाशो भवन् ] नाशस्य भवनेन विनिगमनाविरहेण सर्वेषामेव विघ्नानां नाशस्य दुर्वारत्वात् ।

केचित्तु मङ्गलत्वेन विघ्नत्वेनैव नाश्यनाशकभावः, कार्यकारणभावस्तु[4] एकविघ्नस्थलीयसमाप्तौ एकमङ्गलत्वेन, विघ्नद्वयस्थलीयसमाप्तौ मङ्गलद्वयत्वेन विघ्न-

१. फलोपधायकत्वाभावेन साङ्गवेदबोधितकर्मत्वाभावः साध्यमानः साङ्गे मङ्गले वेदबोधितत्वाभावमादाय सिद्ध्यति, वेदबोधितत्वाभावश्च तस्य समाप्तिसाधनताबोधकवाक्ये वेदत्वाभावसिद्ध्या उपपद्यते, वेदत्वाभावश्च वेदत्वघटकविशेषणभागाश्रये तादृशवाक्ये वेदत्वघटकप्रामाण्यरूपविशेष्यस्याभावमादाय सिद्ध्यतीति क्रमेणेत्यर्थः ।

२. प्रामाण्यासिद्धिप्रसङ्ग इति ख० ।

३. स्वनाश्यविघ्नविजातीयविघ्नसमवहिते मङ्गले विघ्नसामान्याभावरूपाङ्गवैकल्येन साङ्गत्वाभावः । तत एव च तत्र साङ्गवेदबोधितकर्मत्वाभावस्य सिद्धिसम्भवेन तत्र वेदबोधितत्वाभावसिद्धेरनावश्यकतया तदर्थं तस्य समाप्तिसाधकताबोधकवाक्ये वेदत्वाभावसाधनस्य निष्प्रयोजनत्वेन न तत्र वेदत्वघटकस्य प्रामाण्यस्याभावसिद्धिरित्याशयः ।

४. अस्मात् पूर्वं मङ्गलसमाप्त्योरिति योज्यम् ।

**तथैव व्यापारत्वम् । तच्च प्रागभावेऽप्यस्तीति चेत, न; अत्यन्ताभाव-**

दर्पणः

नन्वेवं दण्डरूपजन्यता घटे स्यादित्यत आहुः—एतच्चेति ।

ननु मङ्गलतद्व्याप्तेतरविघ्नप्रागभावनाशकसमवधाने मङ्गलव्यतिरेके विघ्न-

माथुरी

त्रयस्थलीयसमाप्तौ मङ्गलत्रयत्वेनेत्यादिप्रातिस्विकरूपेण । विघ्नस्थलीयत्वञ्च प्राङ्-निरुक्तमेव । तेन कृतेऽपि मङ्गले विघ्नस्य ततो भूयस्त्वान्न [1]सिद्धिरित्याहुः, तदप्यसत्; विघ्नभूयस्त्वेऽपि एकद्वयादिमङ्गलादेकद्वयादिविघ्नस्थलीयसमाप्त्या-पत्तेर्दुर्वारत्वात् कारणसत्त्वादिति कृतं पल्लवितेन ।

**विघ्नानुत्पादस्येति** विघ्नप्रागभावस्येत्यर्थः । **व्यापारत्वे** मङ्गलजन्यत्वे, **माना-भावादिति**[2] विघ्नप्रागभावं प्रति मङ्गलस्यानन्यथासिद्धत्वे मानाभावात् । यथोक्त-जन्यताया अपि अनन्यथासिद्धत्वघटितत्वाद् यथोक्तरूपमपेक्ष्य लाघवेन तत्कारण-कत्वस्यैव तज्जन्यतात्मकत्वाच्च ।

न च यत्र स्वतःसिद्धो विघ्नाभावः, तत्रत्यमङ्गलपक्षकफलोपधानाभावहेतुक-साङ्गवेदबोधितकर्मत्वाभावानुमानादुक्तक्रमेण **निर्विघ्नसमाप्तिकामो मङ्गलमाचरेत्** इति वेदाप्रामाण्यसिद्धिप्रसङ्ग एव विघ्नप्रागभावस्य मङ्गलजन्यत्वे मानम् । अत एव यथोक्तरूपस्य गुरुत्वेऽपि तदेव जन्यत्वम्, प्रामाणिकगौरवस्यादोषत्वादिति वाच्यम्; विघ्नध्वंसजनने विघ्नस्याप्यङ्गतया साङ्गत्वाभावादेव तत्र साङ्गवेद-बोधितकर्मत्वाभावसिद्धिसम्भवेनाप्रामाण्यसिद्धिप्रसङ्गविरहात् । अन्यथा तन्मतेऽपि यत्र कृतेऽपि मङ्गले न समाप्तिः, तत्र समाप्त्युपधायकत्वाभावेन वेदाप्रामाण्य-सिद्धिप्रसङ्गस्य दुर्वारत्वात् । यत्र विघ्नस्य प्रागभावो नास्ति, तत्र वेदाप्रामाण्य-सिद्धिप्रसङ्गस्य दुर्वारत्वाच्चेति भावः ।

विघ्नध्वंसस्य व्यापारतया उभयसिद्धत्वाभिमानेन शङ्कते **संसर्गाभावत्वेनेति** विघ्नसंसर्गाभावत्वेनेत्यर्थः । **हेतुत्वात्** मङ्गलजन्यविघ्नध्वंसस्य समाप्तौ हेतुत्वात् । **तथैव** विघ्नसंसर्गाभावत्वेनैव, **व्यापारत्वं** विघ्नध्वंसस्य मङ्गलजन्यत्वम्, व्यापारस्य फलं प्रति येन रूपेण कारणत्वं तेनैव रूपेण करणजन्यत्वस्यौत्सर्गिकत्वाद् ज्ञान-संस्कारादिस्थले तथा दृष्टत्वादिति भावः । **तच्च** विघ्नसंसर्गाभावत्वञ्च, **अत्यन्ताभावस्यापीति**, तत्रापि विघ्नसंसर्गाभावत्वसत्त्वादिति भावः । **स्वतःसिद्धस्येति** नित्यस्येत्यर्थः **तस्य** विघ्नात्यन्ताभावस्य, **हेतुत्वं** समाप्तिहेतुत्वमेव, न तु यथोक्त-मङ्गलजन्यत्वम् । अतो न व्यापारत्वमिति शेषः । **प्रागभावेऽपि तुल्यमिति** विघ्नप्राग-भावस्यापि समाप्तिहेतुत्वमेव, न तु यथोक्तमङ्गलजन्यत्वम् । तत्र मङ्गलस्यानन्यथासिद्धत्वे मानाभावात् । यथोक्तजन्यतायामप्यनन्यथासिद्धत्वप्रवेशस्यावश्यकत्वादित्यर्थः ।

१. न समाप्तिरिति क० ।
२. स्वतःसिद्धविघ्नविरहवन्निष्ठे मङ्गले इत्यर्थः ।

स्यापि व्यापारत्वापत्तेः। स्वतःसिद्धस्य तस्य न हेतुत्वं यदि, तदा प्रागभावेऽपि तुल्यम्।

किञ्च यत्र मङ्गलं न, तत्र नियमेन विघ्नकारणमस्ति, येन तन्नाशद्वारा प्रागभावस्य साध्यत्वम्।

एवमपि यत्र विघ्नानुत्पादोऽपि स्वतःसिद्धः, तत्र मङ्गलमकिञ्चित्करमेव। विघ्नध्वंसानुत्पादयोरारब्धनिर्वाहकालावस्थायिनोर्मङ्गला-

आलोकः

नोभयमिति[1] यद्यपि विघ्नसमसंख्यमङ्गलत्वेनानुगमे नाननुगमो न वा व्यभिचारस्तथाऽपि एकेनाप्यनेकोत्पादात्तत्र तत्प्रकारो न घटते कारणतावच्छेदकस्यापरि-

दर्पणः

प्रागभावव्यतिरेको भवतु तथापि तत्सत्त्वे तत्सत्त्वं कथम्? भवतु, विघ्नप्रागभावनाशकसकलस्यैव विघ्नोत्पादकसामग्रीत्वेन तस्योत्पादनियमेन विघ्नप्रागभावसत्त्वात्।

माथुरी

ननु यथा प्रत्यवायानुत्पादमुद्दिश्य सन्ध्यावन्दनादौ शिष्टप्रवृत्तेः प्रत्यवायानुत्पादस्य सन्ध्यावदनादिजन्यत्वमावश्यकम्। अत एव यथोक्तरूपस्य गुरुत्वेऽपि तदेव जन्यत्वम्, प्रामाणिकगौरवस्यादोषत्वादित्यनुशयादाह किञ्चेति। विघ्नकारणं मङ्गलाभावेतरविघ्नोत्पादककारणकलापः, मङ्गलाभावेतरविघ्नप्रागभावनाशककारणकलाप इति यावत्। तन्नाशद्वारेति[2] विघ्नकारणं मङ्गलजादृष्टप्रागभावः, तन्नाशोऽदृष्टं तद्द्वारेत्यर्थः। प्रागभावस्य विघ्नप्रागभावस्य, साध्यत्वं सर्वत्र मङ्गलसाध्यत्वम्। तथा च यन्मङ्गलव्यक्तेरनन्तरं समाप्तिपर्यन्तं मध्ये विघ्नप्रागभावनाशकान्तरसमवधानमेव न जातम्, तन्मङ्गलव्यक्तेरेवोक्तरूप[3]जन्यत्वं न विघ्नप्रागभावस्येति भावः।

ननु मास्तु तन्मङ्गलव्यक्तिजन्यत्वम्, विघ्नप्रागभावस्य किन्नश्छिन्नमित्यत आह एवमपीति, एवञ्चेत्यर्थः। विघ्नानुत्पादोऽपीति, अपिना विघ्नध्वंससमुच्चयः। विघ्नानुत्पादस्य स्वतःसिद्धत्वं विघ्नप्रागभावनाशकान्तराभावाधीनत्वम्, विघ्नध्वंसस्य स्वतःसिद्धत्वं जन्मान्तरार्जितमङ्गलात् सिद्धत्वम्। अकिञ्चित्करमेव व्यापारीभूतविघ्नसंसर्गाभावानुपधायकमेव।

ननु तत्र तदनुपधायकत्वेऽपि न क्षतिः, वेदाप्रामाण्यसिद्धिप्रसङ्गनिरासस्य त्वदुक्तरीत्यैव सुकरत्वादित्यस्वरसात्तावतीत्याद्युक्तं[4] दूषयति विघ्नध्वंसेति। स्थायिनोः तदा प्रधानत्व इति प्रकरणं धृतमिति

1. नोभयमतोति। किञ्चेतीति क्वचित् पाठः। ध्येयम्।
2. तद्ध्वंसद्वारेतीति क०, ग०, घ०, च०।
3. विघ्नकारणनाशद्वारा साध्यत्वरूपेत्यर्थः।
4. तावति समये दुरितानुत्पादश्च इत्यादिमूलोक्तमित्यर्थः।

 

**द्वैवोत्पत्तेर्न तदर्थमदृष्टद्वारता। मङ्गलस्य विकल्पेनान्वये शिष्टैर्नियमतो मङ्गलानुष्ठानं न स्यादित्युक्तम्।**

**किञ्च, प्रधानत्वे साङ्गमङ्गलमात्रं[1] न समाप्तिहेतुः, तस्मिन् सत्यपि तदभावात्।**

दर्पणः

न च मङ्गलं तत्र प्रतिबन्धकम्। मङ्गलसत्त्वे मङ्गलाभावरूपकारणाभावात्तादृशसमवधानस्यैवासिद्धिरिति चेत्—न। स्वस्वभावस्वव्याप्तेतरतन्नाशकसकलसमवधाने सतीत्यर्थः।

माथुरी

स्थायित्वविशिष्टयोः, विशिष्टस्यानतिरिक्तत्वादिति भावः। **तदर्थं** तावत्समयवृत्तित्वविशिष्टविघ्नप्रागभावार्थम्। न च मङ्गलस्याशुविनाशितया तावतां समयानां तेन जननासम्भवादपूर्वस्वीकार इति वाच्यम्, समयानां मङ्गलजन्यत्वे मानाभावादिति भावः।

ननु मङ्गलानन्तरं समाप्तिपूर्वं मध्ये विघ्नजनककर्मानुष्ठाने विघ्नोत्पत्तिप्रतिबन्धार्थमदृष्टाभ्युपगमः, मङ्गलस्याशुविनाशितया तेन तावत्कालं साक्षाद्विघ्नोत्पत्तिप्रतिबन्धासम्भवादित्यरुचेराह **मङ्गलस्येति** मङ्गलजन्यापूर्वस्येत्यर्थः। **अन्वये** कारणत्वे, **न स्यादिति** गणेशस्तवपाठादिजन्यादृष्टसत्त्वसम्भावनया न स्यादित्यर्थः। एकाभावविशिष्टापरस्यैव जनकत्वादिति भावः। इदमुपलक्षणम्, गणेशस्तवपाठमङ्गलयोरुभयोरनुष्ठानेऽपि समाप्तिर्दृश्यते, तदपि न स्यादित्यपि[1] बोध्यम्।

ननु गणेशस्तवपाठजन्यापूर्वमङ्गलजन्यापूर्वयोर्न विकल्पेन कारणत्वम्, किन्तु तृणारणिमणिन्यायेन यत्र गणेशस्तवपाठमङ्गलयोरनुष्ठानम्, तत्र मङ्गलनाश्यविघ्नस्थलीयास्थलीय[2]समाप्तिद्वयानुत्पादश्च भूयोजातीयविघ्नसत्त्वात्। यद्वा मङ्गलजन्यापूर्वस्य तन्नाश्यजातीयविघ्नस्थलीयसमाप्तित्वं कार्यतावच्छेदकम्, गणेशस्तवपाठादिजन्यापूर्वस्य तत्तत्पाठादिनाश्यजातीयविघ्नस्थलीयसमाप्तित्वम्, न तु मङ्गलजन्यापूर्वनाश्यजातीयविघ्नस्थलीयेतरसमाप्तित्वम्। अत एवोभयोरनुष्ठानेऽपि क्वचित् फलदर्शनं नानुपपन्नमित्यरुचेराह **किञ्चेति**। **प्रधानत्वे** अपूर्वद्वारा समाप्तिरूप-

---

१. तत्र तयोः कतरेणाप्यदृष्टजननासम्भवात्, एकस्माददृष्टोत्पत्तयेऽपराभावस्यापेक्षितत्वादिति भावः।

२. तादृशविघ्नस्थलीयान्येत्यर्थः।

**प्रचितं तथेति चेत्, न; अप्रचितादपि फलसत्त्वात्[1]। नोभयम्, अननुगमात्।**

**गुरुकर्मारम्भे प्रचितमल्पकर्मारम्भेऽल्पमिति चेत्, न; क्वचित् तादृशादपि फलासत्त्वात्, वैपरीत्येऽपि फलसत्त्वाच्च।**

**एतेन बहुविघ्नशङ्कया बहुतरम्, अल्पविघ्नशङ्कया अल्पतरञ्च हेतुः तादृशाचारेण तादृशश्रुत्युन्नयनादिति[2] निरस्तम्। तादृशादपि**

आलोकः

चयेनाप्रवृत्तेश्चेत्यवधेयम्। यद्वा तदपि तदा यदि समाप्तिहेतुता सैव च नोक्तयुक्तेरिति भावः।

दर्पणः

**यथाश्रुत** इति। असत्त्वस्य प्रागभावगर्भत्वे यद्व्यतिरेके प्रागभावस्य प्रागभाव एवेत्यव्याप्तिः। अत्यन्ताभावगर्भत्वे आकाशातिव्याप्तिरिति भावः।

माथुरी

प्रधानफलजनकत्वे, **तस्मिन् सत्यपीति** सर्वजातीयेषु एकैकमङ्गलेषु कृतेष्वपीत्यर्थः। **तदभावात्** समाप्तेरभावात्। तथा च तत्र समाप्त्यापत्तिरिति भावः।

न च तत्र मङ्गलानन्तरोत्पन्नविघ्नेन प्रतिबन्धान्न समाप्त्युदय इति वाच्यम्, मङ्गलजन्यादृष्टस्य विघ्नप्रतिबन्धकतया मङ्गलानन्तरं समाप्तिपर्यन्तं विघ्नान्तरोत्पत्तेरसम्भवादिति हृदयम्।

**प्रचितमिति** बहुतरं तत्तज्जातीयमङ्गलमित्यर्थः। **फलसत्त्वात्** फलोदयात्, प्रचितस्यैव हेतुत्वे ततः फलानुदयः स्यादिति भावः। अप्रचितात् फलानुदयप्रसङ्गमुद्धरति **नोभयमिति**। उभयं प्रचितमप्रचितञ्च, **अननुगमादिति**, यत्र सर्वजातीयेषु एकैकमङ्गलेषु कृतेष्वपि न समाप्तिस्तत्स्थलीयाप्रचितनमस्कारादिव्यावृत्तस्य प्रचितमङ्गलनिष्ठानुगतकारणतावच्छेदकस्याभावादित्यर्थः। तथा च तत्र कार्योत्पत्तितादवस्थ्यमिति भावः। इदमुपलक्षणम्, यत्राप्रचितात् समाप्तिः, तत्र प्रचितस्य व्यतिरेकव्यभिचार इत्यपि बोध्यम्।

**गुरुकर्मारम्भे** गुरुतरारब्धकर्मसमाप्तौ, **प्रचितं** बहुतरम्, नमस्कारादिकमित्यर्थः। **'अल्पकर्मारम्भे'** अल्पतरारब्धकर्मसमाप्तौ **'अल्पं'** नमस्कारत्रयाभावविशिष्टनमस्कारादिकम्। **तादृशादपीति** यत्र सर्वजातीयान्येव त्रीणि मङ्गलानि कृतानि, तत्रापि गुरुकर्मसमाप्तेः, यत्र सर्वजातीयान्येवैकैकमङ्गलानि कृतानि, तत्राप्यल्पतर-

१. फलनिष्पादादिति ख०।
२. तादृशश्रुत्यनुमानादितीति क०।

प्रारिप्सितासमाप्तेः वैपरीत्येऽपि समाप्तेश्च बहुत्वस्य त्रिचतुरादिभावेन[1], अल्पत्वस्य चैकद्व्यादिरूपतया[2] अननुगमेन तादृशशिष्टाचारेण तादृशश्रुत्या बोधयितुमशक्यत्वाच्च । तस्मान्मङ्गलं नाङ्गम्; न वा प्रधानमिति पूर्वपक्षसंक्षेपः ।

इति मङ्गलवादे पूर्वपक्षः ।

माथुरी

कर्मसमाप्तेश्चेत्यर्थः[3] । **वैपरीत्येऽपीति** प्रचितादप्यल्पतरकर्मसमाप्तेरप्रचितादपि [4]गुरुतरकर्मसमाप्तेश्चेत्यर्थः ।

**बहुविघ्नेति** [5]शङ्कितबहुतरविघ्नसमाप्तौ बहुतरम्, शङ्कितालपतरविघ्नसमाप्तौ अल्पतरं मङ्गलं हेतुरित्यर्थः । **तादृशश्रुतीति** अल्पविघ्नज्ञानवान् अल्पमङ्गलम्, बहुतरविघ्नज्ञानवान् बहुतरमङ्गलमाचरेदित्याकारकश्रुतीत्यर्थः । **तादृशादपीति** बहुतरमङ्गले कृतेऽपि [6]शङ्कितबहुतरविघ्नसमाप्तेरनुदयाद् अल्पतरमङ्गले कृतेऽपि शङ्कितालपतरविघ्नसमप्तेरनुदयादित्यर्थः[7] । **'वैपरीत्येपी'**ति बहुतरविघ्नज्ञानवतोऽत्यल्पमङ्गलात् [8]समाप्तेः, अल्पविघ्नज्ञानवतोऽपि बहुतरमङ्गलात् [9]समाप्तेरित्यर्थः । तथा च व्यतिरेकव्यभिचार इति भावः ।

**'त्रिचतुरादिभावेने'**ति त्रित्वचतुष्ट्वादिरूपत्वेनेत्यर्थः । **'एकद्व्यादिरूपतया'** एकत्वद्वित्वरूपतया । न च द्वित्वैकत्वभिन्नसङ्ख्यात्वेन त्रित्वत्वेन वाऽनुगमः, चतुरादिस्थलेऽपि त्रयाणां सत्त्वादिति वाच्यम्; मङ्गलस्याद्रव्यतया तद्वृत्तित्वादेः सङ्ख्यानात्मकत्वेन तद्वृत्तित्रित्वत्वादेरप्यननुगतत्वादिति भावः । **'नाङ्गं, न वा प्रधानम्'** इति नारब्धकर्मजन्यसमाप्तिजनकं न वा तदजन्यतदुत्पत्तिजनकमित्यर्थः ।

इति मङ्गलवादपूर्वपक्षरहस्यम् ।

---

१. अस्याग्रेतनेन 'बोधयितुमशक्यत्वात्' इत्यनेनान्वयः ।

२. अस्याप्यग्रिमेण 'बोधयितुमशक्यत्वात्' इत्येतेनान्वयः ।

३. एकजातीयमङ्गलचतुष्टयनाश्यविघ्नचतुष्टयस्थले एकजातीयमङ्गलत्रयसत्त्वेऽपि गुरुतरकर्मणः समाप्तिर्न भवति, एवमेकजातीयमङ्गलद्वयनाश्यविघ्नद्वयस्थले नानाजातीयैकैकमङ्गलसत्त्वेऽप्यल्पतरकर्मणः समाप्तिर्न भवतीत्यर्थः ।

४. गुरुतरेत्यादिपूर्वं 'विघ्नाल्पत्वे' इति योज्यम ।

५. शङ्कितो बहुतरो विघ्नः स्वस्मिन् येन पुंसा तदारब्धकर्मसमाप्तावित्यर्थः ।

६. एकजातीयमङ्गलत्रये कृतेऽपि विघ्नचतुष्टयादिस्थले शङ्कितबहुतरविघ्नसमाप्तिर्न भवतीत्यर्थः ।

७. एकजातीय एकमङ्गले कृतेऽपि विघ्नद्वयस्थले शङ्कितालपतरविघ्नसमाप्तिर्न भवतीति भावः ।

८. 'वस्तुनो विघ्नाल्पत्वे' इति'समाप्तेः' इत्येतत्पूर्वं योज्यम् ।

९. 'समाप्तेः' इत्येतत्पूर्वं 'वस्तुतो विघ्नबहुत्वे' इति योज्यम् ।

# अथ मङ्गलवादसिद्धान्तपक्षः

सिद्धान्तस्त्वारब्धकर्मसमाप्तौ मङ्गलं नाङ्गम्, न वा प्रधानम्, अहेतुत्वात्; किन्तु प्रायश्चित्तवत् प्रधानं विघ्नध्वंसः फलम् । आरब्धकर्म-निर्वाहे विघ्नो मा भूदिति कामनया तदनुष्ठानाद् विघ्नसंशये निश्चये वा शिष्टानां तदाचरणाद् विघ्नाभावस्याकाङ्क्षितत्वाच्च ।

यदि च निर्विघ्नं समाप्यतामिति कामनया तदाचरणम्, तदापि "नागृहीतविशेषणा"न्यायेनाहं 'स्वर्गी स्याम्' इत्यत्र स्वर्ग इव विघ्नाभाव एव फलम्, न समाप्तिः, उभयतो व्यभिचारात् ।

आलोकः

नागृहीतेति । यद्यप्ययं लाघवमूलको न्यायः इह तु बाधो मूलमिति सविशेषणे हीति वक्तुमुचितम्, अत एव त्रिसूत्रीप्रकाशादौ तथैव लिखितम्, तथापि विघ्नाभावस्य विशेषणतोपलक्षणताविकल्पेन समाप्तिमात्रे बाधो विशिष्टायां लाघवमिति विषय-भेदेनोभयसामञ्जस्यमिति भावः । इह विघ्नो माभूदित्यत्रेदमंशस्यापि विशेषण-

माथुरी

'आरब्धकर्मसमाप्ताव'ति आरब्धकर्मजन्यसमाप्तावित्यर्थः । 'नाङ्ग' नारब्ध-
कर्मजन्यसमाप्तेरुपधायकम्, 'न वा प्रधानमि'ति न वा आरब्धकर्माजन्यारब्धकर्मो-
त्पत्तेरुपधायकमित्यर्थः । 'अहेतुत्वादि'ति मङ्गले तदुभयस्वरूपयोग्यत्वस्यैवाभावा-
दित्यर्थः । 'प्रधानमि'ति आरब्धकर्माजन्यफलान्तरजनकमित्यर्थः । तदेव फलान्तर-
माह 'विघ्नध्वंस' इति । ननु तस्य मङ्गलफलत्वे किं मानमित्यत आह 'आरब्धकर्म-
निर्वाहे' इति । 'निर्वाहः' समाप्तिः, प्रतिबन्धकत्वं सप्तम्यर्थः, अन्वयश्चास्य 'विघ्न
इत्यनेन । 'मा भूत्' मा वर्त्तताम्, यथाश्रुते विघ्नप्रागभावस्यैवोद्देश्यत्वलाभात् 'इति
कामनया' इत्युद्दिश्य, 'तदनुष्ठानादि'ति तत्र शिष्टप्रवृत्तेरित्यर्थः तथा च मङ्गलं
विघ्नध्वंसजनकम्, विघ्नध्वंसोद्देश्यकशिष्ट-प्रवृत्तिविषयत्वादि, त्यनुमानमेव मानम् ।
शिष्टत्वं भ्रमाजन्यत्वम् । न चेदमप्रयोजकम्, तदुद्देश्यकप्रवृत्तौ तत्साधनताज्ञानस्य हेतु-
त्वादिति भावः । केचित्तु 'इति कामनये'ति यथाश्रुतमूलानुरोधात् 'मङ्गलं विघ्नध्वंस-
जनकम्, विघ्नध्वंसकामनाजन्यशिष्टप्रवृत्तिविषयत्वादि' त्यनुमानं मानमित्याहुः,
तदसत्; विघ्नध्वंसस्वर्गोभयोद्देश्यकसमूहालम्बनफलकामनासहकृतस्वर्गसाधनतामात्रविष
यकप्रमाजयप्रवृत्तिविषये न्यायादौ व्यभिचारापत्तेरिति ध्येयम् ।

आलोक:

**त्वान्न्यायसाम्यमिति तु दर्प्पण**[1] **दूषणमयुक्तिसम्भवमेव । इदन्त्वस्य प्रतियोगिनि विघ्ने विशेषणत्वन्न तु तदभावे । न च विशेषणविशेषणतयापि न्यायसाम्यमिति वाच्यम्, व्यभिचारेण विनिगमनासम्भवादिति भावः ।**

वयन्तु ब्रूमः । **विघ्नध्वंसोऽपि न फलमपि तु विघ्नानुत्पादः । विघ्नो मा भूदित्युद्दिश्य प्रवृत्तेः, न तु विघ्नो निवर्त्ततामिति । अत एव दुःखं मा भूदिति कामनया क्रियमाणस्य प्रायश्चित्तस्य दुःखानुत्पाद एव फलं न तु दुःखसाधनध्वंसः ।**

दर्पण:

**तव विघ्नाभाव एवेति** । दुरितध्वंस एवेत्यर्थः । **तद्द्वारकोऽन्य** इति । दुरित-

माथुरी

हेत्वन्तरमाह, **विघ्नसंशये**'ति । तथा च मङ्गलं विघ्नध्वंसजनकम्, विघ्नाजनकत्वे सति विघ्नज्ञानवतामेव शिष्टप्रवृत्तिविषयत्वादित्यनुमेयमिति भावः । हेत्वन्तरमप्याह **'विघ्नाभावस्ये'** ति । **'आकङ्क्षितत्वात्'** मङ्गलगोचरकामनायाः फलत्वेनोद्देश्यत्वात् । तथा च मङ्गलं विघ्नध्वंसजनकम्, विघ्नध्वंसोद्देश्यकशिष्टकामनाविषयत्वादित्यनुमेयम् । शिष्टत्वं भ्रमाजन्यत्वम् । न चेदमप्रयोजकम्, तदुद्देश्यककामनां प्रति तत्साधनताज्ञानस्य हेतुत्वादिति भावः ।

नन्वेवं निर्विघ्नं समाप्यतामित्युद्दिश्यापि मङ्गले शिष्टप्रवृत्तेः समाप्तेरपि मङ्गलत्वमावश्यकम्, तदुद्देश्यकप्रवृत्तौ तत्साधनताज्ञानस्य हेतुत्वादित्यत आह **यदि चेति** । **इति कामनया** इत्युदिश्य, **तदाचरणं** तत्र शिष्टप्रवृत्तिः, **नागृहीतविशेषणान्यायेन** नागृहीतविशेषणा बुद्धिर्विशेष्या उपजायत इति न्यायेन । भवन्मतेऽपि विघ्नध्वंसस्य तत्रोद्देश्यतावश्यकतयेति शेषः । **इत्यत्र** इत्याकारकोद्देश्यताशालियागादिगोचरप्रवृत्तौ, **स्वर्ग इव** स्ववृत्तित्वोपलक्षितस्वर्ग इव, **विघ्नाभाव एव फलम्** समाप्त्यव्यवहितपूर्ववर्त्तित्वोपलक्षितविघ्नध्वंस एव तादृशप्रवृत्तावुद्देश्यः **उभयतो व्यभिचारादिति** [2]शरीरनिष्ठसम्बन्धेनात्मनिष्ठसम्बन्धेन[3] च मङ्गलस्य समाप्तिं प्रति व्यतिरेकव्यभिचारादित्यर्थः । [4]मङ्गलस्याशुविनाशितया चिरकालानन्तरभाविसमाप्त्यव्यवहितपूर्वं तदनस्थानात् ।

---

१. दर्प्पणकारस्य मतोल्लेखस्तु कस्यचिदन्यस्य महेशठक्कुराद्भिन्नस्य पूर्ववर्त्तिनो दर्प्पणनामकस्य व्याख्यानस्य सम्बन्धिनः । अथ वा महेशठक्कुरस्यैव दर्प्पणस्य टिप्पणिरियं भ्रमादालोके निरतिता ।

२. अवच्छेदकतासम्बन्धेनेत्यर्थः ।

३. समवायसम्बन्धेनेत्यर्थः ।

४. मङ्गलस्य समाप्तिं प्रति व्यतिरेकव्यभिचारं स्पष्टयति 'मङ्गलस्याशुविनाशितया' इत्यादिना ।

आलोकः

अत एव च कृतेऽपि मङ्गले समाप्त्यभावः। तदा प्रतिबन्धकाधर्मध्वंसद्वारा प्रतिबन्धानुत्पादेऽप्यग्रेतनदुरितेन प्रतिबन्धसम्भवात्। यथा च दुःखानुत्पादानुगुणतया पापनाशकत्वं प्रायश्चित्तस्य तथा दुरितनिवर्त्तकत्वं मङ्गलस्य। तावत्समयमनवस्थित्या यदि तदर्थमदृष्टद्वारकताऽपि कल्प्या तदा कल्प्यताम्।

वस्तुतो मध्येऽपि मङ्गलाचरणेन मङ्गलानन्तरमपि प्रतिबन्धदर्शनेनापूर्वजनने मानाभावः। न च तदा दुरितहेतुक्रियाया एवासम्भावितत्वेन कथं तदनुत्पादाय

माथुरी

न च विघ्नध्वंसद्वारा तस्य हेतुत्वान्न व्यभिचार इति वाच्यम्, तथा सति जन्मान्तरीयग्रन्थसमाप्तिमुद्दिश्यापि तत्र शिष्टप्रवृत्तिप्रसङ्ग इत्युक्तत्वात्। न च तज्जन्यविघ्नध्वंसस्य स्वोत्पत्त्यवच्छेदकजातीयत्वसम्बन्धेन शरीरनिष्ठतया हेतुत्वान्नायमतिप्रसङ्ग इति वाच्यम्, तर्हि तज्जन्यविघ्नध्वंसस्य प्रमत्तानुष्ठितसमाप्तावेव व्यभिचाराद् विघ्नस्थलीयत्वस्योक्तक्रमेण कार्यतावच्छेदकत्वासम्भवादिति भावः।

एतच्चोपलक्षणम्, समाप्तित्वस्य विघ्नध्वंसत्वापेक्षया गुरुत्वाद् अनुगतस्य तस्य दुर्वचत्वाच्च। विघ्नध्वंसत्वं तु विजातीयादृष्टध्वंसत्वमेव, वैजात्यञ्च प्रायश्चित्तादिनाश्यादृष्टव्यावृत्तो नत्यादिनाश्यतावच्छेदकतया सिद्धोऽदृष्टनिष्ठो जातिविशेषः। [1]नत्यादिभेदेन कार्यकारणभावभेदस्त्विष्यत एव। अत एव नानाविधमङ्गलाचरणं नानाविधविघ्नशङ्कया। न चैवमेकनमस्कारादित एव तत्पूर्वोत्पन्नतन्नाश्यजातीयसकलविघ्ननाशापत्तिरिति वाच्यम्, दृष्टत्वात्। एकजातीयनानामङ्गलाचरणं तु पूर्वमङ्गलस्याङ्गवैगुण्यशङ्कया।

किञ्च, समाप्तौ मङ्गलस्य हेतुत्वेऽपि विघ्नध्वंसं प्रति हेतुत्वमावश्यकम्। तथा चावश्यकत्वात् तदेवास्तु, किं [2]समाप्तिहेतुत्वेन। न च व्यापारेण व्यापारिणो नान्यथासिद्धिरिति वाच्यम्, विघ्नस्य प्रतिबन्धकतया तदत्यन्ताभावस्यैव समाप्तिहेतुत्वेन विघ्नध्वंसे व्यापारत्वस्यैवासिद्धेः। विघ्नध्वंसस्यापि समाप्तौ पृथक् कारणत्वकल्पने च महागौरवापत्तेः। समाप्तौ विघ्नध्वंसतत्सामान्यात्यन्ताभावमङ्गलानां त्रयाणां कारणत्वस्य विघ्नध्वंसं प्रति मङ्गलकारणत्वस्य च कल्पनीयत्वादित्यपि बोध्यम्।

१. विभिन्नजातीयविघ्नात्मकादृष्टनाशे नत्यादिरूपं विभिन्नजातीयं मङ्गलं कारणम्, न तु सामान्यतो विघ्नात्मकादृष्टसामान्यनाशो मङ्गलसामान्यं हेतुः; नत्यादिनानाविधमङ्गलसाधारणस्यैकस्य मङ्गलत्वस्य, नत्यादिनाश्यनानाविधसाधारणस्यैकस्य विघ्नत्वस्य चाभावादित्यर्थः।

२. समाप्तिं प्रति मङ्गलमन्यथासिद्धम्, तज्जन्याद् विघ्नध्वंसादेव तदुत्पत्तिसम्भवादिति भावः।

**समाप्तिस्तु विघ्नरूपप्रतिबन्धकाभावे सति लोकावगतस्वकारणादेव । प्रचिताप्रचितदेवतास्तुत्यादिसाङ्गमङ्गलात् प्रत्येकं विघ्नध्वंसो**

आलोकः

**प्रवृत्तिरिति वाच्यम् । 'विघ्नो मा भूदि'ति कामनायां हि विघ्नो न दुरितमपि तु प्रतिबन्धः । स च विसामग्री । तदनुत्पादश्च सामग्रीसम्पदेव । तस्यां सत्यां कार्याभावस्य ब्रह्मणापि दुरुपपादत्वात् ।**

माथुरी

केचित्तु **उभयतो व्यभिचारात्** इत्यस्य अन्वयतो व्यतिरेकतश्च मङ्गलस्य समाप्तिं प्रति व्यभिचारित्वादित्यर्थ इत्याहुः ।

नन्वेवं समाप्तिः किंहेतुका स्यादित्यत आह, **समाप्तिस्त्विति** । अत्राचार्यानुयायिनो विघ्नध्वंस इव समाप्तिर्मे जायतामिति समाप्तिमुद्दिश्यापि मङ्गले शिष्टप्रवृत्तेर्विघ्नध्वंसवत् समाप्तिरपि मङ्गलफलम् । न च समाप्तिमुद्दिश्य मङ्गलाचरणमेवासिद्धमिति वाच्यम्, असङ्ख्यसंसारे मणिकृन्मतेऽप्यवश्यं केनचित् तामुद्दिश्य मङ्गलानुष्ठानात् । न च तामुद्दिश्य मङ्गलाचरणं मङ्गले समाप्तिसाधनताभ्रमजन्यम्, लाघवात् तथैव कल्पनादिति वाच्यम् । तर्हि विघ्नध्वंसमुद्दिश्य मङ्गलाचरणमपि भ्रमजन्यं लाघवादिति निष्फलमेव मङ्गलाचरणमिति जितं चार्वाकैः । यदि च तदाचारस्य भ्रमाजन्यत्वं तज्जनकविघ्नध्वंसजनकताज्ञानस्य भ्रमेतरत्वञ्चानुभवसिद्धमिति गौरवं प्रामाणिकम्, तदा प्रकृतेऽपि तुल्यम् ।

न च मङ्गलं न साक्षात् समाप्तिहेतुः, अस्थिरत्वात्, न वा विघ्नध्वंसद्वारा, विघ्नात्यन्ताभावस्यैव समाप्तिहेतुत्वात् । अत्यन्ताभावस्तु न द्वारम्, अजन्यत्वादित्यनायत्या विघ्नध्वंसजनकत्वमेव तस्येति वाच्यम्, समाप्तिहेतुतायां प्रयाससिद्धायामनायत्या अपूर्वस्यैव द्वारत्वकल्पनाद् विघ्नध्वंससम्बन्धेनैव साक्षाद्धेतुत्वस्यापि सुवचत्वाच्च । अन्वयव्यभिचारस्य चानुपदं ग्रन्थकृतैव निराकरिष्यमाणत्वात् ।

न चैव जन्मान्तरीयग्रन्थसमाप्तिमुद्दिश्यापि मङ्गले शिष्टप्रवृत्तिप्रसङ्ग इति वाच्यम्, इष्टत्वात् । असङ्ख्यसंसारे मणिकृन्मतेऽप्यवश्यं जन्मान्तरीयग्रन्थसमाप्तिमुद्दिश्य केनचिन्मङ्गलाचरणात्, तस्य च भ्रमजन्यत्वे मानाभावात् ।

न च तथापि समाप्तित्वस्यैकस्यानुगतस्याभावात् कार्यतावच्छेदकं दुर्वचमिति वाच्यम्, कारणत्वे प्रमाणसिद्धेऽनायत्या अननुगतस्यैव कार्यतावच्छेदकत्वात् । न चैवं विघ्नसत्त्वेऽपि समाप्त्युत्पादापत्तिः अनादौ संसारेऽन्ततो जन्मान्तरोत्पन्नविघ्नध्वंससम्बधेन मङ्गलसत्त्वादिति वाच्यम्, विघ्नस्य प्रतिबन्धकतया तत्सामान्याभावस्यापि हेतुत्वात्, केवलमाचारानुरोधनैव मङ्गलस्य हेतुत्वकल्पनादित्याहुः, तदसत्; तथा सति यदुद्दिश्य यत् क्रियते तस्यैव तद्धेतुतया चैत्यवन्दनादेरपि स्वर्गादिहेतुत्वापत्तेः, तत्रापि तज्जनकीभूतज्ञानस्य भ्रमत्वमाश्रय विवादसम्भवादिति दिक् ।

**भवत्येव । अतो वैदिके फलनिश्चयान्मङ्गले प्रवृत्तिः । न च वेदाप्रामाण्यम्, समाप्त्यभावश्च क्वचित् प्राचीनविघ्नभूयस्त्वात्, क्वचिन्मङ्गलान्तरोत्पन्नविघ्नात्, क्वचिल्लोकावगलकारणाभावात् ।**

**प्रारिप्सितविघ्नध्वंसश्च न मङ्गलं विना, न च प्रायश्चित्तेन शङ्कितविघ्नविनाशः, विघ्नसंशये तदनुपदेशात् । न च कामनोपाधिकर्त्तव्यत्वे नियतमनुष्ठानं न स्यादिति वाच्यम्; आरब्धकर्मकारणप्रतिबन्ध-**

आलोकः

**न चैवं बहुमङ्गलाचरणं किमर्थमिति वाच्यम्, विघ्नस्य प्रत्येकमङ्गलविरोधितयोभयसमाधेयत्वात् । इयान् परं भेदः तव विघ्नाभाव एव फलम् । मम तु**

दर्पणः

ध्वंसद्वारा सामग्रीसम्पत्तिरित्यर्थः । **ममाप्यविलम्बेति** । यदाप्येवमविलम्बितसमाप्तावेव

माथुरी

ननु मङ्गले सति यत्र समाप्त्यनुदयस्तत्र कृतेऽपि साङ्गमङ्गले विघ्नध्वंसानुदयादन्वयव्यभिचार इत्यत आह **'प्रचिते'**ति । **'प्रत्येकमि'**ति स्तुतिनाश्यानां सर्वेषां स्तुतितो नाशः । नत्यादिनाश्यानां नत्यादितो नाशो भवत्येवेत्यर्थः । स्वतःसिद्धविघ्नासत्त्वस्थले च मङ्गलस्य साङ्गत्वमेव नास्ति, विघ्नस्याङ्गत्वात्, मङ्गलकर्तुर्विघ्नासत्त्वे मानाभावच्चेति भावः । **'अतः'** इति । **'फलनिश्चयात्'** सकलाङ्गसम्पत्तौ फलावश्यम्भावनिश्चयात्, **'वैदिके मङ्गले प्रवृत्तिरि'**ति योजना । **'प्रवृत्तिः'** निष्कम्पप्रवृत्तिः, **'प्राचीनविघ्नभूयस्त्वादि'**ति प्राचीनानां विघ्नानां भूयोजातीयत्वादित्यर्थः तथा च यन्मङ्गलं कृतं तदनाश्यजातीयसत्त्वादिति फलितम् ।

ननु यत्र सर्वजातीयान्येव मङ्गलानि कृतानि, तत्र समाप्त्यभावो न स्यादित्यत आह **'क्वचिन्मङ्गलानन्तरे'**ति । पापोत्पादककारणानां यत्र बाधस्तत्राह **'क्वचिल्लोकावगते'**ति ।

ननु तथापि यत्र प्रायश्चित्तादिनो विघ्ननाशः, तत्र व्यतिरेकव्यभिचार इत्यत आह **'प्रारिप्सिते'**ति । मङ्गलानश्यजातीयविघ्ननाशश्चेत्यर्थः ।

ननु यथा विघ्नसंशयान्मङ्गलाचरणेऽपि फलम्, एवं ब्रह्मवधादिप्रायश्चित्तेऽपि स्यादित्यत आह, **'न चे'**ति न हीत्यर्थः । **प्रायश्चित्तेन'** ब्रह्मवधादिप्रायश्चित्तेन, **शङ्कितविघ्ननाशः'** शङ्कितदुरिनाशः, **'विघ्नसंशये'** दुरितसंशये; **'कामनोपाधिकर्त्तव्यत्वे'** विघ्नध्वंसकामनाधीनप्रवृत्तिविषयत्वे, **'नियतमनुष्ठानं न स्यादि'**ति, यस्य विघ्नज्ञानं नास्ति तस्यानुष्ठानं न स्यादित्यर्थः । अत्रेष्टापत्तिमाह **'आब्धकर्मकारणे'**ति, आब्ध-

**काभावोपायत्वेनावश्यं तदनुष्ठानात् । तेन विना प्रतिबन्धकाभावेऽसति कर्मानुत्पत्तेः ।**

**न च प्रधानत्वे नान्यदापि तत्करणम्, नियतसमयशिष्टाचारानुमितश्रुत्या, कर्मारम्भसमये तत्कर्त्तव्यत्वबोधनात्, दर्शारम्भसमये आरुणीयवत् ।**

**विघ्नसंसर्गाभावश्च समाप्तिहेतुः । स च क्वचित् स्वतःसिद्धः, क्वचिन्मङ्गलसाध्यः । अत एव मङ्गलं विनापि जन्मान्तरानुवर्त्तमान-**

आलोकः

**कामनानुरोधात् तद्द्वारकोऽन्यः । स च सामग्र्याः फलत्वे समाप्तिवद् व्यभिचारः ।**

माथुरी

कर्मसमाप्तिकारणेत्यर्थः । **'प्रतिबन्धकाभावोपायत्वेन'** तत्प्रतिबन्धकध्वंसोपायत्वज्ञानेन, **अवश्यं तदनुष्ठानादि**'ति, विघ्नज्ञातवतैवावश्यं तदनुष्ठानादित्यर्थः ।

ननु मङ्गलस्य समाप्तावजनकत्वे यत्र मङ्गलं न कृतम्, तत्र विघ्नध्वंसो मास्तु, समाप्तिस्तु स्यादेवेत्यत आह **'तेन विने'**ति । **'प्रतिबन्धकाभावाभावे'** प्रतिबन्धकीभूतविघ्नसत्त्वे, **'प्रतिबन्धकाभावे असती'**ति पाठेऽप्ययमेवार्थः । **'कर्मानुत्पत्तेः'** कर्मासमाप्तेः ।

**'न चे'**ति । **'प्रधानत्वे'** विघ्नध्वंसमात्रजनकत्वे, समाप्त्यजनकत्व इति यावत् । **'अन्यदापि'** कर्त्तव्यकर्मचिकीर्षाकालातिरिक्तकालेऽपि, **'तत्करणमि'**ति फलजनकं स्यादिति शेषः । **'नियतसमये'**ति तादृशचिकीर्षाकालनियतेत्यर्थः, **'कर्मारम्भसमये'**ति, कर्त्तव्यकर्मचिकीर्षाकाल इत्यर्थः, **'दर्शारम्भसमये'** दर्शचिकीर्षासमये । तथा च मङ्गलेन विघ्नध्वंसजनने कर्त्तव्यकर्मप्रतिबन्धकीभूतविघ्नध्वंसगोचरेच्छादिजननक्रमेण मङ्गलजननद्वारा कर्त्तव्यकर्मचिकीर्षाप्यङ्गम्, अन्यथा समाप्तेः फलत्वेऽपि भ्रान्त्या फलान्तरकामनया अन्यदा कृतान्मङ्गलाद् विघ्नध्वंसोत्पत्तेर्दुर्वारत्वादिति भावः ।

ननु भवन्मते मङ्गलस्य विघ्नध्वंसद्वारा समाप्त्यजनकत्वेऽपि तज्जन्यविघ्नध्वंसस्य प्रतिबन्धकाभावतया समाप्तिकारणत्वमस्त्येव । तस्य कारणत्वञ्च किं स्वोत्पत्त्यवच्छेदकत्वसम्बन्धेन फलीभूतसमाप्तिकर्तृशरीरनिष्ठतया, विशेषणताविशेषसम्बन्धेन तदृशात्मानिष्ठतया वा ? आद्ये नास्तिकादिशरीरकर्तृकसमाप्तौ व्यभिचारः । अन्त्ये जनकत्वमपेक्ष्य कारणतत्कारणसाधारणप्रयोजकत्वस्य लघुतया तादृशतत्प्रयोजकताज्ञानस्येव तदुद्देश्यकप्रवृत्तौ हेतुत्वनये जन्मान्तरीयग्रन्थसमाप्तिमुद्दिश्यापि मङ्गले शिष्टप्रवृत्त्यापत्तिरित्यत आह **विघ्नसंसर्गाभावश्चे**'ति । समवायसंसर्गावच्छिन्नतत्तद्विजातीयविघ्नसामान्याभावकूटश्चेत्यर्थः । तथा च मङ्गलवत् तज्जन्यविघ्नध्वंसोऽपि न समाप्तिहेतुरित्यर्थः । **'स्वतःसिद्धः'** विघ्नकारणाभावप्रयुक्तः, **'क्वचिदि'**ति, यत्र मङ्गलेन विघ्ननाशे सति समाप्तिस्तत्रेत्यर्थः । **मङ्गलसाध्यः'**

**विघ्नात्यन्ताभावात् प्रमत्तनास्तिकानुष्ठितसमाप्तिः। न चानध्यवसायः, शङ्कितविघ्नवारणार्थं प्रवृत्तिः अतो यावद्विघ्नशङ्कं तदाचारणात्। अत एव तच्छङ्कया मध्येऽपि तदाचरन्ति।**

**गुर्वारम्भेऽपि बहुविघ्नशङ्कया बहुमङ्गलाचरणम्। यथा च विघ्नसंशयेऽपि प्रवृत्तिस्तथोक्तमेव।**

आलोकः

**तत्रापि विनायकस्तवपाठादिना विघ्ननाशेन व्यभिचारात् विशेषे तद्धेतुत्वं यदि, तदा समाप्त्यविलम्बस्वरूपविशेषे मङ्गलस्य हेतुत्वादिति।**

माथुरी

मङ्गलाधीनः, **अत एवेति** यत एव स्वोत्पत्त्यवच्छेदकत्वसम्बन्धेन शरीरनिष्ठतया विघ्नध्वंसो न हेतुः, अपि तु विघ्नात्यन्ताभाव एव हेतुरत एवेत्यर्थः। **मङ्गलं विनापि** ऐहिकमङ्गलं विनापि।

न चैवं विघ्नध्वंसे कथं कामना, सुखत्वदुःखाभावत्वप्रकारकेच्छां प्रति तत्प्रकारकज्ञानस्य तदन्येच्छां प्रति इष्टसाधनताज्ञानस्य हेतुत्वाद् विघ्नात्यन्ताभावस्यैव समाप्तिरूपेष्टसाधनत्वेन विघ्नध्वंसेष्टसाधनत्वाभावादिति वाच्यम्। सुखत्वदुःखाभावत्वेष्टसाधनत्वप्रकारकज्ञानवद् यत्र द्वेषः, तदभावत्वप्रकारकज्ञानस्यापि पृथगिच्छाहेतुतया विघ्ने द्वेषसत्त्वेन विघ्नाभावत्वप्रकारकज्ञानादेव विघ्नध्वंसे कामनोत्पत्तेः। अन्यथा प्रायश्चित्तादिजन्यपापनाशेऽपि कामनानुपपत्तेः। न च विघ्ने द्वेष एव कथं स्यात्? सुखाभावत्वदुःखत्वप्रकारकद्वेषं प्रति तत्प्रकारकज्ञानस्य, तदन्यद्वेषञ्च प्रत्यनिष्टसाधनताज्ञानस्य हेतुत्वादिति वाच्यं, यद्धर्मावच्छिन्नाभावे इच्छा, तद्धर्मप्रकारकज्ञानस्यापि पृथग् द्वेषहेतुतया समाप्तिरूपेष्टसाधनतया इच्छासत्त्वेन विघ्नत्वप्रकारज्ञानादेव द्वेषोत्पत्तेः। अन्यथा दाहार्थिनस्तत्प्रतिबन्धके मणौ [1]द्वेषानुपपत्तेः। अत एव च समाप्तिकामनाऽपि परम्परया मङ्गलाचारप्रयोजिकेति भावः।

**'न चानध्यवसाय'** इति, कियन्ति मङ्गलानि कर्त्तव्यानि, कीदृशं वा मङ्गलं कर्त्तव्यमित्यत्र नियामकाभाव इत्यर्थः। **'यावद्विघ्नशङ्कं'** यावज्जातीयविघ्नवारणार्थं **'तदाचारात्'** तज्जातीयमङ्गलाचारात्। **'अत एवे'**ति यतः, शङ्कितविघ्नवारणार्थं **'तच्छङ्कया'** परकाले यत्कर्त्तव्यं तत्प्रतिबन्धकीभूतमङ्गलकरणम्, अत एवेत्यर्थः। **'मध्येऽपी'**ति आरब्धकर्ममध्यकालेऽपीत्यर्थः। न चारब्धविघ्नान्तरोत्पत्तिशङ्कया, शङ्कितविघ्ननाश इति वाच्यम्, तत्र कर्मचिकीर्षाकालस्याङ्गतया कथं तदा तदनुष्ठानात् परकालकर्त्तव्यभागस्यैवारब्धकर्मतया तच्चिकीर्षाकालस्यैवाङ्गत्वादिति भावः।

---

१. द्वेषानुत्पत्तेरिति क०।

**स्यादेतत्, मङ्गलमाचरेदिति विधौ किं मङ्गलत्वम्, न तावद्देवतास्तुत्यादित्वम्, अननुगमात् । नापि प्रारिप्सितप्रतिबन्धकविघ्नोपशमहेतुक्रियात्वं विघ्नोत्सारणासाधारणकारणत्वं वा, क्रियाविशेषस्य तदसाधारण-**

माथुरी

ननु समाप्तौ चेन्मङ्गलं न हेतुः तदा गुरुतरकर्मारम्भे बहुतरमङ्गलाचरणं न स्याद् । अस्मन्नये तु गुरुतरकर्मसमाप्तौ बहुतरमङ्गलस्य हेतुत्वात् तदनुष्ठानमित्यत आह **'गुर्वारम्भेऽपीति'** । **'बहुविघ्नशङ्कया'** बहुविघ्नशङ्कयैव, न तु गुरुकर्मसमाप्तौ बहुतरमङ्गलस्य हेतुतयेत्यर्थः । **'तथोक्तमि'**ति तादृशाचारानुमितश्रुत्या तथैव बोधनादिति भावः

**'इति विधावि'**ति इति विधिप्रतिपाद्यं मङ्गलत्वं किमित्यर्थः । **'अननुगमादि'**ति आदित्वस्य चानुगतस्यैकस्य दुर्वचत्वादिति भावः । **'नापी'**त्यादि । **'विघ्नः'** दुरितम्, अन्यथा प्रारिप्सितसमाप्तिप्रतिबन्धकस्यैव विघ्नपदार्थतया प्रतिबन्धकान्तवैयर्थ्यापातात् । अत्र प्रायश्चित्तेऽतिव्याप्तिवारणाय प्रतिबन्धकान्तम् । कारीर्य्यां शौचादिहेतुक्रियायाञ्चातिप्रसङ्गवारणाय **'प्रारिप्सिते'**ति प्रारब्धसमाप्तीत्यर्थः । तादृशि दुरिते प्रतियोगितया स्वनाशजनकेऽतिव्याप्तिवारणाय **'क्रिये'**ति । **'क्रियात्वं'** प्रवृत्तिविषयत्वम्, प्रवृत्तित्वञ्च चिकीर्षाजन्यतावच्छेदको जातिविशेषः ।

एतच्च विनायकस्तवपाठेऽतिप्रसक्तं गणेशस्तवस्य मङ्गलत्वेऽपि तदनुकूलकण्ठाभिघाताद्यात्मकस्य तत्पाठस्यामङ्गलत्वात् । न च पाठकतासम्बन्धेन विनायकस्तव एव तन्नाशकः; न तु निरुक्ततत्पाठः स्तवश्च मङ्गलमेवेति वाच्यम्; **सर्वेविघ्नाः शमं यान्ति'** इति श्रुत्या तत्पाठस्यापि विघ्नाशकत्वबोधनादित्यतो लक्षणान्तरमाह **'विघ्न'**ति विघ्नध्वंसासाधारणकारणत्वमित्यर्थः । **'विघ्नः'** मङ्गलनाश्यतावच्छेदकवैजात्याश्रयो दुरितम्, तेन विनायकस्तवपाठे प्रायश्चित्ते कारीर्य्यादौ च नातिव्याप्तिः, तेषाञ्च शक्तिविशेषसम्बन्धेन विघ्नपदवत्त्वेनानुगमान्नाननुगमः । प्रतियोगिविधया कारणतामादाय विघ्नेऽतिव्याप्तिवारणाय **असाधारणे'**ति । असाधारणकारणत्वं च विघ्ननाशमात्रवृत्तिध्वंसत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं[२] विघ्नेऽतिव्याप्तिवारणाय वृत्त्यन्तं कार्यताविशेषणम् । ध्वंसं प्रति च सामान्यतः सत्त्वेनैव हेतुत्वान्नोक्तातिव्याप्तिः । ध्वंसप्रतियोगिनोस्तत्तद्व्यक्तित्वेनापि हेतु-हेतुमद्भावे तादृशकारणतामादायातिव्याप्तिवारणाय ध्वंसत्वावच्छिन्नेति, ध्वंसत्वावच्छिन्नत्वञ्च न ध्वंसत्वपर्याप्तावच्छेदकताकत्वम्, किन्तु तद्वृत्त्यवच्छेदकताकत्वमात्रम्, तेन नासम्भव इति भावः ।

---

१. विशिष्यापरिचयं इति ख० ।

२. कार्यताप्रतियोगिककारणताश्रयत्वमिति क० । अत्रापि प्रतियोगिकत्वं निरुपितत्वमेव, न त्वन्यदिति ।

**कारणस्य वा स्तुत्यादेर्वेदाद्विशिष्टापरिचये[1] प्रवृत्तिविषयालाभात् । नापि निर्विघ्नं समाप्यतामिति कामनया शिष्टाचारविषयत्वम्, वेदस्याचारानुपजीवकत्वात्, वेदादाद्याचारानुपपत्तेश्च, अन्योऽन्याश्रयात् ।**

**नापि तत्कामनया वेदविहितत्वम्, प्रारिप्सितकर्मनिर्वाहकत्वे सति कर्मारम्भकाले विहितवैदिककर्मत्वं वा तादृशवेदान्तराभावात् ।**

दर्पणः

हेतुत्वं मङ्गलस्यास्तु तथापि कामनानुरोधादेतदुदाहृतम् । किञ्च मङ्गलजन्यो विघ्नध्वंसो न साक्षात् समाप्तिं जनयति । दृष्टसम्पत्तौ दुरितकृतसमाप्तिविलम्बादर्शनादिति सामग्रीसम्पादनद्वारा समाप्तिहेतुत्वे वाच्ये सामग्र्येव लाघवात्फलमिति भावः । समाप्तिपक्षोक्तास्तु दोषा इहापि ध्येयाः ।

**केचित्तु** विघ्नकादाचित्काभावत्वेन रूपेण दुरितप्रागभावध्वंसयोः फलत्वम् । अतो विघ्नो निवर्त्ततामिति कदाचित् विघ्नो मा भूदिति च कदाचित्कामनोपपद्यत इत्याहुः ।

माथुरी

निरुक्तधर्मप्रकारेणैव विधिना बोधने अन्योऽन्याश्रयमाह **'क्रियविशेषस्ये'**त्यादि । **'विशिष्टापरिचये'** निरुक्तधर्मप्रकारेणं पूर्वं ज्ञानं विना **'प्रवृत्तिविषयालाभादि'**ति निरुक्तधर्मप्रकारेण प्रथमं विशेषतो ज्ञानासम्भवादित्यर्थः । स्तुत्यादेर्विघ्नध्वंसजनकत्वस्य वेदमात्रवेद्यत्वादिति भावः । **'शिष्टाचारे'**ति भ्रमाजन्याचारेत्यर्थः । तेन भ्रमात् तादृशकामनया प्रवृत्तिविषये नातिप्रसङ्ग इति भावः । **'आचारानुपजीवकत्वादि'**ति आचारविषयकज्ञानाधीनशाब्दबोधाजनकत्वादित्यर्थः ।

नन्विदमप्रयोजकमित्यत आह **'वेदादि'**ति । **'आद्याचारे'**ति, पुरुषान्तराचारविषयत्वस्य स्वीयकालान्तरीयाचारविषयत्वस्य वा ज्ञानं विना प्रवृत्त्यनुपपत्तेश्चेत्यर्थः । अनुपपत्तौ हेतुमाह **'अन्योऽन्याश्रयादि'**ति. वेदात् स्वस्याचारे जाते तद्विषयत्वप्रकारकशक्तिग्रहाद् वेदाच्छाब्दधीर्वेदाच्छाब्दबोधे एव च स्वस्याचार इत्यन्योऽन्याश्रयप्रसङ्गादित्यर्थः ।

यद्यपि पदान्तरशक्तिग्रहवत् प्रथममीश्वराचारदर्शनादेव शक्तिग्रहः सम्भवत्येव, तथापि यद्धर्मावच्छेदेन भगवदाचारदर्शनं तेनैव रूपेण शक्तिग्रहः स्यात्, स च नतित्वादिरेव, न त्वाचारविषयत्वमिति भावः ।

**'तत्कामनया'** तत्कामनाप्रकारेण, तत्कामिकर्त्तव्यत्वप्रकारेणेति यावत् । तेन कामनाया विधिजन्यशाब्दबोधजनकत्वेऽपि न क्षतिः । **'प्रारिप्सिते'**ति, आरम्भ-

---

१. विशिष्यापरिचये इति ख० ।

नापि स्मृत्यादौ मङ्गलत्वेनोत्कीर्त्तितत्वम्, वेदस्य स्मृत्यनुपजीवकत्वात् स्मृतिकर्तुरेव वेदादाद्याचारानुपपत्तेश्च ।

उच्यते[1]—'मङ्गलमाचरेदि'ति न विधिः, किन्तु 'निर्विघ्नसमाप्ति-

आलोकः

प्रारिप्सितेति । कर्मारम्भकालविहितत्वं तत्कालकर्त्तव्यत्वे विहितत्वम् । तावन्मात्रमारम्भणीयादौ गतमतः 'सत्य'न्तम् । तावन्मात्रं तज्जनकयागादौ गतमतः, 'तत्कालात्' । प्रयाजादिवारणाय 'कर्मपदं' तस्य फलवत्परत्वादिति । आरम्भपदं स्वकालकर्त्तव्यत्वेन स्वस्यापि वेदबोध्यत्वादतिव्याप्तिवारणाय ।

दर्पणः

तत्कामनयेति मूलम् । निर्विघ्नं समाप्यतामितिकामनावत्कर्त्तव्यत्वेनेत्यर्थः । अन्यथा विधौ कामनाहेतुत्वप्रकारत्वयोरभावात्तृतीयाऽनुपपत्तेः । उक्तार्थे तु प्रकारे तृतीयेति । कर्मारम्भकालविहितत्वस्यार्थमाह—तत्कालेति । कर्मारम्भकाल[2]कर्त्तव्यत्वेन प्रमितत्व[3]मित्यर्थः ।

तज्जनकयागादाविति । स्वस्य स्वनिर्वाहकत्वादिति भावः । तत्कालेतीति । स्वनिर्वाहको यो यागः तस्य कर्मारम्भकाले कर्त्तव्यत्वेन प्रमितत्वं नेत्यर्थः ।

माथुरी

णीयादावतिव्याप्तिवारणाय सत्यन्तं प्रारब्धकर्मसमाप्तिप्रयोजकत्वे सतीत्यर्थः । मङ्गलस्य समाप्त्यजनकतया जनकत्वमपहाय प्रयोजकत्वप्रवेशः । प्रयोजकत्वञ्च कारणतत्कारणसाधारणम् । अत एवादृष्टद्वारा समाप्तिप्रयोजककर्मान्तरेऽतिव्याप्ति-वारणाय विहितान्तं कर्मपूर्वकालकर्त्तव्यतया विहितत्वार्थकम्, असम्भववारणाय पूर्वत्वप्रवेशः । वैदिकपदं विहितान्तेन तादृशकालकर्त्तव्यतया वेदविहितत्व-लाभाय, अन्यथा कल्पितव्रतादिप्राक्कालकर्त्तव्यत्वेन लौकिककल्पितविधिविषयेऽदृष्ट-द्वारा तत्समाप्तिजनके होमादावतिव्याप्त्यापत्तेः । 'तादृशवेदान्तराभावादि'ति । इदमुप-लक्षणं द्वितीयेऽदृष्टद्वारा प्रारब्धकर्मसमाप्तिप्रयोजके आरम्भणीयादावतिव्याप्तेः, विघ्नध्वंसस्य समाप्त्यजनकतया मङ्गलस्य प्रारब्धकर्मसमाप्तिं प्रति प्रयोजकत्वस्या-प्यभावेनासम्भवापत्तेश्चेत्यपि बोध्यम् ।

'निर्विघ्नसमाप्तिकाम' इति । एतच्च सम्प्रदायनयमाश्रित्य, स्वनये तु प्रारिप्सित-

---

१. अत्रोच्यत इति ख० ।
२. कथं विहितत्वमित्याकाङ्क्षायाम् ।
३. जन्यत्वादिभ्रमनिरासाय 'प्रमितत्व'पदमिति । अत्र 'प्रमापितत्व'मिति काशी पुस्तकपाठः ।

**कामो देवतास्तुतिमाचरेदि'त्यादिप्रत्येकमेव विधिः। तथैव शिष्टाचारात्। तदुपजीव्य निर्विघ्नमारब्धं परिसमाप्यतामिति कामनया तद्विघ्नोपशम-हेतुत्वेन वा वेदविहितत्वं मङ्गलत्वमित्यधिगम्य देवतास्तुतिनमस्कारादिषु**

आलोकः

प्रत्येकमेव विधिरिति। नन्वेवमनुगतहेतुतावच्छेदकाभावे विघ्नध्वंसं प्रति कारणत्वासम्भवः। कार्ये चावान्तरधर्मो नास्त्येव येनाननुगतस्यैव कारणतेति।

अत्राहुः—नतिनाश्यविघ्नजातीयो विघ्नो नत्यादिनाश्य इति तत्तज्जातीय-नाशत्वमेव कार्यतावच्छेदकम्। नतित्वादिके हेतुतावच्छेदकम्।

वस्तुत उक्तरीत्या कार्यकारणभावमात्रे शब्दसामर्थ्यमवच्छेदककल्पना चोत्तरकालिकी। तथा च विघ्नध्वंसत्वेन कार्यता विघ्ननाशकत्वादिना वेद-विहितत्वमेव हेतुतावच्छेदकमित्येवोचितम्। अपूर्वजनकतायां कालान्तरीयकार्य्यानु-गुणतया वेदविहितत्ववदिति सारम्।

दर्पणः

**प्रयाजादीति**। व्रीह्यवघातादीत्यर्थः। प्रयाजादेः स्वरूपनिर्वाहकत्वात् फलनिर्वाहकत्वं वा विवक्षितम्। **तस्य फलवदिति**। न हि प्रयाजारम्भकालः फलवदारम्भकालो भवति प्रयाजादीनामफलत्वात्।

लौकिकव्यापारवारणाय **वैदिकपदम्**। यत्कर्मप्राक्कालकर्त्तव्यत्वेन विहितत्वं तस्यैव कर्मणो निर्वाहकत्वलाभाय प्रारिप्सितपदम्। अन्यथारम्भणीयादावतिव्याप्तेरिति द्रष्टव्यम्।

माथुरी

विघ्नोपशमनकाम इति बोध्यम्। **'तथैव'** स्तुतित्वादिनैव, **'शिष्टाचारात्'** शिष्ट-प्रवृत्तिविषयत्वात्। **'तदुपजीव्ये'ति** तत्तद्विधिजन्यज्ञानसहकारेणेत्यर्थः। **'तद्विघ्ने'ति** प्रारब्धकर्मविघ्नेत्यर्थः। लक्षणद्वयं मतभेदेन।

नन्वेतल्लक्षणद्वयमादर्शदर्शनादावव्यापकमित्याशङ्क्याह **'मङ्गलत्वं'ति**, **'मङ्गलाचारः'** आदर्शदर्शनादिः, **'विनिपातः'** दुरितं, **'न विद्यते'** नोत्पद्यते, **'मङ्गल-त्वम्'** मङ्गलपदशक्यत्वम्, **'तत्र नाना 'र्थतैवे'ति 'अत'** इत्यादिः, **'तत्र'** मङ्गलपदे।

ननु नानार्थतांया अन्याय्यतया विनिपातपदं प्रारिप्सितपरमेवास्तु, 'न विद्यत' इत्यपि विनाशपरमस्तु; तथा चादर्शदर्शनादेरपि नत्यादिवदेव मङ्गलत्वम्। न च 'जुह्वतामि'ति न होमान्तरविधिः, किन्तु अग्निहोत्रस्यैवानुवादः। तथा च तस्य नित्यतया विघ्नेतरपापानुत्पत्तिफलकत्वेन प्राप्तत्वाद् 'विनिपात' पदस्य विघ्नपरत्वं 'न विद्यत' इत्यस्य विनाशपरत्वञ्च न सम्भवति। अग्निहोत्रानुरोधेन 'विनिपातो न विद्यत'

मङ्गलव्यवहारः शिष्टानामिति। अत[1] एव दुरितनाशकमपि गङ्गा-स्नानादि न मङ्गलम्, तथाऽविधानात्[2]।

मङ्गलाचारयुक्तानां नित्यञ्च प्रयतात्मनाम्।
जपतां जुह्वताञ्चैव विनिपातो न विद्यते॥

इत्यनेन बोधितादर्शदर्शनादेः पृथगेव[3] मङ्गलत्वम्, न तु विघ्न-निवर्त्तकतया, तत्र नानार्थतैव। अन्यथा[4] ग्रन्थारम्भे नमस्कारतुल्यतया

आलोकः

कामनया कामिकर्त्तव्यत्वेन, न तु विघ्ननिवर्त्तकयेति।

जुह्वतामिति न होमान्तरविधिः वाक्यभेदापत्तेः स्वरूपालाभाच्च, किन्तु अनुवादः। न च विधिमन्तरा स इति विनिपाताभावफलकप्राप्तहोमजिज्ञासायां नित्यताबलात् प्राप्तपापानुत्पादफलकस्याग्निहोत्रस्यैवायमनुवाद इति निश्चीयते।

दर्पणः

अतिव्याप्तिवारणायेति। तत्कालकर्त्तव्यताकयागादावित्यर्थः।

ननु कामनयेति तृतीया न सङ्गता विधौ कामनाया हेतुत्वाभावात् प्रकारत्वा-भावाच्चेत्यत आह—कामिकर्त्तव्यत्वेनेति। अत्राभिप्रायः पूर्वमुक्तः। तथा च प्रकारे तृतीयेति भावः।

माथुरी

इत्यस्य पापानुत्पादपरत्वम्, मङ्गलानुरोधाच्च विघ्ननाशपरत्वमित्युपगमे च वाक्यभेद इति वाच्यम्, तथापि पापसंसर्गाभावत्वसामानाधिकरण्येन सर्वेषां[5] जन्यतान्वय-[6]सम्भ-वात्। कार्यतावच्छेदककल्पना[7] च यथायोग्यमौ[8]त्तरकालिकीत्यत आह 'अन्यथे'ति।

---

१. विघ्ननिवर्त्तकतया नत्यादिवन्मङ्गलत्वे इत्यर्थः।
२. तथात्वेन वेदविहितत्वस्य मङ्गलस्वरूपपत्वादेवेत्यर्थः।
३. विघ्ननाशार्थं गङ्गास्नानादेर्वेदेनाविधानादित्यर्थः।
४. नत्यादिवैलक्षण्येनैवेत्यर्थः।
५. आदर्शदर्शनजपहोमानामित्यर्थः।
६. पापध्वंसरूपे पापसंसर्गाभावे आदर्शदर्शनजपयोर्जन्यतायाः पापप्रागभावरूपे पापसंसर्गा-भावे च होमस्य जन्यताया अन्वयसम्भवादिति भावः।
७. पापध्वंसत्वमादर्शदर्शनादेः पापप्रागभावत्वं च होमस्य कार्यतावच्छेदकमिति कल्पनेत्यर्थः।
८. मङ्गलाचारयुक्तानाम्' इत्यादिवचनात् पापसंसर्गाभावत्वसामानाधिकरण्येनादर्श-दर्शनादिजन्यताबोधानन्तरकालिकीत्यर्थः।

तत्करणप्रसङ्गः[१]।

'अथ' शब्दो विघ्ननिवर्तकत्वान्मङ्गलमेव,

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा तु निर्यातौ तेन माङ्गलिकावुभौ॥

आलोकः

तथा च नञ्पदस्य तदनुरोधेन प्रागभावपरस्य ध्वंसपरत्वे वाक्यभेदापत्तिः। तत्साहचर्यात् प्रागभावपरत्वे सुष्ठूक्तम्—पृथगेवेति।

यदि चाग्निहोत्रस्यापि मानान्तरात् पापक्षयजनकत्वं ज्ञायते तदापि वाक्यभेदोऽग्निहोत्रानुरोधेन विनिपातपदस्य पापसामान्यपरत्वान्मङ्गलानुरोधेन च प्रारब्धप्रतिबन्धकविघ्नपरत्वादिति भावः।

अथशब्द इति। यद्यपि अथशब्दो ग्रन्थान्तर्गतस्तत्कथं मङ्गलम्? तस्य तज्जन्यत्वात् तथाऽपि तदुच्चारणहेतुज्ञानन्तत्र मङ्गलम्। तद्बहिर्भावेनैव वा ग्रन्थ इति वदन्ति।

दर्पणः

वाक्यभेदेति। अन्यतः प्राप्तजपाद्यनुवादे होमस्य चापूर्वस्य विधाने विध्यनुवादवैषम्यापत्तेरित्यर्थः। स्वरूपालाभादि। द्रव्यदेवतयोरप्राप्तेरित्यर्थः।

इति वदन्तीति। ग्रन्थमध्येऽपि मङ्गलाचरणाद् ग्रन्थान्तर्गतस्याप्यथशब्दस्यान्यार्थं नीयमानस्योदकुम्भस्येव मङ्गलत्वसम्भवान्नैतत्कल्पनाद्वयं सम्यगित्यरुचिबीजमत्र।

माथुरी

ननु तथापि 'अथ' शब्देऽतिव्याप्तिः। ग्रन्थारम्भप्राक्काले तदुच्चारणस्यापि शिष्टैः करणादित्यत्रेष्टापत्तिमाह 'अथ' शब्द इति।

'पुरा' सृष्ट्यारम्भकाले, 'कण्ठं भित्त्वा' कण्ठ्यवर्णघटितत्वात्[२] कण्ठाभिहतवायुना, 'विनिर्यातौ'[३] 'तेन' तादृशविघ्नोपशमनकामशिष्टाचारविषयत्वेन, 'माङ्गलिकौ' मङ्गलस्वरूपौ। स्वार्थे इकण्प्रत्ययात्। एवञ्च ग्रन्थस्त[४] द्बहिर्भावेण, ग्रन्थस्य तद्घटितत्वे प्राक्काले[५] अनुष्ठानविषयत्वासम्भवादिति बोध्यम्[६]।

---

१. आदर्शदर्शनादिकरणप्रसङ्ग इत्यर्थः।

२. अथशब्द ओंशब्दश्चाकारात्मकेन कण्ठ्यवर्णेन घटितौ, अतस्तदुच्चारणरूपं तद्विनिर्यातं कण्ठाभिहतवायुसाध्यमित्याशयः।

३. 'विनिर्जातौ' 'जातौ' इति क०, ख०, ग०, च० विनिर्यातौ इति माथुरी सम्मतपाठः।

४. अथशब्दबहिर्भावेणेत्यर्थः, अथशब्दो ग्रन्थघटको न भवतीति भावः।

५. अथशब्दघटितग्रन्थप्राक्काल इत्यर्थः।

६. ध्येयमिति क०।

**न च शुभसूचकत्वमेव तस्य, शास्त्रारम्भे महर्षिणा तदनुपादान-प्रसङ्गात् ।**

**गुणवत्तया ज्ञापनं स्तुतिः । यमुद्दिश्य यस्य स्वापकर्षबोधनानुकूलो**

दर्पणः

अतः परं टिप्पणीकृता त्यक्तमूलं लेशतो व्याख्यायते । **गुणवत्तयेति ।** अनाद्युत्कर्षपदवाच्यधर्मवत्ताज्ञापकः शब्दः स्तुतिः । तेन गुणानामननुगतत्वात् लक्षणाननुगमो न दोषः ।

केचित्तु चेतने उत्कृष्टपदं यद्वत्तया प्रवर्त्तते स गुणस्तद्बोधकः शब्दः स्तुतिः । तथा चाचेतनोत्कर्षकीर्त्तने स्तुतिपदं भाक्तमित्याहुः ।

**यमुद्दिश्येति ।** स्वापकर्षबोधनानुकूलतावच्छेदकजातिमान् व्यापार इत्यर्थः । सा च जातिर्ज्ञाने मानसत्वव्याप्या एका । कायिकेऽन्यतरकर्मजत्वादिव्याप्या नाना ।

माथुरी

ननु यथा यात्रापूर्वकालेऽपि शुभसूचकतया आदर्शदर्शनादि क्रियते, तथैव 'अथ' शब्दोऽपि शुभसूचकः स्यादित्याशङ्क्य निराकरोति '**न चे**'ति । '**शास्त्रारम्भे**' शास्त्रारम्भसमय एव, तथा चादर्शदर्शनादिवदन्य[1] दापि तदनुष्ठानापत्तिरिति[2] भावः ।

ननु '**स्तुतिमाचरेदि**' त्यादौ का स्तुतिरित्यत आह '**गुणवत्तये**'ति उत्कर्षवत्तयेत्यर्थः । तेनाधार्मिकत्वास्पृश्यसंयोगित्वादेर्व्युदासः[3] । उत्कर्षत्वञ्च शक्तिविशेषसम्बन्धेनोत्कर्षपदवत्त्वम्, अतो नाननुगमः । '**ज्ञापनं**' ज्ञानानुकूलः शब्दः, तेन व्यापारान्तरे[4] तादृशि[5] नातिप्रसङ्गः[6] । न च तथापि उत्कर्षस्य जातिविशेषरूपतया त्वं दयाशीलः, त्वं दाता, पुत्री त्वमेवेत्यादा[7]वव्याप्तिरिति[8] वाच्यम्, दयादिष्वप्युत्कर्षव्यवहारेण तेषामप्युत्कर्षपदवाच्यत्वात्[9] ।

---

१. कार्यान्तरारम्भकालेऽपीत्यर्थः ।
२. अथशब्दोच्चारणापत्तिरित्यर्थः ।
३. तेनाधार्मिकस्त्वमस्पृश्यसंयोगी त्वमित्यादेर्व्युदासः इति ख० ।
४. निम्नासनाद्युपवेशनादिरूपे व्यापार इत्यर्थः ।
५. उत्कर्षवत्तया ज्ञापक इत्यर्थः ।
६. न स्तुतिव्यवहारप्रसङ्ग इत्यर्थः ।
७. इत्यादिवाक्येष्वित्यर्थः ।
८. दयाशीलत्वादेर्जातिरूपत्वाभावादव्याप्तिरिति भावः ।
९. उत्कर्षो न जातिः, किन्तूत्कर्षपदवाच्यो योयः, स सर्व एवोत्कर्षः । दयादिरप्युत्कर्षपदेन व्यवह्रियमाणतयोत्कर्षपदवाच्युत्कर्ष एवेति नोक्तवाक्येष्वव्याप्तिरित्यभिप्रायः ।

व्यापारविशेषः तस्य नमस्कारः। व्यापारे च कायिक-वाचिक-मानसिकरूपे विशेषो जातिविशेष एवानुभवसाक्षिकः, करशिरःसंयोगमात्रे

दर्पणः

वाचिके च नमामि इत्यादौ पूर्वपूर्ववर्णानुभवाहितसंस्कारसचिवचरमवर्णेन्द्रियसन्निकर्षग्राह्या चरमवर्णनिष्ठा गत्वादिव्याप्या नाना। तथा च ज्ञानत्वव्याप्यजातीनां स्वापकर्षबोधनानुकूलतावच्छेदकत्वेनानुगतीकृतानां नमस्कारपदप्रवृत्तिनिमित्तत्वं न तु त्रितयसाधारण्येका जातिः।

कायिकत्वादाविति। न चोन्मादाद्यहेतुकत्वेन विशेषितस्यैव कायिकादिव्यापारस्य स्वस्मिन्नुक्तविशेषपूर्वकत्वेन व्याप्तिग्रहादनुमानं स्यादिति वाच्यम्, तज्ज्ञानेऽपि

माथुरी

न च तथापि तादृशि स्वरूपाख्यानेऽतिव्याप्तिः, तस्यापि स्तुतित्वे 'भवतां स्वरूपं कथयामः, न तु स्तुम' इति सकलप्रामाणिकव्यवहारासङ्गतेरिति वाच्यम्, ज्ञानपदेन भ्रमरूपज्ञानस्य विवक्षितत्वात्। अत एवारोप्यगुणकथनं स्तुतिरिति प्रामाणिकाः, भगवत्स्तुत्यादिषु[1] तत्प्रयोगो[2] भाक्तः।

नव्यास्तु ज्ञानविशेषोपधायकः शब्दः स्तुतिः, ज्ञाननिष्ठो विशेषश्च शाब्दत्वव्याप्यो जातिविशेषः। उपधायकत्वञ्च ज्ञानविशेषशब्दयोः संसर्गमर्यादया प्रविष्टम्; अतो नाननुगमो[3] दोषाय। न च स्तुतिनिन्दार्थोभयविषयकसमूहालम्बनज्ञाने साङ्कर्यापत्तिः, विनिगमनाविरहेण निन्दापदशक्यतावच्छेदकस्यापि जातित्वस्य दुर्वारत्वादिति वाच्यम्, तदुभयजातेः समूहालम्बनज्ञानव्यावृत्तत्वाभ्युपगमात्, समूहालम्बनमात्रजनकस्तुत्यादौ च मानाभावात्, तत्सत्त्वे च तत्र स्तुतिव्यवहारस्य भाक्तत्वादित्याहुः।

'यमुद्दिश्ये'ति यदवधिकेत्यर्थः। तथा च स्वापकर्षबोधजनतावच्छेकजातिमत्त्वमेव लक्षणम्। को व्यापारः, कस्य नमस्कार इत्याकाङ्क्षयां 'यमुद्दिश्ये'ति स्वत्वघटितत्वेनाननुगममाङ्क्याह यद्वेति। नानार्थतैवेति कायिकादिप्रत्येकवृत्तिजातिविशेषा एव नमस्कारपदशक्यतावच्छेदका इत्यर्थः।

---

१. भगवद्गुणवर्णनपरकवाक्येष्वित्यर्थः।

२. स्तुतिपदप्रयोग इत्यर्थः।

३. ज्ञानविशेषोपधायकत्वं तत्तज्ज्ञानविशेषोपधायकत्वमेव वाच्यम्, सामान्यतो ज्ञानविशेषोपधायकस्य ज्ञानविशेषप्रागभावाधिकरणकालप्रागभावानधिकरण-ज्ञानविशेषप्रागभावाधिकरणकालघटिततया अन्त्यज्ञानविशेषातिरिक्तानां सर्वेषां ज्ञानविशेषाणामुपधायकेष्वव्याप्तेस्तत्प्रागभावाधिकरणकालस्य तदुत्तरभाविज्ञानविशेषप्रागभावाधिकरणकालप्रागभावाधिकरणतया तादृशकालप्रागभावाधिकरणत्वासम्भवात्। तथा च अननुगतस्य तत्तज्ज्ञानविशेषोपधायकशब्दस्य स्तुतिपादार्थत्वे स्तुतिपदस्य नानार्थत्वप्रसङ्गरूपो दोषः स्याद् यदि उपधायकत्वं संसर्गमर्यादया स्तुतिपदार्थघटकः

तदव्यवहाराद् 'भवतोऽहमपकृष्ट' इत्यादिवचने तदव्यवहाराच्च । यद्वा कायिकादौ प्रत्येकमेव विधिकल्पनम्, अतो नानार्थतैव ।

यत्तु बुद्धिविशेषपूर्वकत्वज्ञानं विना कायिकादौ न तद्व्यवहार इति स एव वाच्यः, अन्यत्र लक्षणेति, तन्न; कायिकादिव्यापारविशेषमनवगम्य

दर्पणः

करशिरःसंयोगादिविशेषज्ञानादनुमितिदर्शनात् । नानार्थतैवेत्यापाततः एकार्थत्वे उक्तरीत्या सम्भवति नानार्थत्वायोगात् । किं च वाचिके गत्वादिजातिसङ्करभयेन गत्वादिव्याप्या यथा नाना तथा देवदत्तप्रभवत्वादिव्याप्या नाना जातिर्वाच्या। तथा च पुरुषानन्त्येन वाचिकनमस्कारानन्त्यात्तत्र प्रत्येकविधेरसम्भवः। तस्मात् प्रथमकल्प एव श्रेयान् । न चैवं स्तुतित्वं जातिरेवास्त्विति वाच्यम् । देवदत्तीयत्वादिना सङ्करापत्तेः ।

माथुरी

ननु करशिरःसंयोगादिः कायिकनमस्कारः, तत्र कथं जातिविशेषः ? नोदनत्वाभिघातत्वसंयोगजत्वादिना साङ्कर्यात् । न च संयोगजत्वादिजातयो नाना, कार्यतावच्छेदकाननुगमस्यादोषत्वान्नमस्कारपदशक्यतावच्छेदकजातिश्चैका विघ्नविशेषनाशकतावच्छेदकतया सिद्धा, तन्नानात्वे व्यभिचारापत्तेरिति वाच्यम्; तथापि शब्दविशेषजनकतावच्छेदकाभिघातत्वमादाय साङ्कर्यस्य दुर्वारत्वादुभयोरेव जनकतावच्छेदकतया नानात्वे विनिगमकाभावादिति चेत् न; करशिरःसंयोगाद्यनुकूलचेष्टाविशेषस्यैव कायिकनमस्कारत्वाच्चेष्टानिष्ठविशेषस्तु चेष्टात्वव्याप्यो जातिविशेषः। स च विघ्नविशेषनाशकतावच्छेदकतया सिद्धः ।

ननु तथापि यत्र नमःपदादिरेव वाचनिकनमस्कारः, तत्र कथं जातिविशेषः ? नत्वादिना साङ्कर्यात् । न च मकरादिचरमवर्णवृत्तिमत्वादिव्याप्यो नानाजातिविशेष एव वाचनिकत्वम्, नोत्तरमकारविशेषादिरेव वाचनिकनमस्कारः, पूर्वपूर्ववर्णज्ञानं तु तद्व्यञ्जकम्, अतश्चरमवर्णमात्रश्रवणे न तज्जातिसाक्षात्कार इति वाच्यम्, विनिगमनाविरहेण मपूर्वनकारविशेषस्यापि वाचनिकत्वस्य दुर्वारत्वादिति चेत्, न; विनिगमनाविरहाद् नत्वमत्वादिव्याप्या नानाजातय एव वाचनिकत्वमित्यभिप्रायात् ।

नव्यास्तु शाब्दबोधवृत्तिशाब्दत्वव्याप्यजातिविशेष एव वाचनिकत्वम्, अत एव वाचनिक इत्युच्यते, न तु वचनमित्याहुः ।

---

न स्यादित्याशयः । उपधायकत्वस्य संसर्गत्वे तु न दोषः, तत्कुक्षौ स्वत्वस्य परिचायकतयैव प्रविष्टत्वेन वस्तुतोऽप्रविष्टत्वात् । तथा च ज्ञानविशेषोपधायकत्वं ज्ञानविशेषविशिष्टत्वम्, वैशिष्ट्यं च स्वनिरूपितान्यथासिद्धिशून्यत्वस्वविशिष्टकालवृत्तित्वैतदुभयसम्बन्धेन, स्ववैशिष्ट्यं स्वप्रागभावाधिकरणत्वस्वप्रागभावाधिकरणकालप्रागभावानधिकरणत्वैतदुभयसम्बन्धेन ।

**बुद्धिविशेषपूर्वकत्वाज्ञानात् । स्वीकृतवेदप्रमाणभावः शिष्टः । आचारे च वेदनिषिद्धत्वमविगीतत्वं विशेषणं[1] देयम् ।**

दर्पणः

**स्वीकृतेति** । ननु वेदस्य यावत्त्वविवक्षायां मङ्गलकर्त्तुः शिष्टत्वाभावापत्तिः । सर्वेषां वेदानामसर्वज्ञत्वेनाज्ञानात् । एकदेशविवक्षायां बौद्धेऽतिव्याप्तिः । अहिंसादिप्रतिपादकवेदभागस्य तेनापि प्रामाण्यस्वीकारादिति चेत्—न । यावत्त्वस्यैव विवक्षितत्वात् । विशेषाकारेण सर्वान् वेदानजानतामपि स्वार्थे सर्वे वेदाः प्रमाणमित्यभ्युपगमसत्त्वात् । न चाभ्युपगमस्य विशेषणतोपलक्षणताविकल्पेनाव्याप्त्यतिव्याप्ती ।

माथुरी

मानसिकत्वं तु मानसत्वव्याप्यो जातिविशेष एव । न च स्वप्नत्वमादाय साङ्कर्यमिति वाच्यम्, तस्य स्वप्नत्वविरुद्धत्वादिति ध्येयम् ।

प्राभाकरमतमाह **यस्त्विति** । **बुद्धिविशेषेति** ज्ञानविशेषजन्यत्वस्यैव कायिकादिनिष्ठजातिविशेषव्यञ्जकत्वादित्यभिमानः । **स एवेति** मानसज्ञानविशेष एवेत्यर्थः । **अन्यत्र** कायिकादौ । **कायिकादीति**, तं प्रति तस्य लिङ्गत्वात् । तथा च ज्ञानविशेषजन्यत्वग्रहो न तादृशजातिविशेषव्यञ्जक इति भावः । न च तथापि चेष्टात्वमानसत्वव्याप्यजातिविशेष एव शक्यतावच्छेदकः, न तु वाचनिकत्वम्, तस्य नत्वादिव्याप्यनानात्वाभ्युपगमादिति वाच्यम्, तस्याप्युक्तक्रमेणैकत्वात्, नानात्वेऽपि प्रत्येकमादाय विनिगमनाविरहेण शक्यतावच्छेदकत्वस्य दुर्वारत्वाच्चेति हृदयम् ।

ननु मङ्गलं वेदबोधितसमाप्तिसाधनताकं समाप्त्युद्देश्यकाविगीतशिष्टाचारविषयत्वादिति साम्प्रदायिकानां प्रागुक्तवेदानुमाने किन्तावच्छिष्टत्वमित्यत आह **स्वीकृतेति** वेदविशेष्यकप्रामाण्याभ्युपगमवानित्यर्थः । अभ्युपगमो निश्चयः, तावतैव यत्तद्भ्यां सामान्यतो व्याप्तौ पशुपक्ष्यादिकृतवृथाचेष्टायां व्यभिचारवारणदिति भावः । बालकपतिनान्त्यजाद्यतिरिक्तत्वे सतीत्यनेनापि विशेषणीयम्, तेन तदीयवृथाचेष्टायां पश्वादिवृथाचेष्टावद्वेदानिषिद्धायां न व्यभिचारः ।

अन्वेवं वेदप्रामाण्याभ्युपगन्त्रा भ्रान्त्या क्रियमाणे चैत्यवन्दनादौ व्यभिचार इत्यत आह, **'आचारे च'**ति आचारे अविगीतत्वं अद्विशेषणं दत्तं तद्वेदानिषिद्धत्वरूपमित्यर्थः । प्रामाणिककृतचैत्यवन्दनादिकञ्च न तथा, तस्य पूर्वलिखितवेदनिषिद्धत्वादिति भावः अलौकिकत्वे सतीत्यनेनापि विशेषणीयम्, तेन शिष्टकृतभोजनादौ न

---

१. आचारे च वेदानिषिद्धत्वमलौकिकत्वञ्च विशेषणमिति क० पुस्तकपाठो न समीचीनः; अलौकिकत्वे सतीत्यनेनापि विशेषणीयमिति मथुरानाथोक्त्यसङ्गत्यापत्तेः ।

२. आचारे च वेदानिषिद्धत्वमलौकिकत्वञ्च विशेषणमिति क० पुस्तकपाठो न समीचीनः, अलौकिकत्वे सतीत्यनेनापि विशेषणीयमिति मथुरानाथोक्त्यसङ्गत्यापत्तेः ।

यद्वा अलौकिकविषयशिष्टाचारत्वमेव हेतुः, शिष्टाचारत्वञ्च भ्रमाजन्याचारत्वम्। आस्तिक-नास्तिकयोरगम्यागमनचैत्यवन्दनादावाचार-जनकज्ञानस्य भ्रमत्वात्, बलवदनिष्टानुबन्धित्वादिष्टासाधनत्वाच्च। लोके च पाषण्डव्यावृत्तशिष्टव्यवहारो वेदप्रामाण्याभ्युपगमनिबन्धनः।

तैर्थिकत्वेऽपि शिष्टाविष्टव्यवहारो वेदनिषिद्धाकर्तृत्व-तत्कर्तृत्व-निबन्धनः। यद् वा वेदप्रामाण्याभ्युपगन्तृत्वे सति यो यदा वेदनिषिद्धाकर्ता स तदा शिष्टः, तत्कर्ता त्वशिष्टः। अत एव वेदानिषिद्धाकर्तृत्वेऽपि बौद्धो

दर्पणः

वेदप्रामाण्याभ्युपगमकाले यावत्संख्याकाः सम्बन्धविशेषावच्छिन्नविरोध्यभ्युपगमा-नाद्यभावास्तावत्सत्त्वं शिष्टत्वमित्यर्थात्। न चानादिपदं व्यर्थम्। आस्तिकतानन्तर-बौद्धस्यापि विरोध्यभ्युपगमध्वंसमादाय[1] तावत्संख्याकाभावसत्त्वात्। सम्बन्धविशेष-विवक्षया वा यत्र प्रथमं पुत्रादिद्वारकपरम्परासम्बन्धेनापि विरोध्यभ्युपगमो न स्थितः

माथुरी

व्यभिचारः। अलौकिकत्वञ्च प्राङ्निरुक्तमेव। न च तथापि भ्रान्त्या स्वःफलान्यफल-मुद्दिश्य कृते यागादौ व्यभिचारः, तत्साधनत्वेन तस्या वेदबोधितत्वाभावादिति वाच्यम् चैत्यवन्दनादिवत् तस्यापि वृथाचेष्टात्वेन वेदनिषिद्धत्वात्।

लाघवादाह यद्वेति। 'अलौकिकविषये'ति अलौकिकविषयकेत्यर्थः। 'हेतु' पूर्वोक्तहेत्वर्थः। तथा चाविगीतपदस्यैव लौकिकाविषयकत्वमर्थः, तच्च भोजनादौ लौकिककर्मणि व्यभिचारवारणायेति भावः। लौकिकाविषयकत्वन्तु प्राङ्निरुक्तमेव।

नन्वेवं शिष्टकृतचैत्यवन्दनादौ व्यभिचार इत्यत आह 'शिष्टाचारत्वञ्चे'ति। 'आगम्यागमने'ति अगम्या-गमनायोग्या या भूमिः, तत्र तीर्थत्वभ्रान्त्या कृतं यद्गमन-मित्यर्थः। यथाश्रुतं तु न सङ्गच्छते, अलौकिकविषयकत्वविशेषणेनैव तद्वारणात्।

केचित्तु आगम्यागमनस्योभयविशेषणेमैव कारणं सम्भवतीति सूचनाय तदभिधानमित्याहुः।

'बलवदनिष्टे'ति, निष्फलत्वादिति भावः। तदुद्देश्यकत्वेनाप्याचारो विशेषणीयः, प्रयोजनञ्चोक्तमेव। नन्वेवं भ्रमाजन्यः शिष्ट इति फलितम्। तथा च घटपटादौ गगनादौ पाषण्डे च शिष्टव्यवहारापत्तिरित्यत आह 'लोके चे'ति। 'वेदप्रामाण्याभ्युपगमे'ति, तथा च सर्वे वेदाः स्वस्वतात्पर्यविषयार्थे प्रमाणमित्याकारकयावद्वेदविशेष्यका-नाहार्यनिश्चयवत्त्वं शिष्टपदशक्यतावच्छेदकम्, प्रकृते च शिष्टपदं भाक्तम्। एवं वेदो न प्रमाणमिति यत्किञ्चिद्वेदविशेष्यकानाहार्यनिश्चयवत्त्वमेव बौद्धत्वमिति भावः।

१. यावन्तो वेदप्रामाण्याभ्युपगमाः स्थिताः तावन्तो विरोध्यभ्युपगमाः सञ्जातास्तेषाञ्च ध्वंसमादायेत्यर्थः।

न शिष्टः पापजनकत्वज्ञानं विना वेदनिषिद्धकर्तृत्वं यस्य नास्ति स शिष्ट इति तु न, तैर्थिकस्यापि कस्यचित् पापजनकत्वज्ञानं विना वेदनिषिद्धकर्तृत्वात् ।

यत्तु रागद्वेषहीनः शिष्टः, स च सर्वज्ञत्वान्मन्वादिरेव, अविगीततदाचारादेव वेदानुमानमिति । तन्न, एवं हि मन्वाद्याचारा-

माथुरी

बौद्धस्यापि "मा हिंस्यात् सर्वा भूतानि" इत्यादि यत्किञ्चिद्वेदप्रामाण्याभ्युपगन्तृत्वाद् वेदत्वावच्छेदेनैवाहार्यप्रामाण्याभ्युपगमवत्त्वाच्च [1]यावत्त्वानाहार्यत्वयोरुपादनम् ।

नन्वत्र तादृशनिश्चयो विशेषणमुपलक्षणं वा ? नाद्यः, सुषुप्त्यादिदशायामशिष्ट-त्वापत्तेः; न चेष्टापत्तिः, तदानीमपि शिष्टव्यवहारात् । नान्त्यः, [2]बौद्धेतिव्याप्तेः । अनादौ संसारे कदाचित् तेनापि तदभ्युपगमात् । न च तच्छरीरावच्छेदेन तदभ्युपगमो विवक्षितः, एकस्मिन्नेव शरीरे कालभेदेन शिष्टताबौद्धतोभयदर्शनाद् बौद्धतादशायामतिव्याप्तेः, तदानीं शिष्टव्यवहाराभावात्; अन्यथा अनादौ संसारे सर्वस्येवात्मनो यदा कदाचिच्छिष्टत्वेनात्मत्वस्यैव तथात्वस्य सुवचत्वात् ।

अथ तत्पुरुषीयतादृशनिश्चयसमानकालीना यावन्तस्तत्पुरुषीयास्तादृशविरोधिनिश्चयाभावास्तद्वत्त्वम् तत्पुरुषीयशिष्टत्वम्, शिष्टतोत्तरबौद्धतादशायां तादृशनिश्चयसमानकालीनस्य बौद्धताकालीनविरोधिनिश्चयव्यक्तेः प्रागभावस्य यावदन्तर्गतस्यासत्त्वान्नातिप्रसङ्ग इति चेत् न; यस्य पुरुषस्य शिष्टतोत्तरं बौद्धता, तदन्तरं पुनः शिष्टता च, तत्र पूर्वशिष्टतादशायामव्याप्तिः, मध्यवर्तिबौद्धताकालीनविरोधिनिश्चयव्यक्तिध्वंसस्यापि तादृशयावदभावान्तर्गतस्य तदानीमभावात् । तदुत्तरशिष्टतादशायामव्याप्तिः, मध्यवर्तिबौद्धताकालीनविरोधनिश्चयव्यक्तिप्रागभावस्यापि तादृशयावदभावान्तर्गतस्य तदानीमसत्त्वादिति । मैवम्; यावतीस्तादृशनिश्चयव्यक्तीः प्रातिस्विकरूपेणोपादाय तत्तन्निश्चयव्यक्तिसमानाधिकरणत्वे सति तत्तद्व्यक्तिसमानकालीना यावन्तस्तत्तद्व्यक्तिविरोधिनिश्चयाभावास्तद्वत्त्वे सति तत्तद्व्यक्त्यपूर्वकालावच्छिन्नत्वं शिष्टत्वमिति विवक्षितत्वात् । पुरुषान्तरवृत्तिविरोधिनिश्चयप्रागभावमादायासम्भववारणाय समानाधिकरणत्वोपादानम् । स्वीयपूर्वजन्मीयविरोधिनिश्चयप्रागभावमादायासम्भववारणाय समानकालीनत्वोपादानम् । वेदा न प्रमाणमिति निश्चयनाशोत्तरं वेदाः प्रमाणमिति निश्चयानुत्पादकाले शिष्टतावारणाय विशेष्यदलम् ।

---

१. शिष्टपदशक्यतावच्छेदगर्भे निश्चयविशेषणतयेत्यादिः ।

२. बोद्धेऽतिव्याप्तेरित्यर्थः ।

दर्शिनामाधुनिकानां मङ्गले प्रवृत्तिर्न स्यात्, आधुनिकानामाचारेण मन्वाद्याचारमनुमाय तेन च वेदमनुमाय बालः प्रवर्तत इति चेत्,

माथुरी

यदि च वेदाप्रामाण्याभ्युपगमाव्यवहितोत्तरक्षणे तत्प्रामाण्याभ्युपगमः, ततस्तृतीयक्षणे तदप्रामाण्याभ्युपगमव्यक्तिनाशः सम्भाव्यते, तदा तत्समानकालीनत्वम्, तदुत्पत्तिसमानकालीनत्वं वा वाच्यम्; अभावो वा अनादिर्वाच्यः, अन्यथा तत्र तादृशनाशस्य यावदन्तर्गतस्य वेदप्रामाण्याभ्युपगमव्यक्त्युत्पत्तिकालेऽसत्त्वादव्याप्त्यापत्तेः।

न च यस्यैतज्जन्मनि वेदप्रामाण्याप्रामाण्ययोरुभयोरेवानभ्युपगमः, पूर्वजन्मनि तु प्रामाण्यमात्रमभ्युपेत्यैव मरणम्, तस्यैतज्जन्मनि शिष्टत्वापत्तिरिति वाच्यम्, इष्टापत्तेः। एवं यस्यैतज्जन्मनि प्रामाण्याप्रामाण्ययोरुभयोरेवानभ्युपगमः पूर्वजन्मनि चाप्रामाण्यमभ्युपेत्यैव मरणम्, तस्यैतज्जन्मन्यप्यशिष्टत्वे इष्टापत्तिः। जन्मान्तरीणप्रामाण्याभ्युपगमानन्तरकाकादिशरीरावच्छिन्नवारणाय परं प्रकृष्टचैतन्यावच्छेदकावच्छिन्नत्वेनापि विशेष्यम्।

यद्वा तत्तद्व्यक्त्यपूर्वकालावच्छिन्नत्वपदेन तत्तद्व्यक्त्यवच्छेदकजन्मान्तरावच्छिन्नत्वविशिष्टतत्तदव्यक्त्यपूर्वकालावच्छिन्नत्वं विवक्षितम्, उभयानभ्युपगमजन्मनि शिष्टाशिष्टबहिर्भूत एव। एवञ्च यथोक्तकाकादिशरीरावच्छिन्नेऽपि नातिव्याप्तिः।

न चैवं तत्तन्निश्चयव्यक्तेः प्रातिस्विकरूपेणोपादानादननुगम इति वाच्यम्, शिष्टपदस्य नानार्थत्वेनाननुगमस्यादोषत्वात्। अस्तु वा तावदभावकूटाभावशून्यत्वं तावदन्यतमधर्मवत्त्वं वा तत्त्वम्।

केचित्तु तादृशवेदप्रामाण्याभ्युपगमजन्यसंस्कारवत्त्वम् शिष्टत्वम्, तदभ्युपगमोत्पत्तिक्षणे च न शिष्टः, स च संस्कारो विरोध्यभ्युपगमनाश्य इति शिष्टतोत्तरं बौद्धतादशायां नातिव्याप्तिः। [1]संस्कारश्चाविनश्यदवस्थत्वेन विशेषणीयः, तेन तदप्रामाण्याभ्युपगमोत्पत्तिक्षणे नातिप्रसङ्गः। न च घटविषयकतादृशसमूहालम्बनसंस्कारस्य विरोध्यभ्युपगमेन नाशे घटस्मृतिरपि न स्यादिति वाच्यम्, तादृशसमूहालम्बनसंस्कारस्य विरोध्यभ्युगमोत्तरं घटस्मृतिजनकत्वे मानाभावात् स्मृतिनाश्यता-

---

१. अविनश्यदवस्थत्वं नाशविशिष्टत्वाभावः, वै० स्वप्रतियोगित्वस्वाव्यवहितपूर्वक्षणवृत्तित्वाभ्याम्। वेदप्रामाण्याभ्युपगमजन्यसंस्कारस्य वेदाप्रामाण्याभ्युपगमक्षणव्यवहितोत्तरक्षणे नाश्यतया तादृशाभ्युपगमक्षणे उक्तसम्बन्धाभ्यां नाशविशिष्टतया तदानीं नाशविशिष्टत्वाभाववतो वेदप्रामाण्याभ्युपगपजन्यसंस्कारस्यासत्त्वान्न तदानीं शिष्टत्वम्।

तर्हि यादृशाचारेण मन्वाद्याचारानुमानं स एव वेदानुमापकोऽस्तु, किमनुमितानुमानेन ?

आधुनिकानामपि शिष्टत्वेन व्यवह्रियमाणत्वाच्च ।

तथा च स्मृतिः—

यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः ।

श्रुतिस्मृत्यविरोधेन सदाचारः स उच्यते ॥

दर्पणः

उत्तरकाले च तत्पुत्रादिबौद्धो जातः पुत्रादिद्वाराशिष्टेऽपि तद्विरोध्यभ्युपगमात्यन्ताभावस्याभावादव्याप्तिवारणमिति । एतदर्थमेव संसर्गाभावपदं कैश्चिदुक्तम् । श्येनादौ व्यभिचारादाह—तदाचाराच्चष्टे चेति ।

माथुरी

वच्छेदकवैजात्यस्य [1]तद्व्यावृत्ततया घटस्मृतिघटसंकारयोर्नाश्यनाशकभावे [2]न व्यभिचार इत्याहुः ।

नन्वेवं निरुक्ताभ्युपगमाभाववत्यपि [3]कदाचित् शिष्टव्यवहारः, तद्वत्यपि [4]कदाचिदशिष्टव्यवहारो दृश्यते, स कथं स्यादित्यत आह—तैर्थिकत्वेऽपीति । निरुक्ताभ्युपगमाभावनिरुक्ताभ्युपगमयोः सत्त्वेऽपीत्यर्थः तथा च [5]तादृशि शिष्टाशिष्टव्यवहारो भाक्त इति भावः । तत्रापि शिष्टाशिष्टव्यहारयोर्मुख्यत्वमेवेत्यभिप्रायेणाह-यद् वेति । सत्यन्तं [6]निरुक्तार्थकम् । सत्यन्तविशेषणस्य प्रयोजनं दर्शयति—[7]अत एवेति । वेदानिषिद्धकर्तृत्वेऽपि, वेदानिषिद्धाकर्तृत्वेऽपि । कस्यचिल्लक्षणं दूषयति—पापजनकत्वेति । पापजनकत्वज्ञानाभावविशिष्टवेदनिषिद्धकर्तृत्वाभाववत्त्वमित्यर्थः । बौद्धस्य तु वेदानिषिद्धकर्मणि पापजनकत्वज्ञानमेव नास्तीति भावः ।

---

१. तद्व्यावृत्ततया—घटविषयकतादृशसमूलम्बनसंस्कारावृत्तितया ।

२. न व्यभिचारः—घटविषयकतादृशसमूहालम्बनसंस्कारस्य घटस्मृतिं विनाऽपि नाशे न व्यभिचार इत्यर्थः ।

३. वेदनिषिद्धाकरणकाले ।

४. वेदनिषिद्धकरणकाले ।

५. वेदप्रामाण्यायुम्पगमाभाववति कदाचित्कः शिष्टव्यवहारः, वेदप्रामाण्याभ्युपगमवति च कादाचित्कोऽशिष्टव्यवहार इत्यर्थः ।

६. तत्पुरुषीयसर्ववेदधर्मिकस्वस्वतात्पर्यविषयार्थे प्रामाण्यनिश्चयसमानकालीनवेदधर्मिकाप्रामाण्यनिश्चयीययावदभाववत्त्वार्थकम् ।

७. निरुक्तवेदप्रामाण्याभ्युपगमवत्त्वस्य विशेषणत्वेनोपादानादेव ।

**सर्वज्ञस्य मङ्गलाचारे मानाभावाच्च ।**

**मन्वादिप्रणीतस्मृतौ मङ्गलं दृश्यत इति चेत्, तन्न, स्मृतिकर्तु-**

दर्पणः

अभ्रान्तं शिष्टपदार्थमादाय हेत्वन्तरमाह—यद्वेति ।

नन्वेवमभ्रान्तः शिष्ट इत्यागतम् । तथा च भ्रमविरहदशायां पाखण्डोऽपि शिष्टः स्यादित्यत आह—लोके चेति ।

ननु वेदाऽनिषिद्धकर्त्तृत्वमात्रनिबन्धनशिष्टव्यवहारे पाखण्डोऽपि दशाविशेषे शिष्टत्वेन व्यवह्रियेतेत्यत आह—यद्वेति । वेदप्रामाण्याऽभ्युपगन्तृत्वं च वेदप्रामाण्याऽभ्युपगमेत्यादिना निरुक्तम् । रागहीनो द्वेषहीनश्चेति लक्षणद्वयम् । रागहीनत्वं च समानाधिकरणरागाऽसमानकालीनरागध्वंसवत्त्वम् । एवं द्वेषहीनत्वमपि निर्वाच्यम् ।

माथुरी

अत्र रागोत्कटयात् पापजनकत्वज्ञानसत्त्वेऽपि वेदनिषिद्धकर्तरि शिष्टेऽव्याप्तिवारणाय विशिष्टान्तं कर्मत्वविशेषणम्, वैशिष्ट्यञ्चैककालावच्छेदेनैकात्मवृत्तित्वम् । विशेषणाभाववत्त्वमात्रोक्तो पापजनकत्वज्ञानशून्ये वेदानिषिद्धकर्त्तरि शिष्टेऽव्याप्तिः, अतो विशिष्टाभावानुधावनम् । मूर्खतैर्थिकेऽव्याप्तिमाह—तैर्थिकस्यापीति । शिष्टस्यापीत्यर्थः ।

रागद्वेषहीन इति । आत्यन्तिकरागद्वेषध्वंसवत्त्वमित्यर्थः । यथाश्रुते घटादावतिव्याप्तेः । पाखण्डेऽतिव्याप्तिवारणायात्यन्तिकत्वं ध्वंसविशेषणम्, तच्च मिथ्याज्ञानप्रागभावविशिष्टभिन्नत्वं [1]मिथ्याज्ञानविशिष्टभिन्नत्वं वा, वैशिष्ट्यञ्चैककालःवच्छेदेनैकात्मवृत्तित्वम् । आत्यन्तिकध्वंसमात्रोक्तो घटादावतिव्याप्तितादवस्थ्यम्, अतो रागद्वेषयोर्वैकल्पिकमुपादानम्, तथा च लक्षण[2]द्वये तात्पर्यम् । मन्वादेस्तथात्वे हेतुः—सर्वज्ञत्वादिति । [3]तत्त्वज्ञत्वादित्यर्थः । तदाचारेति । तादृशशिष्टत्वविशिष्टाचारेत्यर्थः । वैशिष्टयञ्चैककालावच्छेदेनैकात्मवृत्तित्वम्, तेन बाल्यदशायां तादृशशिष्टेन कृते चैत्यवन्दनादौ न व्यभिचारः । न वा तादृशशिष्टत्वानुत्पत्तिदशायां भ्रान्त्या स्वर्गफलान्यफलमुद्दिश्य तादृशशिष्टेन कृते तत्फलजनकत्वेन वेदबोधिते यागादौ [4]व्यभिचारः । कर्मक्षयार्थं तादृशशिष्टेन कृते निषिद्धकर्मणि [5]व्यभिचारवारणायाविगीतत्वमाचारविशेषणम्, तच्च वेदा-

१. लाघवादाह—मिथ्याज्ञानविशिष्टेति ।
२. आत्यन्तिकरागध्वंसवत्त्वमात्यन्तिकद्वेषध्वंसवत्त्वं चेति लक्षणद्वय इत्यर्थः ।
३. ईश्वरातिरिक्तस्य सर्वज्ञत्वमानाभावेन सर्वज्ञत्वादित्यस्य तत्त्वज्ञत्वादित्यर्थः आवश्यकः ।
४. तादृशयागाचारेण स्वर्गफलान्यफलकयागबोधकवेदस्याननुमानेन व्यभिचार इत्यर्थः ।
५. तादृशनिषिद्धकर्मणापि स्वस्मिन् कर्मक्षयजनकताबोधकवेदस्याननुमानेव व्यभिचार इत्याशयः ।

रसर्वज्ञत्वेऽपि वेदादर्थं प्रतीत्य स्मृतिप्रणयनसम्भवात्। यत्तु शिष्टाचारत्वेन कर्तव्यतैवानुमीयतां किं वेदेनेति वक्ष्यामः।

इति श्रीमहामहोपाध्यायश्रीमद्गङ्गेश्वरविरचिते
तत्त्वचिन्तामणौ प्रत्यक्षखण्डे
मङ्गलवादः समाप्तः॥

दर्पणः

न च कालोपाधिविशेषेऽतिव्याप्तमिदमीश्वरे चाऽव्याप्तमिदमिति वाच्यम्, हेतुप्रविष्टशिष्टत्वेऽस्य कालोपाधौ गतत्वेऽपि क्षत्यभावात्। आचारघटितहेतोस्तमादायासम्भावात् ईश्वरासङ्गतेऽपि हेतावदोषाच्च।

ननु व्यवहारप्रयोजकमेवेदमास्तामित्यत आह—**आधुनिकानामपीति**। **सदाचारः** शिष्टाचारः। **तत्र वक्ष्याम** इति। स्वतन्त्रप्रमाणमूलकत्वानुमानं विना नान्धपरम्पराशङ्कानिरास इति शब्दखण्डे वक्ष्याम इत्यर्थः।

इति मिथिलाराज्यसमुपार्जकमहामहोपाध्यायमहेशठक्कुरकृते
प्रत्यक्षखण्डे मङ्गलवाददर्प्पणः समाप्तः।

माथुरी

निषिद्धत्वम्, अलौकिकत्वमपि वाच्यम्; तेन तत्कृतभोजनादौ न व्यभिचारः। स एवेति। व्याप्यव्याप्यस्य सुतरां व्याप्यत्वादिति भावः।

ननु तथाप्यनुमानोपयोगि मास्तु, व्यवहारोपयोगि तु स्यादित्यत आह—आधुनिकानामपीति। 'सदाचारः' यथोक्तमविगीततदाचारादेव वेदानुमानम्। तत्र दोषान्तरमाह—सर्वज्ञस्येति। तत्त्वज्ञस्येत्यर्थः।

अत्र शङ्कते—'मन्वादि' स्मृताविति। भारतपुराणादावित्यर्थः। भारतादिकर्त्तुर्यथोक्तशिष्टत्वमेव नास्तीत्याह—स्मृतिकर्त्तुरिति। भारतादिकर्त्तुरित्यर्थः। 'असर्वज्ञत्वेऽपि' अतत्त्वज्ञत्वेऽपि। 'शिष्टाचारत्वेन' समाप्त्युद्देश्यकशिष्टाचारविषयत्वेन, शिष्टत्वं भ्रमाजन्यत्वम्। कर्त्तव्यतैवानुमीयतामिति इष्टसाधनत्वे सति कृतिसाध्यतामनुमायैव सर्वे मङ्गले प्रवर्तन्ताम् किं मङ्गले तादृशकृतिसाध्यताबोधकवेदेनेत्यर्थः। तत्र वक्ष्यामः—अलौकिकत्वे सति शिष्टाचारविषयत्वस्य वेदबोधितत्वव्याप्यतया अलौकिके मङ्गले शिष्टाचारविषयत्वस्य च व्यापकीभूतवेदबोधितत्वं विना अनुपपन्नत्वाद् वेदस्याप्यावश्यकत्वम्। न च तादृशव्याप्तौ मानाभावः, अबाधितसर्वजनानुभवसिद्धत्वादित्युच्छन्नप्रच्छन्नवादे शब्दखण्डे वक्ष्याम इत्यर्थः।

इति श्रीमथुरानाथतर्कवागीशविरचितं तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे मङ्गलवादरहस्य
सम्पूर्णम्॥

# अथ प्रामाण्यवादः

अथ जगदेव दुःखपङ्कनिमग्नमुद्दिधीषुरष्टादशविद्या[1]स्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय। तत्र प्रेक्षावत्प्रवृत्त्यर्थं[2] प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगमः[3] इत्यादावसूत्रयत्। तेष्वपि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति[4] प्रमाणतत्त्वमत्र विविच्यते।

आलोकः

मङ्गलप्रकरणं समाप्य प्रेक्षावत्प्रवृत्त्यङ्गनिःश्रेयफलवदान्वीक्षिकीसम्बन्धं प्रदर्शयन्नेव आनन्तर्यपरेणापि अथशब्देन मङ्गलकरणपूर्वकं तदभिधेयमाह—अथ जगदेवेति।

दर्पणः

अवसरसङ्गत्या प्रमाणतत्त्वनिरूपणं प्रतिजानीते मूले—अथेति। मूले मङ्गलनिरूपणे वृत्ते प्रतिबन्धकजिज्ञासाया अपगमे जगदिति।

माथुरी

मङ्गलस्य सफलत्वं व्यवस्थाय मोक्षसाधनीभूततत्त्वज्ञानचिकीर्षावतां स्वीयग्रन्थोपादानकप्रवृत्तये मोक्षसाधनीभूततत्त्वज्ञानरूपफलवदान्वीक्षिकीप्रतिपादकत्वेन हेतुना मोक्षसाधनीभूततत्त्वज्ञानजनकतां स्वीयग्रन्थस्य प्रतिपादयितुं यादृशहेतुमत्त्वं स्वीयग्रन्थस्य दर्शयति 'अथेत्यादिना विविच्यते' इत्यन्तेन, 'अथ' मङ्गलस्य सफलत्वव्यवस्थापनान्तरम्, 'जगदेवेति जगत्पदं वस्तुत्वविशिष्टपरं, एवकारस्तु यावदर्थकः' तथा च 'दुःखपङ्कनिमग्नं' तदानीं दुःखसमूहादिकारणं यावद्वस्तु, 'उद्दिधीर्षुः तदात्यन्तिकदुःखध्वंसविशिष्टं चिकीर्षुः, 'परमकारुणिकोमुनिः', अष्टादशविद्यास्थानेषु' 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश'। आयुर्वेदो धनुर्वेदो गान्धर्व्वश्चेति ते त्रयः। अर्थशास्त्रञ्च

---

१. अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥१॥
आयुर्वेदा धनुर्वेदा गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्र चतुर्थं तु विद्या ह्यष्टादशैव ताः ॥२॥ 'विष्णुपुराणम्'

२. मोक्षसाधनीभूततत्त्वज्ञानचिकीर्षावतां प्रवृत्त्यर्थमिति भावः।

३. 'न्यायसूत्र' १. १. १

४. प्रमेयसिद्धिः प्रमाणादिति भावः।

ननु[1] प्रमाणादीनां तत्त्वं प्रतिपादयच्छास्त्रं परम्परया निःश्रेयसेन सम्बध्यते इति न युक्तम्, प्रमाणतत्त्वावधारणस्याशक्यत्वात् । तद्धि

आलोकः

माध्यमिकः प्रत्यवतिष्ठते—ननु प्रमाणादीनामिति ।

दर्पणः

मूले ननु प्रमाणादीनामिति । प्रमाणत्वं शास्त्रप्रवृत्तेनावधारणीयम् । शास्त्रप्रवृत्तेश्च प्रमात्वनिश्चयं[2] विनाऽसम्भवः । प्रमात्वनिश्चयश्चाशक्य इति प्रमाणतत्त्वावधारणमशक्यमित्यर्थः । तथा चाथ किमित्याशङ्का सङ्गच्छते ।

माथुरी

विज्ञेयं विद्या ह्यष्टदशैव तु' । इति परिगणितेषु विद्यास्थानेषु, 'अभ्यर्हिततमां' प्रकृष्टतमां, 'आन्वीक्षिकी' न्यायशास्त्रं प्रणिनायेति योजना । वस्तुत्वसामानाधिकरण्येन दुःखपङ्कमग्नत्वस्यान्वयात् घटादिलक्षणे वस्तुनि दुःखपङ्कमग्नत्वस्य बाधितत्वेऽपि न क्षतिः । मुक्तात्मनोपि यदा कदाचित् दुःखपङ्कमग्नत्वात् तदुद्धारणेच्छायां मुनेरप्रामाणिकत्वापत्तिरतस्तदानीमिति ।

दीधितिकृतस्तु जगत्पदं तदानीं संसारविशिष्टात्मपरं तथा अन्वयितावच्छेदकावच्छेदेनैव दुःखपङ्कमग्नत्वस्य दुःखसमूहाधिकरणत्वस्यान्वयः । भगवदात्मनो मुक्तात्मनश्च व्यवच्छेदाय विशिष्टान्तमित्याहुः ।

'तत्रेति 'तत्र' न्यायशास्त्रे प्रेक्षात्वप्रवृत्त्यर्थमिति 'प्रेक्षावतां' मोक्षसाधनीभूततत्त्वज्ञानचिकीर्षावतां, तद्ग्रन्थोपादानकप्रवृत्त्यमित्यर्थः 'तत्त्वज्ञानादिति तत्त्वेन प्रमाणत्वादिरूपेण ज्ञायतेऽनेनेति व्युत्पत्त्या प्रमाणादिषोडशपदार्थविशेष्यकप्रमाकरणत्वादिषोडशधर्म्मप्रकारकज्ञानजनकतादेतच्छास्त्रादित्यर्थः । 'निःश्रेयसाधिगमः' इति निःश्रेयसाय योऽधिगम इति व्युत्पत्त्या निःश्रेयससाधनीभूतं तत्त्वज्ञानमित्यर्थः, 'इतीति एतदर्थकमित्यर्थः, 'आदौ' प्रथमतः 'असूत्रयत्' शास्त्रस्य तत्त्वज्ञानसाधनताप्रतिपादकं सूत्रं कृतवान् । 'तेष्विति तेषु शास्त्रोद्दिष्टप्रमाणादिषोडशपदार्थेषु मध्ये, 'प्रमाणतत्त्वमत्र विविच्यते' इति योजना 'प्रमाणतत्त्वं' 'प्रमाणस्य लक्षणस्वरूपादिकं, 'अत्र चिन्तामणौ । एतेन मोक्षसाधनीभूततत्त्वज्ञानरूपफलवदान्वीक्षिकीप्रतिपादकत्वमत्रस्तीति प्रतिपादिनमिति ध्येयम् ।

---

१. माध्यमिको बौद्धः प्रत्यवतिष्ठते—नन्वित्यादिना ।

२. प्रवृत्ति प्रामाण्यनिश्चयसाध्या प्रमाण्यसंशयप्रतिबध्यत्वे सति प्रामाण्यव्यतिरेकनिश्चयप्रतिबध्यत्वात् । प्रमाण्यं प्रवृत्तिजनकीभूतनिश्चयविषयः । प्रवृत्तिप्रतिबन्धकीभूतसंशयव्यतिरेकनिश्चयविषयप्रतियोगित्वात् ।

प्रमातत्त्वावधारणाधीनम् । तच्च स्वतः परतो वा न सम्भवति वक्ष्यमाण-दूषणगणग्रासात् । अथ किं प्रामाण्यज्ञानेन प्रवृत्तिमात्रे तस्य व्यभिचारात् । बहुवित्तव्ययायाससाध्ये प्रवृत्तिश्चावश्यकार्थनिश्चयादेव । न च यस्य यत्संशयव्यतिरेकनिश्चयौ प्रवृत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुरनुमितो व्याप्तेरिवेति वाच्यम् । तत्सन्देहे सत्यर्थसन्देहेनार्थानिश्चयादेवाप्रवृत्तेः तत्र तयोरप्रतिबन्धकत्वादिति चेत्—न । प्रामाण्यसंशयानन्तरं इदं इत्थमेवेत्यव-धारणस्य निष्कम्पप्रवृत्त्यङ्गस्य प्रामाण्यनिश्चयाधीनत्वात् ।

आलोकः

ननु प्रामाण्यग्रहो न प्रवृत्तिहेतुर्व्यभिचारादन्यथासिद्धेश्चेत्याशङ्कते—अथेति ।

न च यस्येति । यद्व्यतिरेकज्ञानमात्रं यत्प्रतिबन्धकमित्यर्थः । सामान्येन नियमलाभार्थमुभयमुपात्तम् । प्रत्येकनियमे तु प्रथमे व्यभिचारसंशयमात्रप्रतिबध्ये

दर्पणः

केचित्तु प्रमाकरणत्वं प्रमाणत्वम् । तच्च प्रमात्वग्रहं विना दुर्ग्रहम् । अनभि-संहितोपाधेरुपहितप्रत्ययायोगादित्यर्थं वर्णयित्वा ननु बोधकत्वरूपमेव प्रमाणतत्त्वं प्रतिपादनीयं शास्त्रेणेति परिहृत्य तथापि प्रवृत्त्यर्थं प्रमात्वग्रहोऽपेक्षणीय एवेत्याशङ्क्य—अथ किमिति ग्रन्थमवतारयन्ति ।

माथुरी

ननु षोडशपदार्थेषु सत्सु प्रमाणतत्त्वस्यैव कुतो विवेचनमित्याशङ्का निरा-कर्त्तुमाह, 'प्रमाणाधीनेति, 'व्यवस्थितिः' व्यवस्थानिश्चयः । तथा च प्रमाणाधीनत-द्ग्रहादेव प्रमाणस्य प्रकृष्टत्वे तस्यैवात्र निरूपणमिति भावः ।

माध्यमकः प्रत्यवतिष्ठते, 'नन्विति' एतन्मते ज्ञानमात्रस्यैव तद्वति तत्प्र-कारकत्वरूपं न प्रमात्वं तत्र तस्य निश्चेतुमशक्यत्वेन तत्र तत्सत्त्वे मानाभा-वादिति ध्येयम् । 'तत्त्वं प्रतिपादयदिति 'तत्त्वं' प्रमाकरणत्वादिकं, प्रकारिता द्वितीयार्थः । तथा च प्रमाणादीनां प्रमाकरणत्वादिप्रकारेण ज्ञानं जनयदित्यर्थः । परम्पर-येति मोक्षसाधनीभूततत्त्वज्ञानं द्वारा इत्यर्थः । 'इति न युक्तमिति सूत्रकृतोऽभि-प्रेतं न युक्तमित्यर्थः । 'तद्धि' तादृशावधारणं हि, प्रमातत्त्वावधारणेति प्रमायाः प्रमात्वप्रकारकावधारणस्याधीनमित्यर्थः, विशेषणतावच्छेदकप्रकारकज्ञानं विना विशिष्टवैशिष्ट्यबोधासम्भवादिति भावः । 'तच्च' प्रमातत्त्वावधारणञ्च, 'स्वतः' स्वाश्रयजनकसामग्रीतः, स्वं प्रमात्वं, एतच्च गुरुमते, 'परतः' तदन्यसामग्रीतः, एतच्च मिश्रमतभट्टमतन्यायमतेषु । न च प्रमापदादेव प्रमात्वप्रकारयोपस्थितिसम्भव इति वाच्यम् । मानान्तरेण प्रमात्वप्रकारकज्ञानं विना प्रमापदशक्तिग्रहस्यैवासम्भ-वादिति भावः । वक्ष्यमाणेति गुरुमते प्रामाण्यसंशयानुपपत्तिरूपं, नैयायिकमते

आलोकः

**व्याप्तिज्ञाने द्वितीये अयोग्यतानिश्चयमात्रप्रतिबध्ये शाब्दज्ञाने व्यभिचारात् निश्चयत्वेन जनकत्वस्य निश्चयाभावेऽभावस्य वा साध्यत्वमिह विवक्षितम्। अतो न दोषः।**

दर्पणः

तटस्थः शङ्कते—**अथेतीत्यन्ये**।

**व्यभिचारादन्यथासिद्धेश्चेति**। प्रवृत्तिसामान्ये व्यभिचारात् प्रवृत्तिविशेषेऽन्यथा-सिद्धेरित्यर्थः **व्यतिरेकज्ञानमात्रं** व्यतिरेकज्ञानत्वावच्छिन्नं व्यतिरेकत्वप्रकारक[1]-ज्ञानत्वावच्छिन्नमिति यावत्।

**सामान्येन** व्यतिरेकज्ञानत्वावच्छेदेन। इदमुपलक्षणम्। उभयघटिनियमला-भार्थमिति च द्रष्टव्यम्। तत्रोभयघटितो नियम इति कल्पमधिकृत्याह—**प्रत्येकेति**।

नन्वत्र व्यभिचाराप्रसक्तिरेव दोष इत्यत आह—**निश्चयत्वेनेति**। यद्यपि निश्चयाभावेऽभाव इति पक्षे संशयस्य निश्चयपूर्वकतया दोषतादवस्थ्यं तथापि निश्चयानधिकरणक्षणाव्यवहितोत्तरक्षणेऽनुत्पत्तेः साध्यत्वमिहाभिमतम्।

माथुरी

चानवस्थारूपम्। प्रामाण्यज्ञानेनेति प्रमात्वनिश्चयेनेत्यर्थः। '**तस्य व्यभिचारादिति** प्रवर्त्तकेष्टसाधनतादिज्ञाननिष्ठप्रमात्वनिश्चयस्य व्यभिचारादित्यर्थः। सकम्पप्रवृत्तेस्तेन विनापि दर्शनादितिभावः। सकम्पत्वं निष्कम्पत्वञ्च प्रवृत्तिनिष्ठो विषयिता विशेषः न तु जातिरांशिकत्वापत्तेरिति ध्येयम्।

ननु मास्तु प्रवृत्तिमात्रे तस्य हेतुत्वं तथापि निष्कम्पप्रवृत्तौ तस्य हेतुत्वेन जनकज्ञाने प्रामाण्यनिश्चयोऽवश्यमपेक्षितः इत्यत आह, '**बहुवित्तेति** निष्कम्पप्रवृत्तिरि-त्यर्थः अर्थनिश्चयादेवेति इदमिष्टसाधनमेव इत्यवधारणात्मकज्ञानादेवेत्यर्थः। अवधारणत्वञ्च निश्चयनिष्ठो विषयिताविशेषः, तथा च निष्कम्पप्रवृत्तावपि तस्यान्याथासिद्धत्वान्न हेतुत्वमिति भावः। यद्यपि किं प्रामाण्यज्ञानेनेति ग्रन्थोऽसङ्गतः प्रवृत्त्यर्थं प्रवर्त्तकेष्टसाधनतादिज्ञाननिष्ठप्रमात्वनिश्चयापेक्षायाः पूर्व्वमनुक्तत्वेन तस्य प्रवृत्तिहेतुत्वनिराकरणद्वारा तदनपेक्षाकथनस्य सन्दर्भविरुद्धत्वात्, तथापि 'नन्वित्या-दिमाध्यमकशङ्कोत्सारको नायंग्रन्थः, परन्तुशास्त्रस्य मननादिनिष्ठनिःश्रेयससाधनताज्ञाने प्रमात्वनिश्चयजननद्वारा मननादौ निःश्रेयसार्थिप्रवृत्तिप्रयोजकत्वेन निःश्रेयसोपयो-गित्वमिति—सूत्रकर्तुराशय इति भ्रमेणान्तरा तटस्थो नैयायिकोपरि शङ्कां कुरुते, 'अथ किमिति,'किं प्रामाण्यज्ञानेनेत्यस्य च मननादिनिष्ठमोक्षसाधनतादिज्ञाने प्रमात्वनिश्चयेन किमित्यर्थः, तथा च निष्फलं तन्निश्चायकं शास्त्रमित्यभिप्रायः। सूत्रकर्तुस्तादृशाभि-प्रायस्य प्रतिबन्धकत्वाभावादित्यतो

---

१. व्यतिरेकज्ञानं प्रमेयमित्याकारकमपि भवति। तस्य व्यावृत्त्यर्थं व्याचष्टे—'व्यतिरेकत्वप्रकारके'ति।

आलोकः

यथाश्रुते व्याप्तिज्ञानेऽप्युक्तव्यभिचारासंस्पर्शात् । अव्यभिचारग्रहेऽपि व्यभिचार-निश्चयस्य प्रतियोगिरूपत्वेन[1] हेतुत्वात् ।

वस्तुतो निश्चयत्वेन जनकत्वाविवक्षायामपि योग्यतासंशयजन्ये शाब्द-

दर्पणः

यथाश्रुत इति । विवक्षाया अकरणे इत्यर्थः । प्रतियोगिरूपत्वेनेति । इदमुपलक्षम् । शाब्दबोधे योग्यतानिश्चयस्य योग्यताज्ञानत्वेन जनकत्वादित्यपि द्रष्टव्यम् । ननु निश्चयत्वेन जनकत्वं तदभावेऽभावो वा कुतो वक्तव्य इति ?

उच्यते—प्रवृत्तिजनकनिश्चयस्य क्वचित्प्रमात्वावगाहित्वेऽपि[2] प्रमात्वनिश्चयः प्रवृत्तिहेतुरित्यस्य सिद्धेः शास्त्रप्रवृत्तिपूर्वं प्रमात्वनिश्चयस्यावश्यकत्वं पूर्वपक्षिणोऽभिमतं न सिद्धयेदित्यर्थान्तरवारणाय तथा विवक्षा[3] आवश्यकीति । तन्निश्चयस्तद्धेतुरित्यत्र फलो-पहितत्वमर्थस्तेनोक्तार्थान्तराभावः । क्वाचित्कसमूहालम्बनरूपप्रमात्वनिश्चयस्य प्रवृत्ति-सामान्ये फलोपधानात्मकहेतुत्वाभावादित्यभिसन्धाय प्रकारान्तरमाह—वस्तुत इति ।

माथुरी

प्रायमभिप्रेत्यैव प्रामाण्यसंशयानन्तरमिदं इत्यादिना नैयायिकस्तन्निराकरिष्य-तीति न कश्चिद्दोषः ।

केचित्तु ननु ग्रन्थकर्तुः शास्त्रानुकूलप्रवृत्त्यनन्तरं शास्त्रे जाते ततः प्रमाणादीनां प्रमाकरणत्वादिप्रकारकज्ञानं भविष्यति शास्त्रानुकूलप्रवृत्तिश्च विना प्रवर्त्तकशास्त्र-निष्ठेष्टसाधनताज्ञानादेः प्रमात्वावधारणं तव नये न सम्भवति तव प्रमात्वनिश्चयस्य प्रवर्त्तकत्वात्, प्रमात्वनिश्चयश्च न सम्भवति उपायाभावादित्याशयेन माध्यमकः शङ्कते, 'ननु प्रमाणादीनामिति अशक्यत्वात् शास्त्रादशक्यत्वादित्यर्थः । तद्धि शास्त्रं हि, तवेतिशेषः, 'प्रमातत्त्वेति शास्त्रानुकूलप्रवृत्तिजनकज्ञानस्य प्रमात्वनिश्चयाधीनमित्यर्थः, तच्च प्रमातत्त्वावधारणञ्च, अत्रैवान्तरा समाधत्ते, 'अथेति, 'प्रामाण्यज्ञानेनेति प्रवर्त्तक-शास्त्रनिष्ठेष्टसाधनताज्ञानादेः प्रमात्वनिश्चयेनेत्यर्थः । तथा च प्रमात्वनिश्चयं विनापि शास्त्रानुकूलप्रवृत्तिसम्भवेन शास्त्रोत्पत्तिसम्भवान्न ततः प्रमाणतत्त्वावधारणमशक्य-मिति भावः । अग्रे च 'प्रामाण्यनिश्चयाधीनत्वादित्यस्य तव मते प्रमात्वनिश्चयाधीन-त्वादित्यर्थं इत्याहुः ।

अन्ये तु प्रमातत्त्वावधारणं विना प्रमाणानां प्रमाकरणत्वरूपेणावधारणासम्भ-वात् तेन रूपेण तदवधारणं मास्तु इन्द्रियत्वज्ञानजनकत्वादिनैव तदवधारणं शास्त्रात् स्यादित्याशयेन माध्यमकशङ्कोपर्य्येव शङ्कते, 'अथेति, प्रामाण्यज्ञानेनेति प्रमाकरणत्व-

---

१. प्रतियोगिज्ञानत्वेनेति आलोकपाठसत्त्वेऽपि दर्पणपाठानुरोधेन पाठे परिवर्त्तनं कृतमिति ।

२. उपनीतत्वेन समूहालम्बनत्वेन वेति यावत् ।

३. निश्चयत्वेन जनकत्वंनिश्चयाभावेऽभाव इत्येवंरूपा ।

आलोकः

**ज्ञानविशेषे असाधुत्वनिश्चयप्रतिबध्ये शाब्दज्ञानसामान्ये वा द्वितीयकल्पे व्यभिचारो वज्रलेप एव।**

**वस्तुतस्तु व्यभिचारज्ञानस्य प्रतियोगिज्ञानतया जनकत्वे तन्निश्चयस्तद्धेतुरिति प्रत्येकनियमः सम्यक् स्यादिति प्रत्येकनियमेऽव्यभिचारसंशयमात्रप्रतिबध्येऽव्यभि-**

दर्पणः

**द्वितीयकल्पे**—द्वितीयभागमात्रोपादाने। इदञ्चोपलक्षणम्। अत्यन्ताभावगर्भव्यभिचारे संशयेन मणिमन्त्रवत्प्रतिरुद्धेऽन्योन्याभावगर्भव्याप्तिग्रहेऽत्यन्ताभावगर्भव्यभिचारनिश्चयस्य फलोपधानात्मकहेतुत्वाभावात् विशेष्ये विशेषणमिति न्यायेनाव्यभिचारावगाहि[1]शाब्दबोधे च व्यभिचारनिश्चयस्य[2] फलोपहितत्वभावात्[3] प्रथमभागमात्रोपादाने तु व्यभिचारो वज्रलेप इत्यपि द्रष्टव्यम्।

संशयमात्रोपादाने व्यतिरेकनिश्चयमात्रोपादने च दोषान्तरं वक्तुं क्वचित् **वस्तुतस्त्विवति** पठः। तत्राव्यभिचारसंशयस्य व्यभिचारकोट्यवगाहितया व्याप्तिज्ञानविशेषेऽव्यभिचारज्ञाने प्रतिबन्धकत्वं ज्ञेयम्।

माथुरी

रूपेणावधारणेनेत्यर्थः। ननु तथापि तव नये प्रवर्त्तकज्ञाने प्रमात्वनिश्चयस्य प्रवृत्तिप्रयोजकतया प्रमात्वनिश्चयोऽवश्यमपेक्षितः स च न सम्भवति उपायाभावादित्यत आह, प्रवृत्तिमात्र इति, **तस्य** प्रमात्वनिश्चयस्य, अग्रे च प्रामाण्यनिश्चयाधीनत्वादित्यस्य तव मते प्रमात्वनिश्चयाधीनत्वादित्यर्थः। यथाश्रुते प्रमात्वाभ्युपगन्त्रा माध्यमकेन तन्निश्चयकारणत्वव्यवस्थापनमङ्गतत्वापपत्तेरित्याहुः।

नव्यास्तु नन्वेवं तत्रापि प्रवृत्त्यर्थं प्रवर्त्तकज्ञानोत्पत्त्यनन्तरं तत्र ज्ञाने प्रमात्वनिश्चयोऽपेक्षितः स कथं स्यादुपपादकाभावादित्याशङ्कायां माध्यमकः समाधत्ते, अथ किं प्रामाण्यज्ञानेनेति अथ प्रवर्त्तकज्ञानोत्पत्त्यनन्तरम्, तत्र ज्ञाने प्रामाण्यनिश्चयेन मम किमित्यर्थः। **तस्य** प्रवर्तकज्ञाननिष्ठप्रमात्वनिश्चयस्य। इत्थञ्च ननु प्रमाणादीनामित्यारभ्य तयोरप्रतिबन्धकत्वादित्यन्तं माध्यमकपूर्व्वपक्षः, तत्र नैयायिकः समाधास्यति, प्रामाण्यसंशयानन्तरमित्यादिना। प्रामाण्यनिश्चयाधीनत्वादित्यस्य च अवश्यं प्रमात्वनिश्चयाधीनत्वेन स्वीकर्त्तव्यत्वादित्यर्थः। तथा च प्रमात्वनिश्चयार्थं कश्चिदुपायस्त्वयाप्यवश्यं परिचिन्तनीय इति सिद्धान्तयितुराशयः। इत्थं निरस्ते माध्यमके मीमांसकः नैयायिकैः समं विवादमवतारयति,। ननु स्वत एवेत्यादिना, इति प्राञ्चः।

---

१. वह्निप्रतियोगिकात्यन्ताभावसामानाधिकरण्याभावो धूमे एवमाकारकः।

२. ज्ञानत्वेन व्यभिचारनिश्चयस्येति यावत्।

३. तत्रान्योन्यायाभावगर्भव्यभिचारनिश्चयस्य फलोपहितत्वं यतः।

आलोकः

**चारज्ञानेऽव्यभिचारनिश्चयाजन्येऽबाधव्यतिरेकनिश्चयमात्रप्रतिबद्धायान्तु तज्ज्ञानाजन्यायामनुमितौ व्यभिचारो द्रष्टव्यः। तेन सर्वं सम्यक्[१]।**

**अत्र च ग्राह्यभिन्नत्वेन[२] निश्चयविषयो निवेश्योऽतो न व्याप्ति व्यतिरेकज्ञानप्रतिबध्ये व्याप्तिज्ञाने व्यभिचारः।**

**वस्तुतो यद्व्यतिरेकनिश्चयो यत्र प्रतिबन्धक इत्येतावन्मात्रे कृते ग्राह्यभागे व्यभिचारोऽतो यत्संशयेति।**

दर्पणः

**तज्ज्ञानाजन्यायामिति।** अबधितत्वज्ञानस्याकारणत्वपक्षेऽतद्धेतुतत्संशयजन्यानुमितिविशेषे व्यभिचारो बोध्यः।

**अत्र च** व्याप्तित्रयेऽपि।

**ग्राह्यभिन्नत्वेनेति।** ग्राह्यप्रतियोगिकभिन्नत्वेन[३] व्यतिरेको विशेषणीय इत्यर्थः। **ग्राह्याभावभिन्नत्वेनेति** तु पाठः स्पष्ट एव। **व्याप्तिव्यतिरेकेति।** अव्यभिचारव्यतिरेकेत्यर्थः। **व्याप्तिज्ञानेऽ**व्यभिचारज्ञाने।

नन्वेवं[४] संशयोपादानवैयर्थ्यम्। किञ्चानियतव्यभिचारज्ञानप्रतिबन्धकतापक्षे उदासीनव्यभिचाराभावसंशयो व्यभिचारकोटिविषयकतया तद्व्यतिरेकनिश्चयः व्यभिचारनिश्चयतया प्रतिबन्धक इति विशिष्टोऽपि हेतुर्व्यभिचारीति—

माथुरी

प्रामाण्यसंशय-प्रामाण्यव्यतिरेकनिश्चययोर्निष्कम्पप्रवृत्तिप्रतिबन्धकवात् प्रामाण्यनिश्चयस्तद्धेतुरित्याशङ्कते, 'न च यस्येति यस्य संशयो यस्य व्यतिरेकनिश्चयश्च इत्यर्थः। 'प्रवृत्तिप्रतिबन्धकाविति **प्रवृत्तिः** उत्पत्तिः, 'यस्येत्यनुषज्यते। अग्रेऽपि प्रवृत्तिपदं तदुत्पत्तिपरम्, तथा च यस्य संशयो यस्य व्यतिरेकनिश्चयश्च यदुत्पत्तिप्रतिबन्धकस्तन्निश्चयस्तद्धेतुरित्यर्थः। अन्यथा प्रवृत्तिपदस्य प्रयत्नपरत्वे अनुमितौ व्याप्तेरिवेति दृष्टान्तासङ्गतेः। न च तथापि व्याप्तिसंशयादेरनुमित्यप्रतिबन्धकत्वे[५] दृष्टान्तासङ्गतिः प्रयोजकीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वनिवेशे[६] च तत्र तयोरप्रतिबन्धकत्वा-

---

१. क्वाचित्कः। वस्तुतस्त्वित्यादिग्रन्थो नास्ति कपुस्तके। दर्पणाभिमतमपि तथैव।

२. निश्चयविषयोऽव्यभिचारव्यतिरेको व्यभिचारः। स ग्राह्यभिन्नो भवत्येवेति व्यभिचारस्तद्वारणाय ग्राह्यप्रतियोगिकभिन्नत्वेनेति।

३. योग्यताव्यतिरेको ग्राह्यप्रतियोगिक एव योग्यताया ग्राह्यत्वादतस्तेनैव वारणात्।

४. ग्राह्याभावभिन्नत्वेनेति पाठान्तरम्।

५. व्याप्तिसंशयादेरनुमितिप्रतिबन्धकत्वे मानाभावादिति घ०।

६. व्याप्तिसंशयाभावस्य अनुमित्यकारणत्वेपि कथञ्चित् प्रयोजकत्वं सम्भवतीति भावः।

आलोकः

तत्र ग्राह्यसंशयस्याप्रतिबन्धकत्वात्। तावन्मात्रे कृते व्यभिचारसंशयप्रतिबध्ये व्याप्तिग्रहे व्यभिचार इत्युभयमुपात्तम्। तत्राव्यभिचारनिश्चयेनाप्रतिबन्धात्। न चाव्यभिचारसंशयतदभावनिश्चयप्रतिबध्याव्यभिचारनिश्चयेऽव्यभिचारनिश्चयाजन्ये व्यभिचारश्च। यत्संशय इत्यादेर्यदभावत्वप्रकारकतानियतयोः संशयविपर्ययोः प्रतिबन्धकत्वमित्यर्थात्। अन्यथा प्रमेयत्वेन तदभावावगाहिनोऽपि प्रतिबन्धकत्वापत्तेः। अस्ति च व्यभिचाराभावात्वप्रकारकताया नियमो व्याप्तिधीप्रतिबन्धकेऽव्यभिचारसंशये। प्रकृते व्यभिचाराभावाभावत्वापेक्षया व्यभिचारत्वस्य लाघवेन तत्प्रकारत्वेन प्रतिबन्धकत्वे स्थिते व्यभिचाराभावाभावत्वाप्रकारके व्याप्तिज्ञानप्रतिबन्धके व्यभिचारनिश्चये तदभावात्।

दर्पणः

उच्यते। नियतव्यभिचारधिय एव प्रतिबन्धकत्वाश्रयणान्नान्त्यो दोषः। नाप्याद्यः यत्संशयपदोपादनादेव व्यतिरेके ग्राह्यप्रतियोगिकभिन्नत्वलाभात्। व्याप्तिद्वये वा तात्पर्यम्। तत्र च संशयेऽपि ग्राह्याभावाविषयकत्वं विशेषणं देयम्[1]। असाधुत्वनिश्चयश्च न प्रतिबन्धक इत्याश्रयणीयम्। वस्तुतः फलव्यतिरेकनिश्चयस्य ग्राह्याभावाविषयकस्य प्रवृत्तिप्रतिबन्धकत्वात् वारणाय संशयोपादानम्। संशयप्रतिबन्धकत्वञ्च व्यतिरेकत्वप्रकारसंशयत्वावच्छिन्नप्रतिबन्धकत्वं विवक्षितम्। अतो न प्रतिबन्धकसंशयेन समूहालम्बनं फलसंशयभादाय व्यभिचारातादवस्थ्यम्। अत्राप्युदासीनव्यभिचारधीर्न प्रतिबन्धिकेति मतमाश्रयणीयम। निश्चयांशमात्रे च ग्राह्याभावाविषयकत्वं विवक्षणीयमिति।

माथुरी

दिति वक्ष्यमाणदूषणासङ्गतिरिति वाच्यम्। व्याप्तिसंशयादेरप्यनुमितिप्रतिबन्धकत्वमिति मतेनैतदभिधानात्[2]। अत्र तन्निश्चयत्वेन तन्निश्चये हेतुत्वमेव साध्यम्, अन्यथा ज्ञानत्वादिना भगवत्प्रामाण्यनिश्चयनिष्ठहेतुत्वमादाय सिद्धसाधनापत्तेः। एवञ्च ग्राह्यव्यतिरेकनिश्चयप्रतिबध्ये ग्राह्यविशिष्टज्ञाने ग्राह्यनिश्चयत्वेनाहेतुत्वाद्व्यभिचारापत्तिरतो 'यत्संशय इति, घटाभावनिश्चयात्मकपटादिसंशयप्रतिबध्ये घटविशिष्टज्ञाने पटादिनिश्चयत्वेनाहेतुत्वात् व्यभिचार इति 'यद्व्यतिरेकनिश्चय इति, तथा च संशयनिश्चयसाधारणं यद्व्यतिरेकज्ञानत्वं यत्र प्रतिबन्धकतावच्छेदकम् इत्यर्थः। अन्यथा व्यतिरेकनिश्चयोपादानेऽपि घटविशिष्टज्ञानस्य घटाभावनिश्चयात्मकपटादिव्यतिरेकनिश्चयस्यापि प्रतिबध्यत्वेन उक्तव्यभिचारतादवस्थ्यात्। इत्थञ्च यद् यद्व्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत् तत् तन्निश्चयत्वाच्छिन्नकारण-

---

१. अन्यथा अव्यभिचारसंशयप्रतिबन्धे अव्यभिचारज्ञाने व्यभिचारः स्यात्।

२. अनुमितिप्रतिबन्धकत्वाभिमानेनैव तदभिधानादिति घ०।

**ननु[1] स्वत एवास्तु तन्निरूपणम् । तथा हि तत्र विप्रतिपत्तयः । ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा ।**

आलोकः

**न चाव्यभिचारात्मकतया व्याप्तेरनुमितावपि तदभावत्वप्रकारकतया प्रतिबन्धकत्वाभावान्न तथात्वमिति वाच्यम्, तत्र सामानाधिकरण्यभागस्य भावतया तदभावत्वप्रकारत्वेनैव प्रतिबन्धकत्वादिति सारम् । प्रवृत्तिपदोपादानञ्च प्रकृताभिप्रायेण, न तु व्याप्तिनिविष्टम् । अनुमितौ व्याप्तेरिवेति विरोधादिति भावः ।**

दर्पणः

यद्वा पूर्वास्वरसादाह—वस्तुत इत्यादि ।

ननु यदभावत्वप्रकारकौ संशयनिश्चयौ प्रतिबन्धकावेवेति प्रतिबन्धकौ यदभावसंशयनिश्चयौ यदभावत्वप्रकारकाविति वा नियमो विवक्षितः तदभावत्वप्रकारताकतदभावव्याप्यदर्शनात्मकसंशयेन आद्ये उक्तव्यभिचारतादवस्थ्यम् । अन्त्ये प्रतिबन्धकयदभावसंशयो यदभावत्वप्रकारक एवेत्येतावदेवास्ताम् । किञ्च यद्वस्तु एकपुरुषमात्रप्रतीतं तदीयव्यतिरेकनिश्चयेन तदेवावगाहते तदभावत्वप्रकारकसंशयात्मना विरोधिज्ञानान्तरेण च प्रतिरुद्धप्रतीतिकं तत्र व्यभिचार एवेति—

माथुरी

तानिरूपितकार्य्यतावत् व्याप्तिनिश्चयजन्यानुमितिवदिति व्याप्तिशरीरम्, नातो वैयधिकरण्यम् । ग्राह्याभावावान्तरसंशयवद्व्यभिचाराभावाभावसंशयस्यापि व्याप्तिनिश्चयाप्रतिबन्धकत्वात् अव्यभिचारव्यतिरेकज्ञानमादाय व्याप्तिज्ञाने न व्यभिचारः । न च यद्व्यतिरेकज्ञानत्वावच्छिन्नत्वं तत्पर्य्याप्तावच्छेदकताकत्वं तद्वृत्त्यवच्छेदकताकत्वं वा आद्ये दृष्टान्तासिद्धि-स्वरूपासिद्धी अनिश्चिताप्रामाण्यकव्याप्तिव्यतिरेकज्ञानत्वादिनैव प्रतिबन्धकत्वात् । द्वितीये ग्राह्याभावनिश्चयत्वस्य ग्राह्याभावज्ञानत्वघटिततया ग्राह्याभावनिश्चयप्रतिबध्ये ग्राह्यविशिष्टज्ञाने व्यभिचार इति वाच्यम् । यद् अनिश्चिताप्रामाण्यकयद्धर्म्मितावच्छेदककयद्धर्म्मावच्छिन्नव्यतिरेकज्ञानत्वपर्य्याप्तावच्छेदकताकप्रतिबन्धकताकं तत् तद्धर्म्मितावच्छेदककतद्धर्म्मावच्छिन्नप्रकारकज्ञाननिष्ठतद्धर्म्मविशिष्टनिश्चयत्वावच्छिन्नकारणताकमिति विवक्षितत्वात् । साध्ये च तद्धर्म्मविशिष्टनिश्चयत्वावच्छिन्नत्वं तादृशनिश्चयत्ववृत्त्यवच्छेदकताकत्वमात्रं न तु पर्य्याप्तिपर्य्यन्तं विवक्षणीयं प्रयोजनाभावात् दृष्टान्तस्य साध्यविकलत्वापत्तेश्च, तत्रागृहीताप्रामाण्यकव्याप्तिनिश्चयत्वेनैव हेतुत्वात् । अथ तथाप्यनुमितौ व्याप्तिविरहज्ञानस्य प्रतिबन्धकत्वोपगमे लाघवादव्याप्तिज्ञानत्वेनैव तत्र हेतुत्वं प्रतिबन्धकसत्त्वादेव व्याप्तिसंशयादनुत्पादसम्भवात्

---

१. बौद्धमतं निराकर्त्तुं मीमांसकमतमाह—नन्वित्यादिना ।

**तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यं न वा। परतःपक्षे[1] ज्ञात एव ज्ञाने प्रामाण्यग्रहः। स्वतस्त्वे[2] प्रामाण्यवत एव ज्ञानस्य ग्रहात्। स्वाश्रयग्राहकेण गृह्यत एव न वा। स्वाश्रयेण गृह्यत एव न वेति प्रत्येकमेव वा।**

दर्पणः

उच्यते—यदभावत्वप्रकारकसंशयेन यत्प्रतिबन्ध आपादयितुं शक्यते यदभावावगाहित्वप्रयुक्तप्रतिवन्धकताकस्य निश्चयस्य च यदभावत्वप्रकारकतानियमः तन्निश्चयः तन्निश्चयत्वेन तत्र हेतुरित्यर्थः। पक्षधर्मताव्यतिरेकनिश्चये किञ्चित्त्वेन व्याप्त्यभावविषयके व्याप्त्यभावत्वप्रकारकताविरहात् साधनवैकल्यं मा भूदिति यदभावावगाहित्वप्रयुक्तेति विशेषणे किञ्चित्वेनापि तत्र दैवागतं तदभावत्वप्रकारकत्वं न तु तदभावप्रकारकतया संशयप्रतिवन्धकत्वमिति न तन्निबन्धनसंशयेन तथात्वापादनम्।

माथुरी

तथा च साध्यविकलो दृष्टान्तो व्यभिचारश्च। न च तज्ज्ञानत्वेन तज्ज्ञानहेतुत्वमेव साध्यमितिवाच्यम्। निश्चयपदोपादानानुपपत्तेरिति चेत्। न। धूमो वह्निव्याप्यो न वेति संशयसत्त्वेऽपि रूपान्तरधर्म्मितावच्छेदकव्याप्तिनिश्चयादनुमित्युत्पत्त्या धूमत्वावच्छिन्नलिङ्गकवह्न्यनुमितिं प्रत्येव धूमत्वावच्छिन्नविशेष्यकव्याप्तिविरहज्ञानस्य प्रतिबन्धकतया धूमो वह्निव्याप्यो न वेति संशयसत्त्वे धूमत्वावच्छिन्नलिङ्गकानुमित्यनुत्पादेऽपि धूमलिङ्गकानुमितिसामान्यवारणाय धूमलिङ्गकानुमितिसामान्यं प्रति धूमलिङ्गकवह्निव्याप्तिनिश्चयत्वेनैव हेतुत्वस्यावश्यकत्वात्। वस्तुतस्तु स्वसमानाधिकारणतादृशनिश्चयाव्यवहितोत्तरणक्षोत्पत्तिकत्वादिरूपं फलोपधानघटितजन्यत्वमेवात्र साध्यं तावतापि भगवतत्प्रामाण्यनिश्चयमादाय सिद्धसाधनाभावात्। न चैवमपि प्रामाण्यविषयकदृष्टसाधनतादिनिश्चयजन्यप्रवृत्तिव्यक्त्यंशतः सिद्धसाधनमिति वाच्यम्। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्। एतेन निष्कम्पप्रवृत्तिं प्रति प्रामाण्यज्ञानत्वेनैव हेतुत्वं न तु तन्निश्चयत्वेन प्रामाण्यसंशये तदनुत्पादस्य पृथक्प्रामाण्याभावज्ञानप्रतिबन्धकत्वेनैवोपपत्तेः। निश्चयत्वघटकदलद्वयस्य विशेष्य–विशेषणभावे विनिगमकाभावात् निश्चयत्वेन हेतुत्वोपगमेऽपि गुरुतरकार्यकारणभावद्वयस्यावश्यकत्वात् तथा च निश्चयत्वेन हेतुत्वस्य साध्यत्वे बाधः। एवं अनुमितिं प्रत्यपि व्याप्तिज्ञानत्वेनैव हेतुत्वं न तु व्याप्तिनिश्चयत्वेन व्याप्तिसंशयादनुमित्यनुत्पादस्य लाघवाद्व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानस्यैवानुमितिहेतुतया तदभावादेव सम्भवात्, तत्सत्त्वे चानुमितेः सर्व्वसिद्धात् व्याप्त्यंशे संशयात्मकपरामर्शस्य च व्याप्तिविशिष्टवैशिष्ट्यावगाहित्वाभावात्[3] इत्यपि निरस्तम् इति।

---

१. नैयायिकास्तु परतस्त्ववादिनः।
२. स्वतस्त्ववादिनो मीमांसकाः।
३. विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदक-प्रकारक-निश्चयस्य हेतुत्वादिति भावः।

**यत्तु योगजधर्मसामान्यलक्षणप्रत्यासत्त्या स्वाश्रयप्रामाण्यं तेनैव गृह्यत इत्यंशतः सिद्धसाधनमतो योगजधर्माद्यजन्यत्वं विशेषणमिति— तन्न। परं प्रत्यसिद्धेः। प्रामाण्यमात्रपक्षत्वे प्रामाण्यं स्वाश्रयेण गृह्यत एवेत्युद्देश्यप्रतीतेरसिद्धेश्च नांशतः सिद्धसाधनम्।**

आलोकः

प्रामाण्यसंशयानन्तरमिति। **तथा च प्रवृत्तिमात्रे व्यभिचारेऽपि विशेषेऽन्यथा-सिद्धिर्न दोषाय। प्रयोजकत्वमात्रस्याभ्युपगमादिति भावः।**

दर्पणः

ननु यदभावसंशयेन यत्र प्रतिबन्ध इत्यादिकमस्तु कृतमभावत्वप्रकारकत्वेनेत्यत आह—**अन्यथेति**।

ननु यदभावत्वप्रकारकसंशयेनेत्युक्तौ व्यभिचारसंशयस्य व्याप्तिधीप्रतिबन्धकत्वं नियतं पूर्वोक्तं विरुध्यते। तथा च तत्र व्यभिचाराभावाद्व्यतिरेकनिश्चयपदमनर्थक-मापद्येतेत्यत आह—**अस्ति चेति**। यदभावावगाहनेत्यादिनाऽव्यभिचारव्यतिरेकनिश्चयं वारयति—**प्रकृत इति**।

ननु व्यतिरेकपदेन निश्चयदिशि मुख्याभावो विवक्षितः। तथा च यद्व्यतिरे-कत्वप्रकारकः संशयो यद्व्यतिरेकत्वप्रकारकमुख्याभावनिश्चयश्च यत्र प्रतिबन्धक-

माथुरी

हेतोः स्वरूपासिद्धिमाह, 'तत्सन्देहे सतीति इष्टसाधनतादिनिश्चये प्रामाण्य-सन्देहे सतीत्यर्थः। 'अर्थसन्देहेनेति तदनन्तरमिष्टसाधनतादिसन्देहस्यैव उत्पादेनेत्यर्थः। **'अर्थानिश्चयादेव'** इति इदमिष्टसाधनमेव इत्यवधारणात्मकनिश्चयविरहादेवेत्यर्थः। पूर्व्वोत्पन्ननिश्चयस्तु नावधारणात्मक इति भावः। 'अप्रवृत्तेरिति निष्कम्पप्रवृत्तिविरहो-पपत्तेरित्यर्थः। निष्कम्पप्रवृत्तावत्रधारणात्मकनिश्चयस्यैव हेतुत्वादिति भावः। **'तत्र'** निष्कम्पप्रवृत्तौ, **'तयोः'** प्रामाण्यसंशय–तद्–व्यतिरेकनिश्चययोः।

ननु यत्रावधारणात्मकज्ञान एवाप्रामाण्यग्रहो जातस्तत्र निष्कम्पप्रवृत्तिवारणाय प्रामाण्याभावज्ञानस्य प्रतिबन्धकत्वमावश्यकम्। न च तत्र प्रवृत्तिवारणाय अप्रामाण्य-ज्ञानविरहविशिष्टावधारणत्वेनैव हेतुत्वं न तु प्रामाण्यभावज्ञानं प्रतिबन्धकमिति वाच्यम्। अप्रामाण्यज्ञानविरहावधारणत्वयोर्विशेष्य-विशेषणभावे विनिगमकाभावेन तदपेक्ष्य लाघवादप्रामाण्यग्रहस्यैव प्रतिबन्धकत्वौचित्यादिति चेत्। न। अवधार-णत्वात्मकविषयिताविशेषस्य स्वरूपसत एव स्वाश्रये प्रामाण्याभावग्रहप्रतिबन्धकतया तत्राप्रामाण्यग्रहस्यैवानुत्पत्तेरित्यभिमानः।

वस्तुतस्तु व्याप्त्यभावज्ञानस्यानुमितिप्रतिबन्धकत्वे मानाभावात् दृष्टान्तासिद्धिः। न च प्रयोजकीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वं हेतौ निवेशनीयमिति वाच्यम्।

**यद्वा घटोऽयमिति ज्ञानप्रामाण्यं एतज्ज्ञानग्राह्यं न वा ।**

आलोकः

ज्ञानप्रामाण्यमिति । **करणभ्रमनिरासार्थं** ज्ञानपदोपादानम् । ज्ञानपदस्य भावव्युत्पन्नस्य सुप्रसिद्धत्वादिति बहवः । तन्न । प्रामाण्यपदस्य विशेषपरत्वे भ्रमासम्भवात् ।

दर्पणः

स्तन्निश्चयत्वेन तत्र हेतुरित्युक्तौ अव्यभिचारव्यतिरेकज्ञानस्य वारणात् तदभावत्व-प्रकारकताकतदभावव्याप्यदर्शनात्मकसंशयेन को दोष इति न कोऽपि । किन्तु एतद्व्याप्तिबलादाकाङ्क्षाज्ञानस्य हेतुत्वं न सिद्ध्येदिति तदन्तबोधान्तर्भावेण व्याप्ति-र्व्यावर्णितेति । यद्व्यतिरेकत्वप्रकारकयद्व्यतिरेकज्ञानत्वावच्छिन्नं यत्र प्रतिबन्धकमिति द्वितीयकल्पे तु यदभावावगाहनप्रयुक्तप्रतिबन्धकताकं यद्व्यतिरेकज्ञानं यद्व्यतिरेकत्व-प्रकारकमेवेति विवक्षया व्याप्तिरियं प्रत्यव्यभिचारव्यतिरेकज्ञानत्वावच्छिन्नस्य प्रतिबन्धकत्वात् यो दोषः स निरस्य इत्यभिप्रेत्य किञ्चिन्नोक्तमिति । अत्र यद्यपि यत्संशयेत्यादि मूले प्रतिबन्धकत्वं यदि कारणीभूताभावप्रतियोगित्वं तदा दृष्टान्ता-सङ्गतिः, व्याप्तिनिश्चयेन तत्संशयव्यतिरेकनिश्चयविरहयोरन्यथासिद्धत्वात् । यदि प्रतिबन्धप्रयोजकत्वं तदा तत्र तयोरिति सिद्धान्तासङ्गतिः । तथापि संशयान्तरा-नियमेन संशयस्य व्यतिरेकनिश्चयस्य च प्रतिबन्धप्रयोजकत्वं विवक्षितम् । प्रमात्व-संशयस्यैवार्थसंशये नियमेन प्रतिबन्धकत्वं व्याप्तिसंशयश्च नान्तरा संशयान्तरमाधा-यानुमितिप्रतिबन्धक इति न दृष्टान्तासङ्गतिः । न च संशयान्तरानियमेनेति विशेषणं

माथुरी

तथाप्यप्रयोजकत्वात् यत्तदर्थयोरननु- गतत्वेन दृष्टान्ताभावाच्च । न च व्यतिरेकेण सुलभो दृष्टान्तः इति वाच्यम् । प्रामाण्यनिश्चयत्वेन हेतुत्वस्य क्वाप्यसिद्ध्या साध्य-प्रसिद्ध्यभावेन व्यतिरेकदृष्टान्तस्याप्यसम्भवादित्येव दूषणं सारम् ।

प्रामाण्यसंशयानन्तरमिति' पूर्वोत्पन्नेष्टसाधनतानिश्चये प्रामाण्यनिश्चया-भावेतरप्रामाण्यसंशयजनकसकलकारणसमवधानानन्तरमित्यर्थः । इत्थमेव दृष्टसाधन-मेव, 'प्रामाण्यनिश्चयाधीनत्वादिति प्रामाण्यसंशयनिवृत्तिद्वारा प्रामाण्यनिश्चयाधीन-त्वादित्यर्थः । तथा च इष्टसाधनताद्यवधारणं प्रति पूर्वोत्पन्नेष्टसाधनतादिनिश्चये प्रामाण्याभावज्ञानस्य प्रतिबन्धकतया तन्निवृत्तये क्वचित् प्रामाण्यनिश्चयोऽपेक्षितः इति भावः ।

मीमांसकद्वारा माध्यमकमतं निराकर्तुं मीमांसकमतमुत्थापयति, 'नन्विति, स्वत एव स्वकीयेभ्य एव, स्वजनकसामग्री-स्वजन्यस्वप्रत्यक्षसामग्री-स्वजन्यज्ञातता-लिङ्गकानुमितिसामग्र्यन्यतमेभ्य इति यावत् । स्वजन्येति स्वप्रत्यक्ष-ज्ञाततयोर्विशेषणम् ।

माथुरी

नैयायिकमते निषेधकोटिमुपपादयति । परतः पक्ष इति नैयायिकमत इत्यर्थः । ज्ञात एवेति, विशिष्टप्रामाण्यस्येति शेषः । ज्ञाने प्रामाण्यग्रहः ज्ञानविशेष्यकप्रामाण्यग्रहः । मीमांसकमते विधिकोटिमुपपादयति, स्वतस्त्व इति मीमांसकमतम् इत्यर्थः । विशिष्टप्रामाण्योपस्थितिं विनापीतिशेषः । द्वितीयमते ज्ञात एव ज्ञाने इत्यत्र ज्ञात एव प्रामाण्याश्रय इत्यर्थः, स्वतस्त्वम् इत्यस्य प्रामाण्योपस्थितिं विनापीति शेषः । नव्यमते तु ज्ञात एवेत्यस्य तज्ज्ञानाधिकरणकालोत्तरोत्पनन्नज्ञानजन्य एवेत्यर्थः । ज्ञाने तज्ज्ञानसमानाधिकरणतज्ज्ञानाधिकरणकालोत्तरवर्तिज्ञाने, प्रामाण्यग्रहः प्रामाण्ययिषयकत्वम्, स्तस्त्वम् इत्यस्य तज्ज्ञानसमानाधिकरणतज्ज्ञानाधिकरणकालोत्तरोत्पन्नज्ञानं विनापि तज्ज्ञानाधिकरणकालोत्तरकालमिति शेषः ।

मतत्रयसाधारणं लघुविप्रतिपत्त्यन्तरमाह- स्वाश्रयेति । स्वाश्रयज्ञानविषयकग्रहेणैव विषयीक्रियते न वेत्येवकारव्यत्यासेन योजना, एवकारश्च यावदर्थकः, स्वपदं सामान्यतः पक्षीभूतघटत्ववतीत्यादिपरं[1] तथा च तज्ज्ञानवृत्तिघटत्ववति घटत्वप्रकारकत्वं स्वाश्रयज्ञानविषयकयावद्ग्रहप्रकारो न वेति[2] फलितम्. ज्ञानभेदेन घटत्ववति घटत्वप्रकारत्वादेर्विभिन्नत्वे तु स्वाश्रयपदं पक्षीभूतप्रामाण्यव्यक्त्याश्रयपरम् तथा च तज्ज्ञानवृत्ति- घटत्ववति घटत्वप्रकारकत्वं तज्ज्ञानविषयकयावद्ग्रहप्रकारो न वेति फलितम्, इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वादित्यादिनैयायिकसिद्धप्रामाण्यानुमितिमादाय विधौ सिद्धसाधनवारणाय यावदिति ग्रहविशेषणम्, तदर्थश्च दीधितिकृन्मतोक्तरीत्या प्रथमविप्रतिपत्त्यनुसारेण बोध्यः[3], प्रकारता[4] प्रथमविप्रतिपत्तौ नव्योक्तान्यतररूपा[5] ग्राह्या नातस्तत्रोक्तार्थान्तरावकाशः । एवम् इदं ज्ञानं निष्प्रकारकम्, इदं ज्ञानं निर्विशेष्यकम्, इदं ज्ञानं प्रमात्वाभाववदित्यादिज्ञानलौकिकप्रत्यक्षमादाय गुरु-मिश्रयोर्मते विधौ बाधवारणाय तत्प्रामाण्यग्रहप्रतिबन्धकीभूततत्प्रामाण्याश्रयविषयकग्रहाविशिष्टत्वेन ग्रहो विशेषणीयः, तत्पदं विशिष्यपक्षीभूतप्रामाण्यपरिचयाय, वैशिष्ट्यञ्च स्वक्षण-स्वाव्यवहितोत्तरक्षणान्यतरक्षणावच्छेदेन एकात्मवृत्तित्वम्[6], स्वपदञ्च ग्रहपरम्, घटत्ववति घटत्वप्रकारकत्वाश्रयज्ञानविषयकत्वञ्च तादृशज्ञानांशे लौकिकविषयताशून्यत्वसाक्षात्कारत्वविशिष्टविषयत्वोभयाभाववत्त्वम् एवं पक्षे तज्ज्ञानविषयकत्वमपि तज्ज्ञानांशे

---

१. पक्षीभूतघटत्ववति घटत्वप्रकारकत्वादिपरमिति ख० ।
२. घटत्ववति घटत्वप्रकारकत्वाश्रयज्ञानविषयकयावद्ग्रहप्रकारो न वेतीति ख० ।
३. तदर्थश्च प्रथमविप्रतिपत्तौ दीधितिकृन्मतोक्तरीत्या बोध्यः इति ख० ।
४. बोधप्रकारता चेति क० ।
५. पूर्व्वोक्तरूपेति क० ।
६. इदं ज्ञानं निष्प्रकारकमित्यादिज्ञानोत्तरवर्त्तितज्ज्ञानविषयकज्ञानमादाय बाधवारणाय अन्यतरक्षणस्य वैशिष्ट्यघटकत्वमिति भावः ।

## माथुरी

तादृशोभयाभाववत्त्वं तेन प्रामाण्यविषयकज्ञानस्योपनीतचाक्षुषादिमादाय न बाधः, भट्टमतसाधारण्याय उभयाभावानुधावनम्। न च गुरुनये तादृशविवक्षणं व्यर्थं तेनोपनीत-चाक्षुषादेरनभ्युपगमादिति वाच्यम्। सर्व्वंमते सर्वविवक्षासाफल्याभावेऽपि क्षति-विरहात्, यत्किञ्चिन्मते सार्थकत्वस्य कर्त्तव्यत्वात्, गुरुमतेऽप्युपनीतभानस्य लाघवेन ग्रहण-स्मरणात्मकैकज्ञानरूपतया तद्विवक्षणस्यावश्यकत्वाच्च। अत एव तन्मते लौकिकविषयत्वस्यापि नाप्रसिद्धिः। सुरभि चन्दनमित्यादेः लाघवेन ग्रहण-स्मरणात्म-कैकज्ञानरूपतया तत्र सौरभं पश्यामीत्यनुव्यवसायवारणाय वह्न्याद्यनुमितेरपि स्वांशे मानससाक्षात्काररूपतया तत्रापि वह्निं साक्षात्करोमीत्याद्यनुव्यवसायवारणाय तदभ्यु-पगमस्यावश्यकत्वात्। परन्तु तदेतन्मते साक्षात्कारत्वमिति परं विवादः। तादृश-ज्ञानांशे इत्यभावान्वयि तेन तज्ज्ञानविषयकज्ञानस्य व्युदासः तत्र च तादृशज्ञानांशे तादृशोभयाभाववत्त्वविरहात्।

ननु प्रथमविप्रतिपत्त्युक्तरीत्या ज्ञानपदजन्यशाब्दबोधः ज्ञानवानित्यनुमिति-स्मृत्यादिकं घटज्ञानपदादिजन्यशाब्दबोधं घटज्ञानवानित्याद्यनुमिति-स्मृत्यादिकञ्चादाय बाधो दुर्व्वार इति चेत्। न। घटत्ववति घटत्वप्रकारकज्ञाननिष्ठप्रामाण्याविषयक-परोक्षभिन्नत्वेन ग्रहविशेषणात्, तादृशग्रहश्च तादृशज्ञानसाक्षात्कारः तादृशज्ञान-विषयकप्रामाण्यानुमित्यादिश्च। सिद्धसाधनवारणाय परोक्षेति, परोक्षत्वञ्च चाक्षुषादि-भेदपञ्चवज्ज्ञानत्वम्, भट्टमतसाधारण्यायाविषयकान्तं परोक्षविशेषणम्, शेषं प्रथम-विप्रतिपत्तौ नव्यमतोक्तरीत्यावसेयम्।

वस्तुतस्तु न ह्येकदा त्रिभिर्द्वाभ्यां वा विवादः, अतः प्रत्येकमतमात्रसाधारणं विप्रतिपत्तिद्वयमाह- 'स्वाश्रयग्राहकेणेत्यादि, इदन्तु मिश्रमते। **'स्वाश्रयग्राहकेण'** स्वाश्रयविषयकसाक्षात्कारेण, **'गृह्यत एव न वा'** प्रकारीक्रियत एव न वेत्यर्थः। भिन्नक्रमस्यैवकारः स्वाश्रयविषयकसाक्षात्कारस्य यावत्त्वलाभाय। अन्यथा प्रामाण्य-स्मृत्यादिकालीनेनानुव्यवसायेन नैयायिकमतेऽपि प्रामाण्यग्रहात् सिद्धसाधनापत्तेः, तथा च स्वाश्रयविषयकयावत्साक्षात्कारप्रकारतावन्न वेति फलितम्। साक्षात्कारश्च स्वाश्र-यांशे संयुक्तसमवायजन्यत्वेन लौकिकत्वेन वा विशेषणीयः, तेन प्रामाण्याविषयकोपनीत-भानमादाय न बाधः। तत्प्रामाण्यग्रहप्रतिबन्धकासमवहितत्वेन साक्षात्कारो विशेषणीयः तेनेदं निष्प्रकारकम् इत्यादिज्ञानलौकिकप्रत्यक्षमादाय न बाधः। अनुव्यवसीयमानज्ञान-प्रामाण्यमेव पक्षः नातो बाधः। प्रकारता च ज्ञानत्वावच्छिन्नविशेष्यतानिरूपितत्व-विशिष्टप्रामाण्यत्वावच्छिन्नप्रकारता–घटत्वादिनिष्ठप्रकारतानिरूपितप्रकारतयोरन्यतर-प्रकारतारूपा ग्राह्या। अन्यथा प्रमात्व-कालीनत्वादिविषयकत्वेन कालिकादियत्किञ्चि-त्सम्बन्धेन प्रकारत्वत्वादियत्किञ्चिद्रूपेण वा प्रमात्वप्रकारकत्वेन चार्थान्तरापत्तेः घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वस्य केवलघटत्वप्रकारकत्वानतिरिक्ततया

माथुरी

सिद्धसाधनापत्तेश्च, न्यायनयेऽप्यनुव्यवसाये घटत्वप्रकारकत्वादिभानाभ्युपगमात् इदं ज्ञानं प्रमा न वेति संशयोत्पत्त्या विधिकोटिनिराकरणानुपपत्तेश्च यथाकथञ्चित् तत्सत्त्वेऽपि[1] तादृशसंशयसम्भवात् । एवमग्रिमविप्रतिपत्तिष्वपि बोध्यमित्येव सारम् ।

गुरुमतमात्रसाधारणविप्रतिपत्त्यन्तरमाह, 'स्वाश्रयेणेति 'स्वाश्रयेण प्रकारीक्रियत एव न वेत्यर्थः । ज्ञानभेदेन घटत्ववतीत्यादेः[2] भिन्नत्वमतेनायम्, सामान्यतो घटत्ववति घटत्वप्रकारत्वत्वादिना च पक्षत्वं न तु तज्ज्ञानवृत्तिप्रामाण्यत्वेन, तज्ज्ञानवृत्तिप्रामाण्यत्वेन पक्षत्वे स्वाश्रयपदस्य तज्ज्ञानपरत्वे च 'प्रामाण्यमात्रस्य पक्षत्वादित्युत्तरग्रन्थासङ्गतेः यद्वेत्यादिना वक्ष्यमाणेन पौनरुक्त्यापत्तेश्च । साध्ये च स्वपदस्य समभिव्याहृतपरतया स्वाश्रयपदं यदा यत्र साध्यं ग्राह्यं तदाश्रयपरम् न तु सामान्यतो घटत्ववति घटत्वप्रकारकत्वाश्रयपरम् भगवज्ज्ञानमादाय पक्षतावच्छेदकावच्छेदेनैव सिद्धसाधनापत्तेः । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वलाभाय, अन्यथा योगिज्ञान-भगवज्ज्ञानयोः सर्व्वविषयकत्वेन सकलपदार्थघटितप्रामाण्याश्रयतया तद्वृत्तिघटत्ववति घटत्वप्रकारकत्वव्यक्त्यावंशतः सिद्धसाधनापत्तेः, सर्व्वं ज्ञानं प्रमेत्यनुमितिनिष्ठघटत्ववति घटत्वप्रकारकत्वव्यक्त्यावंशतः सिद्धसाधनापत्तेश्च । न च क्रियासङ्गतैवकारस्यान्वयिताच्छेदकसामानाधिकरण्येन व्यवच्छेदबोधकत्वस्वाभाव्यात् कथं तल्लाभ इति वाच्यम् । ज्ञानं रजतं गृह्णात्येवेत्याद्यप्रयोगात् ग्रहादिधातुयोग्येवकारस्यान्वयितावच्छेदकावच्छेदेनैवायोगव्यवच्छेदस्य लक्षणयोपस्थितस्य धर्म्मिणोऽन्ययोगव्यवच्छेदस्य बोधकत्वात्, यावद्घटज्ञानप्रामाण्यानामैक्ये तु पूर्ववद्भिन्नक्रमस्यैवकारः स्वाश्रययावत्त्वलाभायान्यथा योगिज्ञानेश्वरज्ञानयोः सर्वविषयकत्वेन सकलप्रामाण्याश्रयतया तद्ग्राह्यत्वेन सिद्धसाधनापत्तेः । साध्येऽपि स्वाश्रयपदं सामान्यतो घटत्ववतीत्याद्याश्रयपरं[3] परन्तु ग्रन्थो नैतदभिप्रायकः उत्तरग्रन्थासङ्गतेरिति । 'प्रत्येकमेवेति एवम्प्रकारेण प्रत्येकमेवेत्यर्थः । यद्यपि मिश्रमते उक्तैव विप्रतिपत्तिः, भट्टमते च किमनुमितिग्राह्यत्व-तदभावौ कोटी, यावदनुमितिग्राह्यत्वतदभावौ वा, ज्ञाततालिङ्गकानुमितिग्राह्यत्व-तदभावौ वा आद्ये सिद्धसाधनम्, द्वितीये सर्वमत एवाप्रसिद्धिः, तृतीये न्यायनयेऽप्रसिद्धिः, तन्मते ज्ञाततायाः शशविषाणकल्पत्वात् । तथापि तन्मते घटत्ववति घटत्वप्रकारकत्वं घटवृत्तिज्ञाततापक्षकघटावृत्तिजन्यतासंसर्गकभ्रमभिन्नानुमितिविधेयतावच्छेदकं न वेति विप्रतिपत्तिः, तन्मते इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानवती, घटविशेष्यकघटत्वप्रकारकज्ञाततात्वात्, इति जन्यतासंसर्गकानुमित्या, इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या

१. प्रमात्वज्ञानसत्त्वेऽपीति ख० घ०, च ।
२. घटत्ववति घटत्वप्रारत्वादेरिति ख० ।
३. घटत्ववति घटत्वप्रकारकत्वाश्रयपरमिति ख० ।

माथुरी

ज्ञाततात्वादिति जन्यताविधेयकानुमित्या वा प्रामाण्यग्रहात् । न च न्यायनये ज्ञातताया: शशविषाणकल्पत्वेनाप्रसिद्धिरिति वाच्यम् । गुणेतरपदार्थस्यैव प्रकृते ज्ञाततापदेन विवक्षितत्वात् । भट्टेन द्वित्वादेरपेक्षाबुद्धिजन्यत्वानभ्युपगमेऽपि न्यायनये घटवृत्ति-द्वित्वादिपक्षकापेक्षाबुद्ध्यात्मकघटत्वप्रमाजन्यत्वानुमितिमादाय सिद्धसाधनवारणाय गुणे-तरत्वं पदार्थविशेषणम्, घटवृत्तित्वञ्च समवायेन विवक्षितम्, समवायानभ्युपगमे विशेषण-ताविशेषेणैव वृत्तित्वं विवक्षणीयम्, तथा च गुणेतरत्वं नोपादेयम्, ज्ञानस्य साधारणज-न्यतामादाय सिद्धसाधनवारणाय घटावृत्तित्वं जन्यताविशेषणम्, पक्षतावच्छेदकसमाना-धिकरण्येन विधेस्तदवच्छेदेन च निषेधस्य च उद्देश्यतया ज्ञानभेदेन प्रकारत्वादेर्भेदनयेऽपि नांशतः सिद्धसाधन-बाधयोरवकाशः, यावद्घटज्ञाननिष्ठप्रमात्वस्यैक्यमते तु नानुपपत्ति-गन्धोऽपि । भट्टेन नैयायिकेन वा स्वत्वस्यातिरिक्तपदार्थत्वाभ्युपगमे क्रय-प्रतिग्रहादीतरत्वेन विधेयता विशेषणीया नातस्तत्पक्षकानुमितिमादायार्थान्तरं सिद्धसाधनं वा । यदि च भ्रमव्यावृत्तं स्वतोग्राह्यत्वं निर्वाच्यं तदा घटत्वप्रमावृत्तित्वेनाप्यनुमितिविधेयता विशे-षणीयेति भावः ।

वस्तुतस्तु ज्ञाननिष्ठं घटत्ववति घटत्वप्रकारकत्वं लौकिकसाक्षात्काराग्राह्यत्वे सति ग्राह्यं न वेति तन्मते विप्रतिपत्तिः, तन्मते ज्ञानस्यातीन्द्रियतया तद्वृत्तिविशेष्यकत्व-प्रकारकत्वादेरप्यतीन्द्रियत्वात्, न्यायनये विशिष्टस्यानतिरिक्ततया केवलघटत्वप्रकारकत्व-घटविशेष्यकत्वयोरनुव्यवसायग्राह्यत्वादेव विशिष्टस्याप्यनुव्यवसायग्राह्यत्वात् विशिष्ट-प्रामाण्योपस्थितिदशायां विशिष्टत्वरूपेणाद्यानुव्यवसायग्राह्यत्वाच्च । न च सिद्धसाधना-वकाशः, पक्षतावच्छेदकावच्छेदेन विधिकोटिसिद्धे रुद्देश्यतया ज्ञानभेदेन प्रकारत्वादेर्भेदेऽपि नांशतः सिद्धसाधनम् । न चैवं लौकिकसाक्षात्काराग्राह्यत्वे सति ग्राह्यत्वमेव तन्मते स्वतोग्राह्यत्वमितिफलितं तथा च प्रामाण्यवदप्रामाण्यस्यापि स्वतोग्राह्यत्वापत्तिरिति वाच्यम् । तादृशस्वतोग्राह्यत्वस्याप्रामाण्येऽपीष्टत्वात्, प्रामाण्यं स्वतोग्राह्यं नाप्रामाण्य-मिति प्रवादस्य च मतत्रयसाधारणविप्रतिपत्त्युपवर्णितविधिकोटिरूपस्वतोग्राह्यत्वादित्येव तत्त्वम् ।

भट्टाचार्य्यास्तु प्रामाण्याश्रयविषयकत्वेन भट्टमतसिद्धं यत् तद्भिन्नयावद्ग्रह-विषयो न वेति भट्टमते विप्रतिपत्तिः । नैयायिकसिद्धप्रामाण्यानुमितिमादाय सिद्ध-साधनवारणाय यावत्त्वं ग्रहविशेषणम् । इत्थञ्चानुव्यवसायस्य भट्टमते शशविषाण-कल्पतया यावद्ग्रहान्तर्गतत्वात् तद्ग्राह्यत्वाभावेन सिद्धसाधनस्य नावकाशः । सिद्धान्तश्च भेदकूटप्रतियोगिपरिचायकं न तु तस्य कोटितावच्छेदकेऽन्तर्भावः, प्रातिस्विक-रूपेण तत्तद्व्यक्तिभेदकूटस्यैव कोटितावच्छेदकत्वात्, तेन सिद्धसाधनत्वस्यानुगतानति-प्रसक्तस्य दुर्वचत्वेऽपि न क्षतिः । न च तत्प्रामाण्यविषयकत्वेन न्यायनयसिद्धा या

माथुरी

अनुमितिस्तद्भिन्नग्राह्यं न वेति सम्यगिति वाच्यम्। स्वप्रकाशमर्य्यादयाऽयं घट इत्याद्यनुमित्यात्मकव्यसायग्राह्यत्वमादायार्थान्तरापत्तेरित्याहुः।

मिश्रास्तु भट्टमते ज्ञानत्वावच्छिन्नव्यापकताज्ञानजन्य-तदितरव्यापकता-ज्ञानाद्यजन्यानुमितिव्यापकतावच्छेदकं न वेति विप्रतिपत्तिः, आदिपदाद् बाधज्ञान-लाघवज्ञानपरिग्रहः। भट्टमते अयं ज्ञानवान् ज्ञाततावत्त्वादि इयं ज्ञातता, ज्ञानजन्या, ज्ञाततात्वादित्यनुमितावेव बाधादिप्रतिसन्धानं विनापि वक्ष्यमाणरीत्या घटत्ववति घटत्वप्रकारकत्वादिरूपेण ज्ञानस्य सिद्धेरित्याहुः।

अत्र केचित् योगजधर्मजन्ययोगिप्रत्यक्षेण सर्वविषयकेन ज्ञानत्वादिसामान्य-लक्षणयोपस्थिते सर्वस्मिन्नेव ज्ञाने घटत्ववति घटत्वप्रकारकत्वत्वसामान्यलक्षणोपनीत-घटत्ववतीत्यादिप्रकारकप्रत्यक्षेण च[१] स्वनिष्ठघटत्ववति घटत्वप्रकारकत्वव्यक्तेरपि घटत्ववति घटत्वप्रकारत्वरूपेण स्वस्मिन्नेव प्रकारतया विषयीकरणात्तयोः प्रामाण्ये चतुर्थविप्रतिवत्तावंशतः सिद्धसाधनमतस्तद्वारणाय तत्र योगजधर्म्माद्यजन्यत्वेन पक्षघटकं ज्ञानं विशेषणीयमित्याहुस्तन्मतमुपन्यस्य दूषयति, 'यत्त्वित्यादिना 'सामान्यलक्षण-प्रत्यासत्त्येति सामान्यं लक्षणं प्रयोजकं यस्यास्तादृशप्रत्यासत्त्येति व्युत्पत्त्या घटत्ववति घटत्वप्रकारकत्वत्वादिरूपसामान्यलक्षणप्रत्यासत्तिजन्यघटत्ववति घटत्वप्रकारकत्वत्वादि-प्रकारकनिखिलघटत्ववति घटत्वप्रकारकत्वादिविषयकज्ञानलक्षणप्रत्यासत्त्येत्यर्थः। **'तेनैव'** स्वनैव, **'गृह्यते'** ज्ञानत्वसामान्यलक्षणोपस्थिते स्वस्मिन् प्रकारतया गृह्यते, 'अंशतः सिद्धसाधनमिति, घटत्ववति घटत्वप्रकारकत्वादेः प्रतिज्ञानं विभिन्नतया पक्षता-वच्छेदकावच्छेदेन स्वाश्रयघटितसाध्यस्य सिद्धसाधनासम्भवादंशत इत्युक्तम्। 'योग-जधर्म्माद्यजन्यत्वमिति योगजधर्म्माद्यजन्यत्वे सति जन्यत्वमित्यर्थः। अन्यथेश्वरज्ञानस्य सर्वविषयकतया तत्प्रामाण्येऽशंतः सिद्धसाधनतादवस्थ्यात्। आदिपदात् प्रामाण्य-ज्ञानपरिग्रहः, **'विशेषणं'** पक्षघटकज्ञाने विशेषणम्, न तु साध्यघटकज्ञानेऽशंतः साध्या-प्रसिद्ध्यापत्तेः। तथा च योगजधर्म्माद्यजन्यज्ञानप्रामाण्यं पक्ष इति भावः। योगजधर्म्माद्य-जन्यत्वञ्च प्रत्यक्षमात्रवृत्तिधर्म्मावच्छिन्नयोगजधर्म्मादिजन्यतानाश्रयत्वम्, अन्यथा ज्ञानादृष्टादेः कार्य्यमात्रजनकतया तदजन्यज्ञानाप्रसिद्धेः, अत एव दूषयति, 'परम्प्रत्य-सिद्धेरिति प्रतियोगिनस्तादृशजन्यत्वस्याप्रसिद्ध्या तदनाश्रयत्वस्याप्रसिद्धेरित्यर्थः। कथं तर्हि सिद्धसाधनोद्धार इत्यत आह, प्रामाण्यमात्रस्येति[२] घटत्ववति घटत्वप्रकारकत्व-त्वादिरूपेण पक्षतयेत्यर्थः। 'प्रामाण्यं स्वाश्रयेण गृह्यत एवेतीति प्रामाण्यं स्वाश्रयेण

१. निखिलघटत्ववति घटत्वप्रकारकत्वप्रकारकप्रत्यक्षेण चेति ख०।

२. "प्रामाण्यमात्रस्य पक्षत्वे" इति कस्यचिन्मूलपुस्तकस्य पाठः तदनुसारेण प्रामाण्य-मात्रस्येतीत्यनेन मूलपाठो धृतः मथुरानाथेन।

माथुरी

गृह्यत एवेत्याकारिकाया घटत्ववति घटत्वप्रकारकत्वत्वादिरूपोद्देश्यतावच्छेदकावच्छेदेन फलीभूतानुमितेरित्यर्थः। 'असिद्धेः' पक्षतावच्छेदकसामानाधिकरण्येन साध्यविषयकत्वासिद्धेः, 'नांशतः सिद्धसाधनमिति, दोषः इति शेषः। न च तथापि यावदघटज्ञानप्रामाण्यानामैक्येन सिद्धसाधनं दुर्व्वारमिति वाच्यम्। तन्मते यावत्त्वस्य स्वाश्रयविशेषणत्वादेव वारणसम्भवादिति भावः। नन्विदमयुक्तं यदि ज्ञानव्यक्तिभेदेन प्रामाण्यभेदः तदा साध्ये स्वपदस्य तत्तत्प्रामाण्यव्यक्तिपरत्वे कस्यापि साध्यस्य पक्षतावच्छेदकावच्छेदेनावृत्तेरंशतोबाधापत्तेः सामान्यतो घटत्ववति घटत्वप्रकारकत्वादिपरतायां तदाश्रयविषयकयावत्प्रत्यक्षविषयत्वस्य कुत्राप्यभावाद्बाधापत्तिरित्यस्वरसादाह, 'यद्वेति, 'घटोऽयमिति, 'ज्ञानप्रामाण्यमिति, एतज्ज्ञानवृत्तिप्रामाण्यमित्यर्थः। 'एतज्ज्ञानग्राहकमात्रेति मात्रपदं कृत्स्नार्थकम्, तथा चैतज्ज्ञानविषयकयावल्लौकिकप्रत्यक्षप्रकारो न वेत्यर्थः, व्याख्याततत्त्वमेतत्।

ननु मीमांसकैः प्रामाण्यमेव स्वतो ग्राह्यमुच्यते, प्रामाण्यञ्च न तद्वति तत्प्रकारकत्वादिकमपि तु विशेष्यावृत्त्यप्रकारकत्वादिकम् तच्च वक्ष्यमाणरीत्या न स्वतोग्राह्यं सम्भवतीत्याह, 'यद्यपीति, 'विशेष्यावृत्तीति स्वाधिकरणावृत्तिधर्म्मानिरूपितविशेष्यताकत्वमित्यर्थः। तेन वह्निगुञ्जयोर्गुञ्जावह्नी इति विपरीतभ्रमे[1] नातिव्याप्तिः, स्वपदं भेदप्रतियोगिविशेष्यतापरम्[2] इदं रजतमित्यादिभ्रमो धर्म्मितावच्छेदकांशे प्रमापि प्रमुक्ततत्ताकस्मरणवन्न लक्ष्यः। स्वाधिकरणवृत्तिधर्म्मनिष्ठविशेष्यतावच्छेदकत्वातिरिक्तप्रकारतानिरूपितविशेष्यताकत्वमात्रस्यैव[3] सम्यक्त्वेऽप्यनुगमार्थं निषेधद्वयगर्भता। 'अगृहीतग्राहित्वमिति स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्त्तिस्वसमानाकारनिश्चयाविषयविषयकत्वमित्यर्थः। धारावाहिकज्ञानञ्च न प्रमेत्यभिमानः। 'सर्वेति[4], निर्विकल्पक-व्यधिकरणप्रकारकज्ञानयोरनभ्युपगमादिति भावः। 'स्मृत्यन्येति[5], स्मृतौ प्रमाव्यवहारविरहात् तत्परित्यागः। 'विशिष्टज्ञानत्वमिति।' यद्यपि विशिष्टज्ञानत्वं न तत्प्रकारकज्ञानत्वम्, प्रागनुपस्थितेः' इत्यग्रिमदूषणासङ्गतेः ज्ञानत्व-प्रकारत्वादेरनुपस्थितस्यैव प्रकारत्वाभ्युपगमात्, अन्यथा सिद्धान्तेऽपि तद्दोषापरिहारात्। तथाप्यगृहीतासंसर्गकतदुभयविषयकज्ञानत्वं परस्परं तदुभयविशिष्ट-

१. गुञ्जायां वह्नित्वस्य वह्नौ गुञ्जात्वस्य भ्रम इत्यर्थः।

२. तथा च स्वाधिकरणावृत्तिधर्म्मनिरूपितविशेष्यताभिन्नविशेष्यताशालित्वमित्यर्थः।

३. प्रकारतायां विशेष्यतावच्छेदकत्वातिरिक्तत्वविशेषणात् ह्रदो वह्निमानित्यादिभ्रमे ह्रदत्वनिष्ठावच्छेदकत्वात्मकप्रकारतामादाय नातिव्याप्तिः।

४. सर्व्वधीतीति ख०।

५. "स्मृत्यन्यज्ञानत्वं" इति कस्यचिन्मूलपुस्तकस्य पाठमनुसृत्य स्मृत्यन्येतीत्यनेन मूलपाठो धृतो मथुरानाथेन।

**अन्यथा अप्रमाहितज्ञाततया अप्रामाण्यस्यापि स्वतोग्रहापत्तिरिति । तथापि तद्वति तत्प्रकारकज्ञानत्वं तद्वति तद्वैशिष्ट्यज्ञानत्वं वा प्रामाण्यम् । तन्निश्चया-देवनिष्कम्पव्यवहारात् लाघवात्, नान्यद् गौरवात् । तच्च ज्ञानग्राहकसामग्री-ग्राह्यमेव । तथा हि विशेष्ये[1] तद्धर्मवत्त्वं तद्धर्मप्रकारकत्वञ्च व्यवसायस्यानु-व्यवसायेनानुमित्या स्वप्रकाशेन वा गृह्यते । विषयनिरूप्यं हि ज्ञानमतो**

माथुरी

ज्ञानत्वम्, न तत्प्रकारज्ञानत्वम्, परस्परं तदुभयप्रमात्वमपि तदेवेत्यर्थः । असंसर्गाग्रह-कालीनसमूहालम्बनज्ञानमपि परस्परमुभयप्रमेति भावः । 'प्रामाण्यं' प्रामाण्यव्यवहारा-स्पदम्, निरूढ़लक्षणया प्रोपसंहितमाधातुप्रतिपाद्यतावच्छेदकमितियावत्[2] 'ज्ञाना-तीन्द्रियत्वमत इत्यर्थः । 'ज्ञानानुमित्येति तत्तज्ज्ञाततापक्षकजन्यतासंसर्गकज्ञानानु-मित्येत्यर्थः । 'तत्' विशेष्यावृत्त्यप्रकारकत्वादिकम्, 'गृह्यते' ग्रहीतुं शक्यते, 'ज्ञानमात्र-लिङ्गस्येति तादात्म्यादिसम्बन्धेन भ्रम-प्रमासाधारणनिखिलज्ञानजन्यस्य ज्ञातता-लिङ्गस्येत्यर्थः । 'प्राकट्यादेः' इत्यादिपदात् प्राकट्यत्वपरिग्रहः । तथा च तादात्म्य-सम्बन्धेन प्राकट्यमाश्रयतासम्बन्धेन प्राकट्यत्वञ्च न तदनुमापकं सम्भवतीति भावः ।

ननु प्रमाजन्यज्ञाततात्वं हेतुरित्यत आह, 'नापीति' । 'प्रमाहितज्ञातता-विशेषात्' प्रमाहितज्ञाततानिष्ठो यो विशेषः प्रमाजन्यज्ञाततात्वं तस्मात्, 'तस्य' ज्ञातनानिष्ठप्रमाजन्यत्वस्य, 'प्रथमं' कारणीभूतव्यवसाये प्रमात्वज्ञानं विना । ननु प्रमाजन्यज्ञाततात्वं न हेतुरपि तु प्रमाजन्यतावच्छेदकं ज्ञाततानिष्ठं वैजात्यमस्ति तेन रूपेण तादत्म्यसम्बन्धेन ज्ञाततैव हेतुरित्यत आह, 'अन्यथेति यदि प्रमोत्पत्त्यनन्तरं तज्जन्यतावच्छेदकवैजात्यरूपेण हेतुना प्रामाण्यमनुमेयं तदेत्यर्थः । 'अप्रमाहित-ज्ञाततयेति अप्रमाजन्यतावच्छेदकवैजात्यरूपेण ज्ञाततया हेतुनेत्यर्थः । तुल्यन्यायतया अप्रमाजन्यतावच्छेदकवैजात्यस्यापि तत्र सुवचत्वादिति भावः । 'स्वतोग्रहापत्तिरिति स्वात्मकव्यवसायोत्तरं ग्रहापत्तिरित्यर्थः । 'तद्वति तद्वैशिष्ट्यज्ञानत्वं वा' तद्वति तद्वै-शिष्ट्यज्ञानत्वं वापि[3], तद्वति तद्वैशिष्ट्यज्ञानत्वञ्च तद्वन्निष्ठविषयतानिरूपिततद्विषय-ताकज्ञानत्वं तद्वति संसर्गमर्य्यादया तद्धर्म्मताविषयकत्वं वा, प्रथमे प्रकारित्वं विषयिता-विशेष इति नाभेदः ।

नन्वस्तु तदपि प्रामाण्यम्, तथापि निष्कम्पप्रवृत्त्युपयोगि यत्प्रामाण्यं तदेव स्वतोग्राह्यं परैरुपेयते तच्च न तथेत्यत आह, 'तन्निश्चयादेवेति' । 'लाघवादिति

१. व्यवसायविशेष्य इति भावः ।
२. 'प्रोपसंहितमाधातुप्रतिपाद्यतावच्छेदकं' प्ररूपोपसर्गयुक्तमाधातुप्रतिपाद्यतावच्छेदक-मित्यर्थः ।
३. तथा च मूलस्थो वाकारो व्यवस्थितविकल्पार्थः ।

**ज्ञानवित्तिवेद्यो विषय इति व्यवसाये भासमाने धर्मधर्मिवत्तद्वैशिष्ट्यमपि विषयः। व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्, सम्बन्धितावच्छेदकरूपवत्तया ज्ञायमाने सम्बन्धिनि ससम्बन्धिकपदार्थनिरूपणमित्यनुव्यवसायस्य रजत्वावच्छिन्नत्वेन पुरोवर्त्तिविषयत्वाच्च। अन्यथा पुरोवर्त्तिनं रजतञ्च जानामीति तदाकारः स्यान्न तु रजतत्वेन पुरोवर्तिनमिति। अत**

माथुरी

पाठः', 'लाघवाच्चेति पाठश्चाप्रामाणिकः'[1], तस्यापि प्रामाणिकत्वे तु 'निष्कम्पव्यवहारात्' निष्कम्पस्य व्यवहारात्, निष्कम्पप्रवृत्तेरनुभावसद्धत्वादित यावत्, 'लाघवाच्चेत्यस्य तदेव निष्कम्पप्रवृत्त्युपयोगीति शेषः।

ननु भवतु तदेव निष्कम्पप्रवृत्त्युपयोगि प्रामाण्यं तथापि तस्य स्वतोग्राह्यत्वं कथमित्यत आह, 'तच्चेति। '**विशेष्ये**' व्यवसायविशेष्ये, 'तद्धर्म्मप्रकारकत्वमिति' तद्विशेष्यकत्वे सति तद्धर्म्मप्रकारकत्वमित्यर्थः। अनुव्यवसायेन तद्ग्रहमुपपादयति, 'विषयनिरूप्यमिति विषयाविषयकलौकिकसाक्षात्काराविषय इत्यर्थः।

ननु तद्विषयकव्यवसायस्य तद्विषयकव्यवसायग्रहे तद्भानप्रतिबन्धकत्वान्नानुव्यवसाये वैशिष्ट्यभानसम्भव इत्यत आह, 'व्यवसायेति, **व्यसायरूपप्रत्यासत्तेः** व्यवसायनिरूपितसम्बन्धस्य व्यवसायविषयत्वस्येति यावत्, **तुल्यत्वात्** वैशिष्ट्यवद्धर्म्मि-धर्म्मिणोरपि सत्त्वात्। तथा च तादृशप्रतिबध्य-प्रतिबन्धकभावे धर्म्म-धर्म्मिणोरपि भानं न स्यादिति भावः।

नन्वेतावतापि समूहालम्बनसाधारणमनुव्यवसायस्य वैशिष्ट्यविषयकत्वं सिद्धम् न तु रजतविशेष्यकरजतत्वप्रकारकत्वं तस्यैव च प्रकृते उद्देश्यत्वादित्यतस्तदप्युपपादयति, 'सम्बन्धितेति सम्बन्धितावच्छेदकरूपेण सम्बन्धिनं गृह्णदेव प्रत्यक्षं ससम्बन्धिकपदार्थं गृह्णातीत्यर्थः यथाश्रुते फलीभूतज्ञाने तद्विषयत्वासिद्धेः। 'अनुव्यवसायस्य' इदं रजतमिति ज्ञानानुव्यवसायस्य।

मिश्रास्तु 'अनुव्यवसायस्येत्यस्य, इदंविशेष्यकरजतत्वप्रकारकधीजन्यतयेति शेषः। 'रजतत्वावच्छिन्नत्वेनेति, यद्विशेष्यकयत्प्रकारकधीजन्यं यत्प्रत्यक्षं बाधकं विना तत्तद्विशेष्यक-तत्प्रकारकमिति नियमादिति भावः। एवञ्च 'सम्बन्धितेत्यादिग्रन्थो यथाश्रुत एव साधुरित्याहुः।

**अन्यथा** अनुव्यवसायस्य प्रकारीभूतधर्म्मवैशिष्ट्यानवगाहित्वे, **पुरोवर्त्तिनम्** इमम्, **रजतञ्च**, रजतत्वञ्च, रजतत्वेनेति, वैशिष्ट्यं तृतीयार्थः अन्वयश्चास्य पुरोवर्त्तिनि,

---

१. लाघवाच्चेति ख० चिह्नितमूलपुस्तकपाठः।

**एवाप्रमापि प्रमेत्येव[1] गृह्यते । अनुव्यवसायस्य भ्रमविषयवैशिष्ट्यविषयत्वात्।**

**न च न प्रामामाण्यं प्रथमतो ज्ञातमिति न तदारोपः स्यादिति वाच्यम्, प्रामाण्यस्य ज्ञानग्राहकसामग्रीग्राह्यत्वेन ज्ञानवित्तिवेद्यत्वात् । अभावप्रतीतौ प्रतियोगित्वाभावत्वयोरिव । तदभाववति तत्प्रकारक-ज्ञानत्वप्रामाण्यं परतो ज्ञायते, तदभाववत्त्वस्य भ्रमानुल्लिखितत्वेनानु-व्यवसायाविषयत्वात् ।**

माथुरी

तथा च रजतत्वविशिष्टं पुरोवर्त्तिनमित्यर्थः। 'अत एवेति उक्तनियमद्वयादेवेत्यर्थः। 'प्रमेत्येवेति, एवशब्दस्तुल्यार्थे[2] प्रमेत्याकारकज्ञानजन्यो योऽनुव्यवसायस्तद्विषय इत्यर्थः। तुल्यतामेवोपपादयति, 'अनुव्यवसायस्येति, तथा च तज्ज्ञाने यथा विषयीभूतव्यवसाय-विशेष्ये तत्प्रकारीभूतधर्मवैशिष्ट्यं भासते तथा भ्रमानुव्यवसायेऽपि भ्रमविशेष्ये तत्प्रकारीभूतवैशिष्ट्यं भासत इति तुल्यतेति भावः ।

प्राञ्चस्तु **प्रमेत्येव गृह्यते** प्रमात्वप्रकारेण गृह्यते इत्यर्थः इत्याहुः । तदसत् अप्रमानुव्यवसायेन प्रमात्वग्रहस्याशक्यत्वात् प्रमात्वघटकस्य तद्वतोऽनुपस्थितेः 'अनु-व्यवसायस्येत्यग्रिमग्रन्थासङ्गतेश्च ।

'प्रथमतो ज्ञातमिति तद्घटकयोः प्रकारित्व-विशेष्यकत्वयोर्व्यवसाया-विशेष्यत्वा-दिति भावः । 'न तदारोप इति न ताद्विशिष्टबुद्धिरित्यर्थः, विशेषणज्ञानस्य विशिष्टानु-भवहेतुत्वादिति भावः । 'ज्ञानग्राहकसामग्रीग्राह्यत्वेनेति, ज्ञानसाक्षात्कारमात्रस्यैव ग्राह्यत्वेनेत्यर्थः । अनुपस्थितस्यापीति शेषः । 'अभावप्रतीताविति यथा घटप्रतियो-कोऽभाव इत्यादिप्रत्यक्षे प्रतियोगित्वमभावत्वञ्चानुपस्थितमपि प्रकारः तथेहापि प्रामाण्यमित्यर्थः । अभावत्वञ्च भावव्यावृत्ताखण्डो धर्मविशेषः तथा प्रतियोगित्वमपि, न तु द्रव्यादिषट्कान्योऽन्याभाववत्त्वमभावत्वम् अभावाभावत्वञ्च प्रतियोगित्वं[3] तस्य द्रव्यादिघटितत्वेनानुपस्थितस्य प्रकारत्वासम्भवात् । एतच्च सम्प्रदायमतमाश्रित्य उक्तम् । वस्तुतस्तु विशेष्यितासम्बन्धेन तद्धर्मवदवच्छिन्नं प्रकारितासम्बन्धेन तद्धर्म-वत्त्वमपि प्रामाण्यम्, विशेष्यिता-प्रकारितयोरिव विशेष्यिता-प्रकारितासम्बन्धेन विशे-ष्यविशेषणयोरपि परस्परमवच्छेद्यावच्छेदकभावाभ्युपगमात्, घटविशेष्यकत्वावच्छेदेन घटत्वप्रकारकमिति प्रतीतिवदिदं ज्ञानं घटांशे प्रकारितासम्बन्धेन घटत्ववदित्यादिः प्रतीतेरपि सत्त्वात्तथा च तादृशप्रामाण्यमेव परनये अनुव्यवसायग्राह्यं तस्य प्रकारित्व-

---

१. प्रमात्वप्रकारेणेति यावत् ।

२. इवार्थे इति ख० ।

३. अभावाभावत्वस्य प्रतियोगित्वरूपत्वम् आचार्यसम्मतम्, अभावविरहात्मत्वं वस्तुनः प्रतियोगितेति लक्षणस्य तैरुक्तत्वात् ।

**नचैवमनुव्यवसायस्य यावद्व्यवसायविषयविषयकत्वे भ्रान्त-भ्रान्तिज्ञसङ्कर इति वाच्यम् । बाधानवतारदशायां तस्येष्टत्वात् । तदवतारे तस्यैव प्रतिबन्धकत्वात् उपनायकभ्रान्तेरभावाच्च । अत एवान्यभ्रान्तिज्ञस्य न भ्रमः ।**

माथुरी

विशेष्यित्वयोः प्रागनुपस्थितावपि विशिष्टबुद्धिसम्भवात् प्रकारित्व-विशेष्यित्वयोः संसर्गमर्यादयैव तत्र घटकत्वात् विशेष्य-विशेणयोर्व्यवसायत एवोपस्थितेरित्येव तत्त्वम् ।

नन्वेवं तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यस्याप्यनुव्यवसायग्राह्यत्वापत्तिरित्यत आह, तदभाववतीति, परतो ज्ञायते, न तु भ्रमानुव्यवसायेन गृह्यते, अनुव्यवसायाविषयत्वात् भ्रमानुव्यवसायविषयत्वासम्भवात् । यावद्व्यवसायविषयविषयकत्व इति व्यवसायो यद्यद्विशेष्यक-यद्यत्प्रकारकस्तत्तद्विशेष्यकस्तत्तत्प्रकारकत्व इत्यर्थः । भ्रान्तभ्रान्तिज्ञेति भ्रान्तं भ्रमः भ्रान्तिज्ञं भ्रमविषयकप्रत्यक्षम्, तयोः, सङ्करः सङ्कर-प्रसङ्गः, प्रवर्त्तकरूपेणाभेदप्रसङ्ग इति यावत्, तथा च भ्रमवत् तदनुव्यवसायस्यापि पुरोवर्त्तिनि रजतत्वप्रकारकतया प्रवर्त्तकत्वप्रसङ्ग इत्यर्थः । यद्वा सङ्करः सङ्करप्रसङ्गः, भ्रमत्वरूपेणाभेदप्रसङ्ग इति यावत् । तथा च भ्रमवत् तदनुव्यवसायस्यापि भ्रमत्व-प्रसङ्ग इत्यर्थः । तस्य प्रवर्त्तकत्वस्य भ्रमत्वस्य वा । तदवतार इति अलौकिकप्रत्यक्षोत्तरं लौकिकप्रत्यक्षात्मकबाधावतारे लौकिकप्रत्यक्षाद्यात्मकभ्रमपूर्वमनुमित्यात्मकबाधावतारे वेत्यर्थः । प्रतिबन्धकत्वात् प्रतिबन्धकतया, उपनायकभ्रान्तेरभावात् भ्रान्तेरुपनायकत्वासम्भवात् भ्रान्तेरनुव्यवसाये पुरोवर्त्तिनि रजतत्वादिवैशिष्ट्याभासकत्वासम्भवादिति यावत् । न च द्वितीयव्याख्यायाम्[1] इदमसङ्गतं बाधावतारेऽपि निर्द्धर्मिताच्छेदकभ्रमोत्पत्तौ बाधकाभावादिति वाच्यम् । संशयवदनुभवात्मकभ्रमस्यापि[2] सद्धर्मितावच्छेदकत्वनियमेनानुस्यवसायस्यापि निर्द्धर्मितावच्छेदकत्वासम्भवादिति निगर्वात्[3] । अत एव पुरोवर्तिनि रजतत्वादिवैशिष्ट्यभासकाभावादेव, 'अन्यभ्रान्तिज्ञस्य' अनुमानादिनाऽन्यपुरुषीयभ्रान्तिज्ञस्य । तद्वत्त्वमिति प्रामाण्यघटकीभूतरजतत्वादिमत्त्वमित्यर्थः,

१. द्वितीयविवक्षायामिति ख० ।

२. किञ्चिन्निष्ठधर्मितावच्छेदकत्वाख्यविषयत्वानिरूपिता या घटत्वप्रकारतानिरूपित-विशेष्यता तया सम्बन्धेनानुभवं प्रति स्वविषयीभूतघटत्ववत्त्वसम्बन्धेन घटत्वप्रमा हेतुरतो निर्द्धर्म्मितावच्छेदकभ्रम-संशययोर्निरासः प्रमुक्ततत्ताकस्मरणादौ व्यभिचार-वारणाय कार्य्यतावच्छेदकेऽनुभवत्वनिवेश इति ।

३. समानविषयत्वेन विरोधित्वात् पुरोवर्त्तिनि रजतत्वाभावभाने निर्द्धर्म्मितावच्छेदकतयापि तत्र रजते न रजतत्वं भासते इति केचित् ।

**अथ तद्वत्त्वं न धर्म्म-धर्म्मिवैशिष्ट्यमात्रम्, किन्तु तस्य विशेषणता-विशेषः, स च व्यवसाये भासते नानुव्यवसाये मनसो बहिरस्वातन्त्र्यादिति चेत्। न। व्यवसायोपनीतत्वेन विशेषण-विशेष्ययोरिव विशेषणता-**

माथुरी

धर्म्म-धर्मिवैशिष्ट्यमात्रमिति रजतत्वादि-पुरोवर्त्तिनोः समवाय एवेत्यर्थः, समवायस्यातिप्रसक्तत्वादितिभावः। **'तस्य'** रजत्वादेः, विशेषणताविशेषः समवायसम्बन्धनिरूपिताधारताख्यव्यावृत्तातिरिक्तविशेषणताविशेषः[1] **'व्यवसाये'** अनुमित्यात्मकव्यवसाये, **'मनसो बहिरस्वातन्त्र्यात्'** मनसश्चक्षुराद्यसहकारेण वहिर्विषयप्रत्यक्षाजनकत्वात्, चक्षुराद्यजन्यमनोजन्यप्रत्यक्षे वहिर्विषयकत्वाभावादिति यावत्, समवायस्य वहिस्त्वाभावेपि तन्निरूपिताधारताया वहिस्त्वादिति भावः। चक्षुराद्यजन्यमनोजन्यप्रत्यक्षे वाह्यार्थस्य लौकिकविषयतानभ्युपगमेऽपि तदतिरिक्तविषयत्वमभ्युपेयत एवान्यथा धर्म-धर्मिविषयकत्वस्याप्यनुपपत्तेरित्यभिप्रायेण समाधत्ते, व्यवसायोपनीतत्वेनेति वैशिष्ट्ये तृतीया अन्वयश्चास्य विशेषण-विशेष्ययोरित्यत्र, व्यवसायविषयीभूतयोर्धर्मधर्मिणोरित्यर्थः। वैशिष्ट्यांशे प्रत्यासत्तेरप्रयोजकत्वादाधारत्वस्येदं रजतमितिव्यवसायाविषयत्वाच्च हेतुत्वस्य तृतीयार्थत्वासम्भवात् गुरुमते तस्य हेतुत्वासम्भवाच्च।

ननु चक्षुराद्यजन्यमनोजन्यप्रत्यक्षे मुख्यविशेष्यतातिरिक्तरूपेण पूर्वानुपस्थितस्य वहिरर्थस्य विषयित्वं नाभ्युपेयते इत्यत आह, 'विशेषणताया इति धर्म-धर्म्यतिरिक्तविशेषणताया इत्यर्थः। तथा च पूर्वानुपस्थितत्वमेव तत्र नास्तीति भावः। 'एतेनेति वक्ष्यमाणरीत्येत्यर्थः[2]।

ननु यथा शब्द-गन्धविषयप्रत्यक्षं स्वाश्रयमविषयीकृत्यापि शब्दगन्धौ विषयीकरोति तथा व्यवसायोऽपि स्वमविषयीकृत्यापि स्ववृत्तिप्रामाण्यं विषयीकरिष्यति। न च तथापि स्वाश्रयग्राहकग्राह्यत्वरूपस्य मतत्रयसाधारणस्य स्वतस्त्वस्य नोपपत्तिरिति वाच्यम्। तादृशमतत्रयसाधारणस्य स्वतस्त्वस्याभावेपि तज्ज्ञानविषयकज्ञानाजन्यज्ञानविषयत्वरूपग्राह्यत्वस्य मतत्रयसाधारणस्वतस्त्वस्य सम्भवादित्यत आह, 'शब्द-गन्धवदिति, 'तद्ग्रहेऽपीति स्वाश्रयमविषयीकृत्यापि तद्विषयीकरणेऽपीत्यर्थः। 'ज्ञानं प्रमाणमिति ज्ञानत्वावच्छिन्नविशेष्यतानिरूपितविशिष्टप्रामाण्यत्वावच्छिन्नप्रकारताशालिज्ञानमित्यर्थः, एतादृशप्रकारताया एव भवता प्रामाण्येऽभ्युपगमादत एव विप्रतिपत्तावपि

---

१. गुरुमते समवायस्यातीन्द्रियतया तद्घटिताधारत्वस्यापि तत्त्वेन तन्मतसाधारण्यार्थमाह।

२. चक्षुरादिजन्यघटादिज्ञानं स्वप्रामाण्यं गृह्णाति न तु स्वम् इति प्राचीनं गुरुमतं तत्रैव नव्यगुरुमते शङ्का।

**विशेषस्यापि तद्विषयत्वात् विशेषणताया निराकरिष्यमाणत्वाच्च ।**

**एतेनास्वप्रकाशे न स्वतः प्रामाण्यग्रहः धर्म्यग्रहे तद्धर्माग्रहात् । शब्द-गन्धवत् योग्यत्वात् तद्ग्रहेऽपि ज्ञानं प्रमाणमितिधीर्न स्यात् । स्वप्रकाशेऽपि स्वमात्रसाक्षिणः स्वधर्मग्रहेऽसामर्थ्यात् । सामर्थ्ये वा अप्रामाण्यमपि गृह्णीयात् । परप्रकाशे लिङ्गेन मनसा वा जायमानं ज्ञानं न भ्रमव्यावृत्तं**

माथुरी

यथाकथञ्चित् प्रामाण्यविषयतामादायार्थान्तरवारणाय तादृशप्रकारत्वस्य ग्राह्यत्वपदार्थे प्रवेश इति भावः । 'स्वप्रकाशेऽपीति स्वस्यापि विषयीकरणेऽपीत्यर्थः, 'स्वमात्रसाक्षिण इति ज्ञानत्वेतरस्ववृत्तिधर्माविषयकत्वस्वभाविन इत्यर्थः, 'स्वधर्मग्रह इति ज्ञानत्वेतर-स्ववृत्तिधर्मस्य विषयीकरण इत्यर्थः । एतेन स्वधर्मग्रहासामर्थ्ये ज्ञानत्वेन विना कथं ज्ञानग्रहः जातिव्यक्त्योः प्रत्यक्षतुल्यवित्तिवेद्यतानियमादिति निरस्तम् ।

**'अस्वप्रकाशे'** स्वस्य स्वाविषयकत्वे, **'न स्वतः प्रामाण्यग्रहः'** न स्वस्य स्वनिष्ठ-प्रामाण्यविषयकत्वम्, **'धर्मग्रहे'** धर्म्यविषकत्वे, **तद्धर्माग्रहात्'** तद्धर्मविषयकत्वा-सम्भवात् ।

ननु तादृशधर्मग्रहेपि सामर्थ्यं कथमन्यथा ज्ञानेच्छान्यतरवानहमित्यादि प्रत्यक्षेण तादृशधर्मस्यान्यतरत्वादेग्रह इत्यत आह, 'सामर्थ्ये वेति ।

गुरुमतं दूषयित्वा भट्ट-मिश्रमतं दूषयति, 'परप्रकाश इति **'परप्रकाशे'** परप्रकाश-मते भट्ट-मिश्रमते इति यावत् । **'जायमानं ज्ञानं'** इति जायमानं ज्ञानविषयकं ज्ञानम् इत्यर्थः । क्वचित् 'ज्ञायमानं ज्ञानमिति पाठः तत्र ज्ञानं ज्ञायमानमिति योजना, 'ज्ञायमानमिति भावसाधनं 'ज्ञानमिति कर्मपदम्, न निष्ठादिष्वित्यनेन निषेधादनभि-हितेपि कर्मणि न षष्ठी । 'लिङ्गेनेत्यादौ जन्यत्वं तृतीयार्थः, तथा च लिङ्गजन्यं मनोजन्यं वा ज्ञानविषयकं ज्ञानमिति समुदायार्थः, 'न भ्रमव्यावृत्तमिति भ्रमव्यावृत्तं यत्प्रामाण्यं तन्न गृह्णीयादित्यर्थः, भ्रमव्यावृत्तमित्यनेन तत्प्रकारकज्ञानत्वरूपप्रामाण्य-व्यवच्छेदः । ननु अनुव्यवसायादिसामग्र्येव प्रामाण्यग्रहसामग्रीति कथं न गृह्णीयादित्यत आह, 'व्यभिचारादिति अनुव्यवसायादिसामग्र्याः पुरोवर्त्तिनि रजत्वादिमत्ताग्रहं प्रत्यन्वयव्यभिचारादित्यर्थः । तत्सत्त्वेऽपि भ्रमानुव्यवसाये यत्र तदग्रहान्न हि तादृश्यपि सामग्रीति भावः । ज्ञानमितिशेषः । 'भ्रमव्यावृत्तमिति 'गृह्णीयादितिक्रियाविशेषणम्, ग्रहधातोरर्थे विषयित्वे तदर्थस्याभेदेनान्वयः, 'प्रामाण्यं' पुरोवर्त्तिविशेष्यत्वादिकम्, तथा च मनसा ज्ञाततया लिङ्गेन वा जायमानं भ्रमविषयकं ज्ञानं भ्रमावृत्तिपुरोवर्त्तिविशेष्य-कत्वादिविषयिताश्रयो न स्यात् तुल्यन्यायतया प्रमानुव्यवसायादाविव भ्रमानुव्यवसाया-दावपि तद्विषये पुरोवर्त्तिनि रजतत्वादिमत्त्वभानादित्यर्थः । व्यभिचारादिति, अन्यथा-

आलोकः

अत्र चाप्रामाण्याग्राहकत्वमप्रामाण्यग्राहकसामग्र्यसमवहितत्वम्। यथाश्रुते ज्ञानानुभवस्याप्रामाण्यस्मृत्यन्यत्वेनाप्रामाण्यग्राहकत्वस्यासम्भवादिदं ज्ञानं प्रमा न इत्यत्रापि प्रामाण्याग्रहेण बाधतादवस्थ्यात्। तत्फलन्तु यत्राप्रामाण्यज्ञाने प्रामाण्यग्रहस्तत्र तादृशग्रहस्याप्रामाण्याग्राहकत्वमप्रसिद्धमिति तद्वारणाय। तेन तत्राप्रामाण्याग्राहकत्वमर्थो लभ्यते। इदन्तु यत्र प्रामाण्यं गृह्णाति न तत्राप्रामाण्यं किन्तु तद्विषये। तस्येति षष्ठीतत्पुरुषस्तु नादरणीयः।

गुरुमते ज्ञाने व्यधिकरणप्रकारकत्वाभावेन षष्ठ्यर्थस्य बाधितत्वात्। न च तन्मतेऽन्यथाख्यात्यभावेन सप्तमीसमासादरेऽपि यत्राप्रामाण्यासंसर्गाग्रहस्तत्राप्यप्रामाण्याग्रहेण तद्दोषतादवस्थ्यम्।

दर्पणः

सामग्रीजन्या ये स्वतोग्रहास्तद्विषयत्वं साध्यम्। तेन क्वचिच्छब्दादेः क्वचिदनुव्यवसायादेर्ग्राहकत्वनिर्देशो न विरुध्यत इति ध्येयम्।

ननु यदाऽप्रामाण्यारोपस्तदा विरोधाभावात् अप्रामाण्यारोपे प्रामाण्यं गृह्यत एवेति बाधाभावेन व्यर्थमप्रामाण्याग्राहकेति विशेषणमित्यत आह—इदं चेति।

सर्वसाधारणं प्राभाकरमतसाधारणम्।

ननु अप्रामाण्याग्राहकेति विशेषणे दत्तेऽपि बाध एव। तथा हि—इदं रजतमिति प्रमानन्तरं नेदं रजतमिति बाधभ्रमे इदं ज्ञानं न प्रमेति यज्ज्ञानमुत्पद्यते तच्च प्राभाकरमते नान्यथाख्यातिरूपम्, तैरन्यथाख्यात्यनङ्गीकारात्। यदि शुक्ताविदं रजतमितिवत् स्मृत्यनुभवात्मकं ज्ञानद्वयमेवेदं ज्ञानमिति ज्ञानस्य मानसोऽनुभवोऽप्रमेत्यप्रामाण्यस्मरणम्, तथा चेदं ज्ञानमिति ज्ञानेन मानसानुभवेनाप्रामाण्याग्राहिणा प्रामाण्यं न गृह्यत इति बाधतादवस्थ्यमत आह—अत्र चेति। अप्रामाण्यग्राहकसामग्र्यसमवधानमप्रामाण्याग्राहकशब्देन विवक्षितम्। मानसे तु ज्ञानानुभवेऽप्रामाण्यस्मृतिरूपाप्रामाण्यग्रहजनकसामग्रीसमवधानान्नाप्रामाण्याग्राहकत्वमस्तीति न तेन बाधो गुरुमत इति।

तद्दोषतादवस्थ्यमिति। इदं ज्ञानमप्रामाण्यवदित्यनेन प्राभाकरमतेऽप्रामाण्यस्यासंसर्गाग्रहादप्रामाण्यं न गृह्यते प्रामाण्यं च न गृह्यते इति बाधतादवस्थ्यमित्यर्थः। अत्र यद्यपि न बाधः अप्रामाण्यग्राहकस्मृत्यसमवहितस्य विवक्षितत्वात्, तथापि विषयसप्तम्या ज्ञाने योऽप्रामाण्यग्रहः तज्जनकसामग्र्यसमवधानमित्यर्थो लभ्यते। स चानुपपन्नः। ज्ञाने व्यधिकरणप्रकारत्वाभावात् प्राभाकरमते। तथा च विशिष्टा सामग्री वर्त्तते-प्रामाण्यं च न गृह्यत इति बाधो युक्त एवेत्यर्थः।

आलोकः

तत्रेति हि सप्तम्यर्थो न विषयविषयिभावः किन्त्वसंसर्गाग्रहः। तथा च तेनागृहीतासंसर्गाप्रामाण्याग्राहकत्वं पर्यवस्यतीति। न चाग्रेतनसंशयानुपपत्तिदोषानुपपत्तिः प्रागप्रामाण्यास्मरणे धर्मिज्ञाने सति संशयानुपपत्तेर्वक्ष्यमाणत्वात्।

वस्तुतस्तु विषयीभूताप्रामाण्यग्राहकत्वेनाप्रसिद्धिर्मा भूदिति तदुपादानं न घटते प्रामाण्यस्येवाप्रामाण्यस्यापि प्रतिज्ञानमन्यान्यत्वेनाप्रामाण्यगोचरज्ञानप्रामाण्यस्य पक्षीकृतस्याप्रामाण्यग्राहकसामग्र्यसमवहितसामग्रीग्राह्यत्वस्य सत्त्वात्। अप्रामाण्यपदस्य प्रकृतप्रामाण्यविरोधिमात्रपरत्वात्। न चाप्रामाण्यवत्यप्रामाण्यप्रकारकत्वस्य ग्राह्यप्रामाण्यस्य विषयीभूतमप्रामाण्यं विरोधि। अन्यथा यत्र भावस्वरूपमप्रामाण्यन्नारोपितमपि तु प्रामाण्याभाव एव। यत्र वा प्रकार एव व्यधिकरणत्वमारोपितं तत्रापि प्रामाण्याग्रहेण बाधतादवस्थ्यात्। तस्माद्यत्र घटवह्नी इति समूहालम्बनस्यैकांशेऽप्रामाण्यारोपोऽपरांशे प्रामाण्यग्राहकस्याप्रामाण्याग्राहकत्वमसिद्धम्। तद्वारणाय तदिति। तथा च तत्र तदंशेऽप्रामाण्यग्राहकसामग्र्यसमवधानमर्थो लभ्यते।

दर्पणः

तत्रेति[1] हीति। इदं च प्रतियोग्यन्वयमादाय ग्राहकत्वाभावेन तत्रेत्यस्यान्वये दोषाभावादिति। अग्रेतनेति। संशयस्थले हि धर्मिज्ञानमप्रामाण्यस्मृत्यात्मकेनाप्रामाण्यग्राहकेण समवहितमेवेति तस्य प्रामाण्यानिश्चायकत्वात् संशयः सम्भवत्येवेति भावः। प्रथमं धर्मिज्ञानं तदनन्तरमप्रामाण्यस्मरणं ततश्च संशय इति क्रमेण संशयोत्पत्तौ प्राथमिकधर्मिज्ञानस्याप्रामाण्यस्मृत्यसमवहितत्वेन प्रामाण्यनिश्चयस्य जातत्वान्न संशयः स्यादित्याह—प्रागिति। तत्प्रामाण्यविरोधीति। तद्रूपस्य प्रामाण्यस्य विरोधीत्यर्थः। तथा चाप्रामाण्यपदं विरोधीमात्रपरमन्यथाऽनन्वयादिति ध्येयम्। न तु तस्य तत्प्रामाण्यं तद्विरोधीत्यर्थः। शब्दार्थयोरसाधुत्वापत्तेः। नञा व्यवधानात्। अयं वह्निरिति ज्ञानस्य इदंत्ववतीदंत्वप्रकारकत्वरूपप्रामाण्यग्रहकाले तस्य वह्नित्ववति वह्नित्वप्रकारकत्वरूपं यत्प्रामाण्यं तद्विरोधिनो वह्नित्वाभाववतीत्यादेरप्रामाण्यस्य ग्रहणाच्च घटवह्नी इति समूहालम्बनस्येत्याद्युक्तयुक्त्यनुरोधेन चांशभेदविवक्षा इहापि कार्येति स्मर्त्तव्यम्। वस्तुतो नांशभेदविवक्षाप्रयोजनं घटवह्नी इति समूहालम्बने अंशान्तरावच्छिन्नस्य वह्नित्वाभाववति वह्नित्वप्रकारकत्वस्यांशान्तरावच्छिन्नं वह्नित्ववति वह्नित्वप्रकारकत्वं प्रति विरोधाभावादिति।

---

१. तत्रेत्यस्याभावविशेषणत्वे तत्राप्रामाण्यग्राहकस्मृतिसमवधानाभाववती या ज्ञानग्राहिका सामग्री तद्ग्राह्यत्वं तस्य चेदमप्रामाण्यवदित्यत्र नास्त्येव कुतश्चित्समवधानम्। प्रतियोगिप्रसिद्धिरिच्छायामिति भावः।

आलोकः

**वयन्तु षष्ठीसमास एव श्रेयान्। तेनाप्रामाण्यपदस्य प्रामाण्यविरोधिवचनतया तस्याप्रामाण्यं तत्प्रामाण्यविरोधीत्यर्थं इत्युन्नयाम इति संक्षेपः।**

**तज्ज्ञानविषयकेति तज्ज्ञानविषयकज्ञानव्यतिरेकाप्रयुक्तव्यतिरेकप्रतियोगिज्ञान-प्रकारो न वेत्यर्थः। तेन तद्विषयकेश्वरज्ञानजन्यत्वात्तदनुमितितदनुव्यवसायादीनां तन्मतविधिकोटेरस्मन्मते बाधः। तादृशेश्वरज्ञानज्ञेयत्वेनाभिधेयत्वसामान्यप्रत्यासत्तिज-प्रत्यक्षविषयत्वेन च सिद्धसाधनञ्चेति दूषणद्वयमलग्नकम्भवति। ईश्वरज्ञानस्य प्राग-**

दर्पणः

**तज्ज्ञानविषयकेति**—अत्र तज्ज्ञानपदेन पक्षीकृतप्रामाण्याश्रयीभूतं ज्ञानम्, व्यति-रेकपदेन प्रागभावः। अप्रयुक्तपदेन तदन्वयाद्यनुविधाय्युत्तरसमयसम्बन्धिभिन्नः। द्वितीयव्यतिरेकपदेनापि प्रागभावः। प्रकारपदेन भासमानधर्मत्वाख्यसम्बन्धक उच्यते। **तेनेत्यादि**दूषणमलग्नकं भवतीति सम्बन्धः। दूषणमाह—**तद्विषयकेत्यादिना**। अत्र प्रथमम् ईश्वरज्ञानमादाय विधिकोटौ सिद्धसाधनं योज्यम्। न च **मीमांसकै**रीश्वरानङ्गी-कारान्न तत्तत्सिद्धसाधनमिति वाच्यम्, यत्रात्मन्यनुमितिस्तत्रत्यसिद्धेः प्रतिबन्धकत्वात्। अनुमातरि च **नैयायिके** सिद्धिरस्त्येव। तद्वारणायाजन्यपदानन्तरं जन्यपददानेऽप्रसिद्धिः। तज्ज्ञानविषयकेण ईश्वरज्ञानेन जनितस्यान्यज्ञानस्याप्रसिद्धेः। बाधपदेन च प्रसिद्धिबाध एव विवक्षित इति ध्येयम्। अप्रसिद्धिमुद्धरति—**ईश्वरज्ञानस्येति**। सिद्धसाधनमुद्धरति—**तदप्रयुक्तेति**।

माथुरी

स्यापि साक्षात्कारत्वनिरूपितविषयत्वांशे भ्रमत्वादिति मणिकृतो निगर्वः। ननु शङ्खो न पीत इत्यादिलौकिकचाक्षुषसत्त्वेऽपि पीतः शङ्ख इत्यादिचाक्षुषभ्रमोदयाद्दोषविशेषा-जन्यत्वमवश्यम् प्रतिबध्यतावच्छेदके निवेशनीयमित्यत आह, 'तच्चेति साक्षात्कारि-विपरीतदर्शनञ्चेत्यर्थः, शङ्खः पीत इत्यादिभ्रमस्थल इति शेषः। ननु यथा सत्यपीन्द्रिय-सन्निकर्षादौ दोषान्न पीतत्वाभावग्रहस्तथा सत्यपि व्यवसायादौ दोषान्न प्रामाण्य-निश्चयः, किञ्च शङ्खो न पीत इत्याद्यपेक्षाबुध्यात्मकलौकिकचाक्षुषनिश्चयसत्त्वेऽपि तदग्रिमक्षणोत्पन्नात्पित्ताद्यात्मकदोषात् पीतः शङ्ख इत्यादिभ्रमोदयात् लौकिकप्रत्यक्षं प्रति विपरीतनिश्चयस्य प्रतिबध्य-प्रतिबन्धकभावे दोषविशेषाजन्यत्वमवश्यम् प्रति-बध्यतावच्छेदके प्रवेशनीयमित्यत आह, 'न चेति' न वेत्यर्थः, 'जात्यैवेति अभेदे तृतीया, 'दोषः' दोषत्वरूपो धर्म्मः, न दोषत्वमनुगतैकजातिरस्तीति समुदितार्थः। तथा च प्रामाण्यसंशयस्थलीयसकलदोषसाधारणस्य दोषत्वस्यैकस्यानुगतस्याभावात् तत्तत्क्षण-सम्बन्धानामेव प्रातिस्विकरूपेण प्रतिबन्धकत्वं तदजन्यत्वस्य प्रतिबध्यतावच्छेदकत्वं वा वक्तव्यम्, एवञ्च तदपेक्ष्यानुव्यवसायादेः प्रामाण्याग्राहकत्वकल्पनैवोचिता लाघवादिति भावः, इति ग्रन्थं योजयन्ति।

आलोकः

भावाप्रतियोगित्वेन कार्याभावप्रयोजकाभावाप्रतियोगित्वात्तदप्रयुक्तव्यतिरेकाप्रतियोगित्वाच्च। न च समानाधिकरणपदजन्यपदाद्युपादानमेव तदर्थं क्रियतामिति वाच्यम्, परमते व्यर्थविशेषणत्वात्। यथा च प्रयुक्तत्वं तदन्वयाद्यनुविधाय्युत्तरसमयसम्बधित्वरूपमजन्यस्यापि प्रागभावस्य तथा वक्ष्यते। न च प्रकारत्वविवक्षयाऽभिधेयत्वसामान्यप्रत्यासत्तिनिबन्धनसिद्धसाधनवारणेऽपि प्रमेतिसामान्यलक्षणाजन्यज्ञानविषयत्वेन सिद्धसाधनमिति वाच्यम्। प्रमात्वं हि नाज्ञातमासत्तिः संशयानुपपत्तेः, किन्तु ज्ञातम्। तज्ज्ञानञ्च प्रमात्वाश्रयज्ञानम्विनाऽसम्भवि, तस्य क्वचित् पक्षत्वात्। क्वचित् समान्यप्रत्यासत्तिक्रोडीकृतत्वात्। न च प्रमात्वाश्रयज्ञाने अवश्यापेक्षितेऽपि न तज्ज्ञानं प्रमात्वसामान्यजज्ञाने हेतुरितिवाच्यम्, इतोऽपि जन्यपदस्य तदन्वयाद्यनुविधायिमात्रपरतया व्याख्यातत्वात् तच्च प्रयोजकमात्रपरं न तु कारणमात्रपरम्। न

दर्पणः

**समानाधिकरणेति।** तज्ज्ञानविषयकसमानाधिकरणज्ञानाजन्यसामान्यप्रत्यासत्त्यजन्यसमानाधिकरणज्ञानग्राह्यत्वं तज्ज्ञानविषयकजन्यज्ञानाजन्यसामान्यप्रत्यासत्त्यजन्यजन्यज्ञानग्राह्यत्वं विधिकोटयर्थौ विवक्ष्यतामित्यर्थः।

**व्यर्थेति।** यद्यपि सिद्धसाधनवारकत्वेन सार्थकत्वं भवत्येव, व्याप्तिग्रहौपयिकविशेषणस्यैव सार्थक्यनियमस्य तैरनङ्गीकारात्, तथापि सामान्येत्यादिविशेषणस्याप्रसिद्ध्या वैयर्थ्यमिति।

ननु विवक्षिते तव साध्येऽप्यनुमित्या सिद्धसाधनम्। तथा हि—तज्ज्ञानविषयकं यज्ज्ञानं पक्षज्ञानं तेन यद्यपि अनुमित्यादिर्जन्यते तथापि तज्जनकीभूतज्ञानव्यतिरेकाप्रयुक्तव्यतिरेकप्रयोज्यं च भवति। प्रयुक्तत्वं जन्यत्वम्। न चानुमित्यादेर्व्यतिरेकः प्रागभावलक्षणः ज्ञानविषयज्ञानव्यतिरेकजन्यः प्रागभावस्याजन्यत्वादित्यत आह— **यथा चेति।**

**प्रमेतीति।** घटत्ववति घटत्वप्रकारकत्वरूपसामान्यप्रत्यासत्तिजन्यज्ञानमादाय सिद्धसाधनमित्यर्थः। **संशयानुपपत्तेरिति।** सामान्यप्रत्यासत्तेः स्वजन्यज्ञाने प्रकारत्वनियमादज्ञातस्य सामान्यस्य प्रत्यासत्तित्वेऽज्ञातस्य प्रकारत्वमेवेष्टव्यम्। तथा च धर्मिणि गृह्यमाणे पूर्वाज्ञाता अपि धर्माः प्रकारीभूय भासेरन्निति तत्कोटिकसंशयो न स्यादित्यर्थः। इदं चापाततः। इदंत्वाद्यवच्छेदेन प्रकारीभूतो हि धर्मः संशयविरोधी। न च सामान्यप्रत्यासत्तिजज्ञाने सामान्यं तथा प्रकारः। तस्माद् विशेषणज्ञानकारणताग्राहकयुक्त्यैव नाज्ञातस्य सामान्यस्य प्रत्यासत्तित्वम्। तस्याग्रिमज्ञाने विशेषणत्व-

आलोकः

च यत्पक्षकानुमिति-गृहीतं प्रमात्वं प्रत्यासत्तिस्तत्रैवं सिद्धसाधनपरिहारेऽपि प्रामाण्यान्तरे तत् स्यात्। प्रामाण्यमात्रस्य सामान्यजन्यज्ञानगोचरत्वात् न हि सकलतदाश्रयज्ञानाभावप्रयुक्तः सामान्यज्ञानाभाव इति साम्प्रतम्। ग्राह्यप्रामाण्याश्रयविषयकज्ञानसामान्यजन्यत्वाभावस्य विवक्षितार्थस्य यत्किञ्चित् ग्राह्यप्रामाण्याऽऽश्रयविषयकज्ञानजन्यत्वेनैव बाधात्। अत एव योगिज्ञानेनाऽपि न सिद्धसाधनम्। तज्ज्ञानस्याऽतीताऽनागतसकलज्ञानाऽऽदिप्रामाण्याऽऽदिगोचरस्य स्वग्राह्यप्रामाण्याऽऽश्रयीभूते ज्ञानगोचरनिदिध्यासनाऽऽदिजन्यत्वात्। ज्ञान-प्रत्यासत्तिस्थलेऽपि विषयीभूतप्रामाण्यविशिष्टधीजन्यत्वादनुव्यवसायस्य तदजन्य-ज्ञानग्राह्यताशङ्कैव नाऽस्तीति किमनुपपन्नम्। अत्र च घटज्ञानविषयकज्ञानजन्य-

दर्पणः

नियमादिति तत्त्वम्। फलीभूतज्ञाने प्रकारस्य सामान्यस्याज्ञातस्य जनकत्वमिति संशयोप्यनुपपन्न इत्यर्थं इति **केचित्**।

**तज्ज्ञानं चेति**। न चेच्छाया गृहीतं प्रमात्वं यत्र प्रत्यासत्तिस्तत्र सिद्धसाधनोद्धारः कथमिति वाच्यम्, तज्ज्ञानपदेन प्रमात्वाश्रयमात्रस्याभिप्रेतत्वात्।

**क्वचित्सामान्येति**। प्रमापदेन यत्र प्रमात्वं सत्सामान्यमुपस्थाप्यते तत्र सामान्य-प्रत्यासत्त्या प्रमात्वेन धर्मिणः क्रोडीकृतत्वात् स्वज्ञान एव विषयतां प्रापितत्वादित्यर्थः।

**न च यत्पक्षकेति**। न च साम्प्रतमित्यन्वयः। यस्यां घटज्ञानव्यक्तौ घटत्ववति घटत्वप्रकारकत्वमनुमितं तद्रूपं तत्तज्ज्ञानं तद्विषयकज्ञानाप्रयुक्तत्वं सामान्यप्रत्यासत्ति-जन्यबोधस्यास्त्येवेति सिद्धसाधनमिति न चेत्यर्थः।

**तत्रेति**। तस्मिन् सतीत्यर्थः। तथा च तत्प्रयुक्तं यत् सिद्धसाधनं तत्परिहारेऽ-पीत्यर्थः।

**प्रामाण्यान्तर** इति। मध्यमपदलोपिसमासेन प्रमाण्याऽऽश्रयान्तर इत्यर्थः। तथा च प्रामाण्याऽऽश्रयीभूतं यद्घटज्ञानान्तरं तत्प्रयुक्तं सिद्धसाधनं स्यादित्यर्थः।

**प्रामाण्यमात्रस्य** ज्ञाताऽज्ञातसाधारणस्य। तज्ज्ञानविषयकज्ञानाजन्येत्यत्र सा-मान्यभाव-गर्भतामभिप्रेत्याह—ग्राह्येति। **अत एव योगीति**। अत्र यद्यपि योगिप्रत्यक्षं तत्तद्विषयध्यानजन्यमित्यङ्गीकारे[1] योगजधर्मः प्रत्यासत्तिर्न स्यात्। ज्ञानस्यैवाऽऽसत्तित्व-सम्भवात्। तस्मादात्मध्यानजन्यः संस्कारो धर्मो वा प्रत्यासत्तिर्विश्वगोचरं योगिनां प्रत्यक्षं जनयतीति स्वीकार्यम्। ततश्चाऽसङ्गतमेतत्, तथापि व्यवहितं विप्रकृष्टं च योग्यं योगी गृह्णाति, न त्वयोग्यमपि।

---

१. अनङ्गीकारे सिद्धसाधनं स्यादेव।

आलोकः

पटज्ञानाऽग्राह्यतया प्रामाण्यस्य यत्किञ्चित्तादृशज्ञानज्ञानग्राह्यत्वं साध्यम् । तथा च प्रभावानयं समर्थप्रवृत्तिमत्त्वात् इत्यादिनैव सिद्धसाधनम् । तन्मते सामान्यप्रत्यासत्त्यभावेन ग्राह्यप्रमाव्यक्तेरनुमितिजनकज्ञानाऽगोचरत्वादिति वदन्ति । तत्र प्रतीकारस्तु तत्पक्षबहिर्भाव एवेत्युक्तप्रायम् । न हि सर्वप्रामाण्यानामेवम्बिधाऽनुमितिविषयतानियमो येन पक्ष एव न लभ्येत । एवमन्यत्राऽपि यत्र सिद्धसाधनमाभाति तत्पक्षबहिर्भूतमेवेत्यवधेयम् । पक्षसंकोचस्य सर्वं ज्ञानं गुण इति शाब्दज्ञानाऽनुव्यवसायस्य तज्ज्ञानविषयकज्ञानजन्यत्वनियमेनाऽवश्यवाच्यत्वात् । न तु तद्भिन्नमेव तज्ज्ञानविषयकत्वेन विवक्षणीयम् । स्वप्रकाशनये सर्वत्र स्वप्रकाशाऽऽत्मकपक्षज्ञानजन्यत्वात् । प्रामाण्याऽनुमितेस्तद्भिन्नतज्ज्ञानविषयकज्ञानाऽजन्यत्वात्तयैव सिद्धसाधनताऽऽपत्तेः ।

वस्तुतस्तु उद्देश्याऽसिद्धया न सिद्धसाधनमित्यनुपदमेवाऽऽकर इत्यंशतस्तथात्वेऽपि सर्वत्रैवं प्रकाराभावान्न तदिति तत्त्वम् ।

अत्र प्रथमज्ञानपदं तत्पदस्य केवलस्य प्रामाण्यप्रत्यवमर्शकतया प्रामाण्यविषयकज्ञानाऽजन्यज्ञानग्राह्यत्वम्, तन्मते ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वादित्य-

दर्पणः

"यत्राऽप्यतिशयो दृष्टः स स्वार्थाऽनतिलङ्घनात् ।
दूरसूक्ष्माऽऽदिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता" ॥

इति मतेन प्रामाण्यस्याऽयोग्यतया योगजप्रत्यक्षाऽऽविषयत्वेन सिद्धसाधनपरिहारे उपनीतभानाऽऽत्मकं योगिप्रत्यक्षमादाय ग्रन्थोऽयं योज्य इति । यद्वा ज्ञातस्यैव प्रकारत्वाऽनुरोधेन योगिनोऽपि तज्ज्ञानविषयकज्ञानाऽपेक्षा, प्रकारत्वाऽभावे तु साध्याऽसत्त्वादेव न सिद्धसाधनमिति भावः ।

ज्ञानेति । उपनीतभानाऽऽत्मकमित्यादिकल्पेनोक्तज्ञानेत्यर्थः । अतो न पौनरुक्त्यम् । अनुव्यवसायस्येति । सुरभिचन्दनमितिवत्प्रमात्वविशिष्टा प्रमेति ज्ञानप्रत्यासत्तिजन्यप्रामाण्यज्ञानस्येत्यर्थः । इत्यादिनेति । इदं ज्ञानं प्रमेति प्रमात्वमप्रमायां पूर्वाऽज्ञातमेव गृह्णन्ती भट्टमतेऽनुमितिरादिपदार्थः । सिद्धसाधनम् । अर्थान्तरम् । नैयायिकैरीदृशाऽनुमित्यनङ्गीकारादिति । एवमन्यत्रेति । प्रमावानयमिति शाब्दबोधाऽऽदौ तत्राऽपि पदार्थज्ञानस्य तन्मतेऽहेतुत्वादिति । सिद्धसाधनताऽऽपत्तेरिति । अर्थान्तराऽऽपत्तेरित्यर्थः । अत्र दूषणोद्धारे दूषणमिदम् । न च पक्षधर्मताज्ञानं न स्वप्रकाशाऽऽत्मकमिति तदर्थं तद्भिन्नज्ञानाऽपेक्षणं ज्ञानत्वरूपधर्मवत्तायाः स्वप्रकाशेन भानेऽपि ज्ञानत्वत्वस्याऽग्रहणात् व्याप्यताऽवच्छेदकप्रकारकज्ञानस्य चाऽपेक्षितत्वादिति वाच्यम्, विषयताऽऽख्येन सम्बन्धेन घट एव यत्र प्रमात्वाऽनुमितौ लिङ्गं तत्र स्वप्रकाशेनैव सकलनिर्वाहः सम्भवतीति सामान्यप्रत्यासत्त्यनङ्गीकर्तॄणां साध्यप्रसिद्धेरनपेक्षितत्वादिति भावः ।

आलोकः

नुमित्याऽपि ग्रहे सम्भवति। तथा च प्रामाण्यपरतस्त्वे न विवादः किन्तु सामान्य-प्रत्यासत्तौ। तथा च सिद्धसाधनवारणार्थम्।

द्वितीयज्ञानपदं तु अप्रसिद्धिवारणाय। व्यापाराऽनुबन्धितज्ज्ञानविषयताकैरा-त्माऽऽदिभिस्तस्याऽपि जननात्। ज्ञानपदसन्निधौ तु प्रतिपत्त्यनुबन्धिविषयता लभ्यते।

तृतीयज्ञानपदं तु मन्मते प्रकारत्वस्य विशेषणत्वपर्यवसायितया व्यापाराऽ-नुबन्धिविषयताकैरेव तैः। परमते ज्ञानस्याऽपीच्छासमानविषयत्वाऽभावेन तया सिद्धसाधनवारणाय। वस्तुतस्तु उद्देश्यप्रतीत्या (प्रतीत्यसिद्धया) न सिद्धसाधनं व्यक्तमनुपदमेवाऽऽकरे[1] इति, अंशे च तथात्वेऽपि सर्वत्रैवं प्रकाराऽभावान्न तदिति तत्त्वम्। विधिप्रसिद्धिः प्रागिव। व्यतिरेक[2]-प्रसिद्धिस्तु तत्पदस्य ग्राह्यत्वाऽभिमताऽऽश्रय-ज्ञानपरत्वेऽप्रामाण्याऽऽश्रयविषयकज्ञानजन्याऽनुमितिमात्रग्राह्यतयाऽप्रामाण्ये, प्रामा-ण्याऽऽश्रयमात्रपरत्वे तद्वतीत्यादिनियताऽतीन्द्रियविशेष्याऽवृत्त्यप्रकारकत्वाऽऽदौ।

दर्पणः

सिद्धेति अर्थान्तरवारणाऽर्थमित्यर्थः। ज्ञानपदसमभिव्याहारात्तु तदाश्रये लब्धे तद्विषयं ज्ञानं पक्षज्ञानत्वेऽनपेक्षितमेवेति भावः।

आत्माऽऽदिभिरिति। अतद्गुणसंविज्ञानो बहुव्रीहिः। तेन शरीराऽऽदिभिरित्यर्थः। आत्माऽऽदेः प्रागभावाऽप्रतियोगित्वादिति।

ननु व्यापाराऽनुबन्धिविषयताकेन व्यवसायाऽऽदिना अनुव्यवसायाऽऽदेर्जननात् ज्ञानपदे दत्तेऽपि अप्रसिद्धितादवस्थ्यमित्यत आह—ज्ञानपदेति। तैः शरीरादिभिरित्यर्थः। परेति। प्रमान्तरगोचरेण ज्ञानेन जनितायां प्रमान्तरगोचरेच्छायां तत्प्रकारत्वेन प्रामाण्ये यदर्थान्तरं तद्वारणार्थं चेत्यर्थः।

अंशतः सिद्धसाधनवदंशतोऽर्थान्तरस्याऽप्यदोषत्वमभिप्रेत्याऽऽह—वस्तुत इति। प्रमापदप्रवृत्तिनिमित्तत्वाऽऽदिनाऽनुगतेन रूपेण घटत्ववति घटत्वप्रकारकत्वाऽऽदीनां पक्ष-त्वात्तदंशे इच्छामादाय यदर्थान्तरम्, यच्च पूर्वं प्रमावानित्यनुमितिमादायाऽर्थान्तरमुक्तं तन्न भवतीत्यर्थः। न चैवं चरमज्ञानपदवैयर्थ्यं स्यादिति वाच्यम्, प्रथमव्यावर्त्त्येनैव सार्थकत्वात्। इदं च नवीनमताऽनुसारेण, प्राचीन-मते अंशतः सिद्धसाधनांऽशतोऽर्थान्तर-वारकयोः सार्थकत्वात्। अत एव प्रथमज्ञानपदस्य अंशतोऽर्थान्तरवारकस्य सार्थकतेति ध्येयम्।

प्रागवेति। तज्ज्ञानविषयोरित्यर्थः। पूर्वं यावद्गर्भसाध्यसत्त्वेन तज्ज्ञानविशेष्य-

१. ०मित्यनुपदमेवाकारे इति राजकीयपुस्तकपाठः।
२. निषेधप्र० इति रा० पु० पाठः।

आलोकः

न चाऽयं विशेष्याऽवृत्त्यप्रकारकज्ञानत्वानित्याद्यनुमितिविषयत्वात्तस्येत्युक्तक्रमेण तत्राऽपि न व्यतिरेकप्रसिद्धिरिति वाच्यम्, तदनुमित्यविषय एव प्रसिद्धेरुक्तत्वात् ।

नन्वेवं समभिव्याहृतपरत्वपक्षे विधिप्रसिद्धिर्दुर्लभा विषयज्ञानाऽऽदौ, तदाश्रयज्ञानाऽप्रसिद्धेरिति न, ज्ञानत्वघटविषयत्वाऽऽदावेव तत्सोलभ्यात् । न चैवं सति प्रामाण्याऽप्रामाण्ययोस्तज्ज्ञानविषयकज्ञानजन्यज्ञानग्राह्यत्वतदजन्यज्ञानग्राह्यत्वयोरविशेषात् कथमेकत्र स्वतस्त्वं अपरत्र परतस्त्वमिति विभाग इति वाच्यम्, गृह्यमाणप्रामाण्यव्यापकमीदृशं स्वतस्त्वं न तु[1] गृह्यमाणप्रामाण्यव्यापकमिति विवादशरीरत्वात् ।

यत्तु सर्वमते[2] तज्ज्ञाननिरूपणाऽधीननिरूपणे तज्ज्ञानसादृश्यतज्ज्ञानवैशिष्ट्याऽऽदौ तज्ज्ञानाऽभावेऽपि व्यतिरेकप्रसिद्धिः तस्य तज्ज्ञानविषयकज्ञानजन्यज्ञानग्राह्यत्वनियमादिति मतं—तन्न बुद्ध्यामहे । इयमिच्छा ज्ञानसदृशीत्यनुमानेन ज्ञानान्तरसादृश्यबाधेन पक्षधर्मताबलेनाऽपूर्वज्ञानसादृश्यविषयीकरणात् । न च ज्ञानान्तरसादृश्ये तादृशाऽनुमित्यविषये तत्प्रसिद्धिः । प्रामाण्यस्य प्रतिज्ञानव्यक्तिभिन्नभिन्नाऽऽत्मकस्य सामान्येन रूपेण पक्षतायां तत्तज्ज्ञानविषयकज्ञानाऽजन्यज्ञानग्राह्यत्वे पर्यवसितसाध्ये तद्व्यतिरेकस्याऽपि [3]तत्तज्ज्ञानविषयकज्ञानजन्यज्ञानग्राह्यत्वाऽऽत्मकस्य[4] तज्ज्ञान-

दर्पणः

योः स्थलविशेषे प्रसिद्धेः प्रकारीभूते च सर्वस्मिन् प्रसिद्धिरित्युक्तम् । अत्र तु सम्भवमात्रस्य साध्यतया सर्वत्र तज्ज्ञानविशेष्ययोः प्रसिद्धिरिति विशेषः ।

**उक्तक्रमेणेति ।** साध्यप्रसिद्धेः परमतेऽनुमित्यनङ्गत्वेनेत्यर्थः । तस्याऽपि विधेः प्रसिद्धेः एवमप्रामाण्यस्याऽपि साध्यप्रसिद्धिनिरपेक्षाऽनुमितिविषयतायाः ।

**गृह्यमाणप्रामाण्यव्यापकमिति ।** गृह्यमाणसकलप्रामाण्यनिष्ठमित्यर्थः ।

**संशयेऽपीति ।** निश्चयस्याऽपेक्षितत्वादिति भावः ।

**संकोचस्येति ।** इदं च समाधिसौकर्यादुक्तम् । ईदृशाऽनुमित्यगोचरतायाः अनिश्चयेन सङ्कोचस्याऽसम्भावितत्वादिति ।

नन्वेवं तदनुमित्यविषय एव प्रसिद्धेरुक्तत्वादिति पूर्वोक्तमसङ्गतम् । तादृशाऽनु-

१. न चेति रा० पु० पाठः ।
२. 'समवते' ग्रन्थो नास्ति पुस्तकान्तरे ।
३. तज्ज्ञानेति रा० पु० पाठः ।
४. ज्ञानाजन्यज्ञानग्राह्यत्वाभावात्मकस्येति रा० पु० पाठः ।

न ज्ञानातीन्द्रियत्वे तज्ज्ञानं विना तद्धर्मिकमानससंशयानुपपत्तिः, लिङ्गञ्च न संशयजनकं तस्य निश्चायकत्वात् । ज्ञानस्य मानसत्वे च प्रामाण्यज्ञानवत्तत्सामग्र्यपि संशयप्रतिबन्धिका तन्निश्चायकत्वात् । अन्यथा

माथुरी

साध्यप्रसिद्ध्यर्थं तत्रापि ज्ञानग्रहोऽपेक्षित इति वाच्यम् । तन्नये पक्षधर्मताबललभ्यसाध्यप्रसिद्धेरनङ्गतया ज्ञानत्वरूपेण प्रकृतप्रामाण्यानाश्रयीभूतज्ञानान्तरज्ञानादेव प्रकृतज्ञानानुमितिसम्भवादित्यत आह, 'लिङ्गञ्चेति, निश्चितं लिङ्गञ्चेत्यर्थः, तेन लिङ्गसन्देहस्य क्वचिल्लौकिकसंशयजनकत्वेऽपि न क्षतिः । तस्येति निश्चितस्य लिङ्गस्य निश्चयमात्रजनकत्वादित्यर्थः । न च लिङ्गसन्देह एव प्रामाण्यसंशयात्मकज्ञानग्रहजनक इति वाच्यम् । लिङ्गनिश्चयस्यानुमितिहेतुतया लिङ्गसन्देहादनुमितिरूपसंशयासम्भवादिति[1] भावः । इदमुपलक्षणम् अनुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वनियमेन संशयात्मकप्रामाण्यभानासम्भवाच्चेत्यपि बोध्यम् ।

मिश्रमते दोषमाह, 'ज्ञानस्य मानसत्वे चेति ज्ञानस्य लौकिकमानसप्रत्यक्षत्वमते चेत्यर्थः । 'प्रामाण्यज्ञानवदिति प्रामाण्यनिश्चयवदित्यर्थः, 'तत्सामग्र्यपीति ज्ञानलौकिकमानससामग्र्यपीत्यर्थः, **'प्रतिबन्धिका'** प्रामाण्याभावविशिष्टबुद्धित्वावच्छिन्नं प्रति प्रतिबन्धिका, 'तन्निश्चायकत्वादित्यर्थः, तथा च तत्सत्त्वे कथं तत्संशय इति भावः । न चोभयकोटिविशिष्टबुद्धिसामग्रीसत्त्वादत्र प्रामाण्यनिश्चयोपधायकत्वमेव नास्तीति वाच्यम् । 'अथेत्यादिना आशङ्क्यानुपदं स्वयमेव समाधास्यमानत्वात् । यद्यपि प्रामाण्यनिश्चयोपधाने प्रामाण्यनिश्चयस्यैव कार्यसहभावेन प्रतिबन्धकत्वसम्भवात् सामग्र्याः प्रतिबन्धकत्वपर्यन्तानुधावनमयुक्तम्, तथापि ज्ञानरूपप्रनिबन्धकाभावः कार्यसहभावेन[2] न हेतुः, किन्तु पूर्ववर्त्त्येव[3] हेतुरन्यथा सिषाधयिषां विना क्वाप्यनुमितिर्न स्यात्, स्वोत्पत्तिकाले स्वात्मकसिद्धिसत्त्वादित्यभिप्रायेण तदनुधावनम् ।

नन्वप्रामाण्यनिश्चयोपधायकज्ञानग्रहसामग्र्याः प्रामाण्यसंशयप्रतिबन्धकत्वे मानाभावः, यस्य निश्चयोऽनुमितित्वानवच्छिन्नप्रतिबध्यताप्रतियोगिकयत्प्रतिबन्धकताश्रयस्तन्निश्चयोपधायकसामग्र्यपि तत्प्रतिबन्धिकेति व्याप्तेरभावादित्यत आह,- 'अन्यथेति', यन्निश्चयो यस्य तादृशप्रतिबन्धकताश्रयः[4] तन्निश्चयसामग्र्यास्तत्राप्रतिबन्धकत्वे इत्यर्थः, 'विशेषदर्शनकालेऽपीति' । तदभावव्याप्यवत्तानिश्चयोत्पत्तिकालेऽपीत्यर्थः, 'संशयापत्तेरिति, तदभावत्वप्रकारकज्ञानं विना तदभावनिश्चयासम्भवेन

---

१. उपनयाभावात् नोपनीतभानसम्भव इति भावः ।

२. कार्यसहभूत इति ग० ।

३. नियतपूर्ववर्त्त्येवेति ग० ।

४. यो यस्य यादृशप्रतिबन्धकताश्रय इति ख० ।

माथुरी

तदभावज्ञानस्यैव तत्तदभावोभयज्ञानरूपत्वादिति भावः। न च तदभावादिनिश्चयस्य कार्यकालवृत्तित्वेन प्रतिबन्धकत्वादेव न तदा संशय इति वाच्यम्। ज्ञानरूपप्रतिबन्धकाभावः पूर्ववर्त्त्येव हेतुरिति ग्रन्थकर्त्तुराशयादन्यथा प्रकृते सामग्रीप्रतिबन्धकत्वानुधावनस्यासम्भवापत्तेः।

केचित्तु ननु तन्निश्चयोपधायकसामग्र्यास्तदभावज्ञानप्रतिबन्धकत्वे मानाभाव इत्यत आह, 'अन्यथेति', तन्निश्चयोपधायकसामग्र्यास्तदभावज्ञानाप्रतिबन्धकत्वे इत्यर्थः, 'विशेषदर्शनकालेऽपीति', अन्धकारे घटादिसंशयोत्तरमालोकादिसमवधाने सति घटादिचाक्षुषनिश्चयोत्पत्तिकाले, शब्दो नित्यो न वेत्यादिसंशये नित्यत्वादिशाब्दनिश्चयोत्पत्तिकाले चेत्यर्थः, 'संशयापत्तेरिति घटाद्यभावप्रत्यक्ष-नित्यत्वाभावादिशाब्दबोधापत्तेरित्यर्थः इत्याहुः।

ननु निश्चयसामग्र्याः केन रूपेण प्रतिबन्धकत्वम्? न तावत्तदभावनिश्चयजनकसामग्रीत्वेन तद्विशिष्टबुद्धिं प्रति प्रतिबन्धकत्वम्, सामग्री हि न तदीययावत्कारणं तदीयकारणतावच्छेदकानां यावतां प्रत्येकाश्रयसमवधानं वा अनुमिति-शाब्दबोधादिसकलनिश्चयकारणस्य क्वाप्यसम्भवात्। नापि तदभावनिश्चयजनकत्वेन प्रतिबन्धकत्वं सामग्रीत्वस्याविवक्षितत्वादिति वाच्यम्, कालादेरपि प्रतिबन्धकत्वापातात् स्थाण्वादीन्द्रियसन्निकर्षस्यापि पुरुषत्वादिसंशयप्रतिबन्धकत्वापाताच्च, तस्यापि पुरुषत्वाभावादिनिश्चयस्वरूपयोग्यत्वात्, कदाचित् पुरुषत्वाभावादिनिश्चयफलोपधायकत्वाच्च। नापि तदभावनिश्चयमात्रवृत्तिधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वेन प्रतिबन्धकत्वम्, व्याप्यदर्शनाद्यनुत्तरतदभावप्रत्यक्षनिश्चयोत्पत्तिकाले तत्संशयापत्तेस्तादवस्थ्यात् तदभावीयपक्षतानुद्बुद्धसंस्कारयोग्यतासन्देहादिसत्त्वेऽपि तद्विशिष्टबुद्ध्यभावापत्तेश्च कार्यतावच्छेदकावच्छिन्ननिरूपितायाः कारणतायास्तदननुगमेनाननुगमाच्चेति चेत्। न। तदभावनिश्चयोपधायकसामग्रीत्वेनैव प्रतिबन्धकत्वात्, तदुपधायकसामग्रीत्वञ्च स्वसमानाधिकरणत्वे सति स्वाव्यहितपूर्वक्षणवृत्तित्वसम्बन्धेन तद्विशिष्टत्वं सामग्रीत्वं न निवेशनीयम्, स्वं तदभावादिनिश्चयः। न चैवं तदभावव्याप्यदर्शन-तदभावावच्छेदकधर्मदर्शनादेः पृथक् प्रतिबन्धकत्वव्याघातः तदुत्तरं अन्ततो मानसस्यापि तदभावनिश्चयस्यावश्यकत्वात्तन्निश्चयसामग्र्यामेव तदन्तर्भावादिति वाच्यम् सत्प्रतिपक्षस्थले तत्तदभावोभयावच्छेदकादिधर्मदर्शनस्थले च तत्संशयापत्तेः तत्तदभावोभयानुमित्यापत्तेश्च तत्र परस्परविरोधेन कस्यापि निश्चयानुत्पत्त्या यथोक्तनिश्चयसामग्रीविरहादिति निगर्व्वः।

अत्रेदमवधेयम् तदभावादिनिश्चयसामग्री न तद्विशिष्टबुद्धिप्रतिबन्धिका तदभावादिनिश्चयस्य कार्य्यसहवर्त्तित्वेन प्रतिबन्धकत्वादेव तदुत्पत्तिकाले तद्विशिष्टबुद्ध्य-

**विशेषदर्शनकालेऽपि संशयापत्तेः। अथ धर्म्मिणि विशेषादर्शनदशायाम् एककोटिस्मरणे तदारोपः कोटिद्वयस्मरणे संशय इति निश्चयसामग्रीतः संशय-**

माथुरी

भावसम्भवेन[1] अतिरिक्तप्रतिबध्य-प्रतिबन्धकभावकल्पने गौरवान्मानाभावाच्च। न च ज्ञानरूपप्रतिबन्धकस्यापि कार्य्यसहवर्त्तित्वेन प्रतिबन्धकत्वे विना सिषाधयिषां क्वाप्यनुमितिः न स्यादिति वाच्यम्। प्रतिबध्य-प्रतिबन्धकभावस्य सकलसाधारणस्यानुगतस्याभावात् सिद्धेः फलबलेन पूर्ववर्त्तितामात्रेण प्रतिबन्धकत्वेऽपीह लाघवात् कार्य्यसहवर्त्तित्वेनैव प्रतिबन्धकत्वकल्पनात्। अत एव निश्चयसामग्र्यपि न तदभावविशिष्टबुद्धिप्रतिबन्धिका तन्निश्चयस्य कार्य्यसहवर्त्तित्वेन प्रतिबन्धकत्वादेवान्धकारे घटादिसंशयोत्तरमालोकसमवधानेऽपि तदुत्तरं घटाभावादिसंशयाभावोपपत्तेः, तत्राप्यव्यवहितपूर्ववर्त्तिसम्बन्धेन घटादिनिश्चयस्यैव तत्र संशयाभावप्रयोजकत्वात्। एवं नित्यत्वादिशब्दनिश्चयस्यैव कार्य्यसहभावेन प्रतिबन्धकत्वादेवानित्यत्वादिशाब्दसंशयस्याप्यभावः। न चान्धकारे घटसंशयाद्युत्तरमालोकसंयोगाद्युत्पत्तिकालेऽपि घटादिसंशयापत्तिवारणाय निश्चयसामग्र्याः कार्य्यसहभावेन प्रतिबन्धकत्वमावश्यकमिति वाच्यम्। तदानीं संशयोत्पत्ताविष्टापत्तेः। अथ कार्य्य-सहवर्त्तित्वेन तदभावादिनिश्चयस्य प्रतिबन्धकत्वमित्यस्य कोऽर्थः। न च कार्य्योत्पत्तिकालीनतदभावादिनिश्चयत्वावच्छिन्नाभावो हेतुरित्यर्थः, तादृशाभावस्य पूर्वकाले सत्त्वादुक्तातिप्रसङ्गस्य दुर्वारत्वात्। नापि कार्य्योत्पत्तिकालीनो यस्तदभावादिनिश्चयाभावस्तत्त्वं कारणताच्छेदकमित्यर्थः, कार्य्यपदं हि कार्य्यसामान्यपरं फलीभूततत्तद्विशिष्टबुद्धिव्यक्तिपरं वा ? नाद्यः अव्यावर्त्तकत्वात्, नान्त्यः अनन्तकार्य्यकारणभावकल्पनाप्रसङ्गात् कारणतावच्छेदकविशिष्टस्य पूर्वसत्ताया अपेक्षितत्वमते कार्य्यप्राक्काले तादृशकालीनत्वविशिष्टस्यासम्भवाच्च। अत एव तत्तत्कार्य्यकालसम्बन्धः कारणतावच्छेदकसंसर्गः, सम्बन्धाननुगमश्च न दोषायेत्यपि निरस्तम्। तेन सम्बन्धेनाभावस्य कार्य्यप्राक्काले सत्त्वाद्व्यभिचारापत्तेः कारणतायाः पूर्ववर्त्तिताघटितत्वात्। न च प्रतिबन्धकाभावस्थले स्वरूपसम्बन्धेन कार्य्यकालवृत्तिताघटितैव कारणतेति वाच्यम्। विनश्यदवस्थप्रतिबन्धकसत्त्वेऽपि तदुत्तरं कार्य्योत्पत्त्यापत्तेः। न च प्रतिबन्धकाभावस्थले स्वरूपसम्बन्धेन कार्य्यकालवृत्तित्वघटिता तेन सम्बन्धेन तत्पूर्वकालवृत्तित्वघटिता च कारणतेतिवाच्यम्। कारणताद्वयकल्पनापत्तेः। न चैवंकल्पे मण्यादेरपि कार्य्यसहभावेन प्रतिबन्धकत्वविलोपापत्तिरसमवायिकारणादेः कार्य्यसहभावेन हेतुत्वविलोपापत्तिश्चेति वाच्यम्। इष्टत्वात्, मण्युपधायकसामग्र्याः प्रतिबन्धकत्वादेव मण्युत्पत्तिकाले दाहाभावसम्भवात्। असमवायिकारणनाशकसामग्र्याः प्रतिबन्धकत्वादेव विनश्यदवस्थस्यासमवायिकारणात् कार्य्या-

---

१. वशिष्टबुद्धिचनुत्पादसम्भवेनेति ग०।

**सामग्री बलवतीति कोटिद्वयस्मरणे संशय एव स्यात् न तु निश्चय इति चेत् ।**

माथुरी

नुत्पादसम्भवादिति चेत् । न । स्वोत्पत्ति-तदव्यवहितपूर्वत्वान्यतरसम्बन्धेन यदा कार्यं तदा प्रतिबन्धकाभावादिरिति प्रत्यासत्त्या कारणत्वस्यैव कार्यसहभावेन प्रतिबन्धकत्वादिपदार्थत्वात् ।

केचित्तु सामग्र्या उत्तरक्षणे कार्यमिति व्याप्तौ प्रतिबन्धकाभावादिरूपतत्तत्कारणाधिकरणक्षणत्वविशिष्टसामग्र्यव्यवहितोत्तरक्षणत्वमेव व्यापककोटौ निविष्टमित्येव कार्यकालवृत्तित्वेन कारणत्वमित्यस्यार्थः, तावतैव प्रतिबन्धकोत्पत्तिक्षणे वा कार्योत्पत्त्यापादनासम्भवात् । न तु कार्योत्पत्तिकालोऽपि स्वातन्त्र्येण कारणतावच्छेदकसम्बन्धघटकतया कारणताप्रविष्ट इत्याहुः । तदसत् । कारणताघटकव्यापकतावैलक्षण्येनैव कार्यातिप्रसङ्गः[1] वार्यत इति सकलप्रामाणिकसिद्धत्वादन्यथा कालिकसामानाधिकरण्यापेक्षया यत्र दैशिकसामानाधिकरण्यं गुरु तत्र दैशिकसामानाधिकरण्यस्यापि कारणत्वानन्तर्भावप्रसङ्गात् सामग्र्या उत्तरक्षणे कार्यमिति व्याप्तौ दैशिकसामानाधिकरण्यान्तर्भावादेवातिप्रसङ्गवारणसम्भवात् पूर्ववर्त्तित्वादेरपि कारणत्वानन्तर्भावप्रसङ्गाच्चेत्यास्तां विस्तरः ।

नन्वत्र प्रामाण्यनिश्चयोपधायकसामग्र्येव नास्ति प्रामाण्य-तदभावोभयकोट्युपस्थितिसत्त्वेनोभयकोटिविशिष्टबुद्धेरेवोत्पादात्. न हि तन्मते ज्ञानेन्द्रियसन्निधेः प्रामाण्यनिश्चयत्वं कार्यतावच्छेदकं येनोभयविशिष्टबुद्धिसामग्रीसत्त्वे प्रामाण्यनिश्चयः स्यादित्याशङ्कते, 'अथेति, 'एककोटिस्मरणे' एककोटिमात्रस्मरणे, 'तदारोपः' तन्निश्चयः, 'इतीति इत्यनुभवादित्यर्थः, 'निश्चयसामग्रीत इत्यादि, उभयकोटिविशिष्टबुद्धिसामग्रीरूपसंशयसामग्र्यां सत्यां नैककोटिनिश्चयोत्पत्तिरित्यर्थः । 'इतीति, प्रकृत इतिशेषः । 'कोटिद्वयस्मरणे' प्रामाण्याप्रामाण्योभयकोटिस्मरणे । दोषाभावात् कोटिद्वयविशिष्टबुद्धिसामग्रीसत्त्वेऽपि प्रामाण्यनिश्चय इति समाधत्ते, 'विरुद्धोभयारोपेति दोषसमवहितविरुद्धभावाभावोभयविशिष्टबुद्धिसामग्रीसमाजादेवेत्यर्थः, 'एक एवेत्यग्रिमैवकारस्यात्रैवान्वयात् । आरोप इत्युपादानं दोषलाभाय । 'उभयारोपः' विरुद्धभावाभावोभयविषयकारोपः, यत्र तु न दोषस्तत्र कोटिद्वयविशिष्टसामग्रीसत्त्वेऽपि वास्तवकोटिनिश्चयः, अन्यथा विना विशेषदर्शनादिकं घटाभाववदिदमित्यादिप्रात्यक्षिकनिश्चयः क्वापि न स्यात्, घट-तदभावोभयोपस्थितिसत्त्वेन संशयस्यैवोत्पत्त्या कार्यसहभावेन घटाभावनिश्चयस्य पूर्ववर्त्तितया तत्सामग्र्या वा प्रतिबन्धकत्वस्य वक्तुमशक्यत्वात् । न च दोषस्य भ्रमजनकत्वे मानाभावाद्दोषाभावे कोटिद्वयविशिष्टबुद्धिसामग्रीसत्त्वेपि वास्तवकोटौनिश्चय इत्यत्र किं बीजमिति वाच्यम् । तथैवानुभवात् ।

---

१. कार्योत्पत्तिप्रसङ्ग इति ख० ।

**न । विरुद्धोभयारोपसामग्रीद्वयसमाजादुभयारोप एक एव भवति स एव संशयः, न त्वेकारोपसामग्र्या अपरारोपसामग्रीप्रतिबन्धः अविरोधात् । न चोभयारोपसामग्र्या एकनिश्चयसामग्रीप्रतिबन्ध इति वाच्यम् । प्रत्येकारोपसामग्र्यतिरिक्तायास्तस्या अभावात् । न च सामग्रीद्वयात् कार्यद्वयम्, समूहालम्बनवदुपपत्तेः । तस्मात् प्रामाण्यनिश्चयसामग्रीसत्त्वात्**

माथुरी

न च तथानुभवेऽपि कार्याभावस्य विना कारणाभावमनभ्युपगमादवास्तवकोटिविशिष्ट-बुद्ध्यभावः कथं स्यादिति वाच्यम् । वास्तवकोटिनिश्चयस्य प्रामाणिकत्वे कार्यकालवृत्तितया तस्य पूर्ववर्त्तितया तदुपधायकसामग्र्या वा प्रतिबन्धकत्वात् । अत एव दोषस्य संशयाजनकत्वेऽपि संशयप्रयोजकत्वप्रवादः । अनुभवबलेन दोषाभावविशिष्टकोटिद्वयोपस्थित्यादेर्वास्तवकोटिनिश्चयव्याप्यतया दोषस्य संशयव्यापकत्वादिति भावः ।

ननु कोटिद्वयविशिष्टबुद्धिसामग्रीसत्त्वेऽपि वास्तवकोटिनिश्चयस्योत्पादे संशय एव न स्यात्, सर्वत्र वास्तवकोटिनिश्चयोत्पत्त्या तत्सामग्र्याः प्रतिबन्धकत्वादित्यत आह, 'स एवेति दोषकालीनविरुद्धभावाभावोभयारोप एवेत्यर्थः । 'न त्विति न हीत्यर्थः, तदानीमितिशेषः, 'एकारोपसामग्र्याः' वास्तवकोटिनिश्चयसामग्र्याः, 'अपरारोपेति अपरकोटिशिष्टबुद्धिसामग्र्याः कार्य्योपधायकत्वे प्रतिबन्ध इत्यर्थः, 'अविरोधादिति विरोधितावच्छेदकस्य वास्तवकोटिनिश्चयोपधायकत्वस्य वस्तुगत्या तदानीमभावादित्यर्थः । न च वास्तवकोटिनिश्चय एव कथं तत्र न जायते, दोषस्य निश्चयप्रतिबन्धकत्वे मानाभावादिति वाच्यम् । निश्चयत्वस्यार्थसमाजग्रस्तत्वेन कार्य्यतानवच्छेदकतया[1] तदवच्छिन्नापादकाभावादिति भावः ।

ननु यत्र न दोषस्तत्र कोटिद्वयोपस्थित्यादिसत्त्वेऽपि वास्तवकोटिनिश्चय इत्यसिद्धं विरुद्धभावाभावोभयविशिष्टबुद्धिसामग्र्याः सत्प्रतिपक्षवत्परस्परनिश्चयप्रतिबन्धकत्वादित्याशङ्कते, 'न चेति, 'उभयारोपसामग्र्याः' विरुद्धभावाभावोभयविषयकारोपसामग्र्याः, 'एकनिश्चयसामग्रीप्रतिबन्धः' परस्परनिश्चयोत्पत्तिप्रतिबन्धः । सामग्र्याः कारणकलापरूपतया दोषासत्त्वे उभयविषयकारोपसामाग्र्येव नास्तीति समाधत्ते, 'प्रत्येकेति प्रत्येककोटिविशिष्टबुद्धिसामग्रीद्वयभिन्नाया उभयविषयकारोपसामग्र्या अभावादित्यर्थः, प्रत्येककोटिविशिष्टबुद्धिसामग्रीद्वयञ्च यत्र नास्ति तत्र वास्तवकोटिनिश्चयस्यानुभविकत्वेन तत्सामग्र्या अवास्तवकोटिविशिष्टबुद्धिप्रतिबन्धकतया प्रतिबन्धकाभावरूपकारणस्यैवाभावादिति भावः । 'न चेति, प्रत्येककोटिविशिष्टबुद्धिसामग्रीद्वयभिन्नायाः कोटिद्वयविषयकारोपसामग्र्या विरह इति शेषः, 'कार्य्यद्वयमिति संशयस्थले कार्य्यद्वयं स्यादित्यर्थः, 'उपपत्तेरिति सामग्रीद्वयादपि

१. अर्थसमाजग्रस्तत्वं कार्य्यतावच्छेदकत्वे बाधकमिति भावः ।

माथुरी

कार्य्यैक्योपपत्तेरित्यर्थः[१]। प्रामाण्यनिश्चयसामग्रीसत्त्वादिति प्रामाण्यनिश्चयोपधायकसामग्रीसत्त्वादित्यर्थः। न च दोषाभावादेव संशयाभावस्य सुवचतया प्रामाण्यनिश्चयसामग्रीप्रतिबन्धकत्वानुधावनमफलमिति वाच्यम्। दोषस्य संशयव्यापकत्वेऽपि संशयाजनकतया तदभावेन संशयाभावासम्भवः, विना कारणाभावं कार्य्याभावस्यानभ्युपगमादित्यभिप्रायात्।

ननु दोषस्य फलोन्नेयतया यत्र प्रामाण्यसंशयोऽनुभवसिद्धस्तत्र व्यवसायोत्पत्तिप्राक्काले द्वि-त्रिक्षणस्थायिदोषोऽपि फलबलात्कल्प्यते त्वयापि प्रामाण्यसंशयार्थं तदुत्तरं दोषकल्पनादित्यरुचेर्दूषणान्तरमाह, 'धर्म्मिज्ञानञ्चेति।

मिश्रास्तु अत्र निश्चयसामग्रयास्त्वयानभ्युपगमात्तस्याः प्रतिबन्धकत्वस्य वक्तुमशक्यत्वेऽपि संशयं प्रति धर्म्मिज्ञानस्यापि हेतुतया तदभावे कथं संशय इत्यभिप्रायेण समाधत्ते, 'विरुद्धोभयारोपेति, ज्ञानपदं विहायारोपपदोपादानं धर्म्मिज्ञानसाहित्यलाभाय, तथा च धर्म्मिज्ञानसहितविरुद्धोभयविशिष्टबुद्धिसामग्रीसमाजादेवोभयविषयकारोप एको भवति स एव संशय इति योजना। प्रकृते च धर्म्मिज्ञानाभावात् कथं प्रामाण्यसंशयात्मको ज्ञानग्रह इति भावः। ननु विरुद्धोभयविषयकैकारोप एव संशय इत्ययुक्तं सत्प्रतिपक्ष इव विरुद्धोभयविशिष्टबुद्धिसामग्रयाः परस्परं कार्य्यजनने प्रतिबन्धकत्वादित्यत आह, 'न त्विति न हीत्यर्थः, 'एकारोपसामग्रयाः' एककोटिविशिष्टबुद्धिसामग्रयाः, 'अपरारोपेति अपरकोटिविशिष्टबुद्धिसामग्रीजन्यकार्य्यप्रतिबन्ध इत्यर्थः, 'अविरोधादिति' विरोधित्वे मानाभावादित्यर्थः, संशयस्यानुभवसिद्धत्वादिति भावः। ननु प्रथमं प्रामाण्यमविषयीकृत्यैव ज्ञानधर्म्मिग्रहः ततः प्रामाण्यसंशयः। न च तव नये प्रामाण्यस्य ज्ञानग्राहकसामग्रीग्राह्यत्वात् ज्ञानग्रहे कुतो न प्रामाण्यग्रहः इति वाच्यम्। प्रामाण्य-तदभावोभयविषयकारोपसामग्रयाः प्रामाण्यनिश्चयप्रतिबन्धकत्वात्। न चैवं ज्ञानग्राहकयावत्सामग्रीग्राह्यत्वं त्वदभ्युपगतं बाधितमिति वाच्यम्। अप्रामाण्यग्रहासमवहितयावत्सामग्रीग्राह्यत्वस्यैवाभ्युपगमादित्यभिप्रायेनाशङ्कते, 'न चेति', 'एकनिश्चयसामग्री'ति एकनिश्चयोत्पत्तीत्यर्थः, सामग्रयाः कारणकलापरूपत्वादुभयविषयकारोपसामग्रय्येव तत्र नास्तीत्याशयेन समाधत्ते, 'प्रत्येके'ति प्रत्येककोटिविशिष्टबुद्धिसामग्रीद्वयभिन्नाया उभयविषयकारोपसामग्रया अभावादित्यर्थः, प्रत्येककोटिविशिष्टबुद्धिसामग्रीद्वयञ्चात्र नास्ति धर्म्मिज्ञानस्यारोपहेतुतया तदभावेन प्रामाण्याभावविशिष्टबुद्धिसामग्रीविरहादिति भावः। 'न चेत्यादिग्रन्थस्तु पूर्व्ववत्। उपसंहरति, 'तस्मादिति, 'प्रामाण्यनिश्चयसामग्रीसत्त्वात्' प्रामाण्यनिश्चयमात्रसामग्रीसत्त्वात्, प्रामाण्यसंशयसामग्रयसत्त्वादिति यावत्। ननु लाघवाद्धर्म्मीन्द्रियसन्निकर्षादिरेव

१. कार्य्यस्योपपत्तेरित्यर्थं इति ख०।

**न तत्संशयः स्यात् । धर्म्मिज्ञानं च संशयहेतुः, अन्यथा संशये धर्म्मिनियमः कोट्युत्कटत्वञ्च न स्यात् । अथ पीतः शङ्ख आदर्शे मुखमित्यादिभ्रमो**

माथुरी

भ्रमहेतुः न तु धर्म्मिज्ञानमपीति पूर्व्वमुक्तत्वादिदमसङ्गतमित्यत आह, 'धर्म्मिज्ञानञ्चेवीति प्राहुः ।

'संशयहेतुरिति, 'संशयेति प्रकृताभिप्रायम् आरोपमात्र एव तद्धेतुत्वमिति सिद्धान्तात् । कार्य्य-कारणभावस्तु तद्धर्म्मितावच्छेदकतद्धर्म्मिकभ्रमत्वेन तद्धर्म्मिणि तद्धर्म्मितावच्छेदकप्रकारकनिश्चयत्वेन[1] अतो धर्म्मितावच्छेदक-धर्म्मिणोर्निर्व्विकल्पकाद्रूपान्तरेण धर्म्मिज्ञानाद्वा न संशयः । दण्डो रक्तो न वेति संशयानन्तरं रक्तदण्डो द्रव्यं न वेत्यादिसंशयानुदयान्निश्चयत्वप्रवेशः । न च संसर्ग-प्रकारभेदेन भ्रमत्वस्य विभिन्नत्वात् कथमनुगतं कार्य्यतावच्छेदकमिति वाच्यम् । तत्तत्संसर्गक-तत्तत्प्रकारकज्ञानत्वस्याननुगतस्यैव कार्य्यतावच्छेदकत्वात्, कार्य्यतावच्छेदकाननुगमस्यादोषत्वात् । तदभाववद्विशेष्यकत्वं तु भ्रमत्वघटकं न निविशयते, तत्त्वस्यानुगतस्याभावात् । यत्र धर्म्मिणि वस्तुगत्या बाधितो यो विषयस्तस्यैव विशिष्य तद्धर्म्मितावच्छेदकविशिष्टतद्धर्म्मिज्ञानकार्य्यतावच्छेदकघटकत्वेनातिप्रसङ्गविरहात् । यद्वा विशिष्य तत्तत्प्रकारोऽपि नान्तर्भावणीयः, किन्तु तत्तत्संसर्गमात्रम्, तथा च तद्धर्म्मितावच्छेदकक-तद्धर्म्मिक-संयोगसंसर्गक-तद्धर्म्यसंयुक्तधर्म्मप्रकारकज्ञानत्व - तद्धर्म्मितावच्छेदकक-तद्धर्म्मिक-समवायसंसर्गक-तद्धर्म्मसमवेतधर्म्मप्रकारकज्ञानत्वादिकमेव कार्य्यतावच्छेकम्, सामान्यादौ समवायादिसंसर्गेण सत्तादिभ्रमस्थले तु सामान्याद्विविशेष्यक-समवायादिसंसर्गकज्ञानत्वमेव कार्य्यतावच्छेदकम् तेन तदसमवेतत्वाप्रसिद्धावपि न क्षतिः । न चैवं वृक्षः संयोगी न वेत्यादौ यत्र कोटिद्वयांशे नारोपः, किन्तु विरोधांश एवारोपस्तत्र संशये वृक्षादिरूपधर्म्मिधियो हेतुत्वं न स्यात्, तत्र विरोधसंसर्गेण संयोगाभावांश एव संयोगस्य प्रकारतया तेन संसर्गेण वृक्षादावप्रकारत्वादिति वाच्यम् । तत्राभावरूपधर्म्मिज्ञानस्यैव हेतुत्वेन वृक्षादिरूपधर्म्मिज्ञानस्याहेतुत्वे इष्टापत्तेः, वस्तुतस्तु[2] तद्धर्म्मावच्छिन्नतद्धर्म्मिविशिष्टज्ञानत्वमेव कार्य्यतावच्छेदकम् वैशिष्टयञ्च स्वव्यधिकरणधर्म्मनिरूपित-तद्धर्म्मावच्छिन्नस्वनिष्ठ-

१. तथाच तद्धर्म्मितावच्छेदकक-तद्धर्म्मिकभ्रमत्वावच्छिन्नं प्रति तद्धर्म्मिणि तद्धर्म्मिताच्छेदकप्रकारकनिश्चयत्वेन कारणत्वं इति फलितार्थः ।

२. तद्धर्म्मितावच्छेदकावच्छिन्नविशेष्यताविशिष्टप्रकारताशालिज्ञानत्वरूपकार्य्यतावच्छेदके अनुगमस्य तात्पर्य्यम्, अतः यथाश्रुतानुगमे जातिर्द्रव्यमित्याकारकसमवायावच्छिन्नद्रव्यत्वनिष्ठप्रकारताक-जातिविशेष्यकभ्रमे स्वावच्छेदकसम्बन्धेन विशेष्यताधिकरणजातौ समवायेन वृत्तेरप्रसिद्धावपि न क्षतिः । प्रकारतायां विशेष्यतविशिष्टयं स्वनिरूपितत्व- स्वाश्रयनिरूपितवृत्तितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वोभयसम्बन्धेन वृत्तितावत्त्वञ्च स्वाश्रयनिष्ठत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन इति हृदयम् ।

**विशेषदर्शनेऽपि यथा दोषान्तरात्, तथा निश्चितेऽपि प्रामाण्ये दोषान्तरात् तत्संशय इति चेत्। न। तद्वदेवात्रापि प्रवृत्तिप्रसङ्गात् साक्षात्कारिभ्रमे**

माथुरी

विशेष्यताप्रतियोगित्वसम्बन्धेन[१] प्रथमं स्वपदं विशेष्यतापरम्, द्वितीयस्वपदं धर्म्मिपरम्, स्वव्यधिकरणत्वञ्च स्वावच्छेदकसम्बन्धेन[२] स्वाधिकरणावृत्तित्वम्, स्वपदद्वयमेव विशेष्यतापरम्, सम्बन्धाननुगमस्यादोषतया स्वत्वस्याननुगतत्वेऽपि न क्षतिः। वृक्षः संयोगी न वेत्यादावभावज्ञानमेव हेतुर्न तु वृक्षादिज्ञानमित्युक्तमेव। न चारोपमात्रं प्रत्येव धर्म्मिज्ञानस्य हेतुत्वे यत्र प्रमेयत्वं प्रति घटत्वादेर्व्यापकत्वग्रहे घटत्वाभावादिहेतुना अप्रसिद्ध एवाभावः प्रमेयत्वप्रकारेण विशेष्यतयानुमितौ भासते, तत्रारोपे धर्म्मिज्ञानस्य व्यभिचार इति वाच्यम्। विशिष्टोद्देश्यकवैशिष्ट्यबुद्धौ विशेष्यतावच्छेदकप्रकारकविशेष्यज्ञानस्य हेतुतया तदभावेन व्यभिचाराभावात्। तत्राभावत्वस्य धर्म्मितानवच्छेदकत्वात्।

केचित्तु व्याप्तिघटकतयावगतस्यैवाभावस्य प्रमेयत्वीत्वेन तत्र भानमित्याहुः।

यद्यप्येतावतानुव्यवसायपूर्वं धर्म्मितावच्छेदकविशिष्टधर्म्मिज्ञानाभावान्न तस्य प्रामाण्यसंशयरूपत्वसम्भवः, अपि तु प्रामाण्यनिश्चयरूपत्वम् अतो न तदुत्तरं प्रामाण्यसंशय इति फलितम्, तच्चासङ्गतमेव 'अनुव्यवसायात् पूर्वं धर्म्मितावच्छेदकविशिष्टधर्म्मिज्ञानाभावेनानुव्यवसाये प्रामाण्यभानेऽपि संशयसमानधर्म्मितावच्छेदककप्रामाण्यनिश्चयाभावादेव तदुत्तरं तन्मतेऽपि प्रामाण्यसंशयसम्भवः, विशेष्यतावच्छेदकप्रकारज्ञानस्य विशिष्टाधिकरणकवैशिकष्ट्यबुद्धिसामान्यहेतुतया धर्म्मितावच्छेदकप्रकारकज्ञानं विना समानधर्म्मितावच्छेदककप्रामाण्यनिश्चयस्याप्यसम्भवात्, तथापि ज्ञाननिष्ठेदन्त्वविशिष्टबुद्धौ विशेषणज्ञानस्याहेतुत्ववत्तद्विशिष्टाधिकरणकवैशिष्ट्यबुद्धिसामान्येऽपि विशेष्यतावच्छेदकप्रकारकज्ञानं न हेतुरतः प्रथममिदन्त्व-प्रकारकज्ञानाभावेऽपि तदवच्छेदेनानुव्यवसाये प्रामाण्यनिश्चयतत्रसम्भवान्न तदुत्तरमिदं प्रमा न वेति संशयसम्भवः, ज्ञाननिष्ठेदन्त्वधर्म्मितावच्छेदककसंशय-विपर्य्ययोस्तु धर्म्मितावच्छेदकप्रकारकज्ञानं हेतुरेवेत्यनुव्यवसायस्य न तदवच्छेदेन प्रामाण्यसंशयरूपत्वसम्भव इति मणिकृतो निगर्वः।

धर्म्मिज्ञानस्य भ्रमहेतुत्वे युक्तिमाह, अन्यथेति, 'धर्म्मिनयम इति तुरगादिमारुह्य वेगेन गच्छतोऽनन्तधर्म्मीन्द्रियसन्निकर्षेऽपि यस्यैव धर्म्मिणो ज्ञानं तत्रैव संशयो विपर्य्ययो वा, यस्य तु न ज्ञानं न तत्रेति नियमो न स्यादित्यर्थः। न च तद्धेतोरेवेतिन्यायाद्धर्म्मिज्ञानोपधायकसामग्रीत्वेन धर्म्मिज्ञानसामग्र्येव हेतुरिति वाच्यम्। धर्म्मिज्ञानसामग्रीत्वमपेक्ष्य धर्म्मिज्ञानत्वस्य लघुत्वादिति भावः। ननु तत्र येषां

१. 'विशेष्यताप्रतियोगित्वं' विशेष्यतानिरूपकत्वमित्यर्थः।

२. 'स्वावच्छेदकसम्बन्धेन' स्वनिरूपितप्रकारतावच्छेदकसम्बन्धेनेत्यर्थः, अतः विशेष्यतायाः किञ्चित्संसर्गानवच्छिन्नत्वेऽपि न क्षतिः।

माथुरी

धर्म्मिणां न ज्ञानं तेषामिन्द्रियसन्निकृष्टत्वेऽपि मानाभावः, किञ्च तत्तद्धर्म्मीन्द्रियसन्निकर्षसत्त्वे तत्तद्धर्म्मिणां ज्ञानमेव कुतो न जायते, दोषविशेष एव तत्तद्धर्म्मिज्ञानप्रतिबन्धक इति चेत्, तर्हि तत्तद्धर्म्मिकसंशयं प्रत्यपि स एव प्रतिबन्धकः, संशयस्यापि तत्तद्धर्म्मिज्ञानरूपत्वादिति, किं धर्म्मिज्ञानस्य पृथक् हेतुत्वेनेत्यरुचेराह, 'कोट्युत्कटत्वञ्चेति धर्म्मिज्ञानस्य भ्रमाहेतुत्वे संशयस्य विपर्य्यस्य वा किञ्चिदंशे उत्कटत्वं किञ्चिदंशेऽनुत्कटत्वञ्चेति न स्यादित्यर्थः। तेन तद्धर्म्मितावच्छेदकक-तद्धर्म्मिकतदुत्कटकोटिकभ्रमं प्रति तत्कोटिसहचरितभूयोधर्म्मवत्तया तद्धर्म्मितावच्छेदकविशिष्टतद्धर्म्मिधीरवश्यं हेतुः, तच्च धर्म्मिज्ञानहेतुत्वं विना न सम्भवति। उत्कटत्वञ्च विषयताविशेषः; न तु जातिः; चाक्षुषत्वादिना सङ्करात् आंशिकत्वाच्च[1]। न च प्रमात्ववत् भ्रमत्वमर्थसमाजग्रस्ततया न कार्य्यतावच्छेदकमिति वाच्यम्। तादृशभ्रमस्य तादृशधर्म्मिज्ञानं विनानुपपन्नत्वेनार्थसमाजग्रस्तत्वस्यैवासिद्धेः तत्त्वस्य[2] अनुगतस्याभावाद् यत्र धर्म्मिणि वस्तुगत्या बाधितो यो विषयस्तद्धर्म्मिक-तदुत्कटकोटिकज्ञानत्वस्यैव कार्य्यतावच्छेदकत्वेन भ्रमत्वस्य कार्य्यतावच्छेदकेऽप्रवेशाच्च। न चैतावता तादृशसंशये तादृशविपर्य्यये च तादृशधर्म्मिज्ञानस्य हेतुत्वेऽपि संशयसामान्ये विपर्य्ययसामान्ये च धर्म्मिज्ञानसामान्यस्य हेतुता नायातीति वाच्यम्। तादृशभाने तादृशधर्म्मिज्ञानस्य हेतुत्वसिद्धौ यद्विशेषयोरितिव्याप्त्या[3] तद्धर्म्मितावच्छेदकक-तद्धर्म्मिकभ्रममात्र एव तद्धर्म्मितावच्छेदकप्रकारकतद्धर्म्मिनिश्चयस्य हेतुत्वसिद्धेरिति भावः। इदमप्यापाततः उत्कटत्वं हि न विषयिताविशेषो मानाभावात्, किन्तु तत्कोटिसहचरितभूयोधर्मवद्धर्म्मिज्ञानकालीनत्वमेवोत्कटत्वं तच्च न कार्य्यतावच्छेदकमर्थसमाजग्रस्तत्वात्। किञ्च तत्कोटिसहचरितभूयोधर्मवद्धर्म्मिज्ञानत्वं कारणतावच्छेदकमपि नानुगतं सहचरितत्वस्य सम्बन्धभेदेनाननुगतत्वात् भूयस्त्वस्य द्वित्व-त्रित्वादिरूपत्वेनाननुगतत्वाच्च। न च सहचरितत्वं विशेषणताविशेषसम्बन्धेन वक्तव्यं भूयस्त्वन्तु त्रित्वमिति वाच्यं। समवायादिसम्बन्धेन तत्कोटिसहचारतभूयोधर्माणां ज्ञानकाले संशयस्य उत्कटकोटित्वानुपपत्तेः, यत्र धर्म्मिण्येकधर्म्मसहचरितधर्म्मद्वयज्ञानकाले संशयस्य उत्कटकोटित्वानुपपत्तेः, यत्र धर्म्मिण्येकधर्म्मसहचरितधर्म्मद्वयवत्ताज्ञानमन्यधर्म्मसहचरितैकधर्म्मवत्त्वज्ञानम्। तत्रोत्कटत्वानुत्कटत्वानुपपत्तेश्च यत्रैकधर्म्मसहचरितधर्म्मपञ्चकज्ञानमन्यधर्म्मसहचरिततादृशधर्मवत्त्वज्ञानं तत्रोभयांशे उत्कटत्वापत्तेश्च। अपि च यद्विशेषयोरिति व्याप्त्या ज्ञानत्वादिनैव हेतुता सिद्ध्यतु न

1. उत्कटत्वस्य जातित्वे जातेरांशिकत्वाभावेन उत्कटत्वस्यापि आंशिकत्वं न स्यादिति भावः।
2. 'तत्त्वस्य' भ्रमत्वस्य. तदभाववद्विशेष्यक-तत्प्रकारकज्ञानत्वरूपभ्रमत्वस्य विषयविशेषघटितत्वेन विषयभेदेन भिन्नत्वादितिभावः।
3. यद्विशेषयोः कार्य्य-कारणभावः तत्सामान्ययोरपीति न्यायेनेत्यर्थः।

माथुरी

तु धर्म्मिज्ञानत्वेन गौरवात्। अत एव समानधर्मवद्धर्म्मिज्ञानमवश्यं संशयहेतुरन्यथा अगृह्यमाणसमानधर्मवद्धर्म्मिण्यपि संशयापत्तेः, तथा च यद्विशेषयोरिति व्याप्त्या आरोपमात्र एव धर्म्मिज्ञानं हेतुः। न च संशयत्वमर्थसमाजग्रस्ततया कुतो जन्यतावच्छेदकमिति वाच्यं। तादृशधर्म्मिज्ञानं विना संशयस्यानुत्पादनियमेन अर्थसमाजग्रस्तत्वस्यैवासिद्धेरिति कस्यचित् प्रलपितमप्यपास्तम्। तादृग्व्याप्त्या ज्ञानत्वादिना हेतुत्वसिद्धेरेवोचितत्वात् असति प्रतिबन्धके साधारणधर्मवत्ताधीविलम्वेन संशयविलम्वासिद्धेश्च। क्वचित्तु कोटिस्मारकतया साधारणधर्मज्ञानोपयोगात्। अथ धर्म्मितावच्छेदकप्रकारकनिश्चयस्याहेतुत्वे दण्ड-दण्डत्वादिनिर्विकल्पकानन्तरमपि दण्डो गुणो न वा दण्डो गुण इत्यादिसंशय-विपर्य्ययोरुत्पत्त्यापत्तिः दण्डी रक्तो न वेति संशयानन्तरमपि रक्तदण्डो द्रव्यं न वा रक्तदण्डो द्रव्यं नेत्यादि-संशय-विपर्य्ययोरुत्पत्त्यापत्तिश्च। किञ्च धर्म्मितावच्छेदकप्रकारकधर्मिनिश्चयस्याहेतुत्वे घटो न वेत्यादिनिर्द्धर्मितावच्छेदककोपि संशयः स्यात्। न च धर्मितावच्छेदकप्रकारकधर्मिनिश्चयस्य तत्तद्धर्मितावच्छेदकक-तत्तद्धर्मिकसंशयं प्रत्येव हेतुतया तवाप्येष दोषो दुर्व्वार इति वाच्यम्। तत्तद्धर्मितावच्छेदकक-तत्तद्धर्मिकसंशयातिरिक्तसंशयस्यालीकतया तत्तद्धर्मितावच्छेदकप्रकारकनिश्चयविरहादेव निर्द्धर्मितावच्छेदककसंशयानुत्पत्तेरिति चेत्। न। दण्डो गुणः रक्तदण्डो द्रव्यं नेत्यादिविपर्य्ययस्य विशिष्टाधिकरणकवैशिष्ट्यबुद्धिरूपतया विशेष्यतावच्छेदकप्रकारकविशेष्यनिश्चयरूपविशिष्टाधिकरणकवैशिष्ट्यबुद्धिसामग्रीविरहादेव निर्विकल्पकादितस्तादृशविपर्य्ययानुत्पत्तेः। एकत्र द्वयमिति न्यायेन तादृशविपर्य्यये चेष्टापत्तेः। अन्यथा एकत्र द्वयमितिन्यायेन तादृशभ्रमप्रसङ्गस्य तवापि दुर्व्वारत्वात्। निर्धर्मितावच्छेदककसंशयानभ्युपगमेपि निर्द्धर्मितावच्छेदककविपर्य्ययाभ्युपगमात्। एवं दण्डो गुणो न वा रक्तदण्डो द्रव्यं न वेत्यादिसंशयस्यापि विशिष्टाधिकरणकवैशिष्ट्यबुद्धिरूपतया विशेष्यतावच्छेदकप्रकारकनिश्चयरूपविशिष्टाधिकरणकवैशिष्ट्यबुद्धिसामान्यसामग्रीविरहादेव निर्व्विकल्पकादितोऽनुपपत्तिः। अत एव निर्व्विकल्पकादित एकत्र द्वयमिति न्यायेन तादृशसंशयो घटो न वेत्यादिनिर्द्धर्मितावच्छेदककसंशयोऽपि च नापादयितुं शक्यते, तत्तद्धर्मितावच्छेदकविशिष्टतत्तद्धर्माधिकरणकवैशिष्ट्यबुद्धिभिन्नस्य संशयस्यालीकतया तत्तद्धर्मितावच्छेदकप्रकारकतत्तद्धर्मिनिश्चयरूपविशिष्टाधिकरणकवैशिष्ट्यबुद्धिसामान्यसामग्रीविरहादेव तदसम्भवात्तस्माद्धर्मितावच्छेदकप्रकारकधर्मिनिश्चयस्य पृथक् संशयादिहेतुत्वे मानाभावः।

वस्तुतस्तु धर्म्मितावच्छेदकप्रकारकधर्म्मिनिश्चयस्य पृथक् संशयाद्यहेतुत्वेऽपि संशयस्य विशिष्टाधिकरणकवैशिष्ट्यबुद्धिरूपतया नियमेन विशिष्टाधिकरणकवैशिष्ट्यबुद्धिसामान्यसामग्रीमर्य्यादयैव धर्म्मितावच्छेदकप्रकारकधर्म्मिज्ञानस्य हेतुत्वमवर्जनीयमित्येव तत्त्वम्।

**साक्षात्कारिविशेषदर्शनं विरोधि साक्षात्कारिभ्रमे साक्षात्कार्येव निश्चयः प्रतिबन्धकः न त्वानुमादिकादिः। संशये तु निश्चयसामान्यम्, अनुमानादिना तन्निश्चये कदाचिदपि तस्यानुत्पादाद्दिङ्मोहादौ तथादर्शनात्। तच्च न, पित्तादिना प्रतिबन्धात्। न च जात्यैव कश्चिद्दोषोऽस्ति।**

माथुरी

'विशेषदर्शनेऽपीति शङ्खो न पीतः नादर्शे मुखमित्याद्यानुमानिकादिविपरीतनिश्चयेऽपीत्यर्थः, 'दोषान्तरादिति दोषविशेषादित्यर्थः, दोषविशेषाजन्यतद्विशिष्टबुद्धेरेव तद्विपरीतनिश्चयप्रतिबध्यत्वादिति भावः। 'दोषान्तरात्तत्संशय इति दोषविशेषजन्यप्रामाण्यसंशय इत्यर्थः, 'तद्वदेवेति'[1] प्रवृत्तिपदं व्यवहारपरम्, तथा च तत्र यथा पीतत्वादिभ्रमेऽपि पुर्व्वोत्पन्नपीतत्वाद्यभावानुमित्या पीतत्वाद्यभावप्रकारकव्यवहारस्तथाऽत्रापि प्रामाण्यसंशयोत्तरं प्रामाण्यनिश्चयाधीनः प्रमाव्यवहारः स्यादित्यर्थः। प्रवृत्तिपदन्तु यथाश्रुतं न सङ्गच्छते प्रकृते पूर्व्वोत्पन्नप्रामाण्यनिश्चयस्य प्रत्यक्षरूपतया प्रमागोचरप्रवृत्तिजनकत्वसम्भवेऽपि दृष्टान्तासङ्गतेः आनुमानिकपीतत्वाद्यभावज्ञानस्य सिद्धशङ्खादिगोचरप्रवृत्तिजनकत्वासम्भवात्। तादृशव्यवहारे कदाचिदिष्टापत्तेः सम्भवाद्दोषान्तरमाह, 'साक्षात्कारिभ्रमे चेति', दोषविशेषजन्याजन्यसाधारणतदिन्द्रियजन्यसाक्षात्कारिभ्रममात्रे चेत्यर्थः, 'भ्रमे'ति प्रकृताभिप्रायं विशिष्टसाक्षात्कारमात्रे इति बोध्यम्, 'साक्षात्कारिविशेषदर्शनमि'ति तदिन्द्रियजन्यलौकिकविपरीतनिश्चय इत्यर्थः, लौकिकप्रत्यक्षं प्रति विपरीतनिश्चयस्य प्रतिबध्यप्रतिबन्धकभावे दोषविशेषाजन्यत्वस्य प्रतिबध्यतावच्छेदकदिशि प्रवेशे प्रयोजनविरहाद् गौरवाच्चेति भावः। नन्वेवं दिङ्मोहादावपि तदिन्द्रियजन्यलौकिकविपरीतनिश्चयस्य प्रतिबन्धकत्वापत्तिः, लौकिकप्रत्यक्षं प्रति विपरीतनिश्चयस्य प्रतिबध्यप्रतिबन्धकभावे प्रतिबध्यतावच्छेदकदिशि लौकिकत्वस्य वैयर्थ्येनानुपादेयत्वात् उपनीतभानं प्रत्यपि अधिकन्त्विति न्यायेन समानेन्द्रियजन्यविपरीतनिश्चयस्यापि प्रतिबन्धकत्वादित्यत आह, 'दिङ्मोहादावि'ति, 'तथा अदर्शनादित्यकारप्रश्लेषः तदिन्द्रियजन्यलौकिकविपरीतनिश्चयस्यैवाप्रसिद्धत्वादित्यर्थः।

नन्वेवं शङ्खो न पीतः अयं नोरग इत्यादिलौकिकचाक्षुषविपरीतनिश्चयोत्तरं शङ्खः पीतः, अयमुरग इत्यादिदोषविशेषजन्यचाक्षुषभ्रमः कथं स्यात्, दोषविशेषाजन्यत्वस्य प्रतिबध्यतावच्छेदकेऽप्रवेशादित्यत आह, 'तच्चेति शङ्खो न पीतः, अयं नोरग इत्यादिलौकिकचाक्षुषविपरीततद्दर्शनञ्चेत्यर्थः, शङ्खः पीतः अयमुरग इत्यादिचाक्षुषभ्रमस्थल इति शेषः। 'पित्तादिना प्रतिबन्धादिति पित्तादेर्दोषविशेषस्य

१. 'तद्वदत्रापीति ख० पुस्तकपाठदर्शनेन क्वचिन्मूलपुस्तके एतादृश एव पाठो वर्त्तत इत्यनुमीयते।

माथुरी

कार्य्यसहभावेन प्रतिबन्धकत्वादित्यर्थः, तेन[१] दोषविशेषोत्पत्तिकालेऽपि न लौकिकचाक्षुषविपरीतदर्शनोत्पत्तिसम्भवः। तथा च दोषविशेषजन्यभ्रमस्थले समानेन्द्रियजन्यलौकिकविपरीतनिश्चय एव न सम्भवति किमर्थं प्रतिबध्यतावच्छेदके दोषविशेषाजन्यत्वमुपादेयमिति भावः।

ननु तथापि यत्र चक्षुषा शङ्खो न पीतः, अयं नोरगः, स्फटिको न रक्त इत्यादिलौकिकविपरीतनिश्चयोत्तरं पित्त-मण्डूकवसाञ्जन-यवाकुसुमसान्निध्याद्यात्मकदोषविशेषोत्पत्तिस्तत्र तदग्रिमक्षणे शङ्खः पीतः, अयमुरगः, रक्तः स्फटिक इत्यादिदोषविशेषजन्यचाक्षुषभ्रमोदयात् लौकिकप्रत्यक्षं प्रति विपरीतनिश्चयस्य प्रतिबध्यप्रतिबन्धकभावेऽपि दोषविशेषाजन्यत्वमवश्यं प्रतिबध्यतावच्छेदकप्रवेशनीयमिति चेत्। न। तत्र फलबलात् क्षणैकविलम्बेनैव दोषविशेषोत्पत्तिकल्पनात् क्षणैकविलम्बाभावस्य शपथनिर्णेयत्वात्। न च शङ्खो न पीत इत्यादिलौकिकप्रत्यक्षं प्रत्यनन्तदोषविशेषाणां प्रतिबन्धकत्वकल्पनामपेक्ष्य दोषविशेषाजन्यत्वस्य प्रतिबध्यतावच्छेदके प्रवेश एव लघीयानिति वाच्यम्। पीतः शङ्ख इत्यादिभ्रमोत्पत्तिकाले निर्द्धर्म्मितावच्छेदककपीतत्वाभावादिलौकिकप्रत्यक्षस्याप्रामाण्यज्ञानास्कन्दितपीतत्वभ्रमोत्पत्तिकाले तदुत्तरकाले वा सधर्म्मितावच्छेदककपीतत्वाभावादिलौकिकप्रत्यक्षस्य च वारणाय तवापि दोषविशेषाणां प्रतिबन्धकत्वावश्यकत्वात्, दोषविशेषाजन्यत्वस्य भेदकूटरूपतया विशेषण-विशेष्यभावे विनिगमकाभावेन तव गुरुतरानन्तप्रतिबध्य-प्रतिबन्धकभावप्रसङ्गाच्च[२]। किञ्च दोषविशेषविरहस्थले विपरीतनिश्चयसत्त्वे दोषविशेषाजन्यविशिष्टप्रत्यक्षानुत्पादेऽपि दोषविशेषजन्यविशिष्टप्रत्यक्षवारणाय दोषविशेषाणामपि तादृशप्रत्यक्षं प्रति विशिष्य हेतुत्वं वाच्यमिति महद्गौरवम्। न च दोषविशेषाजन्यत्वं प्रतिबध्यतावच्छेदके न प्रवेशनीयमपि तु तेषामुत्तेजकत्वमिति वाच्यम्। तथापि विशेष्य-विशेषणभावभेदेन गुरुतरानन्तप्रतिबध्य-प्रतिबन्धकभावस्य दुर्व्वारत्वादिति निगर्व्वः।

ननु यत्रायं नोरग इत्याद्यपेक्षाबुद्ध्यात्मकालौकिकविपरीतनिश्चयानन्तरं मण्डूकवसाञ्जनाद्यात्मकदोषोत्पत्तिस्तत्र तदग्रिमक्षणे अयमुरग इत्यादिदोषविशेषजन्यभ्रमोत्पत्तये दोषविशेषाजन्यत्वस्य प्रतिबध्यतावच्छेदकत्वं दोषविशेषानामुत्तेजकत्वं वा अवश्यं वक्तव्यं तत्र क्षणविलम्बेत दोषोत्पादाभ्युपगमेऽपि भ्रमोत्पादनासम्भवात् तत्रापि चतुर्थक्षणे दोषोत्पादाभ्युपगमे च क्षणद्वयापलापप्रसङ्गात्। किञ्च भट्टमते प्रामाण्य-

१. दोषविशेषस्य कार्य्यसहभावेन प्रतिबन्धकत्वकल्पनेनेत्यर्थः।

२. दोषत्वस्यानुगतस्यैकस्याभावात् तत्तत्दोषजन्यं यद् यत् तत्तद् भेदकूटस्य दोषविशेषाजन्यत्वपदेन विवक्षणीयतया भेदकूटानां विशेषणविशेष्यभावे विनिगमकाभावेन अनन्तप्रतिबध्य-प्रतिबन्धकभावप्रसङ्ग इति भावः।

माथुरी

निश्चयस्यानुमितिरूपतया तत्सत्त्वेपि दोषविशेषजन्यप्रामाण्यसंशयोत्पत्तौ बाधकाभावः। लौकिकप्रत्यक्षनिश्चयान्यतद्विशिष्टबुद्धौ तद्विपरीतनिश्चयसामान्यस्य प्रतिबध्य-प्रतिबन्धकभावे प्रतिबध्यतावच्छेदककोटौ दोषविशेषाजन्यत्वस्य दोषविशेषाणामुत्तेजकत्वस्य वा आवश्यकत्वात्, अन्यथा आनुमानिकादिविपरीतनिश्चयसत्त्वे दोषविशेषजन्यदिङ्मोहाद्युपनीतभानानुपपत्तेः दोषविशेषस्यानुमानिकादिज्ञानप्रतिबन्धकत्वाभावादित्यरुचेराह, 'न चेति न वेत्यर्थः, जात्यैवेति विशेषणे तृतीया, न वा उभयवादिसिद्धदोषविशेषजन्यप्रामाण्यसंशयस्थलीयदोषसाधारणदोषत्वरूपानुगतैकजातिविशिष्टः प्रकृते कश्चिद्दोषोऽस्तीत्यर्थः। तथा च दोषत्वस्यानुगतस्यैकस्याभावात् प्रकृते प्रामाण्यसंशयस्थलीयतत्तत्क्षणसम्बन्धादिकं दोषत्वेनाभ्युपेत्य प्रतिबध्यतावच्छेदके तत्तदजन्यत्वस्य तेषामुत्तेजकत्वस्य वाभ्युपगमे महद्गौरवम्। न च संशयान्यथानुपपत्त्या प्रामाणिकं गौरवं न दोषायेति वाच्यम्। अनुव्यवसायादेः प्रामाण्याग्राहकत्वकल्पनयैव प्रामाण्यसंशयसम्भवात्। न च सामग्रीसत्त्वात्तदवश्यम्भावः, तस्याग्रे निरसनीयत्वादिति भावः।

साम्प्रदायिकास्तु प्रत्यक्षनिश्चये च समानेन्द्रियजन्यप्रत्यक्षरूपस्यैव विपरीतनिश्चयस्य प्रतिबन्धकत्वनियमेन तद्विरहाच्छङ्खो न पीत इत्याद्यानुमानिकादिविपरीतनिश्चयसत्त्वेऽपि पीतः शङ्खो इत्यादिभ्रमः, न तु दोषविशेषाजन्यत्वमपि प्रतिबध्यतावच्छेदकम्, प्रकृते च न तथा सुवचं प्रत्यक्षनिश्चयं प्रत्येव तथा नियमात् गुरु-मिश्रयोर्मते तदिन्द्रियजन्यप्रामाण्यनिश्चयस्यैव सत्त्वाच्चेत्यभिप्रेत्य दूषणान्तरमाह, 'साक्षात्कारिभ्रमे' चे'ति प्रत्यक्षनिश्चये चेत्यर्थः। 'साक्षात्कारिविशेषदर्शनमि'ति समानेन्द्रियजन्यप्रत्यक्षरूप एव विपरीतनिश्चयो विरोधीत्यर्थः। 'दिङ्मोहादावि'ति दोषविशेषजन्ये इयं दिक् प्राचीत्यादिदिगभ्रमादौ इयं दिक् न प्राचीत्याद्यानुमानिकादिविपरीतनिश्चयस्य प्रतिबन्धकत्वाभावदर्शनादित्यर्थः।

यद्वा तथादर्शनादित्यकारप्रश्लेषादियं दिक् न प्राचीत्याद्यनुमानिकादिज्ञानस्य प्रतिबन्धकत्वादर्शनादित्यर्थः। 'तच्चेति साक्षात्कारिविपरीतदर्शनञ्चेत्यर्थः, शङ्खः पीत इत्यादिभ्रमस्थल इति शेषः। तथा च दोषविशेषाजन्यत्वं विपरीतनिश्चयप्रतिबध्यतावच्छेदके कथं प्रवेशनीयमिति भावः[1]। ननु यथा सत्यपीन्द्रियसन्निकर्षादौ दोषान्न पीतत्वाभावग्रहस्तथा सत्यपि व्यवसायादौ दोषान्न प्रामाण्यनिश्चय इत्यत आह, 'न चे'ति न हीत्यर्थः, 'जात्येति विशेषणे तृतीया, 'कश्चित्' कियान्, न हि प्रामाण्यनिश्चयप्रतिबन्धकतावच्छेदकदोषत्वरूपानुगतजातिमान् कियान् दोषोऽस्तीत्यर्थः। तथा च दोषत्वस्यैकस्यानुगतस्य प्रतिबन्धकतावच्छेदकस्याभावात् प्रामाण्यसंशयस्थलीयतत्तत्क्षणसम्बन्धादीनां विशिष्य प्रतिबन्धकत्वाभिधाने महद्गौरवमिति भावः इति यथाश्रुतग्रन्थं योजयन्ति। तदसत्। इदं रजतं सुरभि चन्दनमित्यादिदोषविशेषाजन्यो-

१. तत्त्वमिति ख०।

माथुरी

पनीतभाने आनुमानिकादिविपरीतनिश्चयस्य भिन्नेन्द्रियजन्यविपरीतनिश्चयस्य च प्रतिबन्धकताया अनुभवसिद्धत्वेन यथोक्तनियमस्य व्यभिचारात् साक्षात्कारिभ्रमपदस्य लौकिकसाक्षात्कारनिश्चयपरत्वे दिग्भ्रमादावित्यसङ्गतेः लौकिकप्रत्यक्षनिश्चये तथा नियमेऽपि दिग्भ्रमादौ व्यभिचारवारणाय लौकिकप्रत्यक्षनिश्चयान्यतद्विशिष्टबुद्धौ तदभावनिश्चयसामान्यस्य प्रतिबध्य-प्रतिबन्धकभावे दोषविशेषाजन्यत्वस्य प्रतिबध्यतावच्छेदकत्वावश्यकतया प्रामाण्यनिश्चयसत्त्वेऽपि दोषविशेषात् प्रामाण्यसंशये बाधकाभावाच्च।

केचित्तु इदं रजतं सुरभि चन्दनमित्याद्युपनीतप्रत्यक्षे उक्तनियमो व्यभिचारीत्यस्वरसादाह, 'न च जात्यैवेति, 'न चेत्यस्य नवेत्यर्थः, शेषं पूर्ववदित्याहुः।

उच्छृङ्खलास्तु साक्षात्कारत्वनिरूपितविषयताशालिप्रत्यक्षे समानेन्द्रियजन्यलौकिकप्रत्यक्षरूपस्यैव विपरीतनिश्चयस्य प्रतिबन्धकतया तद्विरहाच्छङ्खो न पीत इत्याद्यानुमानिकाविपरीतनिश्चयेऽपि पीतः शङ्ख इत्यादिलौकिकभ्रमः सम्भवति, प्रकृते च न तथा, लौकिकप्रत्यक्षनिश्चयं प्रत्येव तथा नियमात् गुरु-मिश्रयोर्म्मते तदिन्द्रियजन्यप्रामाण्यनिश्चयस्यैत्र सत्त्वाच्चेत्थभिप्रेत्य दूषणान्तरमाह, 'साक्षात्-कारिभ्रमे चे'ति, साक्षात्कारत्वनिरूपितविषयिताशालिनिश्चये चेत्यर्थः। 'साक्षात्कारिविशेषदर्शनमिति समानेन्द्रियजन्यलौकिकप्रत्यक्षरूप एव विपरीतनिश्चयो विरोधीत्यर्थः। सुरभि चन्दनमित्यादिदोषविशेषाजन्योपनीतभानं प्रत्यानुमानिकादिविपरीतनिश्चयस्य भिन्नेन्द्रियजन्यविपरीतनिश्चयस्य च प्रतिबन्धकताया अनुभवसिद्धत्वात् प्रतिबध्यदिशि विषयिताविशेषप्रवेशः, संशये व्यभिचारवारणाय प्रतिबध्यदिशि निश्चयत्वप्रवेशः, तच्च नियम एव प्रवेश्यते न तु प्रतिबध्यतावच्छेदकेऽपि, संशयं प्रत्यपि समानेन्द्रियजन्यलौकिकविपरीतनिश्चयस्य विरोधित्वेन व्यर्थत्वादर्थसमाजग्रस्तत्वाच्च। विषयिताविशेषोपि नियम एव प्रविष्टः न तु प्रतिबध्यतावच्छेदकेऽपि तत्प्रवेशः व्यर्थत्वात् प्रत्यक्षत्वमात्रस्यैव सम्यक्त्वादिति ध्येयम्। 'दिङ्मोहादाविति' दोषविशेषजन्ये इयं दिक्प्राचीत्यादिभ्रमादावित्यर्थः, आदिपदात् मण्डूकवसाञ्जनादिदोषविशेषजन्य-वंशे उरगत्वादिभ्रमपरिग्रहः। 'तथा दर्शनादि'ति इयं दिक् न प्राची, अयं नोरग इत्याद्यानुमानिकादिविपरीतनिश्चयस्य प्रतिबन्धकत्वाभावदर्शनादित्यर्थः। यद्वा तथाऽदर्शनादित्यकारप्रश्लेषादियं दिक् न प्राचीत्याद्यानुमानिकादिज्ञानस्य प्रतिबन्धकत्वादर्शनादित्यर्थः। तथा च दोषविशेषाजन्यत्वं विपरीतनिश्चयप्रतिबध्यतावच्छेदके न विशेषणीयमिति भावः। यद्यपि चक्षुषा समं गोलकस्थपित्तद्रव्यमपि वहिरागच्छतीति सिद्धान्तात् स्वच्छद्रव्याभिघातेन चक्षुषो विपरीतक्रियया मुखादिसम्बन्ध इति सिद्धान्ताच्च पीतः शङ्खः, आदर्शे मुखमित्यादिभ्रमस्य तादृशविषयितासम्भवेऽपि दोष-

आलोकः

**वस्तुतस्तु ज्ञानेच्छयोर्नैकं प्रामाण्यं तन्मते सिद्धासिद्धभेदेन तयोर्विषयभेदात्। तथा च ज्ञानाविशेषितस्य तद्वतीत्यादेः सामान्यत इच्छासाधारणस्य पक्षत्वे तदा-**

दर्पणः

ज्ञानेच्छयोरुभयोरपि प्रामाण्यमगृहीतं तन्निष्ठप्रामाण्ये त्वाश्रयग्राहकासत्त्वेन बाधो यत इत्यर्थः। न च तत्र ज्ञानेच्छाग्राहकप्रसरे तेन प्रामाण्यस्य ग्रहणान्न बाधः। तदप्रसरे किमीयप्रामाण्ये अंशतो बाध इति वाच्यम्। सामान्यतस्तद्ग्राहकप्रसरेऽप्यग्रे निर्वाच्यस्य प्रामाण्यग्रहोपयोगिग्राहकविशेषस्याभावादिति न। च ज्ञानपदे दत्तेऽपि कथं तद्वारणमिति वाच्यम्, ज्ञानपदस्य ज्ञायमानार्थकत्वात्।

केचित्तु यदेच्छाग्राहकेण तत्प्रामाण्यग्रहस्तदा साध्ये ज्ञानपदं देयम्। तेन यावत्-स्वाश्रयीभूतज्ञानग्राहकग्राह्यत्वं साध्यं पर्यवस्यतीति। तथा च यत्र ज्ञाने प्रामाण्यग्रहो न जातस्तत्समानविषकेच्छाप्रामाण्यस्य ग्रहो जातस्तत्रेच्छाप्रामाण्ये बाधवारणार्थं पक्षे ज्ञानपदं तच्च ज्ञानविशेषपरम्। तेन ग्राहकविशेषेण गृह्यमाणप्रामाण्यकस्य ज्ञानस्य प्रामाण्यं पक्षे लभ्यते। तथापीत्यपिशब्दश्चकारार्थं इति व्याचक्षते।

इह केचिदाहुः—अत्र ज्ञानपदे दत्तेऽपि तद्वारणासम्भवात्। तत्रेच्छावृत्तिप्रामाण्यस्य ज्ञानेऽपि वृत्तेः। अगृहीतधीप्रामाण्ये अंशतो बाधवारणाय पक्षसंकोचस्यावश्य-

माथुरी

विशेषजन्यदिग्भ्रम-वंशोरगत्वभ्रमादेरुपनीभानतया तादृशविषयित्वाभावादिदमसङ्गतम्, अत एव तत्रैव व्यभिचारवारणाय लौकिकप्रत्यक्षनिश्चयान्यतद्विविशिष्टबुद्धौ तद्विपरीतनिश्चयसामान्यस्य प्रतिबध्य-प्रतिबन्धकभावे दोषविशेषाजन्यत्वमपि प्रतिबध्यतावच्छेदके आवश्यकम् तथापि लौकिकत्वरूपविषयिताविशेषस्य व्यापकीभूतदिगुरगज्ञानसाधारणसाक्षात्कारत्वनिरूपितविषयिताविशेषो लौकिकप्रत्यक्ष इव दोषविशेषजन्योपनीतभानेऽप्यस्ति, प्राचीत्वं साक्षात्करोमि उरगत्वं साक्षात्करोमीत्याद्यनुभवाद्विपरीतनिश्चयसामान्यप्रतिबध्यतावच्छेदकेऽपि तादृशविषयिताविशेषशालिप्रत्यक्षनिश्चयान्यत्वमेव घटकम् न तु लौकिकप्रत्यक्षनिश्चयान्यत्वम्, तेन तत्र दोषविशेषजन्यप्रत्यक्षस्य न संग्रहः। लौकिकसन्निकर्षजन्यतावच्छेदकस्तु इदं पश्यामीत्याद्यनुभवसिद्धस्तद्व्याप्योभूतो लौकिकत्वरूपविषयिताविशेषः तेन दोषविशेषजन्योपनीतभाने लौकिकसन्निकर्षस्य न व्यभिचारः। न चेदं रजतमित्यादिदोषविशेषाजन्योपनीतभ्रमेऽपि रजतत्वं साक्षात्करोमीत्याद्यनुव्यवसायसत्त्वेन तादृशविषयितासत्त्वात्तत्राप्यानुमानिकादिविपरीतनिश्चयस्याप्रतिबन्धकत्वापत्तिरिति वाच्यम्। तत्र रजतत्वं पश्यामीत्यनुव्यवसायस्य लौकिकविषयत्वांशे भ्रमत्वमत्र रजतत्वं साक्षात्कारोमीत्यनुव्यवसाय-

माथुरी

पनीतभाने आनुमानिकादिविपरीतनिश्चयस्य भिन्नेन्द्रियजन्यविपरीतनिश्चयस्य च प्रतिबन्धकताया अनुभवसिद्धत्वेन यथोक्तनियमस्य व्यभिचारात् साक्षात्कारिभ्रमपदस्य लौकिकसाक्षात्कारनिश्चयपरत्वे दिग्भ्रमादावित्यसङ्गतेः लौकिकप्रत्यक्षनिश्चये तथा नियमेऽपि दिग्भ्रमादौ व्यभिचारवारणाय लौकिकप्रत्यक्षनिश्चयान्यतद्विशिष्टबुद्धौ तदभावनिश्चयसामान्यस्य प्रतिबध्य-प्रतिबन्धकभावे दोषविशेषाजन्यत्वस्य प्रतिबध्यतावच्छेदकत्वावश्यकतया प्रामाण्यनिश्चयसत्त्वेऽपि दोषविशेषात् प्रामाण्यसंशये बाधकाभावाच्च।

केचित्तु इदं रजतं सुरभि चन्दनमित्याद्युपनीतप्रत्यक्षे उक्तनियमो व्यभिचारीत्यस्वरसादाह, 'न च जात्यैवेति, 'न चेत्यस्य नवेत्यर्थः, शेषं पूर्ववदित्याहुः।

उच्छृङ्खलास्तु साक्षात्कारत्वनिरूपितविषयताशालिप्रत्यक्षे समानेन्द्रियजन्यलौकिकप्रत्यक्षरूपस्यैव विपरीतनिश्चयस्य प्रतिबन्धकतया तद्विरहाच्छङ्खो न पीत इत्याद्यानुमानिकाविपरीतनिश्चयेऽपि पीतः शङ्ख इत्यादिलौकिकभ्रमः सम्भवति, प्रकृते च न तथा, लौकिकप्रत्यक्षनिश्चयं प्रत्येव तथा नियमात् गुरु-मिश्रयोर्म्मते तदिन्द्रियजन्यप्रामाण्यनिश्चयस्यैव सत्त्वाच्चेत्यभिप्रेत्य दूषणान्तरमाह, 'साक्षात्-कारिभ्रमे चे'ति, साक्षात्कारत्वनिरूपितविषयिताशालिनिश्चये चेत्यर्थः। 'साक्षात्कारिविशेषदर्शनमिति समानेन्द्रियजन्यलौकिकप्रत्यक्षरूप एव विपरीतनिश्चयो विरोधीत्यर्थः। सुरभि चन्दनमित्यादिदोषविशेषाजन्योपनीतभानं प्रत्यानुमानिकादिविपरीतनिश्चयस्य भिन्नेन्द्रियजन्यविपरीतनिश्चयस्य च प्रतिबन्धकताया अनुभवसिद्धत्वात् प्रतिबध्यदिशि विषयिताविशेषप्रवेशः, संशये व्यभिचारवारणाय प्रतिबध्यदिशि निश्चयत्वप्रवेशः, तच्च नियम एव प्रवेश्यते न तु प्रतिबध्यतावच्छेदकेऽपि, संशयं प्रत्यपि समानेन्द्रियजन्यलौकिकविपरीतनिश्चयस्य विरोधित्वेन व्यर्थत्वादर्थसमाजग्रस्तत्वाच्च। विषयिताविशेषोपि नियम एव प्रविष्टः न तु प्रतिबध्यतावच्छेदकेऽपि तत्प्रवेशः व्यर्थत्वात् प्रत्यक्षत्वमात्रस्यैव सम्यक्त्वादिति ध्येयम्। 'दिङ्मोहादावि ति' दोषविशेषजन्ये इयं दिक्प्राचीत्यादिभ्रमादावित्यर्थः, आदिपदात् मण्डूकवसाञ्जनादिदोषविशेषजन्य-वंशे उरगत्वादिभ्रमपरिग्रहः। 'तथा दर्शनादि'ति इयं दिक् न प्राची, अयं नोरग इत्याद्यानुमानिकादिविपरीतनिश्चयस्य प्रतिबन्धकत्वाभावदर्शनादित्यर्थः। यद्वा तथाऽदर्शनादित्यकारप्रश्लेषादियं दिक् न प्राचीत्याद्यानुमानिकादिज्ञानस्य प्रतिबन्धकत्वादर्शनादित्यर्थः। तथा च दोषविशेषाजन्यत्वं विपरीतनिश्चयप्रतिबध्यतावच्छेदके न विशेषणीयमिति भावः। यद्यपि चक्षुषा समं गोलकस्थपित्तद्रव्यमपि वहिरागच्छतीति सिद्धान्तात् स्वच्छद्रव्याभिघातेन चक्षुषो विपरीतक्रियया मुखादिसम्बन्ध इति सिद्धान्ताच्च पीतः शङ्खः, आदर्शे मुखमित्यादिभ्रमस्य तादृशविषयितासम्भवेऽपि दोष-

आलोकः

**वस्तुतस्तु ज्ञानेच्छयोर्नैकं प्रामाण्यं तन्मते सिद्धासिद्धभेदेन तयोर्विषयभेदात्। तथा च ज्ञानाविशेषितस्य तद्वतीत्यादेः सामान्यत इच्छासाधारणस्य पक्षत्वे तदा-**

दर्पणः

ज्ञानेच्छयोरुभयोरपि प्रामाण्यमगृहीतं तन्निष्ठप्रामाण्ये त्वाश्रयग्राहकासत्त्वेन बाधो यत इत्यर्थः। न च तत्र ज्ञानेच्छाग्राहकप्रसरे तेन प्रामाण्यस्य ग्रहणान्न बाधः। तदप्रसरे किमीयप्रामाण्ये अंशतो बाध इति वाच्यम्। सामान्यतस्तद्ग्राहकप्रसरेऽप्यग्रे निर्वाच्यस्य प्रामाण्यग्रहोपयोगिग्राहकविशेषस्याभावादिति न। च ज्ञानपदे दत्तेऽपि कथं तद्वारणमिति वाच्यम्, ज्ञानपदस्य ज्ञायमानार्थकत्वात्।

केचित्तु यदेच्छाग्राहकेण तत्प्रामाण्यग्रहस्तदा साध्ये ज्ञानपदं देयम्। तेन यावत्-स्वाश्रयीभूतज्ञानग्राहकग्राह्यत्वं साध्यं पर्यवस्यतीति। तथा च यत्र ज्ञाने प्रामाण्यग्रहो न जातस्तत्समानविषकेच्छाप्रामाण्यस्य ग्रहो जातस्तत्रेच्छाप्रामाण्ये बाधवारणार्थं पक्षे ज्ञानपदं तच्च ज्ञानविशेषपरम्। तेन ग्राहकविशेषेण गृह्यमाणप्रामाण्यकस्य ज्ञानस्य प्रामाण्यं पक्षे लभ्यते। तथापीत्यपिशब्दश्चकारार्थं इति व्याचक्षते।

इह केचिदाहुः—अत्र ज्ञानपदे दत्तेऽपि तद्वारणासम्भवात्। तत्रेच्छावृत्तिप्रामाण्यस्य ज्ञानेऽपि वृत्तेः। अगृहीतधीप्रामाण्ये अंशतो बाधवारणाय पक्षसंकोचस्यावश्य-

माथुरी

विशेषजन्यदिग्भ्रम-वंशोरगत्वभ्रमादेरुपनीतभानतया तादृशविषयित्वाभावादिदमसङ्गतम्, अत एव तत्रैव व्यभिचारवारणाय लौकिकप्रत्यक्षनिश्चयान्यतद्विविशिष्टबुद्धौ तद्विपरीतनिश्चयसामान्यस्य प्रतिबध्य-प्रतिबन्धकभावे दोषविशेषाजन्यत्वमपि प्रतिबध्यतावच्छेदके आवश्यकम् तथापि लौकिकत्वरूपविषयिताविशेषस्य व्यापकीभूतदिगुरगज्ञानसाधारणसाक्षात्कारत्वनिरूपितविषयिताविशेषो लौकिकप्रत्यक्ष इव दोषविशेषजन्योपनीतभानेऽप्यस्ति, प्राचीत्वं साक्षात्करोमि उरगत्वं साक्षात्करोमीत्याद्यनुभवात्तद्विपरीतनिश्चयसामान्यप्रतिबध्यतावच्छेदकेऽपि तादृशविषयिताविशेषशालिप्रत्यक्षनिश्चयान्यत्वमेव घटकम् न तु लौकिकप्रत्यक्षनिश्चयान्यत्वम्, तेन तत्र दोषविशेषजन्यप्रत्यक्षस्य न संग्रहः। लौकिकसन्निकर्षजन्यतावच्छेदकस्तु इदं पश्यामीत्याद्यनुभवसिद्धस्तद्व्याप्योभूतो लौकिकत्वरूपविषयिताविशेषः तेन दोषविशेषजन्योपनीतभाने लौकिकसन्निकर्षस्य न व्यभिचारः। न चेदं रजतमित्यादिदोषविशेषाजन्योपनीतभ्रमेऽपि रजतत्वं साक्षात्करोमीत्याद्यनुव्यवसायसत्त्वेन तादृशविषयितासत्त्वात्तत्राप्यानुमानिकादिविपरीतनिश्चयस्याप्रतिबन्धकत्वापत्तिरिति वाच्यम्। तत्र रजतत्वं पश्यामीत्यनुव्यवसायस्य लौकिकविषयत्वांशे भ्रमत्वमत्र रजतत्वं साक्षात्करोमीत्यनुव्यवसाय-

आलोकः

श्रयणेनाप्रसिद्धेरेव यावत्तदाश्रयज्ञानग्राहकग्राह्यत्वमंशतो बाधितमिति ज्ञानपदो॰पादानमितितत्त्वम्।

केचित्तु ज्ञानपदानुपादानेऽनुभवत्वगर्भप्रामाण्यप्राप्तौ स्मृतिव्यावृत्तपक्षलाभे स्मृतौ तन्मते परतो ग्राह्यप्रामाण्यभ्रमो मा भूदिति ज्ञानपदोपादानम्। तेन ज्ञानसामान्यप्रामाण्यं पक्षो लभ्यत इत्याहुः।

निगर्वस्तु प्रामाण्यपदं समर्थप्रवृत्तिजनकतावच्छेदकधर्मपरम्। तेन सर्वसाधारणपक्षलाभः। यावदित्यादिग्राह्यजातीयत्वञ्च साध्यम्। तेन नांशतो बाधः। अत एव करणनिष्ठतादृशधर्मे बाधवारणार्थमिति।

वस्तुतः प्रमापदप्रवृत्तिनिमित्तमेवोभयसिद्धं पक्षः। अत एवाधुनिकप्रमापदप्रवृत्तिनिमित्ते बाधात् ज्ञानपदमिति तत्त्वम्।

दर्पणः

कत्वाच्चेति। चिन्त्यमिति क्वचित् पुस्तके पाठः। यत्र नायं पाठस्तत्रेममेवास्वरसं दत्वा वस्तुत इति ग्रन्थ उत्थापनीय इति।

तन्न। ज्ञानपदस्य ज्ञायमानार्थकत्वात्। ग्राहकविशेषेण ज्ञायमानप्रामाण्यकज्ञानपरत्वाद्वा। किन्तु प्रथमे व्याख्याने उभयोरपि प्रामाण्यं यत्र न ज्ञायते तत्र कथं बाधनिरूपणम्। अधिकरणाज्ञानात्। न च सामान्यतो ज्ञायमाने तादृशप्रामाण्येऽग्रे निर्वाच्यस्य ग्राहकविशेषग्राह्यत्वस्याभावात् बाधप्रसक्तौ तद्वारणाय ज्ञानपदेन ग्राहकविशेषेण ज्ञायमानत्वं प्रामाण्यविशेषणं विवक्षितमिति वाच्यम्, तथापीच्छापर्यन्तधावनवैयर्थ्यात्। द्वितीये व्याख्याने साध्ये ज्ञानपदं दत्वा पक्षे ज्ञानपदं देयमिति सुतरां वैयर्थ्यमिति दूषणं द्रष्टव्यम्।

ज्ञानपदोपादानमिति। तथा च ज्ञानपदमहिम्ना इच्छाप्रामाण्यस्य पक्षत्वभ्रमो न भवतीति भावः। नन्विदं अयुक्तम्। एवं सति गन्धवत्त्वाद्युपाधेरप्यैक्यं न स्यात्। घटस्य गन्धस्य भेदात्। गन्धत्वेन प्रवेशादुपाधेरैक्यमिति यदि तदा घटत्वेन प्रवेशात्सिद्धासिद्धघटघटितस्याप्यैक्यमस्त्विति।

किञ्च नैयायिकमते ज्ञानेच्छयोः समानविशेष्यकत्वानेदं सङ्गतमित्यस्वरसात् कल्पान्तरमाह—केचित्त्विति।

ज्ञानसामान्येति। तद्वति तत्प्रकारकज्ञानत्वमित्यर्थः।

समर्थेति। समर्थवृत्तिप्रयोजकमात्रवृत्तिनिर्दोषेन्द्रियत्वादिकमित्यर्थः।

नांशतो बाध इति। विशेष्यावृत्त्यप्रकारकत्वादावपि तद्वति तत्प्रारकत्वजातीयत्वसत्त्वादित्यर्थः।

आलोकः

ननु धर्मिण उभयत्वादिविसिद्धस्यैव पक्षत्वम्। न चेह धर्म्युभयसिद्धः। प्रकारगर्भत्वात् प्रामाण्यस्य, तस्य च भासमानवैशिष्ट्यप्रतियोगित्वरूपत्वात्। न च परमतेऽपि विशिष्टधियो वैशिष्ट्यं विषयः। अगृहीतासंसर्गकधर्मधर्मिविषयकैकधियस्तथात्वादिति।

मैवम्। न हि तत्रापि धर्मधर्मिपदं वास्तवतत्परम्, व्यवच्छेद्यसमूहालम्बनाद्यवच्छेदस्य वक्ष्यमाणत्वात्, किन्त्वस्मन्मतसिद्धप्रतियोगित्वानुयोगित्वरूपस्वरूपसम्बन्धविशेषरूपधर्मत्वादिपरम्। तन्मतेऽपि विशिष्टधियो विशेषणत्वविशेष्यत्वात्मकस्वरूपसम्बन्धविशेषविषयत्वात्। तथा च तत्प्रकारकत्वं तद्धर्मत्वगोचरत्वमिति किमनुपपन्नम्? अत्र ज्ञानप्रामाण्यपदे तत्तद्व्यक्तिपरे सामान्येनोभयोपस्थापके। तेन

दर्पणः

नन्विदमयुक्तम्। तज्जातीयत्वं हि तद्व्याप्यत्वं वा तद्व्यापकत्वं वा तत्समनियतत्वं वा तत्समानाधिकरणत्वं वा? नाद्यः। विशेष्यावृत्त्यप्रकारकत्वस्य निर्विकल्पककोटिविद्यमानतया तद्वति तत्प्रकारकत्वाव्याप्यत्वात्। न द्वितीयः। एतज्ज्ञानत्वादौ पक्षीभूते तद्वपि तत्प्रकारकत्वं प्रति व्यापकत्वाभावेनांशतो बाधात्। अत एव न तृतीयः। न चतुर्थः प्रमाकरणत्वेऽपि तद्वति तत्प्रकारकत्वसमानाधिकरण्यसत्त्वात्। व्याप्तिज्ञानादौ उभयोः सत्त्वात्। न च प्रत्यक्षप्रमाकरणत्वे साध्यबाधात् तद्वारणाय ज्ञानपदम्। एवं निर्विकल्पत्वादौ तथापि बाधादित्यस्वरसादाह—वस्तुत इति।

वस्तुतस्तु समनियतत्वमेव विवक्षितम्। प्रयोजकतावच्छेदकत्वं तु स्वरूपसम्बन्धविशेषो न गुरावेतज्ज्ञानत्वं विशेष्यावृत्त्यप्रकारकत्वं वेति न तयोः पक्षतेति नांशतो बाध इति भावः।

न च घटत्ववति घटत्वप्रकारकत्वादीनामननुगमात् भ्रमभिन्नानुभवत्वं प्रमापदप्रवृत्तिनिमित्तं स्वीकार्यम्। तत्र च विवाद इति वाच्यम्, समर्थप्रवृत्तिजनकतावच्छेदकत्वेनानुगतीकृतानां प्रमापदप्रवृत्तिनिमित्तत्वात्। न वाऽनुभवत्वभागे विवादाभावो दोष इति वाच्यम्, अनुभवत्वांशरहितप्रमापदप्रवृत्तिनिमित्तस्य विवक्षितत्वात्।

न हि तत्रापीति। धर्मधर्मिगोचरज्ञानमित्युक्ते ज्ञानद्वयात्मके भ्रमे गतमत एकपदम्। एतावति कृते भूतलं घटाभाववदिति ज्ञानं भूतलघटविशिष्टज्ञानं स्यादतोऽगृहीतासंसर्गपदम्। एवं सत्यपि दण्डपुरुषाविति समूहालम्बने गतम्। अतो धर्मधर्मिपदं धर्मत्वधर्मित्वरूपसम्बन्धपरमित्यर्थः।

नन्वेवमपि प्रमेयत्ववद्देवदत्तो घटश्चेति समूहालम्बनस्य घटप्रमेयत्वविशिष्टज्ञानत्वापत्तिः। देवदत्तं प्रति प्रमेयत्वस्य धर्मत्वभानात्। घटत्वं प्रति घटस्य धर्मित्वभानाच्चेति।

आलोकः

प्रत्येकं साध्याभिसम्बन्धो लभ्यते अतोऽप्रामाण्यग्राहकेणापि स्वप्रामाण्यं गृह्यत इति न गुरुमतेऽप्रामाण्याग्राहकपदमनर्थकमिति ध्येयम्। इत्थं मीमांसकत्रयसाधारणी विधिकोटिः।

गुरुनये स्वप्रकाशादिना, मुरारिनये अनुव्यवसायादिना, भट्टनये ज्ञाततालिङ्गकानुमित्यादिना यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वस्य सर्वसाधारणत्वात्। तत्प्रसिद्धिश्च तज्ज्ञानतद्विषयादावेव सुलभा। ज्ञानत्वे प्रसिद्धिरिति परमते। तन्मते स्मृत्यन्यज्ञानस्यैवानुभवत्वेनानुभवपदेन ज्ञानत्वेनैवोपस्थितेरिति। यावत्पदञ्चाशेषपरम्। तेन स्वविषयत्वनियतज्ञानग्राहकसामग्रीग्राह्यत्वं पर्यवस्यति। अतो यस्यैव ज्ञानग्राहकसामग्री तत्प्रामाण्ये नांशतो बाध इति ध्येयम्।

दर्पणः

मैवम्। परस्परनिरूपितधर्मत्वधर्मित्वगोचरत्वस्य विवक्षितत्वात्।

न चैवं भूतलं घटाभाववदिति ज्ञानस्य ज्ञानद्वयात्मकभ्रमस्य च परस्परनिरूपितधर्मत्वधर्मित्वगोचरत्वाभावात्तद्वारणार्थमगृहीतासंसर्गपदमेकपदञ्च व्यर्थं स्यादिति वाच्यम्, परस्परप्रतियोगिकत्वलाभार्थमेतदुभयोपादानादिति। **अधिकमन्यथाख्यातौ वक्ष्यते।**

**तत्तद्व्यक्तिपरे** इति। ज्ञानपदं ज्ञानत्वेन रूपेण घटज्ञानादिपरम्। प्रामाण्यपदं च प्रामाण्यत्वेन रूपेण घटत्ववति घटत्वप्रकारकत्वादिपरम् न तु सकलप्रमासाधारणमेकं प्रामाण्यं पक्ष इत्यर्थः। प्रामाण्यत्वं च अनुभवत्वांशरहितप्रमापदप्रवृत्तिनिमित्तत्वं समर्थप्रवृत्तिजनकत्वावच्छेदकज्ञाननिष्ठधर्मत्वं वा ध्येयम्।

**अत इति।** इदं चापाततः विषयघटितमूर्त्तिकस्य सकलप्रमासाधारणस्य तद्वति तत्प्रकारकत्वादेरेकस्यासम्भवाद्भ्रमभिन्नज्ञानत्वादिमेकं प्रामाण्यं वाच्यम्। तस्य चाप्रामाण्यग्राहकेणापि ग्रहणमित्यसङ्गतम्। तस्माद्विषयघटिते विवादाभावाद्विषयघटितैकप्रामाण्यस्य चासम्भवादेव नाना प्रामाण्यानि प्रामाण्यत्वेन पक्षीकृतानीति ध्येयम्।

**केचित्तु.** घटत्ववद्विशेष्यकघटत्वप्रकारकत्वादिना प्रत्येकमेव पक्षतेत्यर्थमाहुः—तन्न।

तथा सति पक्षतावच्छेदकैक्यमादाय मूलकृता कृतस्यांशतः सिद्धसाधनोद्धारस्यासङ्गत्यापत्तेरिति।

**तज्ज्ञानेति।** इदंत्ववतीदंत्वप्रकारकत्वादिप्रामाण्याश्रयीभूतं ईश्वरयोगिनोरनङ्गीकारादेकमेव यज्ज्ञानं प्रामाण्याश्रयीभूतज्ञाननानात्वेऽपि एकत्रैव यत्रास्मदादेर्ग्राहिका सामग्री तदिह तज्ज्ञानपदेन विवक्षितम्। अन्यथा ज्ञाने यावत्स्वाश्रयग्राहकग्राह्यत्वाभावादिति ध्येयम्।

आलोकः

अत्र केचित्—न ज्ञानपदं यत्किञ्चिज्ज्ञानपरम्, प्रत्येकप्रामाण्यस्य पक्षीकृतस्य प्रत्येकतदनाश्रयीभूतज्ञानग्राहकसामग्र्यग्राह्यत्वेन बाधात्, किन्तु तत्तत्प्रामाण्याश्रयीभूतज्ञानपरम्। तथा च मुरारिभट्टयोर्ज्ञानस्य ज्ञेयत्वानियमेन अज्ञायमानज्ञानव्यक्तिविशेषप्रामाण्ये तदाश्रयीभूतज्ञानग्राहकसामग्र्या अप्रसिद्धचा तद्ग्राह्यत्वसाध्याभावेनांशतो बाधापत्त्या पक्षसंकोचस्यावश्यकतया तत एव प्रकृतेऽपि सामञ्जस्यात् किं यथाश्रुतपदार्थमनादृत्योक्तकुसृष्टेरादरः? न च तज्ज्ञानव्यक्तौ प्रमाणप्रसरे सामग्री प्रसिद्धैव। तदप्रसरे धर्म्मिण एव बुद्ध्यनारोहात् क्वांशतो बाध इति उभयथापि तन्मते न पक्षसंकोच इति वाच्यम्, सामान्यतोऽपि प्रमाणप्रसरेण बुद्ध्यारोहसम्भवात्। न च तावता सामग्री प्रसिद्धिः। तस्या विलक्षणाया एवानुपदं विवक्षणीयत्वादिति वदन्ति।

तन्न। असंकोचेनोपपत्तौ तत्कल्पनानौचित्यात्। न हि एकत्र संकोच इति अपरत्रापि सः। किञ्च तदनुरोधादज्ञायमानज्ञानेतरपरता। गुरुमतानुरोधादेकज्ञानग्राहकसामग्रीकेतरपरतेत्येकमेव ज्ञानपदमुभयपरं स्यात्। यदि चैकत्र क्लृप्तसंकोचस्या-

दर्पणः

ननु नैयायिकमते ईश्वरयोगिनोः सत्त्वादाद्यकल्पेन प्रसिद्धियुक्ता। घटत्ववति घटत्वप्रकारकत्वादौ पक्षे यत्साध्यं तस्य च मतद्वये विकल्पद्वयेनापि ज्ञाने प्रसिद्धिरयुक्ता। अत आह—तद्विषयेति। प्रकारीभूतेत्यर्थः। नानारूपे विशेष्ये साध्यासत्त्वादिति ध्येयम्। एकमेव वा यद्विशेष्यं तदभिप्रायेणैतत्।

ज्ञानत्वे प्रसिद्धिरिति। इदमापाततः घटत्ववति घटत्वप्रकारको गुण इति वाक्येन स्वाश्रयग्राहकेण ज्ञानत्वाग्रहणात्। स्वविषयत्वेति। प्रामाण्यग्राहकत्वमावश्यकं यस्याः तादृशी ज्ञानग्राहिका सामग्री यत्र तत्त्वं प्रामाण्ये साध्यमित्यर्थः। तथा च प्रमाविषयकत्वव्याप्यत्वं सामग्र्यामिति भावः। यस्यैकैवेति। इदं चेश्वराद्यनङ्गीकारे तद्ग्राह्यत्वसाध्याभावेनेति। यद्यपि साध्याप्रसिद्ध्या तदभावोऽपि न वक्तुं शक्यः प्रतियोग्यप्रसिद्धेः तथापि साध्याभावेनेत्यस्य साध्याप्रसिद्ध्येत्यर्थः। एवमंशतो बाधोऽपि अंशतः साध्याप्रसिद्धिरेवेतिमन्तव्येति।

तत एव पक्षसङ्कोचादेव। प्रकृतेऽपि एकग्राहकसामग्रीकज्ञानप्रामाण्येऽपि। उक्तकुसृष्टेरिति। स्वविषयत्वनियतेत्यादिकुसृष्टेरित्यर्थः। विलक्षणाया इति। तज्ज्ञान-प्रकारेत्याद्युक्ताया इत्यर्थः। एकत्रेति। अज्ञायमानज्ञानप्रामाण्ये। अपरत्रेति। एक-सामग्रीग्राह्यप्रामाण्ये।

तदनुरोधादिति। भट्टमुरारिमतेऽज्ञायमानातिरिक्तपरम्। त्रितयमते च एकग्राहकसामग्रीकेतरपरम् ज्ञानपदमित्यनुगतलक्षालाभ इत्यर्थः। गुर्विति। गुर्वादीत्यर्थः।

आलोकः

नुरोधादन्यत्रापि संकोचकल्पना तदाऽप्रामाण्याग्राहकादिपदमपि त्यज्यताम्। तादृशसामग्र्यग्राह्यज्ञानप्रामाण्यमात्रपक्षत्वेनैव बाधविच्छेदादिति। सामग्री च सविषयकज्ञानग्राहिकाभिमता ज्ञानपदजन्यज्ञानग्रहेण प्रामाण्याग्रहात् यथोक्तेर्बाधात्।

ननु चात्र घटज्ञानपदजन्यज्ञानेनापि तदग्रहादुक्तविवक्षयाप्यप्रतीकारः।

अत्र कश्चित्—तेन प्रामाण्यं गृह्यत एवेत्याह। तस्यायमाशयः—यथा घटेन जलमाहरेत्यत्रान्वयितावच्छेदकं छिद्रेतरत्वं योग्यताबलात् गुरुनये, भट्टनये च श्रुतार्थापत्तिस्थले रात्रिभोजित्वमन्वयितावच्छेदकं शब्दादुपस्थितं शाब्दबोधे विषयस्तथेहापि ज्ञानत्वघटविषयत्वयोरतिप्रसक्त्या घटत्वप्रकारकत्वघटविशेष्यकत्वयोरन्योन्यान्वयितावच्छेदकयोर्गुरुनये योग्यताबलात् भट्टनये शाब्दादुपस्थितयोः शाब्दबोधविषयत्वमस्तु। अतो वाक्यविधया पदविधया वा न तत्र प्रामाण्यग्रह इति कस्यचिद् दूषणं निरवकाशं वेदितव्यम्। न च भट्टमते मुरारिमते चान्यथाख्यात्यभ्युपगमात् घटाविशेष्यकस्यापि घटत्वप्रकारकज्ञानस्य सम्भवान्न घटविशेष्यकत्वमन्वयितावच्छेदकमिति वाच्यम्, अन्वयनियतं हि अन्वयितावच्छेदकम्।

नियमश्च द्विविधो बाधकैकापोह्यरूपोऽसम्भवद्बाधकश्च। तत्राद्यो नियमो भट्टमिश्रयोः, अन्त्यो गुरोरभिमतः। अत एवौत्सर्गिकं धियां प्रामाण्यमिति वदन्ति।

दर्पणः

इदमुपलक्षणम्। न्यायमते ज्ञानसामान्यपरमित्यपि ज्ञेयम्। नानासामग्रीग्राह्यज्ञानपरतायामनुगमः सम्भवत्येव। न च न्यायमते नानेतिविशेषणमयुक्तं प्रयोजनाभावादिति वाच्यम्। उपरञ्जकस्यापि पक्षे दानात्। यद्वा विशेषणं न देयम्, किन्तु वस्तुगत्या यत्तादृशं ज्ञानं तत्प्रामाण्यमेव पक्षीकार्यमिति तथाप्यसंकोचेनोपन्यासादित्युक्तयुक्तावेव तात्पर्यम्।

ननु चेति। अस्य च पूर्वपक्षस्य यस्मात् सविषकत्वं दुर्वचमित्यत्र पर्यवसानम्।

ज्ञानत्वेति। घटज्ञानमित्यत्र षष्ठ्यर्थस्य यः सम्बन्धी घटविषयक इति यावत् स लक्ष्यस्तस्य च ज्ञानेनाऽभेदान्वयः। घटज्ञानमित्यत्र घटविषयकं ज्ञानमित्यर्थः। तत्र च घटविषयकाभेदे ज्ञानत्वं नावच्छेदकं पटज्ञानेऽतिप्रसक्तत्वात्। नापि ज्ञानाभेदे घटविषयकत्वं इच्छादावतिप्रसक्तत्वादतो ज्ञाने घटत्वप्रकारकज्ञानत्वं घटविषयकदिशि घटविशेष्यकज्ञानत्वमभेदान्वयितावच्छेदकमित्यर्थः। **न घटविशेष्यकत्वमन्वयितावच्छेदकमिति**। न घटविशेष्यकत्वं प्रति घटत्वप्रकारकज्ञानत्वमन्वयितावच्छेदकमित्यर्थः। यथाश्रुतेऽवच्छेद्यातिप्रसक्तिर्लभ्यते। सा च न दोषाय। इदमुपलक्षणम्। द्रव्यत्वप्रकारकघटविशेष्यकज्ञाने घटत्वप्रकारकज्ञानत्वाभावाद् घटविशेष्यकज्ञानत्वमपि नावच्छेदकमित्यपि द्रष्टव्यम्।

आलोकः

तदत्र यदि बाधकाभावस्तदा गुरुत्वत्तयोरपि तदेवान्वयितावच्छेदकम्। अथ बाधकसम्भवः तदाप्रामाण्याग्राहकत्वमेव सामग्र्या असिद्धमिति तादृशशब्दात् सर्वमते प्रामाण्यग्रह इति न बाध इत्युन्नीयते।

न चैवं सम्भवति। तथा हि—भवतु उक्तनियमद्वयं मतभेदेन तथापि यत्रैतन्नियमावधारणन्नास्ति तत्र तादृशशब्दादुक्तरीत्याऽपि प्रामाण्यग्रहे बाधतादवस्थ्यात्। किञ्चैककोटिबाधे अन्यतरकोटिप्रकारकतानियमः। न तु संशये प्रशस्तरूपवान् मैत्र इत्यादौ गौरत्वादिप्रकारकत्वापपत्तेः। तथा च यत्र बाधसम्भवस्तत्र तादृशशब्दात् प्रामाण्याग्रहे का गतिः? अपि चानुमानेन घटज्ञानवत्त्वग्रहे प्रामाण्याग्रहस्य तेनापि स्वीकारः प्रकारान्तराभावात्। तथा च तत्र बाध एवेति दिक्।

अपरे तूक्तातिप्रसङ्गवारणाय तज्ज्ञानप्रकारप्रकारकतया तज्ज्ञानविशेष्यकतया या ज्ञानग्राहिका सामग्री सा सविषयकज्ञानग्राहिकेति विवक्षिता। तद्ग्राह्यत्वं च साध्यमिति वदन्ति।

तदपि न सम्यगिव। तथा हि—तज्ज्ञानविशेष्यविशेष्यकत्वं तज्ज्ञानल्लिखितप्रकारविशिष्टधर्म्मिविशेष्यकत्वं यत्किञ्चिद्धर्मविशिष्टतज्ज्ञानविशेष्यविशेष्यकत्वं वा? आद्ये सिद्धसाधनम्। नहि नो दर्शने तादृशसामग्र्या प्रामाण्याग्रहः। परन्तु अनुव्यवसायादिसामग्री तादृश्येव नेति विवदामहे। अन्त्ये प्रमेयविशेष्यकं घटत्वप्रकारकं ज्ञानमिति शब्देन वस्तुतो घटविशेष्यके घटविशेष्यकत्वं घटत्वप्रकारकत्वञ्च गृह्णता प्रामाण्याग्रहेण पूर्ववद्बाधतादवस्थ्यम्। तस्मात् सविषयकत्वं दुर्वचमिति।

दर्पणः

अन्त्यो गुरोरिति। घटत्वप्रकारकज्ञानत्वस्य घटविशेष्यकज्ञानत्वेन सहासम्भवद्बाधको नियम इत्यर्थः। तदिति। घटविशेष्यकत्वप्रकारकत्वयोर्नियमोऽन्वयिनियमोऽन्वयितावच्छेदकत्वमिति यावत्। तथा च यत्र तयोरन्वयितावच्छेदकत्वेन ग्रहो नास्तीत्यर्थः। विपरीतनियमस्तु गुरुमतेऽपि द्रव्यत्वप्रकारकघटविशेष्यकज्ञाने पटत्वप्रकारकज्ञानासम्भवात् गुरोरप्यौत्सर्गिक एवेति ध्येयम्। औत्सर्गिकमन्वयितावच्छेदकमिति च व्यतिरेककोटिनिर्णये भासते न तु तत्संशय इत्यभिप्रेत्याह—किञ्चेति। बाधेति। अप्रमात्वव्यतिरेकनिर्णयासत्त्वमित्यर्थः।

घटविषयकज्ञानत्वघटत्वप्रकारकज्ञानत्वयोरेव येनौत्सर्गिको नियमो गृहीतो न तु विशेष्यत्वान्तर्भावेन तं प्रत्येतादृशशब्दात् कथं घटत्ववद्विशेष्यकत्वलाभः कथं च द्रव्यत्वप्रकारकघटविशेष्यकज्ञाने घटत्वप्रकारकबाधावतारोऽतादृशशब्दात् घटत्वप्रकारकत्वलाभ इति दिगर्थः।

बाधतादवस्थ्यमिति। अत्र कश्चित् प्रमेयविशेष्यकं घटत्वप्रकारकं ज्ञानमित्येवंरूपापि सामग्री प्रामाण्यं गृह्णात्येव, ज्ञानस्य तद्विषयधर्मधर्मिवैशिष्ट्यावगाहित्व-

आलोकः

उच्यते—कस्यांचित् सामग्र्यां विषयग्रहणनियमः कस्यांचिन्न तथेति सर्वजनसिद्धम् । तत्र कस्यापि स्वप्रकाशत्वादितन्त्रम् । कस्याप्यनुव्यवसायात्मकप्रत्यक्षत्वादीत्यन्यदेतत् । तथा च या सामग्री विषयविनिर्मुक्तज्ञानग्रहे न सामर्था विषयाङ्कितमेव ज्ञानं गृह्णाति विषयमविषयीकुर्वती ज्ञानधर्मिग्रह एव न समर्थेति यावत् । तदग्राह्यत्वं साध्यम् । शब्दे तु तादृशी सामग्री एव नास्ति । न हि तत्र घटज्ञानपदात्मिका सामग्री घटपदं विनापि ज्ञानपदमात्रस्य ज्ञानोपस्थापकत्वेन तावन्मात्रस्य सामग्रीत्वात् । तत्फलोप्रधाननियतहेतोरेव सामग्रीत्वात् । इदमेव च सामग्रीपदोपादानफलम् । तथा च घटपदसमभिव्याहारेण तस्य विषयग्राहकत्वं न तु ज्ञानग्राहकसामग्रीत्वेन, ज्ञानपदाज्ज्ञानमात्रोपस्थितौ विषयाप्रकाशात् । अनुव्यवसायस्वप्रकाशादौ तु ज्ञानग्राहकसामग्रीत्वप्रयुक्तमेव विषयग्राहकत्वम् । यद्येन विना न भासते तद्बोधकस्य तद्बोधकत्व-

दर्पणः

नियमेन विशेष्ये घटत्ववत्त्वस्यानयापि ग्रहात् । अन्यथा प्रकारत्वादिग्रहानुपपत्तेः । तस्य तद्घटितशरीरत्वात् ।

न चैवं अनुव्यवसायादिनोक्तयुक्त्याऽवश्यं धर्मधर्मिवैशिष्ट्यविषयीकरणे न्यायमतेऽपि कथं न तेन प्रामाण्यग्रहणमिति वाच्यम्, वैशिष्ट्यग्रहणेऽपि तदंशे सत्तानिश्चयरूपत्वाभावात् ।

यच्चात्र प्रगल्भेनोक्तं तज्ज्ञानविशेष्यविशेष्यकत्वेन तज्ज्ञानप्रकारप्रकारकत्वेन या सामग्री ज्ञानं गृह्णाति सा चेदवश्यं धर्मिणि तद्गृह्णाति तदा तदभाववत्त्वघटिताप्रामाण्यस्य तस्मिन्नवसरे ग्रहशङ्कैव न, विरोधादित्यप्रामाण्याग्राहकपदवैयर्थ्यमिति । तन्न । ज्ञानपारतन्त्र्येण तद्वत्त्वग्रहदशायां तद्दशायां तदभाववत्त्वसत्तानिश्चये बाधकाभावात्तद्वत्तानिश्चयस्यैव प्रतिबन्धकत्वात् ।

यद्वा अप्रामाण्याग्राहकत्वं नञ्व्यत्यासेन प्रामाण्याभावाग्राहकत्वम् । तच्च प्रामाण्यग्राहकत्वमेव विवक्षितम् । तथा च तद्वति तत्प्रकारकत्वरूपप्रामाण्यग्राहिका सामग्री मूले विवक्षिता । न चानुव्यवसायादिसामग्री तादृश्येव न भवतीति वाच्यम्, स्वातन्त्र्येण तद्वत्त्वाविषयत्वेऽपि ज्ञानपारतन्त्र्येण तद्वत्त्वस्य तथापि ग्रहणादित्याह—. तन्न । तादृशसामग्र्या प्रामाण्यं गृह्यत इत्यत्र यथाश्रुतमेव वा साध्यं विवक्षितं प्रामाण्यसत्तानिश्चयो भवतीति वा । आद्ये अनुव्यवसायादिना प्रामाण्यग्रहो ज्ञानपारतन्त्र्येण नैयायिकमतेऽपीति त्वयैवोक्तत्वात् सिद्धसाधनम् । द्वितीये घटत्ववत्त्वेन ज्ञायमानविशेष्यकं घटत्वप्रकारज्ञानमित्यत्र प्रामाण्यसत्तानिश्चयाभावाद्बाधः । न च तत्रापि प्रामाण्यसत्तानिश्चये इष्टापत्तिरेव कर्त्तव्या । तदैव घटत्ववान्न वेति संशयानुभवात् । ज्ञानपारतन्त्र्येण तद्वत्त्वग्रहेऽपि तद्वत्त्वसत्तानिश्चयाभावादप्रामाण्यग्रहः सम्भवत्येवेति स्वोक्तविरोधाच्च ।

आलोकः

नियमात् । तथा च यत्र ज्ञानग्राहिकैव विषयग्राहिका न तु विषयग्रहार्थमन्यापेक्षा यस्यामिति पर्यवस्यति । तादृशी च प्रायशः स्ववृत्तिवर्तमानज्ञानग्राहिकैव सामग्री भवति । तद्ग्राह्यत्वं शब्देनानुमानविशेषेणाग्रहेऽपि तिष्ठति । यथा च ज्ञाततालिङ्गकानुमानस्य ज्ञानग्राहकत्वेनैव विषयग्राहकत्वं तथा वक्ष्यामः । ज्ञानरूपप्रत्यासत्तेस्तुल्यत्वादित्यग्रे स्वयमेव वक्ष्यति । तेनाप्ययमेवाशय उन्नीयते । सहकार्यन्तरप्रवेशेन विषयग्रहे तदुपन्यासानर्हत्वादिति सर्वं सुस्थम् ।

नन्वेवं यावत्पदं व्यर्थं प्रामाण्यानुमितेर्ज्ञानग्राहकत्वप्रयुक्तविषयग्राहकत्वाभावात् । तदनन्तर्भावेनैव सामञ्जस्यात् । अन्यथा घटज्ञानवानयं तदिच्छावत्त्वात् इत्यस्यापि सविषयज्ञानग्राहकसामग्रीत्वेन तदग्राह्यत्वेन प्रामाण्यस्येत्थमपि बाधानिरासादिति चेत्—न इदं ज्ञानं प्रमेत्येवमाकारिकायाः प्रामाण्यानुमितेः पक्षीकृतज्ञानग्राहिकायास्तद्ग्राहकत्वप्रयुक्ततद्विषयघटादिग्राहकत्वायाः प्रामाण्यग्राहकत्वेन यावदनन्तर्भावे सिद्धसाधनात् । किञ्च पृथिवीज्ञाने तदनुव्यवसायानन्तरं पुनस्तत्रैव विषये पृथिवीज्ञाने जाते तदनुव्यसायानन्तरमित्यादिवक्ष्यमाणप्रामाण्यग्रहस्यापि ज्ञानग्राहकत्वप्रयुक्तविषयग्राहकत्वसत्त्वात् सिद्धसाधनं यदि न यावत्पदोपादानम् ।

वस्तुतः प्रमाशब्देन प्रामाण्यग्राहिणा यावदनन्तर्भावे सिद्धसाधनम् । तुल्यसामग्र्या प्रामाण्यतदाश्रयज्ञानयोः शब्दात् प्रतीतेः । न च घटज्ञानवानयमित्यनुमित्या तदग्रहेण बाधस्तत्र तुल्यसामग्र्या उभयोर्विषयत्वाभावात् । ज्ञानस्य विषयत्वे व्याप्तेर्घटस्य विषयत्वे व्यापकतावच्छेदकत्वस्य तन्त्रत्वात् । न हि प्रमाशब्दे प्रमात्वतदाश्रयसाधारणैकशक्तिवत् घटेच्छादौ व्याप्तेर्ज्ञानघटसाधारणी व्याप्तिरेकाऽस्ति । व्यापकतावच्छेदकेन समं व्याप्तेरसम्भवादिति किमनुपपन्नम् ? इदं घटज्ञानं न प्रमेति विपर्ययस्य सविषयकघटज्ञानग्राहिणस्तत्प्रामाण्याग्राहकत्वेन बाधः स्यादत उक्तम्—अप्रामाण्याग्राहकेति । तत्र ज्ञानग्राहिकायास्तस्या अप्रामाण्यग्राहकत्वादित्यर्थः ।

न च गुरुमतेऽप्रामाण्याप्रसिद्ध्या तदग्राहकत्वमप्रसिद्धम् । अप्रामाण्यस्य व्यधिकरणप्रकारकत्वस्येच्छायां तन्मते प्रसिद्धेः । ततः स्मर्यमाणस्य तस्य भ्रमसम्भवात् ।

दर्पणः

किमनुपपन्नमिति । अत्र वदन्ति । ज्ञानग्राहकत्वप्रयुक्तविषयग्राहकसामग्री इत्यस्य कोऽर्थः ? ज्ञानग्राहकत्वव्यापकं विषयग्राहकत्वं यस्या इति वा ? विषयग्रहार्थं ज्ञानग्रहहेत्वतिरिक्तानपेक्षेति वा ? विषयग्रहार्थं ज्ञानग्रहहेत्वतिरिक्तकारणानपेक्षेति वा ? ज्ञानग्राहकसामग्रीत्वावच्छेदकधर्मावच्छेदेनैव पर्याप्तं विषयग्राहकत्वं यस्या इति वा ?

नाद्यः । प्रमापदेऽपि वर्त्तमानं ज्ञानग्राहकत्वं न विषयग्राहकत्वव्याप्यं ज्ञानपदे व्यभिचारात् । तत्र ज्ञानग्राहकत्वसत्त्वेऽपि विषयग्राहकत्वाभावात् । प्रमापदावच्छिन्न

आलोकः

**भ्रमस्तु तन्मते असंसर्गाग्रहः, अन्यमते अन्यथाख्यातिरित्यन्यदेतत् । इदञ्च सर्वसाधारणं यदारोपे आरोपविषयासाधारणधर्मो न गृह्यते स च धर्म इह प्रामाण्यमेवेति युक्तमप्रामाण्यासंसर्गाग्रहे प्रामाण्याग्रह इति ।**

दर्पणः

ज्ञानग्राहकत्वं व्याप्यमिति चेत्—तर्हि घटज्ञानवाक्यावच्छिन्नज्ञानग्राहकत्वमपि तथेत्यतिप्रसङ्गतादवस्थ्यम् । न द्वितीयः । प्रमानुमितौ व्यापकतावच्छेदकत्वस्य प्रमापदे च विशेषणशक्तत्वस्य विषयग्रहार्थमतिरिक्तस्यापेक्षणात् । न तृतीयः । घटज्ञाने बुद्धिस्थे शक्तस्य सर्वनामतत्पदादेरेकयैव शक्त्या विषयज्ञानोभयबोधकतयाऽतिप्रसङ्गतादवस्थ्यात् । न चतुर्थः । तत्रैवातिप्रसङ्गादिति ।

उच्यते । यद्धि येन विना न भासते तद्धीहेतुस्तमपि बोधयतीति सर्वं सिद्धम् । तथा च विषयनिरपेक्षज्ञानानवगाहिज्ञानग्राहकत्वरूपेण विषयग्रहं प्रति हेतुता यस्याः सा सामग्री विवक्षिता । घटज्ञानादिशब्दात्मिका सामग्री यद्यपि विषयनिरपेक्षं ज्ञानं न गृह्णाति तथापि विषयग्रहं प्रति तेन रूपेण न हेतुता, समानाधिकरणाव्यवहितकालवृत्तिज्ञानग्रह एव तथानियमात् । तदिदमुक्तं—**स्ववृत्तिवर्त्तमानेत्यादि** ।

न चैवं यावत्पदं व्यर्थम्, प्रमापदादौ निरुक्तसामग्रीत्वविरहादिति वाच्यम्, उपनीतप्रामाण्यानुव्यवसायमादाय यावत्पदादाने सिद्धसाधनात् । न च ज्ञाततालिङ्गकानुमितेस्तथा सामग्रीत्वमसिद्धम्, प्रत्यक्षस्थानाभिषिक्तायास्तस्याः परैस्तथात्वाङ्गीकारात्, न च न्यायमते न तथात्वं सिद्धम् । एवं सति स्वप्रकाशज्ञाततलिङ्गकानुमित्योर्नैयायिकैरस्वीकारात्, तदुभयमादाय गुरुभट्टयोः कथं स्वतस्त्वम् ? स्वमतसिद्धज्ञानग्राहकत्वमादायेति यदि तदा निरुक्तसामग्रीत्वमपि स्वमतसिद्धमेवास्त्विति ।

यद्वा शब्दव्याप्त्यनुपनीतं विशेष्ये प्रकारीभूतधर्मवैशिष्ट्यं गृह्णन्ति स्वसमानाधिकरणवर्त्तमानज्ञानञ्च विषयीकुर्वन्ति यावन्ति ज्ञानानि तद्विषयत्वं स्वतस्त्वम् । यावत्पदं च पूर्वोक्तसिद्धसाधनवारणाय । घटोऽस्ति ज्ञानवान् देवदत्त इति वाक्येन जनितं देवदत्तज्ञानमनुमित्साज्जनितैतादृशदेवदत्तानुमितिं च वारयितुं शब्देत्यादिविशेषणम् । ज्ञानोल्लिखितप्रकारावच्छिन्नविशेष्यग्राहकता ज्ञानग्राहकतापर्याप्त्यधिकरणावृत्तित्वेन पर्यवसिता वा सामग्री विवक्षिता । तेन विकल्पसंशयादिपदवारणं सर्वनामभिन्नत्वं च विशेषणमिति संक्षेपः ।

अस्तु उभयवादिसिद्धं प्रामाण्याग्राहकत्वं यस्यास्तद्भिन्ना यावती ज्ञानग्राहिका सामग्री तद्ग्राह्यत्वं स्वतस्त्वमित्याह—**अतः परं मूलं योजयति** । अत्र च सामग्रीपदेन यदि ज्ञानग्रहरूपफलोपहितं कारणचक्रमुच्यते तदा तद्ग्राह्यत्वं तज्जन्यग्रहविषयत्वम् । यदि तु सामग्रीपदेन लक्षणया ग्रह एवानुव्यवसायादिरुच्यते तदा सविषयकज्ञानग्राहक-

आलोकः

अत्र चाप्रामाण्याग्राहकत्वमप्रामाण्यग्राहकसामग्र्यसमवहितत्वम्। यथाश्रुते ज्ञानानुभवस्याप्रामाण्यस्मृत्यन्यत्वेनाप्रामाण्यग्राहकत्वस्यासम्भवादिदं ज्ञानं प्रमा न इत्यत्रापि प्रामाण्याग्रहेण बाधतादवस्थ्यात्। तत्पदन्तु यत्राप्रामाण्यज्ञाने प्रामाण्यग्रहस्तत्र तादृशग्रहस्याप्रामाण्याग्राहकत्वमप्रसिद्धमिति तद्वारणाय। तेन तत्राप्रामाण्याग्राहकत्वमर्थो लभ्यते। इदन्तु यत्र प्रामाण्यं गृह्णाति न तत्राप्रामाण्यं किन्तु तद्विषये। तस्येति षष्ठीतत्पुरुषस्तु नादरणीयः।

गुरुमते ज्ञाने व्यधिकरणप्रकारकत्वाभावेन षष्ठ्यर्थस्य बाधितत्वात्। न च तन्मतेऽन्यथाख्यात्यभावेन सप्तमीसमासादरेऽपि यत्राप्रामाण्यासंसर्गाग्रहस्तत्राप्यप्रामाण्याग्रहेण तद्दोषतादवस्थ्यम्।

दर्पणः

सामग्रीजन्या ये स्वतोग्रहास्तद्विषयत्वं साध्यम्। तेन क्वचिच्छब्दादेः क्वचिदनुव्यवसायादेर्ग्राहकत्वनिर्देशो न विरुध्यत इति ध्येयम्।

ननु यदाऽप्रामाण्यारोपस्तदा विरोधाभावात् अप्रामाण्यारोपे प्रामाण्यं गृह्यत एवेति बाधाभावेन व्यर्थमप्रामाण्याग्राहकेति विशेषणमित्यत आह—इदं चेति।

सर्वसाधारणं प्राभाकरमतसाधारणम्।

ननु अप्रामाण्याग्राहकेति विशेषणे दत्तेऽपि बाध एव। तथा हि—इदं रजतमिति प्रमानन्तरं नेदं रजतमिति बाधभ्रमे इदं ज्ञानं न प्रमेति यज्ज्ञानमुत्पद्यते तच्च प्राभाकरमते नान्यथाख्यातिरूपम्, तैरन्यथाख्यात्यनङ्गीकारात्। यदि शुक्ताविदं रजतमितिवत् स्मृत्यनुभवात्मकं ज्ञानद्वयमेवेदं ज्ञानमिति ज्ञानस्य मानसोऽनुभवोऽप्रमेत्यप्रामाण्यस्मरणम्, तथा चेदं ज्ञानमिति ज्ञानेन मानसानुभवेनाप्रामाण्याग्राहिणा प्रामाण्यं न गृह्यत इति बाधतादवस्थ्यमत आह—अत्र चेति। अप्रामाण्यग्राहकसामग्र्यसमवधानमप्रामाण्याग्राहकशब्देन विवक्षितम्। मानसे तु ज्ञानानुभवेऽप्रामाण्यस्मृतिरूपाप्रामाण्यग्रहजनकसामग्रीसमवधानान्नाप्रामाण्याग्राहकत्वमस्तीति न तेन बाधो गुरुमत इति।

तद्दोषतादवस्थ्यमिति। इदं ज्ञानमप्रामाण्यवदित्यनेन प्राभाकरमतेऽप्रामाण्यस्यासंसर्गाग्रहादप्रामाण्यं न गृह्यते प्रामाण्यं च न गृह्यते इति बाधतादवस्थ्यमित्यर्थः। अत्र यद्यपि न बाधः अप्रामाण्यग्राहकस्मृत्यसमवहितस्य विवक्षितत्वात्, तथापि विषयसप्तम्या ज्ञाने योऽप्रामाण्यग्रहः तज्जनकसामग्र्यसमवधानमित्यर्थो लभ्यते। स चानुपपन्नः। ज्ञाने व्यधिकरणप्रकारत्वाभावात् प्राभाकरमते। तथा च विशिष्टा सामग्री वर्त्तते-प्रामाण्यं च न गृह्यत इति बाधो युक्त एवेत्यर्थः।

आलोकः

तत्रेति हि सप्तम्यर्थो न विषयविषयिभावः किन्त्वसंसर्गाग्रहः। तथा च तेना-गृहीतासंसर्गाप्रामाण्याग्राहकत्वं पर्यवस्यतीति। न चाग्रेतनसंशयानुपपत्तिदोषानुपपत्तिः प्रागप्रामाण्यास्मरणे धर्मिज्ञाने सति संशयानुपपत्तेर्वक्ष्यमाणत्वात्।

वस्तुतस्तु विषयीभूताप्रामाण्यग्राहकत्वेनाप्रसिद्धिर्मा भूदिति तदुपादानं न घटते प्रामाण्यस्येवाप्रामाण्यस्यापि प्रतिज्ञानमन्यान्यत्वेनाप्रामाण्यगोचरज्ञानप्रामाण्यस्य पक्षीकृतस्याप्रामाण्यग्राहकसामग्र्यसमवहितसामग्रीग्राह्यत्वस्य सत्त्वात्। अप्रामाण्य-पदस्य प्रकृतप्रामाण्यविरोधिमात्रपरत्वात्। न चाप्रामाण्यवत्यप्रामाण्यप्रकारकत्वस्य ग्राह्यप्रामाण्यस्य विषयीभूतमप्रामाण्यं विरोधि। अन्यथा यत्र भावस्वरूपम-प्रामाण्यन्नारोपितमपि तु प्रामाण्याभाव एव। यत्र वा प्रकार एव व्यधिकरणत्व-मारोपितं तत्रापि प्रामाण्याग्रहेण बाधतादवस्थ्यात्। तस्माद्यत्र घटवह्नी इति समूहालम्बनस्यैकांशेऽप्रामाण्यारोपोऽपरांशे प्रामाण्यग्राहकस्याप्रामाण्याग्राहकत्वम-सिद्धम्। तद्वारणाय तदिति। तथा च तत्र तदंशेऽप्रामाण्यग्राहकसामग्र्यसमवधानमर्थो लभ्यते।

दर्पणः

तत्रेति[1] हीति। इदं च प्रतियोग्यन्वयमादाय ग्राहकत्वाभावेन तत्रेत्यस्यान्वये दोषा-भावादिति। अग्रेतनेति। संशयस्थले हि धर्मिज्ञानमप्रामाण्यस्मृत्यात्मकेनाप्रामाण्यग्राहकेण समवहितमेवेति तस्य प्रामाण्यानिश्चायकत्वात् संशयः सम्भवत्येवेति भावः। प्रथमं धर्मिज्ञानं तदनन्तरमप्रामाण्यस्मरणं ततश्च संशय इति क्रमेण संशयोत्पत्तौ प्राथमिक-धर्मिज्ञानस्याप्रामाण्यस्मृत्यसमवहितत्वेन प्रामाण्यनिश्चयस्य जातत्वान्न संशयः स्यादि-त्याह—प्रागिति। तत्प्रामाण्यविरोधीति। तद्रूपस्य प्रामाण्यस्य विरोधीत्यर्थः। तथा चाप्रामाण्यपदं विरोधीमात्रपरमन्यथाऽनन्वयादिति ध्येयम्। न तु तस्य तत्प्रामाण्यं तद्विरोधीत्यर्थः। शब्दार्थयोरसाधुत्वापत्तेः। नञा व्यवधानात्। अयं वह्निरिति ज्ञानस्य इदंत्ववतीदंत्वप्रकारकत्वरूपप्रामाण्यग्रहकाले तस्य वह्नित्ववति वह्नित्वप्रकारकत्वरूपं यत्प्रामाण्यं तद्विरोधिनो वह्नित्वाभाववतीत्यादेरप्रामाण्यस्य ग्रहणाच्च घटवह्नी इति समूहालम्बनस्येत्याद्युक्तयुक्त्यनुरोधेन चांशभेदविवक्षा इहापि कार्येति स्मर्त्तव्यम्। वस्तुतो नांशभेदविवक्षाप्रयोजनं घटवह्नी इति समूहालम्बने अंशान्तरावच्छिन्नस्य वह्नित्वाभाववति वह्नित्वप्रकारकत्वस्यांशान्तरावच्छिन्नं वह्नित्ववति वह्नित्वप्रकारकत्वं प्रति विरोधाभावादिति।

---

१. तत्रेत्यस्याभावविशेषणत्वे तत्राप्रामाण्यग्राहकस्मृतिसमवधानाभाववती या ज्ञानग्राहिका सामग्री तद्ग्राह्यत्वं तस्य चेदमप्रामाण्यवदित्यत्र नास्त्येव कुतश्चित्समवधानम्। प्रतियोगिप्रसिद्धिरिच्छायामिति भावः।

आलोकः

वयन्तु षष्ठीसमास एव श्रेयान् । तेनाप्रामाण्यपदस्य प्रामाण्यविरोधिवचनतया तस्याप्रामाण्यं तत्प्रामाण्यविरोधीत्यर्थं इत्युन्नयाम इति संक्षेपः ।

तज्ज्ञानविषयकेति तज्ज्ञानविषयकज्ञानव्यतिरेकाप्रयुक्तव्यतिरेकप्रतियोगिज्ञान-प्रकारो न वेत्यर्थः । तेन तद्विषयकेश्वरज्ञानजन्यत्वात्तदनुमितितदनुव्यवसायादीनां तन्मतविधिकोटेरस्मन्मते बाधः । तादृशेश्वरज्ञानज्ञेयत्वेनाभिधेयत्वसामान्यप्रत्यासत्तिज-प्रत्यक्षविषयत्वेन च सिद्धसाधनञ्चेति दूषणद्वयमलग्नकम्भवति । ईश्वरज्ञानस्य प्राग-

दर्पणः

तज्ज्ञानविषयकेति—अत्र तज्ज्ञानपदेन पक्षीकृतप्रामाण्याश्रयीभूतं ज्ञानम्, व्यति-रेकपदेन प्रागभावः । अप्रयुक्तपदेन तदन्वयाद्यनुविधाय्युत्तरसमयसम्बन्धिभिन्नः । द्वितीयव्यतिरेकपदेनापि प्रागभावः । प्रकारपदेन भासमानधर्मत्वाख्यसम्बन्धक उच्यते । तेनेत्यादिदूषणमलग्नकं भवतीति सम्बन्धः । दूषणमाह—तद्विषयकेत्यादिना । अत्र प्रथमम् ईश्वरज्ञानमादाय विधिकोटौ सिद्धसाधनं योज्यम् । न च मीमांसकैरीश्वरानङ्गी-कारान्न तत्तत्सिद्धसाधनमिति वाच्यम्, यत्रात्मन्यनुमितिस्तत्रत्यसिद्धेः प्रतिबन्धकत्वात् । अनुमातरि च नैयायिके सिद्धिरस्त्येव । तद्वारणायाजन्यपदानन्तरं जन्यपददानेऽप्रसिद्धिः । तज्ज्ञानविषयकेण ईश्वरज्ञानेन जनितस्यान्यज्ञानस्याप्रसिद्धेः । बाधपदेन च प्रसिद्धिबाध एव विवक्षित इति ध्येयम् । अप्रसिद्धिमुद्धरति—ईश्वरज्ञानस्येति । सिद्धसाधनमुद्धरति—तदप्रयुक्तेति ।

माथुरी

स्यापि साक्षात्कारत्वनिरूपितविषयत्वांशे भ्रमत्वादिति मणिकृतो निगर्व्वः । ननु शङ्खो न पीत इत्यादिलौकिकचाक्षुषसत्त्वेऽपि पीतः शङ्ख इत्यादिचाक्षुषभ्रमोदयाद्दोषविशेषा-जन्यत्वमवश्यम् प्रतिबध्यतावच्छेदके निवेशनीयमित्यत आह, 'तच्चेति साक्षात्कारि-विपरीतदर्शनञ्चेत्यर्थः, शङ्खः पीत इत्यादिभ्रमस्थल इति शेषः । ननु यथा सत्यपीन्द्रिय-सन्निकर्षादौ दोषान्न पीतत्वाभावग्रहस्तथा सत्यपि व्यवसायादौ दोषान्न प्रामाण्य-निश्चयः, किञ्च शङ्खो न पीत इत्याद्यपेक्षाबुध्यात्मकलौकिकचाक्षुषनिश्चयसत्त्वेऽपि तदग्रिमक्षणोत्पन्नात्पित्ताद्यात्मकदोषात् पीतः शङ्ख इत्यादिभ्रमोदयात् लौकिकप्रत्यक्षं प्रति विपरीतनिश्चयस्य प्रतिबध्य-प्रतिबन्धकभावे दोषविशेषाजन्यत्वमवश्यम् प्रति-बध्यतावच्छेदके प्रवेशनीयमित्यत आह, 'न चेति' न वेत्यर्थः, 'जात्यैवेति अभेदे तृतीया, 'दोषः' दोषत्वरूपो धर्म्मः, न दोषत्वमनुगतैकजातिरस्तीति समुदितार्थः । तथा च प्रामाण्यसंशयस्थलीयसकलदोषसाधारणस्य दोषत्वस्यैकस्यानुगतस्याभावात् तत्तत्क्षण-सम्बन्धानामेव प्रातिस्विकरूपेण प्रतिबन्धकत्वं तदजन्यत्वस्य प्रतिबध्यतावच्छेदकत्वं वा वक्तव्यम्, एवञ्च तदपेक्ष्यानुव्यवसायादेः प्रामाण्याग्राहकत्वकल्पनैवोचिता लाघवादिति भावः, इति ग्रन्थं योजयन्ति ।

आलोकः

भावाप्रतियोगित्वेन कार्याभावप्रयोजकाभावाप्रतियोगित्वात्तदप्रयुक्तव्यतिरेकाप्रतियोगित्वाच्च। न च समानाधिकरणपदजन्यपदाद्युपादानमेव तदर्थं क्रियतामिति वाच्यम्, परमते व्यर्थविशेषणत्वात्। यथा च प्रयुक्तत्वं तदन्वयाद्यनुविधाय्युत्तरसमयसम्बधित्वरूपमजन्यस्यापि प्रागभावस्य तथा वक्ष्यते। न च प्रकारत्वविवक्षयाऽभिधेयत्वसामान्यप्रत्यासत्तिनिबन्धनसिद्धसाधनवारणेऽपि प्रमेतिसामान्यलक्षणाजन्यज्ञानविषयत्वेन सिद्धसाधनमिति वाच्यम्। प्रमात्वं हि नाज्ञातमासत्तिः संशयानुपपत्तेः, किन्तु ज्ञातम्। तज्ज्ञानञ्च प्रमात्वाश्रयज्ञानम्विनाऽसम्भवि, तस्य क्वचित् पक्षत्वात्। क्वचित् समान्यप्रत्यासत्तिक्रोडीकृतत्वात्। न च प्रमात्वाश्रयज्ञाने अवश्यापेक्षितेऽपि न तज्ज्ञानं प्रमात्वसामान्यजज्ञाने हेतुरितिवाच्यम्, इतोऽपि जन्यपदस्य तदन्वयाद्यनुविधायिमात्रपरतया व्याख्यातत्वात् तच्च प्रयोजकमात्रपरं न तु कारणमात्रपरम्। न

दर्पणः

**समानाधिकरणेति।** तज्ज्ञानविषयकसमानाधिकरणज्ञानाजन्यसामान्यप्रत्यासत्यजन्यसमानाधिकरणज्ञानग्राह्यत्वं तज्ज्ञानविषयकजन्यज्ञानाजन्यसामान्यप्रत्यासत्यजन्यजन्यज्ञानग्राह्यत्वं विधिकोटयर्थौ विवक्ष्यतामित्यर्थः।

**व्यर्थेति।** यद्यपि सिद्धसाधनवारकत्वेन सार्थकत्वं भवत्येव, व्याप्तिग्रहौपयिकविशेषणस्यैव सार्थक्यनियमस्य तैरनङ्गीकारात्, तथापि सामान्येत्यादिविशेषणस्याप्रसिद्ध्या वैयर्थ्यमिति।

ननु विवक्षिते तव साध्येऽप्यनुमित्या सिद्धसाधनम्। तथा हि—तज्ज्ञानविषयकं यज्ज्ञानं पक्षज्ञानं तेन यद्यपि अनुमित्यादिर्जन्यते तथापि तज्जनकीभूतज्ञानव्यतिरेकाप्रयुक्तव्यतिरेकप्रयोज्यं च भवति। प्रयुक्तत्वं जन्यत्वम्। न चानुमित्यादेर्व्यतिरेकः प्रागभावलक्षणः ज्ञानविषयज्ञानव्यतिरेकजन्यः प्रागभावस्याजन्यत्वादित्यत आह—**यथा चेति।**

**प्रमेतीति।** घटत्ववति घटत्वप्रकारकत्वरूपसामान्यप्रत्यासत्तिजन्यज्ञानमादाय सिद्धसाधनमित्यर्थः। **संशयानुपपत्तेरिति।** सामान्यप्रत्यासत्तेः स्वजन्यज्ञाने प्रकारत्वनियमादज्ञातस्य सामान्यस्य प्रत्यासत्तित्वेऽज्ञातस्य प्रकारत्वमेवेष्टव्यम्। तथा च धर्मिणि गृह्यमाणे पूर्वाज्ञाता अपि धर्माः प्रकारीभूय भासेरन्निति तत्कोटिकसंशयो न स्यादित्यर्थः। इदं चापाततः। इदंत्वाद्यवच्छेदेन प्रकारीभूतो हि धर्मः संशयविरोधी। न च सामान्यप्रत्यासत्तिजज्ञाने सामान्यं तथा प्रकारः। तस्माद् विशेषणज्ञानकारणताग्राहकयुक्त्यैव नाज्ञातस्य सामान्यस्य प्रत्यासत्तित्वम्। तस्याग्रिमज्ञाने विशेषणत्व-

आलोकः

च यत्पक्षकानुमिति–गृहीतं प्रमात्वं प्रत्यासत्तिस्तत्रैवं सिद्धसाधनपरिहारेऽपि प्रामाण्यान्तरे तत् स्यात्। प्रामाण्यमात्रस्य सामान्यजन्यज्ञानगोचरत्वात् न हि सकलतदाश्रयज्ञानाभावप्रयुक्तः सामान्यज्ञानाभाव इति साम्प्रतम्। ग्राह्यप्रामाण्याश्रयविषयकज्ञानसामान्यजन्यत्वाभावस्य विवक्षितार्थस्य यत्किञ्चित् ग्राह्यप्रामाण्याऽऽश्रयविषयकज्ञानजन्यत्वेनैव बाधात्। अत एव योगिज्ञानेनाऽपि न सिद्धसाधनम्। तज्ज्ञानस्याऽतीताऽनागतसकलज्ञानाऽऽदिप्रामाण्याऽऽदिगोचरस्य स्वग्राह्यप्रामाण्याऽऽश्रयीभूते ज्ञानगोचरनिदिध्यासनाऽऽदिजन्यत्वात्। ज्ञान-प्रत्यासत्तिस्थलेऽपि विषयीभूतप्रामाण्यविशिष्टधीजन्यत्वादनुव्यवसायस्य तदजन्य-ज्ञानग्राह्यताशङ्कैव नाऽस्तीति किमनुपपन्नम्। अत्र च घटज्ञानविषयकज्ञानजन्य-

दर्पणः

नियमादिति तत्त्वम्। फलीभूतज्ञाने प्रकारस्य सामान्यस्याज्ञातस्य जनकत्वमिति संशयोप्यनुपपन्न इत्यर्थं इति केचित्।

**तज्ज्ञानं चेति**। न चेच्छाया गृहीतं प्रमात्वं यत्र प्रत्यासत्तिस्तत्र सिद्धसाधनोद्धारः कथमिति वाच्यम्, तज्ज्ञानपदेन प्रमात्वाश्रयमात्रस्याभिप्रेतत्वात्।

**क्वचित्सामान्येति**। प्रमापदेन यत्र प्रमात्वं सत्सामान्यमुपस्थाप्यते तत्र सामान्य-प्रत्यासत्त्या प्रमात्वेन धर्मिणः क्रोडीकृतत्वात् स्वज्ञान एव विषयतां प्रापितत्वादित्यर्थः।

**न च यत्पक्षकेति**। न च साम्प्रतमित्यन्वयः। यस्यां घटज्ञानव्यक्तौ घटत्ववति घटत्वप्रकारकत्वमनुमितं तद्रूपं तत्तज्ज्ञानं तद्विषयकज्ञानाप्रयुक्तत्वं सामान्यप्रत्यासत्ति-जन्यबोधस्थास्त्येवेति सिद्धसाधनमिति न चेत्यर्थः।

**तत्रेति**। तस्मिन् सतीत्यर्थः। तथा च तत्प्रयुक्तं यत् सिद्धसाधनं तत्परिहारेऽ-पीत्यर्थः।

**प्रामाण्यान्तर इति**। मध्यमपदलोपिसमासेन प्रमाण्याऽऽश्रयान्तर इत्यर्थः। तथा च प्रामाण्याऽऽश्रयीभूतं यद्घटज्ञानान्तरं तत्प्रयुक्तं सिद्धसाधनं स्यादित्यर्थः।

**प्रामाण्यमात्रस्य** ज्ञाताऽज्ञातसाधारणस्य। तज्ज्ञानविषयकज्ञानाजन्येत्यत्र सा-मान्यभाव-गर्भतामभिप्रेत्याह—**ग्राह्येति**। **अत एव योगीति**। अत्र यद्यपि योगिप्रत्यक्षं तत्तद्विषयध्यानजन्यमित्यङ्गीकारे[1] योगजधर्मः प्रत्यासत्तिर्न स्यात्। ज्ञानस्यैवाऽसत्तित्व-सम्भवात्। तस्मादात्मध्यानजन्यः संस्कारो धर्मो वा प्रत्यासत्तिर्विश्वगोचरं योगिनां प्रत्यक्षं जनयतीति स्वीकार्यम्। ततश्चाऽसङ्गतमेतत्, तथापि व्यवहितं विप्रकृष्टं च योग्यं योगी गृह्णाति, न त्वयोग्यमपि।

१. अनङ्गीकारे सिद्धसाधनं स्यादेव।

आलोकः

पटज्ञानाऽग्राह्यतया प्रामाण्यस्य यत्किञ्चित्तादृशज्ञानज्ञानग्राह्यत्वं साध्यम्। तथा च प्रमावानयं समर्थप्रवृत्तिमत्त्वात् इत्यादिनैव सिद्धसाधनम्। तन्मते सामान्यप्रत्यासत्त्यभावेन ग्राह्यप्रमाव्यक्तेरनुमितिजनकज्ञानाऽगोचरत्वादिति वदन्ति। तत्र प्रतीकारस्तु तत्पक्षबहिर्भाव एवेत्युक्तप्रायम्। न हि सर्वप्रामाण्यानामेवम्विधाऽनुमितिविषयतानियमो येन पक्ष एव न लभ्येत। एवमन्यत्राऽपि यत्र सिद्धसाधनमाभाति तत्पक्षबहिर्भूतमेवेत्यवधेयम्। पक्षसंकोचस्य सर्वं ज्ञानं गुण इति शाब्दज्ञानाऽनुव्यवसायस्य तज्ज्ञानविषयकज्ञानजन्यत्वनियमेनाऽवश्यवाच्यत्वात्। न तु तद्भिन्नमेव तज्ज्ञानविषयकत्वेन विवक्षणीयम्। स्वप्रकाशनये सर्वत्र स्वप्रकाशाऽऽत्मकपक्षज्ञानजन्यत्वात्। प्रामाण्याऽनुमितेस्तद्भिन्नतज्ज्ञानविषयकज्ञानाऽजन्यत्वात्तथैव सिद्धसाधनताऽऽपत्तेः।

वस्तुतस्तु उद्देश्याऽसिद्धया न सिद्धसाधनमित्यनुपदमेवाऽऽकर इत्यंशतस्तथात्वेऽपि सर्वत्रैवं प्रकाराभावान्न तदिति तत्त्वम्।

अत्र प्रथमज्ञानपदं तत्पदस्य केवलस्य प्रामाण्यप्रत्यवमर्शकतया प्रामाण्यविषयकज्ञानाऽजन्यज्ञानग्राह्यत्वम्, तन्मते ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वादित्य-

दर्पणः

"यत्राऽप्यतिशयो दृष्टः स स्वार्थाऽनतिलङ्घनात्।
दूरसूक्ष्माऽऽदिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता" ॥

इति मतेन प्रामाण्यस्याऽयोग्यतया योगजप्रत्यक्षाऽऽविषयत्वेन सिद्धसाधनपरिहारे उपनीतभानाऽऽत्मकं योगिप्रत्यक्षमादाय ग्रन्थोऽयं योज्य इति। यद्वा ज्ञातस्यैव प्रकारत्वाऽनुरोधेन योगिनोऽपि तज्ज्ञानविषयकज्ञानाऽपेक्षा, प्रकारत्वाऽभावे तु साध्याऽसत्त्वादेव न सिद्धसाधनमिति भावः।

ज्ञानेति। उपनीतभानाऽऽत्मकमित्यादिकल्पेनोक्तज्ञानेत्यर्थः। अतो न पौनरुक्त्यम्। अनुव्यवसायस्येति। सुरभिचन्दनमितिवत्प्रमात्वविशिष्टा प्रमेति ज्ञानप्रत्यासत्तिजन्यप्रामाण्यज्ञानस्येत्यर्थः। इत्यादिनेति। इदं ज्ञानं प्रमेति प्रमात्वमप्रमायां पूर्वाऽज्ञातमेव गृह्णन्ती भट्टमतेऽनुमितिरादिपदार्थः। सिद्धसाधनम्। अर्थान्तरम्। नैयायिकैरीदृशाऽनुमित्यनङ्गीकारादिति। एवमन्यत्रेति। प्रमावानयमिति शाब्दबोधाऽऽदौ तत्राऽपि पदार्थज्ञानस्य तन्मतेऽहेतुत्वादिति। सिद्धसाधनताऽऽपत्तेरिति। अर्थान्तराऽऽपत्तेरित्यर्थः। अत्र दूषणोद्धारे दूषणमिदम्। न च पक्षधर्मताज्ञानं न स्वप्रकाशाऽऽत्मकमिति तथर्थं तद्भिन्नज्ञानाऽपेक्षणं ज्ञानत्वरूपधर्मवत्तायाः स्वप्रकाशेन भानेऽपि ज्ञानत्वत्वस्याऽग्रहणात् व्याप्यताऽवच्छेदकप्रकारकज्ञानस्य चाऽपेक्षितत्वादिति वाच्यम्, विषयताऽऽख्येन सम्बन्धेन घट एव यत्र प्रमात्वाऽनुमितौ लिङ्गं तत्र स्वप्रकाशेनैव सकलनिर्वाहः सम्भवतीति सामान्यप्रत्यासत्त्यनङ्गीकर्तॄणां साध्यप्रसिद्धेरनपेक्षितत्वादिति भावः।

आलोकः

नुमित्याऽपि ग्रहे सम्भवति। तथा च प्रामाण्यपरतस्त्वे न विवादः किन्तु सामान्य-प्रत्यासत्तौ। तथा च सिद्धसाधनवारणार्थम्।

द्वितीयज्ञानपदं तु अप्रसिद्धिवारणाय। व्यापाराऽनुबन्धितज्ज्ञानविषयताकैरा-त्माऽऽदिभिस्तस्याऽपि जननात्। ज्ञानपदसन्निधौ तु प्रतिपत्त्यनुबन्धिविषयता लभ्यते।

तृतीयज्ञानपदं तु मन्मते प्रकारत्वस्य विशेषणत्वपर्यवसायितया व्यापाराऽ-नुबन्धिविषयताकैरेव तैः। परमते ज्ञानस्याऽपीच्छासमानविषयत्वाऽभावेन तया सिद्धसाधनवारणाय। वस्तुतस्तु उद्देश्यप्रतीत्या (प्रतीत्यसिद्ध्या) न सिद्धसाधनं व्यक्तमनुपदमेवाऽऽकरे[1] इति, अंशे च तथात्वेऽपि सर्वत्रैवं प्रकाराऽभावान्न तदिति तत्त्वम्। विधिप्रसिद्धिः प्रागिव। व्यतिरेक[2]-प्रसिद्धिस्तु तत्पदस्य ग्राह्यत्वाऽभिमताऽऽश्रय-ज्ञानपरत्वेऽप्रामाण्याऽऽश्रयविषयकज्ञानजन्याऽनुमितिमात्रग्राह्यतयाऽप्रामाण्ये, प्रामा-ण्याऽऽश्रयमात्रपरत्वे तद्वतीत्यादिनियताऽतीन्द्रियविशेष्याऽवृत्त्यप्रकारकत्वाऽऽदौ।

दर्पणः

सिद्धेति अर्थान्तरवारणाऽर्थमित्यर्थः। ज्ञानपदसमभिव्याहारात्तु तदाश्रये लब्धे तद्विषयं ज्ञानं पक्षज्ञानत्वेऽनपेक्षितमेवेति भावः।

आत्माऽऽदिभिरिति। अतद्गुणसंविज्ञानो बहुव्रीहिः। तेन शरीराऽऽदिभिरित्यर्थः। आत्माऽऽदेः प्रागभावाऽप्रतियोगित्वादिति।

ननु व्यापाराऽनुबन्धिविषयताकेन व्यवसायाऽऽदिना अनुव्यवसायाऽऽदेर्जननात् ज्ञानपदे दत्तेऽपि अप्रसिद्धितादवस्थ्यमित्यत आह—ज्ञानपदेति। तैः शरीरादिभिरित्यर्थः। परेति। प्रमान्तरगोचरेण ज्ञानेन जनितायां प्रमान्तरगोचरेच्छायां तत्प्रकारत्वेन प्रामाण्ये यदर्थान्तरं तद्वारणार्थं चेत्यर्थः।

वस्तुत इति। अंशतः सिद्धसाधनवदंशतोऽर्थान्तरस्याऽप्यदोषत्वमभिप्रेत्याऽऽह—वस्तुत इति। प्रमापदप्रवृत्तिनिमित्तत्वाऽऽदिनाऽनुगतेन रूपेण घटत्ववति घटत्वप्रकारकत्वाऽऽदीनां पक्ष-त्वात्तदंशे इच्छामादाय यदर्थान्तरम्, यच्च पूर्वं प्रमावानित्यनुमितिमादायाऽर्थान्तरमुक्तं तन्न भवतीत्यर्थः। न चैवं चरमज्ञानपदवैयर्थ्यं स्यादिति वाच्यम्, प्रथमव्यावर्त्त्येनैव सार्थकत्वात्। इदं च नवीनमताऽनुसारेण, प्राचीन-मते अंशतः सिद्धसाधनांऽशतोऽर्थान्तर-वारकयोः सार्थकत्वात्। अत एव प्रथमज्ञानपदस्य अंशतोऽर्थान्तरवारकस्य सार्थकतेति ध्येयम्।

प्रागिवेति। तज्ज्ञानविषयोरित्यर्थः। पूर्वं यावद्गर्भसाध्यसत्त्वेन तज्ज्ञानविशेष्य-

---

१. °मित्यनुपदमेवाकारे इति राजकीयपुस्तकपाठः।

२. निषेधप्र° इति रा० पु० पाठः।

आलोकः

न चाऽयं विशेष्याऽवृत्त्यप्रकारकज्ञानत्वानित्याद्यनुमितिविषयत्वात्तस्येत्युक्तक्रमेण तत्राऽपि न व्यतिरेकप्रसिद्धिरिति वाच्यम्, तदनुमित्यविषय एव प्रसिद्धेरुक्तत्वात् ।

नन्वेवं समभिव्याहृतपरत्वपक्षे विधिप्रसिद्धिर्दुर्लभा विषयज्ञानाऽऽदौ, तदाश्रयज्ञानाऽप्रसिद्धेरिति न, ज्ञानत्वघटविषयत्वाऽऽदावेव तत्सोलभ्यात् । न चैवं सति प्रामाण्याऽप्रामाण्ययोस्तज्ज्ञानविषयकज्ञानजन्यज्ञानग्राह्यत्वतदजन्यज्ञानग्राह्यत्वयोरविशेषात् कथमेकत्र स्वतस्त्वं अपरत्र परतस्त्वमिति विभाग इति वाच्यम्, गृह्यमाणप्रामाण्यव्यापकमीदृशं स्वतस्त्वं न तु[1] गृह्यमाणप्रामाण्यव्यापकमिति विवादशरीरत्वात् ।

यत्तु सर्वमते[2] तज्ज्ञाननिरूपणाऽधीननिरूपणे तज्ज्ञानसादृश्यतज्ज्ञानवैशिष्ट्याऽऽदौ तज्ज्ञानाऽभावेऽपि व्यतिरेकप्रसिद्धिः तस्य तज्ज्ञानविषयकज्ञानजन्यज्ञानग्राह्यत्वनियमादिति मतं—तन्न बुद्ध्यामहे । इयमिच्छा ज्ञानसदृशीत्यनुमानेन ज्ञानान्तरसादृश्यबाधेन पक्षधर्मताबलेनाऽपूर्वज्ञानसादृश्यविषयीकरणात् । न च ज्ञानान्तरसादृश्ये तादृशाऽनुमित्यविषये तत्प्रसिद्धिः । प्रामाण्यस्य प्रतिज्ञानव्यक्तिभिन्नभिन्नाऽऽत्मकस्य सामान्येन रूपेण पक्षतायां तत्तज्ज्ञानविषयकज्ञानाऽजन्यज्ञानग्राह्यत्वे पर्यवसितसाध्ये तद्व्यतिरेकस्याऽपि [3]तत्तज्ज्ञानविषयकज्ञानजन्यज्ञानग्राह्यत्वाऽऽत्मकस्य[4] तज्ज्ञान-

दर्पणः

योः स्थलविशेषे प्रसिद्धेः प्रकारीभूते च सर्वस्मिन् प्रसिद्धिरित्युक्तम् । अत्र तु सम्भवमात्रस्य साध्यतया सर्वत्र तज्ज्ञानविशेष्ययोः प्रसिद्धिरिति विशेषः ।

उक्तक्रमेणेति । साध्यप्रसिद्धेः परगतेऽनुमित्यनङ्गत्वेनेत्यर्थः । तस्याऽपि विधेः प्रसिद्धेः एवमप्रामाण्यस्याऽपि साध्यप्रसिद्धिनिरपेक्षाऽनुमितिविषयतायाः ।

गृह्यमाणप्रामाण्यव्यापकमिति । गृह्यमाणसकलप्रामाण्यनिष्ठमित्यर्थः ।

संशयेऽपीति । निश्चयस्याऽपेक्षितत्वादिति भावः ।

संकोचस्येति । इदं च समाधिसौकर्यादुक्तम् । ईदृशाऽनुमित्यगोचरतायाः अनिश्चयेन सङ्कोचस्याऽसम्भावितत्वादिति ।

नन्वेवं तदनुमित्यविषय एव प्रसिद्धेरुक्तत्वादिति पूर्वोक्तमसङ्गतम् । तादृशाऽनु-

१. न चेति रा० पु० पाठः ।
२. 'समवते' ग्रन्थो नास्ति पुस्तकान्तरे ।
३. तज्ज्ञानेति रा० पु० पाठः ।
४. ज्ञानाजन्यज्ञानग्राह्यत्वाभावात्मकस्येति रा० पु० पाठः ।

आलोकः

**विषयकज्ञानाऽतिरिक्तज्ञानग्राह्ये[1] सादृश्यान्तरे प्रसिद्धेः शङ्कितुमशक्यत्वात्। न चोक्तप्रकारेण सादृश्यग्रह एव मानाभावः, बाधकाऽभावात्। संशयेऽपि समीहिताऽसिद्धेश्च। न च यस्य ज्ञानस्य सादृश्यमीदृशाऽनुमितिगोचरस्तदन्यज्ञानप्रामाण्यमेव पक्ष इति वाच्यं, तस्य[2] स्वतस्त्वाऽसिद्धिप्रसङ्गात्। उक्तक्रमेण सामान्यपक्षतायां सम्भवन्त्यां सङ्कोचस्याऽनौचित्यात्।**

**वयं तु ब्रूमः—सामान्यप्रत्यासत्तिजन्यप्रत्यक्षनिबन्धनसिद्धसाधनाऽपनुत्तये ग्राह्यत्वस्य प्रकारत्वपर्यवसाने धर्मिण्येव व्यतिरेकप्रसिद्धिः सुलभा। धर्मस्यैव प्रकारत्वादिति संक्षेपः।**

दर्पणः

मित्यविषयताया निश्चेतुमशक्यत्वादित्यरुचेराह—**वयं त्विति**। **धर्मिणीति**। ज्ञानस्वरूप इत्यर्थः। **धर्मस्यैव** ज्ञानत्वस्यैव।

ननु घटत्वं बुद्धिस्थीकृत्य घटत्ववति घटत्वप्रकारकत्वपरतया प्रयुक्तेन तद्वति तत्प्रकारकत्वमिति वाक्येन पटत्वं बुद्धिस्थीकृतवति श्रोतरि पटत्ववति पटत्वप्रकारकत्वं बोध्यते। तत्र प्रकृतप्रामाण्याऽऽश्रयीभूतपटज्ञानविषयकज्ञानाऽनपेक्षितत्वात् सिद्धसाधनम्। किञ्च पटत्ववति पटत्वप्रकारकमिदं ज्ञानमिति विसंवादिशुकाऽऽदिवाक्यजज्ञानं तज्जन्य-सामान्यप्रत्यासत्तिजज्ञानं चाऽऽदाय सिद्धसाधनम्। किञ्च प्रामाण्यघटकान् घटत्वाऽऽदि-पदार्थान् विशकलितानेव जानतो विशेष्ये विशेषणमिति ज्ञानेनोत्पन्नं मानसज्ञानमादाय सिद्धसाधनम्।

किञ्च विषयत्वं विहाय प्रकारत्वपर्यन्तधावनं अभिधेयत्वसामान्यजज्ञानमादाय सिद्धसाधनवारणाय, तत्र च व्यावर्त्त्याऽप्रसिद्धिः। अर्थान्तरवारकत्वेन सप्रयोजनत्वेऽ-भिधेयमस्तीत्याःदिशब्दजज्ञानप्रयुक्तसिद्धसाधनवारकत्वेन व्यावर्त्त्यप्रसिद्धौ च सत्यामपि प्रकारत्वस्याऽनिरुक्तिः। तथा हि न तावज्जनकीभूतज्ञानविषयत्वं तत्। परमते बाधात्। नाऽपि भासमानधर्मत्वरूपसम्बन्धकत्वं अभिधेयवानित्यादिबोधमादाय सिद्धसाधनता-दवस्थ्यात्। अथ साधारणधर्माऽनवच्छिन्नस्य प्रकारत्वं विवक्षितम् अत्र चाऽभिधेयत्वाऽऽ-द्यवच्छिन्नस्य प्रकारत्वमिति चेत्, न। एवं सति साधारणधर्माऽनवच्छिन्नविषयत्वमेवोच्यतां कृतं प्रकारत्वपर्यन्तधावनेन। यच्च 'प्रमावानयं', 'इदं ज्ञानं प्रमे'त्येवंरूपामनुमितिं प्रमापदाऽऽदिजन्यशाब्दज्ञानं चाऽऽदायाऽर्थान्तरमाशङ्कितं—तदपि न मनोहरम्[3]। निरधि-करणस्य प्रमात्वस्य प्रमात्वत्वस्य वा ग्रहाभावेनाऽर्थान्तराऽनवकाशात्। पक्षबहिर्भावस्य

---

१. 'ज्ञानजन्ये ज्ञानग्राह्ये' इति पाठान्तरम्।

२. तस्येत्यादिप्रसङ्गादित्यन्तः पाठो रा० पु० नास्ति।

३. तत्र पक्षक्षतये इति वा पाठः।

आलोकः

न चैतदेव कथमित्यत आह—परत इति ।

ननु पक्षसंकोचस्याऽवश्यकतयाऽसम्भवस्थलीयप्रामाण्यस्य पक्षबहिर्भावेनैव साध्ये बहुविशेषणोपादान व्यावृत्ति नं भवतीति मनसि कृत्याह—स्वाश्रयग्राहकेणेति । एवं-कारो यावदर्थकस्तेन यावत्स्वाऽऽश्रयग्राहकग्राह्यत्वं पर्यवस्यतीति भावः। अतो नैवकार-स्य क्रियासङ्गत्याऽत्यन्ताऽयोगव्यवच्छेदलाभेन समीहितसिद्धिः । स्वांऽऽश्रयग्राहकजन्य-

दर्पणः

च तादृशानुमित्याद्यविषयतानिश्चयत्वाऽभावेन दुष्टत्वात् । यच्च प्रथमज्ञानपदप्रयोजनमुक्तं ज्ञानं प्रमेत्यनुमितिमादायाऽर्थान्तरवारणं—तदपि न । तत्राऽपि साध्यताऽवच्छेदकप्रमात्व-त्वग्रहाऽवश्यकत्वेनाऽर्थान्तराऽनवकाशात् । यच्च ज्ञानरूपे धर्मिणि व्यतिरेकप्रसिद्धिः—साऽपि न परमते सम्भवति । तन्मते पूर्वंज्ञातस्य प्रकारत्वादिति ।

अत्रोच्यते—शब्दाऽप्रयोज्येति चरमज्ञाने विशेषणादाद्यदोषत्रयोद्धारः । वैशिष्ट्यं च प्रकारत्वेनाऽभिमतम् । न च विशेष्ये विशेषणमितिरीत्या जायमानं मानसज्ञानं विशिष्टं प्रकारीकरोति । विशेषणताऽवच्छेदकविशेषणसंसर्गस्य विशिष्टमध्यनिविष्टस्य पूर्वाऽज्ञातत्वेनाऽप्रकारत्वात् । परमते च ज्ञानसामान्यप्रत्यासत्त्यभावेन तादृशं ज्ञानमेव नाऽस्तीति चतुर्थदोषोद्धारः । अत एव प्रकारत्वपर्यन्तधावनमिति पञ्चमदोषोद्धारः । किं च स्वरूपसम्बन्धविशेष एव प्रकारत्वं तादृशज्ञानेन सह प्रामाण्यस्य साध्यः अभिधेयवानिति ज्ञाने तज्ज्ञानेऽपि न तेन, तस्य फलैक्योन्नेयत्वात् । तदपि न मनोहरमिति तु मूलोपरि न दोषावहम् । पूर्वपक्षपरीहारौ च परकीयावेवेति तद्दोषेऽपि न क्षतिः ।

यद्वा समर्थप्रवृत्तिजनकताऽवच्छेदकधर्माऽवच्छिन्नज्ञानवानित्यनुमितौ समर्थप्रवृत्ति-जनकताऽवच्छेदकधर्मवत्त्वस्य साध्यताऽवच्छेदकस्य पटज्ञानाऽदौ ग्रहे पक्षधर्मताबलाद्-घटत्ववति घटत्वप्रकारकत्वाऽवच्छिन्नं ज्ञानमवगाहमानमादायाऽर्थान्तरं स्यादेव । न च तत्र साधारणधर्माऽवच्छेदेन घटत्ववतीत्यादेः प्रकारतेति वाच्यम्, प्रकारान्तरवृत्तिर्हि धर्मः साधारणः पक्षधर्मताबलात् घटत्ववतीत्यादौ प्रकारतया भासमाने घटत्व-वतीत्यादिकमपि न प्रकारः, येन समर्थप्रवृत्तिजनकताऽवच्छेदकधर्मत्वं साधारणं स्यात् । अत एव यच्च प्रथमेत्यादिदोषोद्धारः । तत्राऽप्युक्तरीत्याऽर्थान्तरसम्भवात् । पक्षाद्बहिर्भावश्च स्वमात्रप्रतीतवस्तुविशेषज्ञानप्रामाण्यं पक्षीकुर्वता शक्यत एवेति । ज्ञानरूपे धर्मिणि प्रसिद्धिश्च मतभेदेनैवोक्तेनि । न चैवं सकलसाधारणी व्यतिरेकप्रसिद्धिः क्वेति वाच्यम्, पट-ज्ञानत्वाऽवच्छिन्नप्रतियोगिताकाऽभावत्वाऽऽदिलक्षणधर्मे व्यतिरेकप्रसिद्धेः सुलभत्वादिति ।

अत्र गुरुमते तत्पदाऽनुपादाने ज्ञानाऽऽख्यलिङ्गज्ञानेन जनितायामात्माऽनुमितौ यत्प्रामाण्यं तयैवाऽनुमित्या गृह्यते, तत्रांऽशतो बाधः । न च तदेवानुमित्यादि यत्र जनकं तत्प्रामाण्ये बाधतादवस्थ्यम् । तस्य पक्षबहिर्भावात् ।

आलोकः

ग्रहणकर्मैवेत्यर्थपर्यवसानं विशेषणसङ्गत्याऽयोगव्यवच्छेदप्राप्तावपि तथा। शङ्खः पाण्डुर एवेत्यत्र सर्वशङ्खव्यक्तौ पाण्डुरत्वं न तु सर्वपाण्डुरत्वयोगः शङ्खे इतिवत् सर्वप्रामाण्यव्यक्तौ तदाश्रयग्राहकग्राह्यत्वं न तु तदाश्रयग्राहकाणां यावतां प्रामाण्यग्राहकत्वं लभ्यते यतः।

न च यावत्स्वाऽऽश्रयग्राहकपरं स्वाऽऽश्रयग्राहकपदं तेन यावदन्तर्भूतस्य विशेषणतया तस्यैवाऽयोगव्यवच्छेदलाभ इति वाच्यम्, तथा सति यथाश्रुते क्रियासङ्गतैवकारपक्षस्याप्यक्षुण्णत्वात्। किं बहुनैवं सति एवकारोपादानस्यैवाऽनौचित्यादीनि दूषणानि अलग्नकानि[1], एवकारस्यैव यावदर्थकत्वात्। न च पूर्वविप्रतिपत्त्यभेदः, विशेषणोपादानाऽनुपादानाभ्यां ज्ञानत्वेन स्वाऽऽश्रयत्वेन च प्रामाण्याऽऽश्रयोपादानेन स्फुटभेदात्। एनञ्चार्थं मनसा चैवमित्यादिप्रामाण्यग्रहप्रकारान्तरप्रदर्शनस्थले स्वयमाकर एव कथयिष्यति। सविषयकपदोपादानं त्ववश्यं पूर्वयुक्तेः[2]।

दर्पणः

**मुरारिमते** ज्ञानाऽनुव्यवसायप्रामाण्ये तदनुव्यवसायग्राह्ये तदा नांऽशतो बाधः स्यात्।

**भट्टमते**ऽपि ज्ञाततालिङ्गकाऽनुमितेः ज्ञानगोचरज्ञानजन्यत्वनियमात् ज्ञानत्वाऽऽदेः साध्यताऽवच्छेदकस्य ज्ञान एव ग्रहाद्बाधः स्यात्। तस्मात्तज्ज्ञानविषयकज्ञानव्यतिरेकप्रतियोगिशब्दाऽप्रयोज्यज्ञानप्रकारताकत्वं त्रितयसाधारणमनवद्यम्। एतद्व्यतिरेकश्चाऽनुमित्या शाब्दज्ञानेन उपनीतज्ञानेन च साधारधर्माऽनवच्छिन्नप्रकारकेण नियमतस्तज्ज्ञानविषयकज्ञानसापेक्षेण प्रामाण्यग्रहं वदतां **नैयायिका**नामविकल इति संक्षेपः।

**अत इत्यादीनि** दूषणानि अलग्नकानीति सम्बन्धः। दूषणान्याह—नेत्यादिसमीहितसिद्धिरित्यन्वयः। **तथेति**। न समीहितसिद्धिरित्यर्थः। यद्यपि प्रामाण्यं स्वाऽऽश्रयग्राहकेण गृह्यत ऐवेत्यस्याऽयमर्थः, स्वाऽऽश्रयग्राहकं प्रामाण्यं गृह्णात्येव प्रामाण्यग्रहणकर्त्रैवेति यावत्। तथा च प्रामाण्यं स्वकर्मकग्रहणकर्तृतानियतस्वाऽऽश्रयग्राहकमित्यर्थपर्यवसाने समीहितसिद्धिर्भवत्येव, तथाऽपि कुसृष्टिभीत्याऽग्रे मूले यावत्स्वाऽऽश्रयग्राहकेण ग्राह्यत्वस्य कण्ठोक्त्या च स पक्षो नाऽऽदृत इति ध्येयम्।

**इत्यादीनीति**। प्रामाण्यमेव स्वाऽऽश्रयग्राहकेण गृह्यत इति विशेष्यसंगतैवकारपक्षे न समीहितसिद्धिर्बाधश्चेत्यादिशब्दार्थः।

**ज्ञानत्वेनेति**। यद्यपि प्रथमविप्रतिपत्तावपि ज्ञानपदं स्वाश्रयपरमेव तथाऽपि तदा ज्ञानान्तर्भावोऽप्यस्त्विति फक्किकापर्यालोचनया तत्र स्वाऽऽश्रयज्ञानपरं इह तु स्वाऽऽश्रयमात्रपरमिति भेदः।

---

१. अनवकाशानीति पाठान्तरम्।

२. पूर्वोक्तयुक्तेरिति पाठान्तरम्।

आलोक:

यत्तु पक्षसंकोचस्वाच्छन्द्यमेव, तथा च ज्ञानपदाऽद्यप्रतिपाद्यज्ञानप्रामाण्यमात्रपक्षत्वेनाऽभ्युपपत्तेरिति तत्—न। सर्वस्यैव तथात्वेन पक्षाऽलाभात्। तत्रेदम्मतद्वयसाधारणमेव। अन्यथा गुरुमते स्वाश्रयग्राह्यत्वेनैव सामञ्जस्यात् व्यर्थविशेषणताप्रसङ्गादिति मतमयुक्तम्। पूर्वयोरपि ज्ञानग्राह्यत्वतदग्राह्यत्वयोरेवं साध्ययोर्गुरुनये समीहितसिद्धेः, ज्ञानपदाऽऽदीनां सर्वथा तत्तद्विशेषपरत्वात् व्यर्थविशेषणत्वाऽऽपत्त्या तत्राऽपि तद्बहिर्भावाऽऽपत्तेः। साध्ये च न व्यर्थविशेषणता, बीजाऽभावात्। किञ्च स्वाश्रयग्राहकत्वस्य स्वाऽऽश्रयादन्यत्राऽपि सत्त्वेन नेह व्यर्थविशेषणता। लघ्ववच्छेदकव्याप्यस्यैव गुर्ववच्छेदकस्यैव व्यर्थविशेषणताबीजत्वात्। अन्यथा प्रमात्वमात्रेण व्याप्तिग्रहे प्रमेयत्वेऽपि तदापत्तेरिति समाधेरपि समानत्वादिति।

न त्रिभिरेकदा विवादोऽस्त आह—स्वाऽऽश्रयेणेति। न च स्वाऽऽश्रयेणैवेत्येवकारवैयर्थ्यम्। ईश्वरज्ञानग्राह्यत्वेन[1] सिद्धसाधनवारकत्वादिति भावः।

ननु प्रत्येकपक्षे भट्टनये किमनुमितिग्राह्यत्वं साध्यं यावदनुमितिग्राह्यत्वं वा ज्ञाततालिङ्गकाऽनुमितिग्राह्यत्वं वा। आद्ये सिद्धसाधनम्। द्वितीयेऽसम्भवः। तृतीयेऽप्रसिद्धिरिति चेत्—न। ज्ञानाऽनुमितिग्राह्यन्न वेति भट्टैः समं विप्रतिपत्तेः। सा च मतद्वये प्रसिद्धैव। न च प्रमावान् इत्यनुमितिग्राह्यत्वेन सिद्धसाधनम्। ज्ञानत्वाऽवच्छिन्नव्यापकताकलिङ्गकाऽनुमितिग्राह्यत्वस्य तदर्थत्वात्। न च प्रमावान् इत्यनुमितौ

दर्पण:

ननु प्रथमविप्रतिपत्तौ यावज्ज्ञानग्राह्यं न वेत्युच्यमाने बाधात् द्वितीयविप्रतिपत्तौ तद्ग्राह्यं न वेत्युच्यमाने ईश्वरज्ञानाऽऽदिग्राह्यतया सिद्धसाधनात् यावत्त्वविशेषणस्य चाऽभावात् कथमितरांऽशं विना समीहितसिद्धिरित्यत आह—ज्ञानपदाऽऽदीनामिति। अयं भावः, प्रथमविप्रतिपत्तौ प्रामाण्यपदं विशेषपरम्। साध्ये ज्ञानपदं च तदाश्रयपरम्। द्वितीयविप्रतिपत्तौ च चरमज्ञानपदेन तत्तत्प्रामाण्याऽऽश्रयाऽस्मदादिज्ञानमेव गुरूणां सामान्याऽऽकारेणाऽभिमतम्। तथा च विविच्य तदेवोच्यतां कृतमितरविशेषणाऽऽयासैरिति।

सिद्धसाधनवारकत्वादिति। यावदर्थकत्वादिति भावः। ईश्वर इत्युपलक्षणम्। सर्वविषयकसर्वप्रकारकयोगिज्ञानस्य सर्वप्रामाण्याऽऽश्रयतया तद्ग्राह्यत्वेन सिद्धसाधनमित्यपि द्रष्टव्यम्।

ननु व्यावर्त्याऽप्रसिद्धेर्वैयर्थ्यमिति सर्वं प्रमेयमिति शाब्दज्ञानप्रामाण्यवारणायोपात्तं तदपि वारयतीति।

अत्रेदं चिन्त्यम्। तत्तद्व्यक्तिपरतायां स्वपदस्य कथमीश्वरज्ञानमादाय सिद्धसाधनम्? घटज्ञानाऽऽदिवृत्तिप्रामाण्यव्यक्तिविशेषाऽनाश्रयत्वात्तस्येति। यथाविवक्षित-

१. ग्राह्यत्वे इति रा० पु० पाठः।

आलोकः

तथा। तत्र प्रमात्वस्यैव व्यापकताऽवच्छेदकत्वात्। यथा च ज्ञानत्वाऽवच्छिन्नायामपि व्यापकतायां तन्मते विशेषलाभः तथाऽनुपदमेव प्रतिपादयिष्यामः।

अंशत इति। यद्यपि यथाविवक्षितसाध्ये प्रामाण्याऽऽश्रयीभूताऽस्मदादिज्ञानाऽग्राह्यत्वान्न यावद्गर्भसाध्यसम्भवः, यथाश्रुते त्वीश्वरज्ञानमादाय प्रामाण्यमात्र एव साध्यमित्युभयथाऽपि नांऽशतः सिद्धसाधनम्, तथाऽपि विवक्षितसाध्यस्य सर्वविषयत्ववति तत्प्रकारकत्वप्रामाण्याऽऽदौ सत्त्वेनांऽशत इत्युक्तमिति भावः। विशेषणं पक्षीकृतप्रामाण्याऽऽश्रयज्ञानस्येति शेषः। इदञ्चोपलक्षणम्। जन्यत्वमपि विशेषणम्। ईश्वरज्ञानप्रामाण्ये सिद्धसाधनतादवस्थ्यात्।

परमिति। योगजाऽऽदिजन्यत्वरूपप्रतियोग्यप्रसिद्ध्या तदजन्यत्वाऽप्रसिद्धेरित्यर्थः। ननु नेदं विशेषणमुपादेयं, किन्तु यद्वस्तुतस्तदजन्यमुभयाऽनुमतं तत्प्रामाण्यमेव पक्षः। विशेषणत्वेऽपि योगजाऽऽद्यजन्यत्वस्य षोढ़ाप्रत्यासत्तिजन्यपरोक्षाऽन्यतरत्वमर्थः कल्प्यतामित्यरुचेराह—प्रामाण्यमात्रेति। पक्षताऽवच्छेदकभेद एवांऽशतः सिद्धसाधनं दोष इति किमर्थं पक्षसङ्कोचो वा विशेषणं वेति भावः।

एतज्ज्ञानग्राहकेति। अत्राऽपि ग्राहके सविषयकविशेषणोपादानं पूर्ववदेवेत्यवगन्तव्यम्[1]।

दर्पणः

साध्ये यावत्स्वाश्रयग्राह्यत्वरूपे। प्रामाण्यमात्रे सर्वस्मिन् प्रामाण्ये। तथाऽपीति। सर्वविशेष्यकत्वे सति सर्वत्वप्रकारकत्वरूपप्रामाण्यस्य ईश्वरज्ञानाऽऽदावेव वृत्त्या यावत्स्वाऽऽश्रयग्राह्यत्वादंशतः सिद्धसाधनमित्यर्थः। जन्यत्वमपीति। अत्र च सर्वत्ववति सर्वत्वप्रकारकज्ञानजनकं सर्वशब्दाऽऽदिकमादिपदेन संगृहीतमित्यपि द्रष्टव्यम्। तेन तादृशशाब्दज्ञानाऽऽदिकमादाय नांऽशतः सिद्धसाधनम्।

षोढ़ा[2] प्रत्यासत्तीति। उभयसिद्धप्रमात्वविषयताकभिन्नं परोक्षमत्र विवक्षितम्। अतो न सर्वशब्दाऽऽदिजज्ञानमादाय दोषः। तादृशशाब्दज्ञानाऽऽदिप्रसिद्धौ नैयायिकसिद्धप्रामाण्यविषयताकभिन्नत्वमपि विशेषणं ज्ञाने दातुं शक्यत एवेत्यप्यरुचिर्द्रष्टव्या। अत्राऽपीति। अप्रामाण्याऽऽग्राहकेति विशेषणाऽदाने पक्षसङ्कोचः पक्षाऽसङ्कोचे तद्विशेषणदानमित्यन्ततस्तत्र स्वाच्छन्द्यमित्यर्थः। ज्ञानपदादितः प्रामाण्याऽग्रहणाच्च विषयत्वं विशेषणं देयमित्यपि ध्येयम्।

---

१. अत्राऽपि ग्राहकविशेषणोपादाने पक्षसङ्कोचे च पूर्ववत् स्वाच्छन्द्यमित्यवगन्तव्यमिति पाठान्तरम्।

२. षोढ़ेति। यद्यपि भट्टस्य समवायाऽभावादभावस्याऽऽनुपलब्धत्वाद्, गुरुमतेऽतिरिक्ताऽभावाऽभावान्नेदमुभयसिद्धं तथाऽपि स्वजनकेन्द्रिययोग्यवर्त्तमानविशेष्यकाऽपरोक्षोभयसिद्धप्रमात्वविषयताकभिन्नपरोक्षाऽन्यतरत्वं विवक्षितमिति।

आलोकः

विशिष्टेति । अगृहीताऽसंसर्गकधर्मधर्मिगोचरैकज्ञानत्वमित्यर्थोऽत एव नाऽग्रिमलाघवाऽसम्भवो न च विशेषणज्ञानं विनेत्यादि अग्रिमदूषणमलग्नकमित्यर्थः ।

नाऽपि प्रमाऽऽहितेति । ननु ज्ञातताविशेषस्य प्रथममप्रतीतौ वक्ष्यमाणमपि प्रामाण्यं कथं तन्मते ग्रहीतव्यम् । न च घटत्वविशिष्टोऽयं घटत्वप्रकारकधीविशेष्यो घटत्वप्रकारकज्ञातताश्रयत्वादिति पक्षधर्मताबलाद्विशिष्टसिद्धि र्न्न तु विशिष्टमनुमेयं येन विशिष्टाऽऽहित ज्ञातताविशेषज्ञानं प्राङ्नियमतोऽपेक्षेतेति वाच्यम् । एवं स्वतः प्रामाण्यग्रहेऽप्रामाण्यस्याऽप्येवं स्वतोग्रहप्रसङ्गात् । अघटोऽयं घटत्वप्रकारकधीविशेष्यः[१] तथाभूतज्ञातताविशेषवत्त्वादित्यनुमानसौकर्यात् । किञ्चैवमस्माभिरपि समं पर्यवसितं विवादेन । एवं घटत्वप्रकारकज्ञानविशेष्यत्वाऽनुमानसम्भवात् । इयांस्तु विशेषो यदस्मन्मतेऽतिरिक्तज्ञातताभावात्तदनुमापकं लिङ्गान्तरं, तन्मते तु सैव लिङ्गमिति । अपि च ज्ञानाऽतीन्द्रियत्वे साध्यप्रसिद्धिर्जन्मान्तरसंस्कारद्वारैवाऽऽद्यानुमानस्य वाच्या । तथा च विशेष्याऽवृत्त्यप्रकारकज्ञानत्वमेव ततः स्मृत्वाऽनुमीयताम् । न च विशिष्टस्मरणेऽपि तल्लिङ्गपक्षधर्मताऽनवगमः । घटत्वसमानाधिकरणघटत्वप्रकारकज्ञाततावत्त्वस्य तल्लिङ्गस्य ग्रहसम्भवादिति ।

अत्राहुः—न प्रथमं प्रमाऽऽहितज्ञातताविशेषो नियमतः शक्यज्ञानः, प्राग्भवीयसंस्कारस्य विशिष्टस्मारकत्वे मानाऽभावाच्च विशिष्टज्ञानोपायान्तरस्य वक्ष्यमाणत्वात्, किन्तु ज्ञातामात्रं शक्य[१] ज्ञानं तज्जन्याऽनुमितावेव च प्रामाण्यं विषय इति तत्त्वम् । तथा हि—घटमहं जानामीति ज्ञानज्ञानाऽऽकार इति सर्वसिद्धम् । स स्वप्रकाशतयाऽन्यथा वेति[२] विवादो, नाऽऽकारे, तदाकारधीविषयः प्रामाण्यं न वेत्यत्र तु विवादस्तत्र चाऽहं

दर्पणः

अगृहीतेति मूलम् । यथार्थत्वे सतीति विशेषणमत्र देयम् । अत एवेति । विशिष्टज्ञानत्वमित्यस्य वैशिष्ट्यविषयकत्वपरत्वाऽऽभावादेवेत्यर्थः । यद्यपि अगृहीतेत्यादेरपि परस्परनिरूपितधर्मत्वधर्मित्वाऽवगाहित्वमर्थं इति वैशिष्ट्यविषयकत्व एव पर्यवसानमित्यग्रिमग्रन्थाऽलग्नकत्वं तदवस्थमेव, तथाऽपि परस्परनिरूपितत्वभागमादायाऽग्रिमग्रन्थो योज्य इति भावः ।

न तु विशिष्टमिति न तु प्रमात्वाऽवच्छिन्नव्यापकमनुमेयमित्यर्थः । ज्ञातताविशेषेति । प्रमापिततेत्यर्थः । तथेति । घटत्वप्रकारकधीविशेष्य इत्यर्थः । तथाभूतेति । घटत्वप्रकारकेत्यर्थः ।

---

१. शक्यज्ञानम् इति नास्ति रा० पुस्तके ।
२. वेति प्रकारे इति आ० पुस्तके ।

आलोकः

ज्ञानवान् ज्ञाततावत्त्वाद्दिति वा घटत्वप्रकारकज्ञानवान् घटत्वप्रकारकज्ञातता-वत्त्वादिति वा जायमानाऽनुमितिर्ज्ञानविषया भवन्ती ज्ञानविषयमप्यवगाहमाना धर्मधर्मिवत्तदुभयवैशिष्ट्यमपि विषयीकरोति, ज्ञानविषयत्वाऽविशेषात्तदाह— व्यवसायरूपेत्यादि ।

तथा च घटत्वप्रकारकत्वघटत्ववैशिष्ट्यवद्विषयकत्वे ज्ञानस्याऽनुमित्या विषयीकृते किमन्यदवशिष्यते प्रामाण्यं ज्ञातुमिति तेषामाशयः । न च प्रत्यक्षेणैव ज्ञानस्य ग्रहे विषयस्य ज्ञानवित्तिवेद्यतेति वाच्यम् । तन्मते तदनभ्युपगमेन तत्स्थानाऽभिषिक्ताऽनुमितेरेव तथात्वनियमात् । स्ववृत्तिवर्त्तमानज्ञानग्रह एव सर्वमते तथात्वनियमात् । न चाऽनुमितेर्व्यापकताऽवच्छेदकप्रकारकतानियमान्नैवमिति वाच्यम् । ईश्वराऽनुमाने ज्ञाननित्यत्ववदतथाभूतस्याऽपि तद्विषयत्वात् । यद्धि येन विना न भासते तद्धीहेतोस्तद्बोधकत्वनियमात् । अत एव गुरूणामशक्याऽपि व्यक्तिः शाब्दज्ञाने भासते । अन्यथाऽस्माकमपि ज्ञानप्रत्यासत्त्यादिकमशक्यकल्पनं स्यात् । न च ज्ञाततावत्त्वं समवायेनाऽप्रसिद्धं जनकतया च व्यभिचारीति वाच्यम्, तदीयतानियामकस्य सम्बन्धान्तरस्य-वाऽभ्युपगमात् अन्यथा[1] नियताऽधिकरणज्ञानाऽसिद्धिप्रसङ्गादित्यलमनेनेति दिक् ।

प्रामाण्यं प्रकृते विचारणीयमिति शेषः । तन्निश्चयादेव तद्विशेष्यकत्वनिश्चयादेवेत्यर्थः ।

दर्पणः

घटत्ववैशिष्ट्यवद्विषयकत्व इति । घटत्ववद्विशेष्यकत्व इत्यर्थः । प्रकारत्वव-द्विशेष्यत्वस्याऽपि समानवित्तिवेद्यत्वादिति भावः ।

ज्ञाननित्यत्ववदिति । यद्यपि सर्गाऽऽदिकालीनद्व्यणुकाऽऽदिपक्षतया तत्पूर्ववर्त्तित्व-लक्षणाऽन्यत्वस्य पर्वतीयत्वस्येव पक्षधर्मतावललभ्यत्वेऽपि न व्यापकताऽवच्छेदकप्रकार-कत्वनियमहानिः तथाऽपि लाघवलभ्यस्य ध्वंसाऽप्रतियोगित्वरूपनित्यत्वाऽऽदेः प्रकारतयेदं द्रष्टव्यम् ।

ननु तत्र लाघवमिव नेह तद्बोधकमस्तीत्यत आह—अन्यथेति । यदि विषयं विनाऽपि ज्ञानग्रह इत्युपेयं[2] तदा विषयांऽशे व्यवसायरूपज्ञानस्य प्रत्यासत्तिता प्रकारक-त्वांऽशे च समानवित्तिवेद्यता न कल्प्येत्यर्थः । समवायेनेति[3] । तादात्म्येनेत्यर्थः । व्यभिचारीति । ज्ञानाऽऽदाविति शेषः । आत्मना सह ज्ञाततायास्तदायत्तानियामक-

१. अन्यथा इति नास्ति रा० पुस्तके ।
२. यदि विषयं विनाऽपि ज्ञानग्रहोऽनुव्यवसाये तदा न विषयग्रहाय प्रत्यासत्तिः कल्प्येत्यर्थः ।
३. 'समवायेनाऽसिद्धमि'ति । ज्ञाततायास्तैर्विषय एव घटादौ समवायस्वीकारान्नाऽत्म-नीत्यर्थः ।

आलोकः

**विशेष्य इति । यद्यपि गुरुमते न वैशिष्ट्यविषयकत्वं प्रामाण्यं तथाऽप्यस्मदभिमतमपि प्रामाण्यं सुग्रहमेवेत्यभिसन्धायैतदभिधानादित्यन्ये ।**

**वस्तुतस्तु धर्मधर्मिभावाऽऽत्मकं वैशिष्ट्यं तन्मतेऽपि विशिष्टज्ञानविषय इत्युक्तं विप्रतिपत्तौ, तन्मते तु यथार्थत्वं प्रामाण्यं यथा स्वग्राह्यं तथा अग्रे वक्ष्यते । न चैवं तन्मते ज्ञानत्वमेव तत् । तस्य लक्षणत्वेऽप्यस्वरूपत्वात् । त्वन्नयवद्व्यवहाराऽप्रयोजकत्वात् ।**

विषयनिरूप्यमिति । **विषयाऽविषकज्ञानाऽविषय इत्यर्थः ।**

व्यवसायेति । **व्यवसायविषयताया नियामिकायास्तुल्यत्वादित्यर्थः ।**

**ननु विषयनिरूप्यं ज्ञानं न तु यावद्विषयनिरूप्यमित्यग्रे वक्ष्यते । तथा च**

दर्पणः

सम्बन्धविशेषाऽनङ्गीकारे नियताऽधिकरणकं ज्ञानं न सिद्ध्येदित्याह—**नियतेति** । तद्वति तत्प्रकारकज्ञानत्वाऽऽदि न प्रमापदप्रवृत्तिनिमित्तम्, स्मृतावपि गत्वात्, तत्र च प्रामाण्यव्यवहाराऽभावादित्यत आह—**प्रकृत**[1] इति । तन्निश्चयादेवेत्यत्र सन्निहितस्यैव तद्वैशिष्ट्यज्ञानत्वस्य तत्पदेन परामर्शशङ्कां निराकरोति—**तद्वद्विशेष्यकत्वादिति** । **ज्ञानत्वमेव तदिति** । ज्ञानत्वमेव यथार्थत्वनियतमिति तदेव प्रामाण्यमस्त्वित्यर्थः । **तस्येति** । ज्ञानत्वस्येतरव्यावर्त्तकत्वेऽपि निष्कम्पप्रवृत्त्युपयोगित्वाऽभावेन प्रकृते विचारणीयत्वाऽभावादित्यर्थः । ननु **विषयनिरूप्यमिति**[2] मूले वैयधिकरण्यं विषयनिरूप्यत्वस्य हेतो र्ज्ञाननिष्ठत्वात् साध्यस्य च विषयगतत्वात् । न च ज्ञानवित्तिवेद्यो विषय इत्यस्य विषयवित्तिवेद्यं ज्ञानमित्यर्थः तथा च सामानाधिकरण्यमक्षुण्णमिति वाच्यम् ।

साध्याऽऽविशेषाऽऽपत्तेरित्यत आह—**विषयाऽविषयकेति**[3]। तथा च विषयाऽविषयकज्ञानाऽविषयत्वं हेतुः विषयविषयकतानियतस्वविषयकज्ञानवत्वं साध्यमिति नोक्तदोषद्वयाऽवकाश इति भावः । ननु विषयाऽविषयकज्ञानाऽविषय इत्यत्र ज्ञानपदेन प्रत्यक्षं वक्तव्यम्, ज्ञानपदाऽऽदिना विषयनिरपेक्षेण ज्ञानज्ञापनात् । तथा च **भट्टमते**ऽनुमितिग्राह्यत्वान्नेयं युक्तिरित्यस्वरसात् **टीकाकृद्वक्ष्यमाणस्वरसाद्वा व्यवसायेति** मूलम् । तदप्यसङ्गतम् । अनुमितौ स्वप्रकाशे च ज्ञानप्रत्यासत्त्युपवर्णनविरोधादित्यत आह—, **व्यवसायविषयताया** इति ।

---

१. 'प्रकृत' इति । तथा च प्रवर्त्तकज्ञानप्रकारनिर्वचनमिदं न लक्षणनिर्वचनमिति न दोष इत्यर्थः ।

२. ननु विशेष्ये तद्धर्मवत्त्वादिकं बहिरर्थः कथं मानसानुव्यवसायगम्य इत्यत आह—'विषयनिरूप्यमि'ति मूलम् ।

३. ननु विषयनिरूप्यत्वेन ज्ञाननिरूपणे विषयः कारणमायाति न तु ज्ञाननिरूपणे विषयविषयकत्वमित्यन्यथाऽर्थमाह—'विषयाऽविषयके'ति ।

आलोकः

वैशिष्ट्यविषयकत्वाऽवश्यकत्वे मानाऽभावः। व्यवसायेत्यादेस्तत्रैवाऽनैकान्तादित्य-रुचेर्नियामकान्तर[1] माह—सम्बन्धितेति। तन्निर्विकल्पकात्तत्सम्बन्धाऽनवगमे तद्विशिष्ट-धीनिरूप्यत्वे यद्यन्निरूप्यं तत्तद्वित्तिवेद्यमिति व्याप्तेरिति भावः। अत एवेत्यादि-गुरुमतमपहाय वादित्रये समुपस्थिते यथासुखं क्वचित् कस्यचिन्मतं नाऽशङ्कितमिति[2] न नानाऽग्रिमग्रन्थविरोधः।

प्रामाण्यस्येति। समानवित्तिवेद्यभिन्न एव तथानियमादिति भावः।

अभावेति। नहि अभावे अभावत्वं प्रतियोगिनि वा प्रतियोगित्वमवगम्य तद्विशिष्टधीरपि त्वारोपाऽनारोपयोरेकदैवोभयधीरित्यर्थः।

नन्दिमयुक्तम्। तथा हि प्रतियोगित्वं तत्स्वरूपं भासतामभावत्वन्तु द्रव्याऽऽदि-षट्काऽन्योन्याभाववत्त्वरूपं कथं पूर्वाऽनुपस्थितं भासेत द्रव्यत्वाऽऽद्यभाने तदप्रतीतेरित्य-भावांऽशे निर्विकल्पकमेव प्रथमम्, यदा त्वभावत्वं स्मर्यते तदा तद्विशिष्टधीरिति चेत्—

दर्पणः

प्रथमां युक्तिं दूषयति—नन्विति। द्वितीयां दूषयति—व्यवसायेति। तत्रैवेति। ग्रहणकाले यावद्विषयग्रहाऽनियमेन य एव विषयो न भासते तत्रैवेत्यर्थः।

ननु सम्बन्धिताऽवच्छेदकेत्यादिना घटज्ञानग्रहणकाले घटत्वेन रूपेण ज्ञाय-मानताऽस्तीत्येतावन्मात्रमायाति[3] न तु ज्ञानग्रहणे घटत्वेन रूपेण घटो विषय इत्यपीत्यत आह—तन्निर्विकल्पकादिति। सम्बन्धिनिर्विकल्पकात्तदीयसम्बन्धाऽनवगमे सम्बन्धज्ञानं प्रति सम्बन्धिताऽवच्छेदकप्रकारकसम्बन्धिज्ञानस्य जनकत्वे कल्प्यमाने सम्बन्धज्ञानत्वाऽ-पेक्षया ससम्बन्धिकज्ञानत्वस्य सामान्यतया विभागाऽऽदिज्ञानसाधारणतया च तदवच्छिन्नं प्रत्येव तज्जनकत्वकल्पनात् ससम्बन्धिक-पदार्थस्य सम्बन्धिताऽवच्छेद१ाऽवच्छिन्ननि-रूप्यत्वे यद्यन्निरूप्यमिति व्याप्तिबलात्तद्वित्तिवेद्यत्वमित्यर्थः। यद्यपि प्रत्यक्षे तद्वित्तिवेद्यत्वं नाऽन्यत्र संयोगो गुण इत्यादौ शाब्दाऽऽदिसंयोगप्रतीतौ सम्बन्धिनो विषयत्वाऽभावात् तथाऽपि व्यवसायेत्यादिमध्यमयुक्तावेव तात्पर्यम्। न च तत्राऽपि दोषो दत्त एवेति वाच्यम्। यावद्विषयनिरूप्यत्वस्य विनिगमनाविरहेणाऽर्थात् सिद्धेः। अत एवाह मूले—तुल्यत्वादिति।

गुरुमते व्यधिकरणप्रकारकज्ञानाऽसत्त्वादाह—अत एवेत्यादीति।

---

१. नियमो(मे) मानान्तर इति रा० पु० पाठः।

२. मतमाशङ्कित० इति रा० पु०।

३. तावता ज्ञानवित्तिवेद्यत्वं नाऽगतमिति भावः।

आलोकः

नैवम्। प्रतियोगित्ववदभावत्वस्याऽप्यभावरूपतया पूर्वाऽप्रतीतस्य भानसम्भवात्। न ह्यभावत्वबुद्धावुक्ताऽभावत्वविषयत्वसम्भवः। तस्य विभाजकोपाधिरूपाऽभावत्वरूपत्वान्न त्वभावत्वधीविषयाऽभावत्वसपत्नम्, अन्यथा तत्राऽप्यभाववत्वस्योक्तस्यैव वाच्यतया प्रतीतावनवस्थाऽऽपत्तेः। न च स्मरणं गतिः, अननुभवेन तदसम्भवात्। न च जन्मान्तराऽनुस्मरणान्निस्तारः, घटाऽभावे तदभावत्वस्मरणेऽपि द्रव्याऽऽद्यभावादावप्यभावत्वस्योक्तस्यैव स्मरणे एवं तत्राऽप्युक्ताऽभावत्वविशेषणे तन्निष्ठस्याऽपि तस्य स्मरणे तस्य विषयनिष्ठाऽभावेन विषयाऽनवस्थाप्रसङ्गात्। न चाऽभावरूपस्यैवाऽभावत्वाऽऽत्मकत्वे प्राग्ध्वंसाऽभावयोस्तद्बुद्ध्यनुदयाऽऽपत्तिः, तयोः स्वाऽवृत्तित्वादिति वाच्यम्, प्रागभावत्वाऽऽदिनाऽतथात्वेऽपि अभावत्वेन तयोः स्ववृत्तित्वात्, अन्यथा घटात्यन्ताऽभावधीरपि तत्र न स्यादन्यस्य तस्याऽभावादिति दिक्।

तदवतारे तत्प्रतिबन्धकत्वमयुक्तं सङ्कराऽऽपादनस्य तत्प्रवृत्त्यापादनरूपतया जनकज्ञाने विद्यमाने तदसम्भवादित्यत आह—उपनायकेति। तद्विषयत्वमात्रग्रहेऽपि तद्विशेष्यकत्वोपनयनाऽभावादित्यर्थः। तथा च बाधेन स्वातन्त्र्येण तद्वैशिष्ट्यधीरेव धर्मिणि प्रतिबध्यत इति जनकधीविघटनमेवेति भावः। न तु बाधेन भ्रान्तिविनाशादेव नोपनय इत्यर्थः। श्वैत्याऽनुमित्यनन्तरं भ्रान्तिप्रामाण्यग्रहाऽऽपत्त्या सङ्कराऽऽपत्तेर्दुर्वारत्वादिति।

दर्पणः

अथ तद्वत्त्वमित्यग्रिमग्रन्थो न भट्टमते सङ्गच्छते, तन्मते अनुमितिवेद्यत्वादित्यत आह—वादित्रय इति।

समानेति। समानवित्तिवेद्याऽतिरिक्तविशेषणस्यैव विशिष्टबुद्धौ पूर्वज्ञानाऽपेक्षा न तु सर्वस्येत्यर्थः। तथात्वेऽपीति। स्वाऽवृत्तित्वेऽपीत्यर्थः। तत्रेति। प्रागभावे ध्वंसे चेत्यर्थः।

इति दिगिति। यद्यपि द्रव्याऽऽदिषट्काऽन्योन्याभावव्यतिरेकाऽभावत्वमित्युच्यते, तत्र चाऽभावत्वं सदपि प्रतीतौ न विषयः। व्यक्त्यैक्येनैवाऽननुगमनिरासे तत्प्रवेशे मानाभावात्। स्वाऽऽत्मकस्यैव प्रवेशाद्वा। तथा च क्वाऽनवस्था? नाऽपि प्रतियोगिज्ञानाऽपेक्षा। अत एव नाऽभावे निर्विकल्पकमिति मतेनेदम्। वस्तुतः तत्प्रकारककिञ्चित्प्रतियोगिज्ञानस्याऽपेक्षितस्य सत्त्वात्। समाधिसौकर्येणैवेदमुक्तम्।

ननु तथाऽपि प्रतियोगित्वं स्वरूपसम्बन्धऽऽत्मकमिति न युक्तम्, तथा सति पूर्वज्ञानस्यैव प्रकारताऽऽपत्तेरिति चेत्—न। अभावविरहाऽऽत्मकत्वं हि प्रतियोगित्वम्। तत्र विरहत्वभागः स्वरूपाऽऽत्मकः अभावश्च पूर्वाज्ञात इत्यादाय पूर्वाज्ञातत्वस्वरूपाऽऽत्मकत्वयोरुपपत्तिरिति। तद्विशेष्यकत्वेति। वस्तुगत्या तद्वत्त्वं वा न तत्र विशेष्य इति

आलोकः

शब्दगन्धवदिति **दोषसौकर्यादुक्तम्**। **वस्तुतो ज्ञानाऽनुपनीतस्य मनसा स्वातन्त्र्येण ग्रहे शङ्कैव नोदेति मनसो बहिरस्वातन्त्र्यादिति ध्येयम्।**

स्वधर्मग्रहे **विषयविशेषाऽङ्कितस्वधर्मग्रहे।**

परप्रकाश **इति। वस्तुगत्या यद्भ्रमव्यावृत्तं प्रामाण्यं तल्लिङ्गेन मनसा वा जायमानं ज्ञानं न गृह्णीयात्। प्रमायामेव तद्ग्रहो न भ्रम इति न स्यात्। सामग्री-साम्यादिति भावः।**

जायमानमिति **पाठे न गृह्णीयान्न ग्राहयेत्।**

व्यभिचाराद् **व्यभिचारप्रसङ्गात्। बाधाऽवतारेऽपि गृह्णीयादिति यावत्।**

अनुव्यवसायेति। **विषयाऽभावाज्ज्ञानाऽभावे विषयजन्यत्वमभिमतम्, न चैतत्सम्भवति, अनुव्यवसायस्य ज्ञानाऽनुमितेश्च स्वविषयीभूतज्ञानविषयाऽजन्यत्वात् प्रामाण्याऽऽदीनां तद्ध्वनितत्वादित्यर्थः।**

तद्वतीति। **प्रागुक्तयुक्तेर्बाधाऽवताराऽनवतारयोस्तन्त्रत्वादिति भावः।**

ज्ञानाऽतीन्द्रियत्वेनेति। **सन्निकर्षस्य योग्यव्यक्तीयस्य ज्ञानजनकत्वेनाऽयोग्ये ज्ञानोपनयं विना तद्धर्मिकसंशयाऽभावादित्यर्थः।**

दर्पणः

यत्र प्रथमत एव बाधस्तत्र बाधेन भ्रान्तिविनाशाऽ-
ग्रहाऽभावादित्यर्थः। **इवैत्येति**।
सम्भवादिति भावः।
मूलेऽ**स्वप्रकाश** इत्यादिकं **परप्रकाशे** इत्यतः पूर्वं **प्राभाकरमते** बोद्धव्यम्। तत्र च
**प्राचीनप्राभाकरमते** स्वयमविषयीभावेऽपि स्वस्मिन् व्यवहारप्रवर्त्तनमेव स्वप्रकाशत्वम्।
**अर्वाचीनप्राभाकरमते** च स्वविषयकत्वमेव तदित्युभयमाशङ्कितम्। **ज्ञानेति**। ज्ञानमनु-
पनीतमभातं यत्र तादृशस्य तद्वति तत्प्रकारत्वस्य स्वातन्त्र्येण ज्ञाननिरपेक्षेण शङ्कैव न
भवति। स्वरूपसम्बन्धाऽऽत्मकविशेष्यत्वाऽऽदेर्ज्ञानस्वरूपपर्यवसायितया ज्ञानाऽग्रहे ग्रहाऽ-
सम्भवादित्यर्थः। **मनसेति** च मानसज्ञानस्थलाऽभिप्रायेण। यद्वा मनःपदेन ज्ञानं लक्ष्यते।
तथा च मनसो ज्ञानस्य बहिर्ज्ञाननैरपेक्ष्येणाऽस्वातन्त्र्यात्तद्वद्विशेष्यकत्वाऽऽदिग्रहाऽसाम-
र्थ्यात्। स्वप्रकाशे ज्ञानत्वं भासत एवेत्यत आह—**विषयेति**। **भ्रमव्यावृत्तमिति**मूलस्य
क्रियाविशेषणपरतेति परमाऽर्थः। तेन भ्रमव्यावृत्तं यथा स्यात् तथा न गृह्णीयादित्यर्थः।
**व्यभिचारादिति**। ग्राहकसामग्र्या भ्रमेऽपि गतत्वादित्यर्थो मूलस्येति तत्त्वम्।
ननु प्रत्यक्षरूपे संशये सन्निकर्षो न तु ज्ञाततारूपलिङ्गजेऽपीत्यतो **लिङ्गञ्चेति**
**मूलम्**। यद्यपि लैङ्गिकसंशयपक्षेऽपि पक्षज्ञानाऽपेक्षाऽस्त्येव तथाऽपि वस्तुस्थित्यनुरोधात्
**तस्येत्याद्युक्तम्**। यद्वा धर्मिसन्निकर्षस्य धर्मिज्ञापकत्वेन रूपेण संशयजनकतया प्रकृते
धर्मिज्ञापकं ज्ञातताख्यलिङ्गमेव संशयजनकमस्त्वित्याशङ्कायां **लिङ्गञ्चेत्यादि**।

आलोकः

तस्य निश्चितस्य। तदनिश्चये तज्ज्ञानधर्मिकनिश्चयोऽपि न स्यात्, तस्याऽनुमेयत्वात्। तथा च ज्ञानं प्रमा नवेति सुतरां न संशय इति भावः।

मिश्रमुद्दिश्याऽऽह—ज्ञानस्येति। तन्मते ज्ञानेन्द्रियसन्निधेरेव प्रामाण्यग्रहसामग्रीत्वेन तत्प्रतिबन्धादेव संशयाऽनुपपत्तिरित्यर्थः। न च स्थाणुपुरुषसंशयोऽपि कथमेवमिति वाच्यम्, सामग्री न कारणमात्रमतिप्रसङ्गात्, किन्तु फलाऽयोगव्यवच्छिन्नम्। यथा चैतत् तथा हेत्वाभासे कथयिष्यते। न च स्थाण्विन्द्रियसन्निकर्षाऽऽदिस्तथा, दोषप्रवेशादग्रहोपपत्तेः। न चेह तथा कश्चिदस्ति दोष इत्यपि वक्ष्यते।

ननु अप्रामाण्यग्राहकसामग्रीसमवधानमेव दोषोऽत एव तदसमवहितज्ञानग्राहकसामग्र्येव प्रामाण्यग्रहसामग्रीत्वेन विप्रतिपत्तौ दर्शितेति चेत्—मैवम्। पूर्वमप्रामाण्यस्मरणाऽभावेऽपि ज्ञानेऽनभ्यासदशापन्नतया संशयदर्शनात्।

किञ्च तेन सहाऽगृहीताऽसंसर्गाऽप्रामाण्यग्रहसामग्रीसमवधानं दोषो वाच्यः। अन्यथाऽतिप्रसङ्गात्। तथा चाऽसंसर्गग्रहविरहेऽपि तस्य नियामकत्वादित्यलमनेनेति भावः।

अन्यथेति। विशेषदर्शनकाले व्याप्यदर्शनकाले संशयाऽऽपत्तेरित्यर्थः। तस्यैव पुरुषत्वाऽदिज्ञानसामग्रीत्वात्।

दर्पणः

ननु सन्दिग्धस्य लिङ्गस्य संशयजनकत्वमस्त्येवेत्यत आह—निश्चितस्येति। पूर्वमप्रामाण्येति। यद्यपि धर्मिज्ञानाऽनन्तरम् अप्रामाण्यस्मरणेऽपि तदव्यवसितत्वमेव तत्समवधानम् अन्यथा इदं ज्ञानमप्रमेत्यत्राऽपि ग्रहणस्मरणाऽऽत्मकक्रमिकज्ञानद्वयसत्त्वादाद्येन ग्रहणेन प्रामाण्यग्रहणाऽऽपत्तेः, तथाऽपि स्वाऽऽनुव्यवसायाऽऽत्मकधर्मिज्ञाने प्रथमतो वृत्ते चिरकालेन स्मृते तत्र धर्मिणि प्रामाण्यसंशयो मूलकारेणोक्तो न स्यात्। तत्र प्राथमिकधर्मिज्ञानस्य प्रामाण्यग्राहकसामग्र्यसमवहितत्वेन प्रामाण्यविषयकत्वेन तन्मूलकधर्मिस्मरणस्याऽपि प्रामाण्यविषयकत्वप्रसङ्गादिति भावः।

गुरुमतेऽप्येवं शङ्कासमाधाने ध्येये। यद्वा एतदस्वरसादेवाऽऽह—किञ्चेति। असंसर्गेति। प्रमात्वतदभावकोटिकसंशये प्रामाण्याऽभावाऽऽसंसर्गाग्रहः प्रमात्वाऽग्रहपर्यवसितो दोषान्तरं विना कथमित्यर्थः।

व्याप्यदर्शनकाले व्याप्यदर्शनोत्पत्तिकाले, विरोधिदर्शनस्य संशयप्रतिबन्धकत्वेऽपि तत्सामग्र्या विशेषदर्शनस्याऽप्रतिबन्धकत्वादित्यर्थः। न चैतावता संशयं प्रति

आलोकः

ननु व्याप्यदर्शनं साक्षादेव संशयविरोधि, न त्वन्यतरकोटिनिश्चयसामग्रीत्वेन। प्रतिबन्धकसामग्र्याः प्रतिबन्धकत्वेऽपि मणिपूर्वमपि दाहाऽनापत्तेः। तथा च कथं ज्ञानेन्द्रियसन्निधावसंशय इति चेत्—मैवम्। तत्सामग्रीत्वस्याऽनुगतत्वात्। न तु व्याप्यदर्शनत्वेन विरोधिता। एवं सति गन्धाऽऽदिज्ञानस्याऽपि पृथग्विरोधित्वेऽननुगमाऽऽपत्तेः। न हि गन्धाऽऽदिव्यञ्जकाऽग्रहे पृथिवीत्वाऽऽदिसन्देहो गन्धाऽऽदिग्रहमात्रा न्न निवर्त्तते, अपि तु तद्व्याप्यत्वनिश्चयादित्यत्र मानं किञ्चिदस्ति। यदेव हि व्यञ्जकसत्त्वेऽपि दोषप्रतिबन्धा न्न प्रथते तत्संशयोत्तरनिर्णय एव व्याप्यदर्शनस्य हेतुत्वात्। अत एवाऽन्धकारे घटो न वेत्यादिसंशयः सत्यालोकसमधान एव निवर्त्तते, न तु व्याप्यदर्शनं विना विलम्बत इति सर्वसिद्धम्।

नन्वेवमालोकसमवधानकालेऽपि संशयो न स्यात् व्याप्यदर्शनकाल इव सामग्रीकालत्वस्योभयतुल्यत्वादिति चेत्—न। संशयविरोधिनिश्चयसामग्र्या एव तद्विरोधित्वात्। संशयविरोधी च निर्णयः समानप्रकारकः घटो गेहनिष्ठो गेहं घटवदित्यादि। न चाऽऽलोकसमवधानं तदातनं तत्सामग्री। तस्य विशिष्टज्ञानतया विशेषणज्ञानाऽऽदिसापेक्षत्वादन्तरा निर्विकल्पकाऽऽदिसम्भवात्। मणिस्थले तु तत्सामग्री न प्रतिबन्धिकेति न दोषः। प्रतिबन्धकसामग्रीमात्रस्याऽप्रतिबन्धकत्वात् फलबलेन ज्ञानाऽऽत्मकप्रतिबन्धकसामग्र्या एव तथात्वकल्पनात्।

ननु यदि व्याप्यदर्शनस्य निर्णयसामग्रीत्वेन विरोधिता, न तु स्वातन्त्र्येण, तदा व्याप्यदर्शने सत्यपि नाऽन्धकारे घटसंशयो निवर्त्तेत, आलोकं विना घटाऽऽद्यनिश्चयेन तद्व्याप्यदर्शनस्य घटनिर्णयसामग्रीत्वादिति चेत्—न। तदातनस्य

दर्पणः

व्याप्यदर्शनस्य प्रतिबन्धकत्वमायातु न तु विरोधिनिश्चयसामग्र्या इत्यत आह—तस्येति। साक्षादेव व्याप्यदर्शनत्वेनैव।

ननु संशयविपर्ययोत्तरप्रत्यक्षे व्याप्यत्वप्रकारकज्ञानस्य कारणत्वमेव तत्र मानमित्यत आह—यदेव हीति। तथा च संशयविपर्ययोत्तरप्रत्यक्षमात्रे व्याप्यत्वप्रकारकं ज्ञानं न कारणमिति भावः। तत्रैवोपोद्बलकमाह—अत एवेति। आलोकसमवधानकाले आलोकसमवधानोत्पत्तिकाले। प्रतिबन्धकसामग्र्या इत्यादिकमुक्तं निराकरोति—मणीति। ज्ञानाऽऽत्मकेति। विपरीतनिश्चयेत्यर्थः। अत एव ग्राह्याऽभावनिश्चयसामग्र्या इति स्वयमेवाऽग्रे वर्णयिष्यति। भूतले घटाऽभाव प्रतिज्ञानाऽनन्तरं घटाऽभाववद्भूतलमिति प्रत्यक्षस्थले व्यभिचारादाह—प्रत्यक्षेतर इति। प्रत्यक्षमितरद्यस्मादिति बहुव्रीहिः। तेन सर्वनामकार्याऽभावः। एवं पक्षविशेषणकाऽनुमितिस्वीकारे व्यापकपरामर्शस्याऽनुमिति-

आलोकः

व्याप्यदर्शनस्याऽनुमितिरूपनिर्णयसामग्रीत्वात् संशयविरोधिता प्रत्यक्षवदनुमितावपि तुल्या ।

नन्वेवं पर्वते वह्निव्याप्य इति धीर्न संशयविरोधिनी स्यात्, तस्या अनिर्णय-सामग्रीत्वात्, तत्प्रत्यक्षस्याऽसम्भवात्, अनुमितौ च पक्षविशेष्यकपरामर्शस्य हेतुत्वा-दिति चेत्—न। पर्वते वह्निरित्यनुमितिं प्रति तत्सामग्रीत्वसम्भवात् । जनकज्ञानोप सर्जनीभूतस्य जन्यज्ञानेऽपि प्रत्यक्षेतरे तथात्वमिति नियमस्यैवमप्यभङ्गात् । न चैवं व्यापकत्वपरामर्श एव हेतुः स्यात् । तथा सति कदाऽप्यग्निमान् इत्यनुमितिर्न स्यादिति वक्ष्यमाणत्वादिति दिक् ।

यत्तु व्याप्यदर्शनोत्तरकाले विपरीतदर्शनकाले वेति व्याख्यातम्, तन्न । तत्कालाऽनुत्पत्त्या तत्सामग्रीप्रतिबन्धकत्वाऽप्राप्तेः । प्रतिबन्धकाऽभावस्य कार्यसह-भूत[1]त्वेनहेतुतया प्रतिबन्धकसत्त्वकाले कार्याऽनुत्पादस्य तत्सत्त्वनिबन्धनतयाऽन्यान-पेक्षणात् । न च तस्य तथाहेतुत्वमेव नेति वाच्यम्, आकर एवेश्वरवादे तस्य स्फुटत्वात् । न च सामग्रीप्रतिबन्धकत्वादेव मण्युत्पत्तिकाले दाहाऽभावेन स पक्षो नेति वाच्यं, तथा सत्युभयप्रतिबन्धकत्वादुभयाऽभावहेतुत्वकल्पनागौरवात् । प्रकृते च व्याप्यदर्शनकाले संशयाऽभावेनाऽगत्या तत्कल्पनात् । न च तदप्यसिद्धं, अनुभव-

दर्पणः

जनकत्वे पक्षविशेषणकाऽनुमितिः स्यादित्येव बाधकम् । तच्च पक्षविशेषणकाऽनुमिति-स्वीकर्त्तुर्नाऽनिष्टमिति भावः । व्यापकपरामर्श एव हेतुरितिनियमे पक्षविशेष्यिका कदाऽप्यनुमितिर्न स्यादिति तत्र बाधकमित्याह—कदाऽपीति । दिगर्थस्तु अन्वयव्यतिरे-काभ्यामनुमितौ व्याप्यव्यापकसामानाधिकरण्यधीर्हेतुः, तथा च तदनुरोधेन व्यापकत्वमपि सामानाधिकरण्यघटितमेव निर्वाच्यमिति व्याप्याऽपेक्षया व्यापकत्वे लाघवाऽभावात् व्यापकपरामर्श एव हेतुरित्यवधारणमसङ्गतमिति ।

व्याप्यदर्शनोत्तरकाले इत्यस्य विवरणं विपरीतदर्शनकाल एवेति । विपरीत-दर्शनकाले वेति क्वचित्पाठः । तदा स एव क्षणः व्याप्यदर्शनोत्तरकालत्वेन विपरीत-निश्चयाऽधिकरणत्वेन वा विवक्षित इत्युपाधिभेदमात्रेण वा शब्दः ।

आकर इति प्रतिबन्धकाऽभावस्य कार्यसहभूतत्वेन जनकत्वाऽभावे मण्युत्पत्तिकाले दाहाऽऽपत्तिरित्यस्य मूले व्यक्तत्वादित्यर्थः । ननु प्रकृतेऽपि विपरीतनिश्चयतत्सामग्री समव-धानयोः कारणत्वे गौरवमित्याशङ्क्याऽऽह—प्रकृते चेति । व्याप्यदर्शनकाले व्याप्यदर्शनो-त्पत्तिकाले । तथा च प्रामाणिकं गौरवमिति भावः तदपीति । व्याप्यदर्शनोत्पत्तिकाले

१. दर्पणपाठाऽनुरोधेन 'सहभावेन' इत्यस्य स्थाने 'सहभूतत्वेन' इतिपाठः स्वीकृतः ।

आलोकः

विरोधात्, कराऽऽदिमति पुरुषत्वज्ञानत्वाऽऽदिप्रामाण्यव्याप्यग्रहे, प्रामाण्यसंशयाऽ-
भावादित्याद्यग्रिमग्रन्थविरोधाच्च[1]।

किञ्चाऽभ्यासदशाऽऽपन्ने न प्रामाण्यसंशय इति सर्वं सिद्धम्, अन्यथाऽतिप्रसङ्गात्,
प्रामाण्यग्रहणोपायाऽनुसरणाऽऽयासवैयर्थ्याच्च। तत्र संशयाऽनुत्पत्तौ च न तज्जातीयत्व-
ग्रहादन्यत्प्रयोजकम्। न च त्वन्मते तत्प्रतिबन्धकं, व्याप्यग्रहेऽपि संशयाऽभ्युपगमात्।
न चाऽत्रैव तत्राऽपि निर्णयसामग्रीत्वम्, प्रामाण्याऽनुमित्यनावश्यकत्वात्। न च
त्वन्मतेऽप्येष तुल्यो दोषः, यदवच्छेदेन विपरीतनिश्चयः तद्ग्रहस्याऽपि पृथगेव संशय-
विरोधित्वाऽभ्युपगमात्। अत एव धूमत्वेन परिच्छिन्दतस्तव पक्षधर्मधूमे धूमत्वग्रहे
न व्यभिचारसंशय इति वक्ष्यते। न च ममाऽपि तुल्यः परीहारः। न तुल्यः,
तज्जातीयत्वज्ञानकाले संशयाऽभावाय तत्सामग्रीप्रतिबन्धकत्वस्य त्वया वाच्यत्वात्।
तथा चाऽतिगौरवम्, तज्जातीयत्वग्रहोत्तरसंशयाऽऽपत्तिश्च, तत्सामग्र्याऽनन्तत्वात्।
न च व्याप्यदर्शनस्य स्वकालप्रतिबन्धकत्वं तत्सामग्र्यप्येवमिति वाच्यम्, विरोधि-

दर्पणः

संशयो नोत्पद्यत इत्यपीत्यर्थः। अग्रिमग्रन्थेति। तद्ग्रन्थस्योत्पत्तिस्थितिक्षणसाधारण-
त्वादिति भावः।

किञ्चेति। तज्जातीयत्वग्रहकाले न संशय इति सामान्याऽऽकारेण तज्जातीयत्व-
ग्रहोत्पत्तिकालेऽपि संशयाऽनुत्पत्तिः सकलसिद्धा। न चैतत्तव सङ्गच्छते, व्याप्यदर्शनो-
त्पत्तिकाले इव तज्जातीयत्वग्रहोत्पत्तिकालेऽपि संशयसम्भवादित्यर्थः। निर्णयसामग्रीत्वा-
वच्छेदेन संशयविरोधिनः सर्वस्य उत्तरक्षणे संशयविरोधित्वं न तूत्पत्तिक्षणे। तथा च
निर्णयसामग्रीभूतायास्तज्जातीयत्वधियोऽपि उत्पत्तिक्षणे संशयाऽप्रतिबन्धकत्वं ममेष्टमेव
कथमनिष्टत्वेनाऽऽपादितमित्याशङ्क्याह—न चाऽत्रैवेति।

ननु तज्जातीयत्वग्रहस्य निर्णयाऽजनकत्वे निर्णयसामग्रीत्वेन व्याप्यग्रहसाधारणी
तस्य प्रतिबन्धकता न स्यादित्याशङ्क्याऽऽह—न चेति। ननु निर्णयसामग्र्या उत्तरक्षणे
संशयप्रतिबन्धकत्वं यथा, तथा पृथगेव तज्जातीयत्वग्रहस्याऽपि उत्तरक्षण एव प्रतिबन्ध-
कत्वं ममेष्टमित्याशङ्क्याऽऽह--न चेति। तज्जातीयत्वग्रहस्याऽपि उत्तरक्षणे संशयप्रति-
बन्धकत्वं सकललोकसिद्धस्य तदुत्पत्तिक्षणे संशयाऽनुत्पादस्य त्वया वचनमात्रेण त्यक्तुम-
शक्यतया तन्निर्वाहाय तत्सामग्रीप्रतिबन्धकत्वे कल्पनीये अभावद्वयकारणतायां गौरव-
मित्याह—न तुल्य इति। तदेव दर्शयति—तज्जातीयत्वेति। तज्जातीयत्वज्ञानकाले

---

१. बहुग्रन्थविरोधाच्चेति पाठान्तरम्।

आलोकः

**सामग्र्या एव प्रतिबन्धकत्वात् । प्रतिबन्धकस्यैव स्वकालप्रतिबन्धजनकत्वात् । न च व्याप्यदर्शनं विरोधि, साक्षाद्विरोधाऽभावात् । किन्तु विपरीतदर्शनमेवेत्यलमधिकेनेति ।**

दर्पणः

तज्जातीयत्वज्ञानोत्पत्तिकाले तत्सामग्रीमात्रस्य प्रतिबन्धकत्वा न्न गौरवमिति यदि तत्राऽऽह—**तज्जातीयत्वेति** ।

प्रतिबन्धकसामग्र्याः प्रतिबन्धकत्वादिति यथाश्रुते पूर्वोक्ते दोषमाशङ्क्य निराकरोति **न चेति** । तथा च तस्याऽपि विरोधिनिर्णयसामग्रीति तत्त्वेन प्रतिबन्धकतेति भवदुक्तरीत्या विशेषदर्शने पूर्वमपि संशयो न स्यादित्यर्थः । **साक्षादिति** । ग्राह्याऽभावाऽवगाहित्वप्रयुक्तविरोधाऽभावादित्यर्थः ।

अत्र वदन्ति—विशेषदर्शनघटितसामग्री यदि न प्रतिबन्धिका तदा पुरुषत्वाऽऽदिनिश्चयोत्पत्तिक्षणे संशयाऽऽपत्तिरित्येवाऽर्थः साधुः । तथा हि—यत्तत्र दूषणमुक्तं प्रतिबन्धकाऽभावस्य कार्यसहभूतत्वेन जनकतया तत्कालीनाऽनुत्पत्तिः पुरुषत्वनिश्चयप्रयुक्तैवेति—तन्न । मण्यादिप्रतिबन्धकाऽभावस्य कार्यसहभूतत्वेन जनकत्वेऽपि विपरीतनिश्चयाऽभावस्य तथा जनकत्वे मानाऽभावात् । न हि सर्वेषां प्रतिबन्धकाऽभावानामेकेन रूपेण जनकता, येन सामान्यकारणतायां सहभूतत्वप्रवेशः सङ्गच्छेत ।

किञ्च सिसाधयिषाविरहसहकृतसिद्ध्यभावाऽऽत्मकप्रतिबन्धकाऽभावस्य नाऽनुमितिसमये सत्त्वमिति सहभूतत्ववादिनाऽपि ज्ञानाऽतिरिक्तप्रतिबन्धकाऽभावस्यैव तथात्वनियमो वाच्यः । तथा च प्रकृते ज्ञानस्यैव प्रतिबन्धकत्वादयुक्तमेतत् । यच्च विशेषदर्शनोत्पत्तिकाले संशयस्वीकारेऽनुभवविरोधग्रन्थविरोधोद्भावनम्, तत्र पूर्वक्षणे संशयस्वीकारे तस्मिन् क्षणे संशयाऽनुत्पादस्याऽस्मदाद्यनवधार्यत्वात् । क्षणस्य दुर्लक्ष्यत्वात् ग्रन्थस्य च व्याप्यग्रहे संशयो न । तज्जातीत्वग्रहसामग्र्यभावस्य कारणत्वेन यद्गौरवमुक्तं तदयुक्तम् । तज्जातीत्वग्रहोत्पत्तिकाले संशयोत्पत्तिमिच्छतस्तदप्रसक्तेरिति । अत्रेदं तत्त्वम्—प्रतिबन्धकाऽभावस्य कार्यसहभूतत्वेन हेतुत्वमित्यस्य सहभूतत्वं स्वरूपयोग्यतालक्षणकारणत्वाऽवच्छेदकमिति न, तथा सति किञ्चिद्दाहसमानकालीनस्य मणिप्रागभावस्य दाहाऽन्तरे जनकत्वापत्तेः, तत्तद्व्यक्तिसमानकालीनत्वेन कारणत्वेऽनन्तकारणताऽऽपत्तेः, किन्तु फलोपधानाऽवच्छेदकम्, तथा चाऽभावत्वाऽवच्छिन्नकारणताकानां फलसमानकालत्वे सत्येव फलोपधानमिति सामान्यत एव कल्प्यते । स्वरूपयोग्यताऽवच्छेदकत्वपक्षेऽपि प्रत्येकं तत्तत्कार्यं प्रति तत्तत्प्रतिबन्धकाऽभावस्य कारणत्वे गृहीते मण्युत्पत्तिकाले औषधोत्पत्तिकाले च दाहाऽभावेन सहभूतत्वेन विशेषकारणतानामवच्छेदो वा तदीयसामग्र्यभावो वा कारणमिति द्वयमपि गौरवाद्विहाय सामान्यत एव अभावत्वगर्भधर्माऽवच्छिन्नकारणताकार्ये स्वसहभूतस्य सिद्ध्यभावाऽऽदिकस्य स्वकारणाऽभावसमुदायस्य

आलोकः

विरुद्धोभयाऽऽरोपेति। विरुद्धनिर्णयसामग्रीद्वयेत्यर्थः। संशयस्योभयकोटावारोपत्वाऽनियमात्। आरोपपदोपादानञ्च विशेषाऽदर्शनसंग्रहाऽर्थम्। तेनेदं दर्शितम्—आरोपसामग्रीविशेषाऽदर्शने सति धर्मिज्ञानविशेषणज्ञानाऽऽदि, तथा चेदृशी यदि युगपद्विरुद्धयोः कोटयोः सामग्री तदा संशयः, न चेह प्रामाण्याऽग्रहे धर्मिग्रहः। त्वन्नये तुल्यसामग्रीकत्वात्, न हि निश्चयेऽप्यर्थे कोटिद्वयस्मृत्या स इति भावः।

ननु कोटिद्वयस्मृतिर्विशेषाऽदर्शनमित्येव लाघवात् कारणम्। न हि रजता-

दर्पणः

जनकत्वमिति कल्प्यते। एकस्याः कारणतायाः कारणाऽन्तराऽवच्छेदकत्वोत्पत्त्यभावादिति। किञ्च निरन्तरपरामर्शाऽऽत्मकसत्प्रतिपक्षपक्षे द्वितीयेन प्रथमपरामर्शस्य कार्यं कदा प्रतिबध्यम्? न तावद्द्वितीयोत्पादक्षणे, तदा त्वया प्रतिबन्धाऽङ्गीकारात्। नाऽग्रिमक्षणे, तदा सिद्धसाधनादिति तद्ग्रन्थपर्यालोचनया कार्यसहभूतस्यैव जनकत्वमिति।

वस्तुतो यदि प्रतिबन्धकविरोधिज्ञानसामग्र्या न प्रतिबन्धकत्वं तदा विशेषदर्शनस्य प्रतिबन्धकत्वेऽपि तत्सामग्री न तथेति विशेषदर्शनोत्पत्तिकाले संशयाऽऽपत्तेरिति मूलाऽर्थः। तत्र च ज्ञानलक्षणप्रतिबन्धकाऽभावस्य कार्यसहभूतत्वेन जनकत्वाऽभाव एवाऽभिमतः। न च विशेषदर्शनसामग्र्यपि ज्ञानाऽत्मिकेत्यनवस्थापत्तिरिति वाच्यम्। न हि तत्र ज्ञानमात्रे पर्याप्तसामग्रीत्वं किन्तु कारणचक्र इति दिक्।

अथेति मूलम्। धर्मीन्द्रियसन्निकर्षस्य विरोधिनिर्णयसामग्रीत्वेन प्रतिबन्धकत्वं न घटते, संशयसामग्र्यभावस्य निर्णयसामग्र्यन्तर्गतस्य तदा असत्त्वादित्यर्थः। विरुद्धेति। तव मते धर्मिज्ञानमेव प्रामाण्यग्रहाऽऽत्मकमिति धर्मिज्ञानाऽज्ञानयोः संशयसामग्री न संभवति, प्रतिबन्धकसत्त्वात्, कारणाऽभावाच्च। तथा च तत्प्रयुक्तो धर्मीन्द्रियसन्निकर्षस्य न निर्णयसामग्रीत्वाऽभाव इति त्वां प्रति दूषणमिति प्रघट्टकाऽर्थः। अत्र च विरुद्धाऽऽरोपसामग्रीद्वयसमाजादेवेति योज्यम्।

ननूभयसामग्रीत उभयाऽऽरोप एको भवतीत्ययुक्तम्। सत्प्रतिपक्षवत्परस्परप्रतिबन्धेन सामग्र्योरजनकत्वाऽऽपत्तेरित्याशङ्क्याऽऽह मूलं न त्विति। अविरोधादिति मूलम्। संशयलक्षणफलदर्शनादिति भावः। नन्वतिरिक्तैव संशयसामग्री धर्मिज्ञानाऽघटिता सैव धर्मीन्द्रियसन्निकर्षस्य निर्णयसामग्रीत्वं विहन्यादित्याशङ्क्य मूलं—न चोभयेति। न च सामीद्वयादिति मूलम्। यद्यारोपसामग्रीद्वयमेव न तु संशयसामग्री ततो भिन्ना, तदा कार्यद्वयं स्यान्न त्वेकः संशयः इत्यर्थः। उभयाऽऽरोपसामग्रीपदेन धर्मिज्ञानाऽघटिता संशयसामग्री विवक्षिता। एतच्च टिप्पण्यनुरोधेन व्याख्यानम्।

वस्तुतस्तु विरुद्धोभयाऽऽरोपसामग्रीद्वयमेव संशयसामग्री। तत्र स्वजन्यनिर्णये स्वांऽशस्य प्रतिबन्धकत्वमभेदादसम्भावितमित्याह—विरुद्धेति। अपरांऽशसामग्र्याः

आलोकः

रोपेऽपि धर्मिधीर्हेतुः, यत्र हि सादृश्यज्ञानमारोप्यस्मारकं तत्र तज्ज्ञानजनकत्वेन धर्मिज्ञानमन्यथासिद्धमित्याक्षेपे विरुद्धाऽऽरोपेत्यादिना धर्मिधियोऽपि सिद्धवद्धेतुत्वाऽभिधानं न युज्यत इत्यत आह—धर्मिज्ञानं चेति।

अन्यथेति। तुरगाऽदौ वेगेन गच्छतस्तत्तद्धर्मीन्द्रियसन्निकर्षे यत्रैव ज्ञानं तत्रैव संशय इति नियमो न स्यादित्यर्थः। अत एवाऽऽरोपाऽन्तरेऽपि धर्मिधीर्हेतुरिति भावः।

ननु यदेव तत्र धर्मिधीनियामकं तदेव संशयनियामकमस्तु "तद्धेतोरेवे"ति न्यायात्। न च विषयमाहात्म्याऽऽदिरूपतया तेषामनुगमेनाऽनुगतधर्मिधीरेव तथेति वाच्यम्, धर्मिधीसामग्रीत्वेनैवाऽनुगमात्। किं च विशेषणधीः विशेष्ये तदसंसर्गाऽग्रहो विशेष्यभानसामग्रीति विशिष्टज्ञानसामान्यहेतोरेव तत्सम्भवे विशेषसामग्र्यकल्पनमन्यथा तत्राऽप्यनुगततया विशेष्यभानहेतुताऽऽपत्तिरित्यरुचेर्मानान्तरमाह—कोटच्युत्कटत्वमिति। यन्निष्ठधर्मस्य यया कोटचा सह भूयः सहचारोपलम्भो यत्र धर्मिणि यद्धर्मसहचरिताऽनेकधर्मोपलम्भो वा तत्कोटावुत्कटत्वम्, संशयस्य तदुभयमपि धर्मिज्ञानसाध्यमिति तदभावे न स्यादित्यर्थः। यद्यपि एतावता तादृशसंशये

दर्पणः

प्रतिबन्धकत्वं परिहरति—अविरोधादिति[1]। समूहाऽऽलम्बन एकनिर्णयसामग्र्या अपरांऽशनिर्णयाऽविरोधादित्यर्थः। मिलितप्रतिबन्धकत्वं निराकरोति—न चोभयेति[2]। प्रत्येकेति[3]। तथा चांऽशतोऽभेद इत्यर्थः। यद्वा अतिरिक्तैव संशयसामग्रीति निराकरणाऽर्थं न चोभयेत्यादिपूर्वं च योज्यम् इत्यत आहेति। इदञ्च प्रथमव्याख्यायाम्। द्वितीयव्याख्यायां तु एकांऽशनिश्चयसामग्री विरोध्यपरांऽशनिश्चयविरोधिनी सम्भवत्येव। समूहाऽऽलम्बने तु परस्परविरोधांऽशयोः मिलितप्रतिबन्धकत्वमपि सम्भवत्येव। रूपाऽन्तरेण प्रतिबन्धकस्य रूपाऽन्तरेण जनकत्वसम्भवादित्यस्वरसादाह—धर्मिज्ञानञ्चेति। आरोपाऽन्तरेऽपि संशयभिन्नेऽपि। विशेषगोचराऽन्वयव्यतिरेकयोरेव सामान्यतः कार्यकारणभावग्राहकत्वादिति भावः।

उपाध्यायमतमुपन्यस्यति— न चेति। धर्मिधीसामग्रीत्वेनाऽनुगमे प्रथमोपस्थितधर्मिधिय एव कारणत्वं स्यादित्यस्वरसादाह—किञ्चेति। यन्निष्ठेति। सहचारग्रहस्य वा भूयस्त्वं सहचरितधर्माणां भूयस्त्वमित्यर्थः। भूयः सहचारो भूयान् सहचारग्रहः। इदमुपलक्षणम्। भूयस्त्वाऽधिकरणेषु सहचारग्रह इत्यपि द्रष्टव्यम्। तादृशसंशय इति। उत्कटकोटिकसंशय इत्यर्थः। आरोपनियमः आरोपविषयनियमः निरंशे ज्ञानेऽव्याप्य-

---

१-३. अत्र प्रतीकत्रयधृतमूलग्रन्थः 'आलोकात्' परिभ्रष्ट इत्यनुमीयते।

आलोकः

तादृशग्रहहेतुतायामपि सामान्यहेतुता नाऽयाति, तथापि "यद्विशेषयोरि"ति न्यायात्[1] संशयसामान्य एव धर्मिज्ञानहेतुता आयाति, संशयमात्रमपि न तदुभयाऽऽरोपमात्र मन्तव्यम् ।

यद्वा अत्र धर्मिनियमवदारोपनियम एव विपर्ययेऽपि धर्मिज्ञानहेतुताकल्पकः, यद्धर्मसहचरितधर्मोपलम्भो यत्र धर्मिणि तत्रैव तदारोपात् । अत एव सादृश्यतत्त्वाऽग्रहादित्यादिप्राचीननानानिबन्धे सादृश्याऽपेक्षानियमो दृश्यत इति । उत्कटत्वञ्चाऽव्याप्यवृत्ति संशये जातिर्वा तादृशधर्मविषयत्वमुपाधिरेव वा कश्चिदित्यन्यदेतत् ।

दोषाऽऽन्तरादनभ्यासदशाऽऽरोपात् । साक्षात्कारीति । प्रत्यक्षरूपे भ्रमे तादृशमेव विपरीतदर्शनं विरोधि, शङ्खे चाऽपीतत्वधीः पित्तप्रतिबन्धका न साक्षात्कारिरूपा भवति, किन्तु आनुमानिकीति भवति पीतभ्रमः । इह च मानसे प्रामाण्यग्रहे विद्यमाने साक्षात्कारिविशेषदर्शनसत्त्वात् कथं प्रामाण्याऽभावसंशयाऽऽत्मा भ्रम इति न व्याख्यानम् । तथाऽपि हि ज्ञानमप्रमा न वेति संशयस्याऽनभ्यासदशाऽऽपन्नज्ञानविषयस्याऽनुच्छेदात् । तथा हि—विपरीतदर्शनं विरोधीति प्रामाण्ये गृहीते तदभावसंशयो मा भूदप्रामाण्याऽभावाऽनिश्चयेऽप्रामाण्यसंशये बाधकाऽभावात् । न ह्यपीतत्वग्रहकाले श्वैत्यग्रहनियमाद्यथाऽश्वेतसंशयो निवर्तते तथा प्रामाण्यग्रहकालेऽप्रामाण्याऽभावग्रहनियमात्तत्संशयोऽपि न स्यादिति सम्भवति, ग्रहणसामग्रीभेदात् । अप्रामाण्यस्य तदभाववतीत्यादिगर्भतयैव प्रामाण्याऽभावाऽनात्मकत्वात् । तस्मादिदमत्राऽभिमतम्—

दर्पणः

वृत्तिधर्माऽसम्भवादाह—तादृशेति । भूयः सहचरितधर्मक-कोटिविषयकत्वमित्यर्थः । ननु च शङ्खे पीतत्वाऽसंसर्गाऽग्रहो यथा दोषं विनैव, तथा प्रकृतेऽपि स्यादित्यत आह—शङ्ख इति । तत्राऽपि पित्तलक्षणदोषप्रयुक्तत्वात् असंसर्गाऽग्रहस्येत्यर्थः । परव्याख्यात[2]-मनूद्य निराकरोति—प्रत्यक्षरूप इति । अप्रामाण्यस्येति । ननु प्रामाण्यं घटत्ववत्त्वघटितमप्रामाण्यं च घटत्वाऽभावघटितमिति तज्ज्ञानयोः परस्पराऽभावविषयकत्वमस्त्येव । न चैकाऽवच्छेदेन घटत्वं घटत्वाऽभाववत्त्वं च न गृहीतम् तादृशयोश्च ग्रहयोर्विरोधः । अन्यथा[3] कुत्रचित् घटत्वं कुत्रचित् घटत्वाऽभाव इति ज्ञानयोरपि विरोधाऽऽपत्तिः ।

१. यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपीति न्यायादित्यर्थः ।
२. न व्याख्यानम् उपाध्यायानामिति शेषः ।
३. अन्यथेतीत्येव यत्तत्राऽशुद्धमस्तीत्यत्र लिख्यते । विशिष्टशुद्धौ व्यभिचाराच्च । न च प्रतियोग्यपि विशेष्य प्रतियोगिरूपविशेषणधीजन्यत्वेन च, न तत्र व्यभिचारः । न च प्रतियोग्यपि विशेष्य एवेति कथं तत्र व्यभिचारः । अनुयोगित्वमेव विशेष्यत्वम् । तथा च यस्याऽनुयोगित्वं तज्ज्ञानं व्यभिचारि । इदं तत्रत्यं ज्ञातव्यम् ।

न च प्रामाण्यसंशयाद्विषयसंशयवत् प्रामाण्यज्ञाने प्रामाण्यसंशयात् प्रामाण्यसंशय इति वाच्यम्, प्रामाण्यज्ञानेऽपि स्वतः प्रामाण्यग्रहे तत्संशयाऽनुपपत्तेः ।

ननु ज्ञानमात्रं न विरोधिबुद्धिनिवर्त्तकं भ्रमोत्तरं बाधकज्ञानोदयात्,

आलोकः

साक्षात्कारिणि भ्रमे निश्चये तादृशस्तद्विपरीतनिश्चयो विरोधी, न तु संशयेऽपि विपरीतविषयत्वं साक्षात्कारित्वं वा विरोधे बीजम्, व्याप्यदर्शनेनाऽनुमित्यादिनाऽपि संशयाऽपगमात्, तथा च पीतः शङ्ख इत्यादिनिश्चयोऽपीतत्वाऽनुमित्या शङ्खत्वप्रत्यक्षेण च मा निवर्त्तताम् । अयन्तु प्रामाण्यसंशयोऽप्रामाण्यसंशयो वा तद्विरुद्धप्रामाण्यनिश्चयादवश्यं निवर्त्तेतेत्यर्थः ।

ननु यथा तत्र पित्ताऽऽदिप्रतिबन्धात् श्वैत्याऽप्रत्यक्षे भ्रमसम्भवः तथा दोषवशात् कदाचित् प्रामाण्यग्रहे संशयः स्यात्, दोषस्य फलैकोन्नेयतया अन्ततः तद्दशाजन्मैव दोषः स्यादित्यत आह—न च जात्यैवेति । न हि जात्या जन्मनेत्यर्थः । अनभ्यासदशाजन्म न दोषः, अनभ्यासस्य प्रामाण्याऽग्रहरूपतया प्रामाण्याऽग्रहकालीनजन्मन

दर्पणः

न चैकाऽवच्छेदोऽन्यत्र तयोर्गृह्यत इति वाच्यम् । घटत्ववद्विशेष्यकत्वं घटत्वाभाववद्विशेष्यकत्वं च गृह्णतोर्ज्ञानयोरेतज्ज्ञानविशेष्यत्वाऽवच्छेदेन घटत्वतदभावविषयकत्वसम्भवादिति चेत्, उच्यते । एवमपि नाऽनयोर्विरोधः । विशेष्यत्वस्याऽवच्छेदकत्वाऽपरिस्फुरणात् । तत्सामानाधिकरण्यमात्रस्य च विशेष्यभेदेऽपि उपपत्त्या द्रव्ये घटत्वं द्रव्ये घटत्वाऽभाव इतिवदविरोधात् । न चैवं घटत्ववद्विशेष्यकत्वतदभाववद्विशेष्यकत्वविशेष्यैकाऽग्रहे विरोधाऽभावात् संशयकोटित्वं कथमिति वाच्यम्, विरुद्धत्वभ्रमेण एकमात्रविशेष्यकत्वे सति घटत्ववद्विशेष्यकत्वम् तथात्वे सति घटत्वाऽभाववद्विशेष्यकत्वं च कोटिद्वयमादाय वा संशयसम्भवादिति संक्षेपः । तद्विरुद्धेति । तद्विरुद्धतया प्रतीतेत्यर्थः ।

माथुरी

'प्रामाण्यसंशयादिति घटवद्भूतलमित्यादिनिश्चये प्रामाण्यसंशयाद् भूतलं घटवन्न वेत्यादिसंशयवदित्यर्थः, 'प्रामाण्यज्ञाने' व्यवसायस्य प्रामाण्यनिश्चये, 'प्रामाण्यसंशयः' व्यवसाये प्रामाण्यसंशयः । ननु यथा घटवद्भूतलमित्यादिनिश्चये भ्रमत्वसंशयाद् भूतलं घटवन्न वेत्यादिविषयसंशयस्तथा व्यवसायनिष्ठप्रामाण्यनिश्चयेऽपि भ्रमत्वसंशयाद्व्यवसाये प्रामाण्यसंशयः स्यात् प्रामाण्यनिश्चये स्वतः प्रामाण्यग्रहेऽपि भ्रमत्वाभावस्य स्वतो ग्रहाभावाद् भ्रमत्वसंशये बाधकाभावादित्याशयेनाशङ्कते, 'नन्विति, 'ज्ञानमात्रं' तन्निश्चयमात्रम्, 'विरोधिबुद्धीति तदभावविशिष्टबुद्धीत्यर्थः, 'भ्रमोत्तरमिति भ्रमत्वेन

किन्त्वनन्यथासिद्धम् । अत एव तेन विनाऽपि तज्ज्ञानं सम्भवतीति अन्यथासिद्धतया शङ्कितं तन्निश्चयं परिभूय ज्ञानविषयत्वाद्विषये यथा संशयस्तथा प्रामाण्ये तन्निश्चयस्याऽन्यथासिद्धिशङ्कया तं परिभूय भवति संशयः ।

न च व्यवसायस्य ज्ञानत्वे घटविषयकत्वे च यथाऽनुव्यवसायविषयत्वान्न संशयस्तथा प्रामाण्येऽपि न स्यात्, अनुव्यवसायस्य प्रमात्वनियमादिति वाच्यम्, अज्ञाने अविषये च ज्ञानत्वविषयत्वयोरनुव्यवसायेनाऽग्रहणनियमात् तद्विषयत्वमनन्यथासिद्धं प्रामाण्यविषयत्वञ्च तेन विनाऽपि सम्भवतीति तत्र संशय इति चेत्—

आलोकः

एव प्रामाण्याऽग्रहप्रयोजकत्वादात्माश्रयत्वाऽऽपत्तावननुगततत्तत्कालजन्म तथा वाच्यम्, न च तत्सम्भवति । प्रतिव्यक्तिप्रतिबन्धकत्वस्य जनकत्ववत् दुर्ग्रहत्वादिति भावः ।

न हि दोषत्वजातिमान् अतीन्द्रियः कश्चित्तथेति शङ्काऽऽस्पदमपीत्याह—न चेति ।

प्रामाण्यविषयत्वमिति । ननु घटविषयत्वमपि घटेन विनाऽपि सम्भवतीति तुल्यम् । अत्राऽऽहुः—अनुव्यवसायस्य प्रमात्वनियतत्वेन यदनुव्यवसायविषय स्तत्र न संशयस्तद्विषयश्च घटविषयकत्ववैशिष्ट्यं ज्ञानत्ववैशिष्ट्यञ्च । अतस्तदुभयत्र माऽस्तु

दर्पणः

दुर्ग्रहत्वादिति । यद्यपि दुर्ग्रहत्वेऽपि वस्त्वस्त्येव, तथाऽप्येतादृशप्रतिबन्धकल्पने क्वाऽप्यन्वयव्यभिचारो न स्यादित्यत्र तात्पर्यम् ।

ननु अननुगतमनुगतं वा दोषस्वरूपमावश्यकं संशयाऽनुरोधेन, तथा च किं विशेषदोषेणेति चेत्—न । अननुगतदोषाऽपेक्षया निश्चयसामग्री दृष्टा, तद्विरह एव तत्र प्रयोजकमिति दृष्टादेवाऽनुगतादुपपत्तेरिति । न चानुऽव्यवसायरूपनिश्चयसामग्री व्यवसायरूपा प्रत्यासत्तिरस्त्येवेति वाच्यम्, तद्वत्त्वांऽशेन तन्त्रेण ज्ञातस्याऽऽसत्तित्वाऽकल्पनादिति । शङ्काऽऽस्पदमपीति । अप्रतीतिशङ्काऽनुदयादिति भावः ।

माथुरी

गृहीततन्निश्चयोत्तरमित्यर्थः, 'बाधकज्ञनेति तदभावविशिष्टज्ञानेत्यर्थः, 'अनन्यथासिद्धं' अन्यथासिद्धत्वेन भ्रमत्वेनागृहीतम्, 'तेन विनापीति तदभाववत्यपीत्यर्थः, 'तज्ज्ञानं' तत्प्रकारकज्ञानम्, 'इतीति, तत्प्रकारकज्ञानत्वरूपसाधारणधर्म्मदर्शनादितिशेषः । 'अन्यथासिद्धतया' भ्रमतया, 'तन्निश्चयं' घटादिनिश्चयम्, 'परिभूय' स्वकार्य्याक्षमीकृत्य, 'ज्ञानविषयत्वादिति तत्प्रकारकज्ञानविषयत्वरूपसाधारणधर्म्मदर्शनादित्यर्थः, 'विषये' घटादौ, 'तथा प्रमाण्य इति संशय इत्यग्रेतनेन सम्बन्धः, अन्यथासिद्धशङ्कयेति भ्रमत्वशङ्कयेत्यर्थः, 'व्यवसायस्येति अनुव्यवसायेन निश्चित इति शेषः, 'घटविषयकत्वे चेति

आलोक:

**संशयो घटत्ववत्त्वं विषयस्य तु न तद्विषय इति विषये घटो न वेति संशये किं बाधकम्, इह ज्ञानप्रामाण्यस्याऽनुव्यवसायगम्यत्वेऽप्यनुव्यवसायेन गृहीतेऽपि प्रमाण्ये**

दर्पण:

**नन्विति।** घटत्ववद्विषयकत्वविषयकत्वं व्यवसायगतेन घटत्ववद्विषयकत्वेन विनाऽपि सम्भवति। घटत्वसंसर्गाऽऽरोपाऽऽत्मकव्यवसायेऽनुव्यवसायगृहीतघटत्ववद्विषयकत्वाऽभावात्। तद्विषये घटत्वाऽभावादित्यर्थः। यदि च घटत्वाऽऽरोपे घटाऽऽरोप आवश्यकस्तदा गन्धाऽदिसंसर्गाऽऽरोप उदाहार्यः। **यदनुव्यवसायविषयः** स्वातन्त्र्येणेति शेषः। **घटविषयकत्ववैशिष्ट्यमिति।** घटत्वोपलक्षितधर्मिविषयकत्ववैशिष्ट्यमित्यर्थः। **न तद्विषय** इति। अत्राऽपि उपनयनैरपेक्ष्येणेति शेषः। **विषयो घटो न वेति।** इदं ज्ञानं घटविषयकं न वेत्यर्थः। तथा च घटत्वोपलक्षितधर्मिविषयकत्वमात्रेऽनन्यथासिद्धत्वं मूलेऽभिप्रेतमिति भावः[1]।

माथुरी

सविषयकत्वे चेत्यर्थः, 'अनुव्यवसायविषयत्वादिति अनुव्यवसायस्य ज्ञानत्व-सविषयकत्व-प्रकारकानुव्यवसायस्य विषयत्वादित्यर्थः, 'न संशय इति ज्ञानत्व-सविषयकत्वप्रकारकानुव्यवसायस्य ज्ञानत्व-सविषकत्वांशे भ्रमत्वसंशयाधीनो न संशय इत्यर्थः, ज्ञानत्व-सविषयकत्वप्रकारकानुव्यवसायत्वस्य ज्ञानत्व-सविषयकत्वांशे भ्रमत्वाभावावच्छेदकतया तादृशानुव्यवसायत्वग्रहसत्त्वेन व्यवसायस्य ज्ञानत्व-सविषयकत्वग्राहकानुव्यवसाये ज्ञानत्व-सविषयकत्वांशे भ्रमत्वसंशयस्यैवासम्भवादिति भावः[2]। 'न स्यादिति प्रामाण्य-प्रकारकानुव्यवसाये प्रामाण्यांशे भ्रमत्वसंशयाधीनः संशयो न स्यादित्यर्थः, 'अनुव्यवसायस्येति प्रामाण्यप्रकारकानुव्यवसायस्येत्यर्थः, 'प्रमात्वनियमादिति प्रामाण्यांशे भ्रमत्वाभाववच्छेदकत्वादित्यर्थः, तथा च प्रकृतेपि प्रामाण्यांशे भ्रमत्वाभावावच्छेदकीभूतस्य प्रामाण्यप्रकारकानुव्यवसायत्वस्य ग्रहसत्त्वेनानुव्यवसाये प्रामाण्यांशे भ्रमत्व-संशयस्यैवासम्भवान्न तदधीनप्रामाण्यसंशयसम्भव इति भावः। **'अविषये'** निर्विषयके 'ज्ञानत्व-विषयत्वयोरिति ज्ञानत्व-सविषयकत्वयोरित्यर्थः, 'तद्विषयत्वमिति ज्ञानत्व-सविषयकत्वप्रकारकानुव्यवसायत्वमित्यर्थः, 'अनन्यथासिद्धमिति ज्ञानत्व-सविषयकत्वांशे भ्रमत्वाभावावच्छेदकमित्यर्थः, 'तेन विनापीति प्रामाण्याभाववत्यपीत्यर्थः, **'सम्भवति'**

१. यद्यपि घटत्वसंसर्गाऽऽरोपात्मकव्यवसाये घटत्ववद्विषयकत्वविषयकत्वं घटत्ववद्विषयकत्वेन विनाऽपि सम्भवति तत्र तद्विषयत्वाऽभावात्तथाऽपि घटत्वोपलक्षितधर्मिविषयकत्वव्यतिरेकेण न सम्भवतीति भावः।

२. अनुव्यवसायत्वस्य ज्ञानत्वाभाववद्विशेष्यकत्वावच्छिन्न-ज्ञानत्वप्रकारकत्वरूपभ्रमत्वाभावावच्छेदकत्वात् न तत्र ज्ञानत्व-सविषयकत्वांशे भ्रमत्वसंशयस्तस्तद्विषयत्वसाधारणधर्म्मदर्शनादपि न व्यवसाये ज्ञानत्वसंशयः, एवं पुरोवर्त्तिविशेष्यकत्वेऽपि बोध्यम् तथा च तव मते प्रामाण्यांशे भ्रमत्वाभावव्याप्यमनुव्यवसायत्वमपीति भावः।

नैवम् । भ्रमत्वमन्यथासिद्धत्वम् । ततश्च प्रामाण्यनिश्चये भ्रमत्वसंशयेन तद्विषये प्रामाण्यसंशय इति फलितोऽर्थः । भ्रमत्वसंशयश्च तज्ज्ञानाऽज्ञानाभ्यां न सम्भवतीत्युक्तत्वात् । एवमन्यत्राऽपि भ्रमत्वसंशयात् न विषये संशयः, स्वतः प्रामाण्यग्रहे भ्रमत्वसंशयाऽभावात् ।

न च वाच्यम् प्रामाण्यसंशया न्न विषये संशयो मानाऽभावात्, ज्ञानविषयत्वात् समानधर्मादेव तदुपपत्तेः[1] । न चैवं सर्वत्र विषयसंशये तन्निश्चयोच्छेदः, प्रामाण्यसंशयेऽपि तुल्यत्वादिति । तस्याऽसार्वत्रिकत्वात् । भ्रमत्वसंशयं विना निश्चिते विषये संशयाऽनुत्पत्तेरानुभविकत्वाच्च ।

आलोकः

संशयः, प्रामाण्यविषयकज्ञानस्य प्रामाण्यं विनाऽपि दर्शनादनुव्यवसायत्वस्याऽपि ज्ञानत्वघटविषयत्ववैशिष्टचयोरेव प्रामाण्यनियतत्वाऽवधारणादिति ।

ननु प्रामाण्यसंशयो विषयसंशयाऽन्यथाऽनुपपत्त्या कल्पनीयः, न चेह सा, समानधर्मदर्शनादेवोपपत्तेरित्याशङ्क्य निषेधति—न च वाच्यमिति ।

दर्पणः

इहेति । यद्यपि प्रामाण्यं विनाऽपि दर्शनादित्यस्य विषयगतघटत्वं विनाऽपि सम्भवादिति पर्यवसितोऽर्थः, तथा च ननु घटविषयत्वमित्यादिशङ्काऽपि प्रत्यक्षत एव

माथुरी

अनुव्यवसायस्य सम्भवति, 'तत्र संशय इति अनुव्यवसायस्य प्रामाण्यांशे भ्रमत्वसंशया-धीनो व्यवसायस्य प्रामाण्यसंशय इत्यर्थः, प्रामाण्यप्रकारकानुव्यवसायत्वस्य प्रामाण्यांशे भ्रमत्वाभावानवच्छेदकत्वादिति भावः । पूर्वपक्षमनूद्य दूषयन्ति, 'भ्रमत्वमिति' 'अन्यथासिद्धत्वं भ्रमत्वमिति योजना । 'ततश्च' तथा च, 'भ्रमत्वसंशयश्चेति अनुव्यव-साये प्रामाण्यांशे भ्रमत्वसंशयश्चेत्यर्थः, 'तज्ज्ञानाभ्यामि'ति अनुव्यवसायस्य प्रामाण्यांशे प्रामाण्यनिश्चयानिश्चयाभ्यामित्यर्थः, अनुव्यवसाये प्रामाण्यांशे प्रामाण्यनिश्चयसत्त्वे तस्यैव प्रतिबन्धकत्वात्तदनिश्चये च भ्रमसंशयतत्र्धर्म्मिणोऽनुव्यवसायस्यैवाज्ञानादिति भावः । यद्यपि प्रामात्वनिश्चयस्य कुतो भ्रमत्वसंशयविरोधित्वं परस्पराभावरूपत्वा-भावात् । न च प्रमात्वस्य भ्रमत्वाभावव्याप्यतया विशेषदर्शनविधयैव तज्ज्ञानस्य भ्रमत्वसंशयविरोधित्वं प्रमात्व-भ्रमत्वयोर्विशेष्यभेदेनैकत्र सत्त्वेऽपि[2] निरवच्छिन्न भ्रमत्वा-भावाभावाधिकरणताश्रयावृत्तित्वरूपभ्रमत्वाभावव्याप्यत्वस्य प्रमात्वे सत्त्वादिति वाच्यम् । अनुव्यवसायादिना स्वरूपतः प्रमात्वनिश्चयेऽपि भ्रमत्वाभावव्याप्यतया

---

१. तदुपपत्तेः इति रा० पुस्तकपाठः ।

२. समूहालम्बनज्ञाने इति भावः ।

अथ तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यम् । तच्च ज्ञानग्राहकेण गृहीतमेवेति न तत्संशयः ।

न चाऽस्मिन् निश्चितेऽपि प्रामाण्यसंशयात् न तत्प्रामाण्यमिति वाच्यम् । एतन्निश्चयादेव निष्कम्पव्यवहारादिति चेत्—अस्तु तावदिदं प्रामाण्यम् । तथाऽप्यनुव्यवसायाऽनन्तरं व्यवसायस्य प्रामाण्येऽर्थस्य तद्वत्त्वे च संशयस्याऽनुभवसिद्धत्वान्नाऽर्थे तद्वत्त्वं तस्य विषयः ।

आलोकः

नन्वन्वयव्यतिरेकाभ्यां प्रामाण्यसंशयहेतुताग्रहो न च विशेषदर्शने सति संशय इत्यन्वयाऽसम्भव इत्याशङ्कते—अथेति ।

अस्त्विति । अनुभवसिद्धतया दुरपह्नवे संशये विशेषदर्शनमेव न जातमित्यर्थः ।

ननु सामग्रीसत्त्वे विशेषदर्शनमप्यशक्याऽपह्नवमित्याशङ्कते—नन्विति ।

दर्पणः

पर्यवसन्ना, तथाऽपि एकत्र घटविषयकत्वमादाय शङ्कितमपरत्र घटविशेष्यत्वमादायेति भेदः । विषयसंशयाऽन्यथाऽनुपपत्त्या स्वीकर्त्तव्य इति शेषः । साऽनुपपत्तिः । विशेषेति ।

माथुरी

तदनिश्चयात्[1] । न च पुरोवर्त्तिनि प्रमात्वघटकतया तद्वत्त्वग्रहे तदभाववत्त्वग्रहासम्भवात् भ्रमत्वग्रहासम्भवः भ्रमत्वस्य तदभाववत्त्वघटितत्वादिति वाच्यम् । भ्रमत्वस्य तदभाववत्त्वांशे निर्द्धर्म्मितावच्छेदकतया तद्वत्त्वग्रहसत्त्वेऽपि तदग्रहसम्भवात्[2] । न च तदभावव्याप्यदर्शनमिव तदभावावच्छेदकीभूतधर्म्मदर्शनमपि तद्विशिष्टबुद्धिविरोधि, तथा च भ्रमत्वाभावावच्छेदकीभूतधर्म्मदर्शनविधया प्रमात्वनिश्चयो भ्रमत्वसंशयविरोधीति वाच्यम् । तदभावावच्छेदकीभूतधर्म्मस्यापि स्वरूपतो निश्चयो न विरोधी किन्तु तदभावावच्छेदकत्वेन, तच्च प्रकृते नास्ति अनुव्यवसायादिना स्वरूपत एव प्रामाण्यनिश्चयात् । तदभावावच्छेदकत्वन्तु व्याप्यतासम्बन्धेन तदभाववत्त्वं संसर्गप्रकारभेदेन व्याप्यदर्शनावच्छेदकधर्म्मदर्शनयोर्भेदः[3], स्वव्यापकतदभावकत्वं वा तदभावावच्छेदकत्वं व्याप्तिभेदाच्च व्याप्यदर्शनावच्छेदकधर्म्मदर्शनयोर्भेदः व्याप्यदर्शने

१. तद्विशिष्टबुद्धि प्रति तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वेऽपि वस्तुतः तदभावव्याप्यः सः तस्य निश्चयस्य न प्रतिबन्धकत्वम्, किन्तु तदभावव्याप्यत्वेन निश्चयस्यैवेति भावः ।

२. सधर्म्मितावच्छेदककतद्वत्त्वग्रहं प्रत्येव सधर्म्मितावच्छेदककतदभाववत्त्वनिश्चयस्य प्रतिबन्धकत्वादिति भावः ।

३. अवच्छेदकधर्म्मदर्शने संसर्गविधया व्याप्यदर्शने प्रकारविधया व्याप्यत्वं भासते अतस्तयोर्भेद इति भावः ।

ननु व्यवसायस्येदन्त्वरजतत्वविशिष्टेदंविषयत्वे अनुव्यवसाय एव मानम् । तथा च यावद्व्यवसायोल्लिखितप्रकारविशिष्ट एव धर्म्यनुव्यवसाये भासते । अन्यथा विषयांऽशे तस्य निर्विकल्पकत्वे इदं रजतं जानामीति

आलोकः

यत्त्वनुव्यवसायपदमग्रिमग्रन्थाऽविरोधाय[1] ज्ञानविषयक[2]-ज्ञानाऽन्तरतृतीय-ज्ञानपरमिति, तन्न । तन्मतेऽन्तरा ज्ञाने मानाऽभावेन ज्ञानाऽनन्तराऽऽत्मविशेष्यक-ज्ञानस्यैवोत्पत्तेः । विशेषणज्ञानाऽपेक्षानियमस्तु विशिष्टज्ञाने तन्मते नाऽस्त्येव, अन्यथा सामान्यलक्षणास्वीकाराऽऽपत्तेः । नहि तां विनाऽनुमितेर्विशेषणधीजन्यत्वं सम्भवतीति ।

दर्पणः

विपरीतदर्शने सतीत्यर्थः । एवमग्रेऽपि विशेषपदं विपरीतपरम् अग्रिमग्रन्थाऽविरोधायेति । रजतमहं जनामीत्यग्रिमग्रन्थे विशिष्टवैशिष्ट्यावगाह्यात्मविशेष्यकज्ञानोल्लेखात् घटविषयकं ज्ञानमित्याकारकं द्वितीयं ज्ञानमत्र नाऽनुव्यवसायपदेन ग्राह्यमित्यर्थः । विशेषणेति । यद्यपि विशिष्टवैशिष्ट्यबोधे विशेषणताऽवच्छेदकज्ञानत्वग्रहाऽपेक्षाऽस्त्येव, तन्मतेऽपि ज्ञानत्वग्रहस्य स्मरणादिरूपस्य सम्भवात्, तथाऽपि नाऽनुव्यवसायो मध्ये

माथुरी

तदभाववदवृत्तित्त्वरूपव्याप्यत्वस्य प्रकारत्वात्[3] । तथापि प्राचां नये यद्धर्म्मावच्छेदेन तदभावो निश्चितः स्वरूपतस्तद्धर्म्मनिश्चयोऽपि तद्विशिष्टबुद्धिविरोधी तथा च येन पुरुषेण प्रमात्वावच्छेदेन भ्रमत्वाभावो निश्चितः तस्यापि प्रामाण्यसंशयान्न भ्रमत्व-संशयाधीनः प्रमात्वसंशयसम्भव इति मणिकृतो निगर्व्वः ।

वस्तुतस्तु भ्रमत्वादिसंशयं विनापि प्रामाण्यसंशयस्यानुभवसिद्धत्वान्न प्रामाण्यस्य स्वतस्त्वसम्भव इत्येव तत्त्वम् ।

प्रामाण्यस्य स्वतस्त्वे प्रामाण्यसंशयानुपपत्तिरूपं बाधकमभिधाय घटवद्भूतल-मित्यादौ भ्रमत्वसंशयाद् घटादिसंशयानुपपत्तिबाधकमाह, 'एवमिति, 'अन्यत्रापि' घटवद्भूतलमित्यादौ प्रामाण्यनिश्चयातिरिक्तस्थलेऽपि' न विषये संशय इति न घटादौ संशय इत्यर्थः, तव मते स्यादिति शेषः । सन्निहितं बाधकमुद्धर्तुं शङ्कते, 'न च वाच्य-मिति तुल्यत्वादितीत्यन्तेनान्वितम्, 'प्रामाण्यसंशयात्' भ्रमत्वाभावसंशयात्, 'न विषये संशयः' न घटादौ संशयः, 'मानाभावादिति निश्चयोत्तरकालीनविषयसंशयपूर्व्वं भ्रमत्व-

१. ग्रन्थविरोधादिति क्वचित्पाठः ।

२. ज्ञानविशेष्यकेति नपुस्तके ।

३. अवच्छेदकधर्म्मदर्शने तु व्यापकसामानाधिकरण्यरूपव्याप्तेर्विषयत्वादिति बोध्यम् ।

तदाकारो न स्यात् । अतो धर्मिणीदन्त्वरजतत्ववैशिष्ट्यमनुव्यवसायेन गृहीतमिति धर्मिणि स्वतः प्रामाण्यग्रहवद्रजतत्ववैशिष्ट्येऽपि स्वतः प्रामाण्यज्ञानमवर्जनीयम् । अत एव धर्म्यंशे न कदाऽपि प्रामाण्यसंशय इति चेत्—मैवम्, इदं रजतञ्च जानामीति नानुऽव्यवसायः, बहिर्विशेष्यके

आलोकः

धर्मिणीति । तत्र प्रामाण्यसंशयाऽभावेन प्रामाण्यज्ञाने बाधकाऽभाव इति प्रसाध्याऽङ्गतया दृष्टान्त इत्याशयः । अत एवाह—अत एवेति ।

बहिर्विशेष्यक इति । न च ज्ञानोपनीतस्य ग्रहेऽस्वातन्त्र्यं कुत इति वाच्यम्, न हि तद्विशिष्टविषयकत्वादन्यदुपनयेनाऽपि शक्यग्रहम्, न च तावन्मात्रं प्रामाण्यं भ्रमसाधारणत्वात् । किं नाम रजतत्वविशिष्टमिदन्त्ववद्विशेष्यकं च रजतत्वप्रकारक-

दर्पणः

नियमतोऽपेक्ष्येत इति भावः । अत एवाऽऽहेति । प्रसाधनाऽर्थमेवाऽऽहेत्यर्थः । तद्वि-शिष्टेति । सत्त्वाऽसत्त्वसाधारणतद्विशिष्टेत्यर्थः । स्वातन्त्र्येण सत्तानिश्चयजनकतया ।

माथुरी

संशयस्यावश्यकत्वे मानाभावादित्यर्थः, 'सर्व्वत्रेति, विषयनिश्चयसत्त्वेऽपीति शेषः, 'संशये' संशयसम्भवे, 'तन्निश्चयोच्छेद इति क्वचिद्विषयनिश्चयसत्त्वेपि विषयसंशयानुत्पादस्यानुभवसिद्धस्योच्छेद इत्यर्थः, 'प्रामाण्यसंशयेऽपीति प्रामाण्यसंशयोत्तरं निश्चितविषये विषयसंशयाभ्युपगमेऽपीत्यर्थः, तस्येति प्रामाण्यसंशयस्येत्यर्थः ।

ननु ममापि साधारणधर्म्मवत्ताज्ञानं न सार्व्वत्रिकमित्यत आह, 'भ्रमत्वसंशयमिति भ्रमत्वादिसंशयमित्यर्थः, आदिपदात् प्रमात्वपरिग्रहः । ननु निश्चिते विषये भ्रमत्वादिसंशयं विना कथं न संशयोत्पादः विना कारणाभावं कार्य्याभावस्यासम्भवात् । न च तदभावविशिष्टबुद्धौ तन्निश्चयस्य प्रतिबन्धकतया निश्चयसत्त्वादेव संशयानुत्पाद इति वाच्यम् । तर्हि भ्रमत्वादिसंशयेऽपि निश्चयसत्त्वे संशयोत्पादस्यासम्भवात् प्रतिबन्धकसद्भावादिति चेत् । न । भ्रमत्वादिज्ञानाभावविशिष्टतद्विपरीतनिश्चयस्य तद्विशिष्टबुद्धिप्रतिबन्धकतया भ्रमत्वादिसंशयं विना निश्चिते विषये संशयानुत्पादात् भ्रमत्वादिसंशये च तन्निश्चयसत्त्वेऽपि भ्रमत्वादिज्ञानाभावविशिष्टतन्निश्चयस्य प्रतिबन्धकस्याभावात् संशयोत्पादात् ।

ननु भ्रमत्वादिज्ञानस्योत्तेजकत्वे मानाभावः लाघवाद्विपरीतनिश्चयत्वेनैव प्रतिबन्धकत्वात् । न च विपरीतनिश्चयसत्त्वेऽपि भ्रमत्वादिसंशये विषयसंशयस्यानुभवसिद्धतया प्रामाणिकं गौरवमिति वाच्यम् । तादृशस्थलाभावात् यत्र प्रथमतोऽयं घट इति निश्चयस्ततस्तदनुव्यवसायः ततः प्रामाण्याप्रामाण्यकोट्युपस्थितिस्ततः प्रामाण्यादि-

**मनसोऽस्वातन्त्र्यात् । किन्त्विदमिदन्त्वेन रजतत्वेन च जानामीति । तत्रेदन्त्वरजतत्वे प्रकारत्वेन भासेते तत्प्रकारकज्ञानवत्त्वञ्चाऽऽत्मनि भासते । अन्यथा प्रकारवाचितृतीयाऽर्थासम्भवः । रजतत्ववैशिष्ट्यस्य तदर्थत्वे**

आलोकः

मिदं ज्ञानमिति । न च तदनुव्यवसायग्राह्यम् । स्वातन्त्र्येण तत्र मनसोऽप्रवृत्तेः । तदुक्तम्—बहिर्विशेष्यक इति । अन्यथा तज्ज्ञानविशेषणतया घटग्रहे प्रकृतहेतोरलग्नकत्वादित्यर्थः[1] ।

अत इति । इदन्त्वरजतत्ववैशिष्ट्यं स्वातन्त्र्येणेति शेषः[2] । यथाश्रुतस्याऽ-

दर्पणः

**बहिर्विशेष्यक** इति । बहिः सत्तानिश्चय इत्यर्थः । ज्ञानाऽनुव्यवसाये ज्ञानस्याऽऽत्मनो वा विशेष्यत्वात् यथाश्रुतस्याऽनुपपत्तिरिति । तदेतदाह—**अन्यथेति** ।

**ग्राह्यप्रामाण्याऽपेक्षयेति** मूलम् । ग्राह्यं प्रामाण्यं यस्य तदपेक्षयेत्यर्थः । तथा च स्वस्याऽप्यन्याऽपेक्षयेति दोषो नाऽस्तीति भावः । **अग्राह्येति** मूलम् । अग्राह्यं प्रामाण्यं यस्याऽप्रमारूपज्ञानस्य तदपेक्षयेत्यर्थः । तथा च ग्राहकस्याऽपि ग्राह्यप्रामाण्यत्वेनेत्यादिदोषो नाऽस्तीति भावः । **अप्रामाण्येति** मूलम् । अप्रमारूपज्ञानाऽपेक्षया परत्वं प्रमारूपव्यवसायस्याऽपीति तद्ग्राह्यत्वेन सिद्धसाधनाऽऽपत्त्या व्यवसायस्याऽप्रामाण्यमङ्गीकार्यं[3]

माथुरी

संशयस्ततो विषयसंशयः तत्र प्रामाण्याप्रामाण्यकोट्युपस्थितिकाले निश्चयविनाशात् संशयपूर्व्वकाले विषयनिश्चयस्येवाभावात् । एवं यत्रानुव्यवसायो मानसोच्छृङ्खलप्रामाण्याप्रामाण्यविषयकस्तदभावोपस्थितिरूपः तत्रापि चतुर्थक्षणे विषयसंशयोत्पादे न बाधकं तत्पूर्व्वं विषयनिश्चयासत्त्वात् । न च यत्रापेक्षाबुद्ध्यात्मकोऽयं घट इति निश्चयः, ततो मानसोच्छृङ्खलप्रामाण्याप्रामाण्योपस्थितिरूपोऽनुव्यवसायः, ततः प्रामाण्यादिसंशयः, ततो विषयसन्देहस्तत्र यत्र वाऽपेक्षाबुद्ध्यात्मकोच्छृङ्खलप्रामाण्याप्रामाण्योपस्थितिरूपः सः घट इति स्मरणात्मको निश्चयः, ततस्तदनुव्यवसायः ततः प्रामाण्यादिसंशयस्ततो विषयसंशयस्तत्र च विषयनिश्चयस्य विषयसंशयपूर्व्वं सत्त्वसम्भव इति वाच्यम् । तत्र क्षणविलम्बेन संशयाभ्युपगमेऽपि क्षतिविरहात् क्षणैकविलम्बस्य शपथनिर्णेयत्वात् ।

एतेन यत्र तद्विशेष्यकघटप्रकारकं ज्ञानं स घटवान् प्रामाण्याप्रामाण्ये घटतदभावौ चेत्येकं स्मरणं ततस्तस्यां घटस्मृतौ प्रामाण्यसंशयोऽनन्तरं स घटवान्नवेत्यादिसंशयस्तत्र स्मरणरूपस्य निश्चयस्य पूर्व्ववर्त्तित्वसम्भव इति निरस्तम् । तत्रापि क्षणविलम्बेन संशयाभ्युपगमे क्षतिविरहात् क्षणैकापलापस्यादोषत्वादिति चेत् । न ।

१. अलग्नकतापत्तेरिति कपुस्तके ।
२. इदन्त्वरजतत्ववैशिष्ट्यं नानुव्यवसायविषयः स्वातन्त्र्येणेति नपुस्तके ।
३. नैयायिकेन ।

व्यवसायेऽपि तृतीयाऽर्थोल्लेखाऽऽपत्तिः । तथा च धर्मिणीदन्त्वरजतत्वप्रकारकज्ञानविषयत्वे तादृशज्ञानवत्त्वे चाऽऽत्मनोऽनुव्यवसाय एव मानमिति न विषये तस्य निर्विकल्पकत्वम् । अत इदन्त्वरजतत्ववैशिष्ट्यं पुरोवर्त्तिनि नाऽनुव्यवसायविषय इति न स्वतः प्रामाण्यग्रहः । तस्मादनभ्यासदशाऽऽपन्नज्ञानप्रामाण्यं परतो ज्ञायते सांशयिकत्वादप्रामाण्यवदित्याचार्याः ।

आलोकः

सम्भवात् । वैशिष्ट्याऽभाने तद्गर्भप्रकारत्वाऽग्रहोऽपि । तथा सति ज्ञानग्रह एव दुर्ल्लभः कुतः प्रामाण्यग्रहवार्त्ताऽपि येन स्वतः परतो वेति विवादः । अत एवाऽन्यथाख्यातिसिद्धान्ते वैशिष्ट्यस्य ज्ञानवित्तिवेद्यतया शीघ्रोपस्थितिकत्वं वक्ष्यते ।

दर्पणः

स्यादित्यर्थः । तस्य चाऽप्रामाण्ये तत्प्रामाण्याऽवगाह्यनुमित्यादेरप्यप्रामाण्यप्रसङ्गः । तथा चाऽप्रमारूपज्ञानाऽपेक्षया न परत्वमिति भावः । स्वग्राह्येति क्वचित्पाठः । स्वेन ग्राह्यं प्रामाण्यं यस्य तदपेक्षयेत्यर्थः । तन्मते सर्वासां प्रमाणां स्वग्राह्यप्रामाण्यतया ततः परत्वे ग्राहकस्याऽप्रामाण्यं स्यात्, ततश्च व्यवसायस्याऽप्यप्रामाण्यं स्यात्ततश्च तदेव[1] परमिति सिद्धसाधनमिति भावः ।

माथुरी

प्रामाण्यादिसंशयस्यानुत्तेजकत्वे यत्रापेक्षाबुद्ध्यात्मक एव निरुक्तसमूहालम्बनस्मरणरूपो निश्चयस्तत्र क्षणद्वयापलापापत्तेः । किञ्च यत्र भाविन्येव स घट इत्यादिनिश्चये प्रथमतोऽपेक्षाबुद्ध्यात्मकाऽप्रामाण्यसंशयस्ततः स घट इत्यादिनिश्चयोत्पत्तिः ततो द्वितीयक्षण एव स घटो न वेत्यादिसंशयस्तत्र यत्र वा तद्विशेष्यकघटत्वादिप्रकारकज्ञानं प्रमा न वा स घट इत्यादिप्रामाण्यसमूहालम्बननिश्चयः ततो द्वितीयक्षण एव स घटो न वेत्यादिसंशयस्तत्र च क्षणद्वयापलापापत्तिः तत्रैव निश्चयस्यापेक्षाबुद्धिरूपत्वे क्षणत्रयापलापापत्तिश्चेति भावः ।

प्राञ्चस्तु विपरीतनिश्चयोत्तरानाहार्य्यदोषविशेषाजन्यतद्विशिष्टबुद्धौ भ्रमत्वादिज्ञानस्य हेतुतया निश्चिते विषये भ्रमत्वादिसंशयं विना न विषयसंशयोत्पादः । न च क्वचित्प्रामाण्याभावज्ञानं हेतुः क्वचिच्च भ्रमत्वज्ञानमित्यननुगम इति वाच्यम् । प्रामाण्यनिश्चयविरोधिज्ञानत्वेनानुगमादित्याहुः । तदसत्, भ्रमत्वज्ञानानास्कन्दितविरोधिनिश्चयस्य संशय-निश्चयसाधारणविशिष्टबुद्धिप्रतिबन्धकत्वादेव भ्रमत्वादिसंशयं विना निश्चयसत्त्वे संशयानुत्पादसम्भवेन तादृशविशेषकारणत्वकल्पने मानाभावात् । सति विरोधिनिश्चये भ्रमत्वादिज्ञानरूपविशेषकारणाभावे विपरीतनिश्चयोत्तरतद्विशिष्टबुद्ध्यनुत्पादेति विशिष्टबुद्धिसामान्योत्पादस्य दुर्व्वारतया विरोधिनिश्चयस्य प्रतिबन्धकत्वावश्यकत्वात् भ्रमत्वादिज्ञानस्याप्युत्तेजकत्वावश्यकत्वाच्च ।

१. प्रमारूपव्यवसायस्य।

ननु स्वग्राह्यत्वेऽपि कदाचित्परग्राह्यत्वात् स्वस्याऽप्यन्याऽपेक्षया परत्वात्[1] भट्टमते च परग्राह्यत्वात् सिद्धसाधनम्। न च ग्राह्यप्रामाण्याऽपेक्षया परत्वम्, ग्राहकस्याऽपि[2] ग्राह्यप्रामाण्यत्वेन तदपेक्षया[3] परत्वाऽभावात्[4], स्वग्राह्यप्रामाण्याऽपेक्षया परत्वे अप्रामाण्यप्रसङ्गात्—

उच्यते। अनभ्यासदशाऽऽपन्नज्ञानप्रामाण्यं न स्वाश्रयग्राह्यं

आलोकः

अनभ्यासदशाऽऽपन्नेति। एवं संशयविषयत्वन्तु सर्वत्र दुर्लभमिति भागाऽसिद्धिपरीहाराय ईश्वरज्ञाने चांऽशतो बाधवारणाय विशेषणमित्याशयः।

दर्पणः

संशयविषयत्वमिति। तथा च स्वाऽऽश्रयक्षणोत्तरतृतीयक्षवर्त्तिसंशयविषयत्वं अप्रामाण्यसंशयाऽजन्यसंशयविषयत्वं च सुतरां सर्वत्र दुर्लभमिति भावः। ईश्वरज्ञाने ईश्वरज्ञाननिष्ठे सर्वत्ववति सर्वत्वप्रकारकत्वे। विशेषणम् अनभ्यासेत्यादि। संशय-

माथुरी

अन्यथा विरोधिनिश्चयसत्त्वे भ्रमत्वादिसंशयादप्यर्थसंशयानुपपत्तेः प्रतिबन्धकसत्त्वे कारणसहस्राणामप्यकिञ्चित्करत्वात्। किञ्च प्रामाण्यनिश्चयविरोधित्वेनाप्यनुगमासम्भवः-विरोधित्वस्य प्रतिबध्य-प्रतिबन्धकतावच्छेदकभेदेन भेदात् स्वरूपतो भ्रमत्वज्ञानस्य प्रामाण्यनिश्चयप्रतिबन्धकत्वे मानाभावाच्च। नचैवं भ्रमत्वादिज्ञानानामननुगमादुत्तेजकत्वमपि कथमिति वाच्यम्। उत्तेजकाननुगमस्यादोषत्वादिति दिक्।

'अथेति, 'प्रामाण्यं' प्रमापदप्रवृत्तिनिमित्तम्, 'न तत्संशय इति, किन्तु स्मृत्यन्यज्ञानत्व-विशिष्टज्ञानत्वादौ संशय इति भावः। 'प्रामाण्यसंशयादिति इदं ज्ञानं प्रमा न वेत्याकारकसंशयादित्यर्थः, 'न तत्प्रामाण्यमिति, तादृशसंशयविषयस्यैव प्रामाण्यत्वमुचितं तद्वति तत्प्रकारकत्वन्तु निश्चितं न तथा संशयविषय इति नैतस्य प्रामाण्यत्वमिति भावः। 'एतन्निश्चयादिति' निष्कम्पप्रवृत्त्युपयुक्तस्यैव प्रामाण्यत्वादितिभावः। ननु भवतु एतस्यैव प्रामाण्यत्वे तथाप्येतस्यापि संशय आनुभविकः स चानुव्यवसायेन तस्य निश्चये कथं स्यादित्याह, 'अस्तु तावदिति, 'इदं' तद्वति तत्प्रकारकत्वम्, 'प्रामाण्ये' तद्वतीत्यादिरूपे, 'नार्थतद्वत्त्वमिति[5] प्रामाण्यमिति शेषः। तथा चेति, 'अन्यथा'

१. स्वस्य परत्वादिति पाठो नास्ति रा० पुस्तके।
२. ग्राहकत्वेन नैयायिकाऽभिमतस्याऽपीत्यर्थः।
३. ग्राह्यप्रामाण्याऽपेक्षयेति भावः।
४. भिन्नत्वाऽभावादिति।
५. अर्थे विशेष्ये भूतलादौ तद्वत्त्वं घटादिमत्त्वमित्यर्थः।

आलोकः

नन्वनभ्यासदशाऽऽपन्नेऽपि सर्वत्र न संशय इति भागाऽसिद्धितादवस्थ्यम् । न च संशयविषयत्वमेवाऽनेनोपलक्षितं प्रामाण्यविशेषितस्य तस्य पक्षताऽवच्छेदकत्वान्न हेतुपक्षताऽवच्छेदकाऽभेदनिबन्धनसिद्धसाधनमिति वाच्यम्, प्रामाण्यसंशयाऽऽहित-संशयविषयप्रामाण्ये एवमपि भागाऽसिद्धयपरीहारात् । न च हेत्वोरेवाऽन्यतरोप-लक्षणपरमनभ्यासदशाऽऽपन्नपदं हेतूकृताऽन्यस्य पक्षताऽवच्छेदकत्वान्न सिद्धसाधनमिति

दर्पणः

विषयत्वे पक्षताऽवच्छेदके संशयविशेषविषयत्वरूपहेतुसाध्यसामानाधिकरण्यग्रहकाले सुतरां पक्षताऽवच्छेदकसाध्यसामानाधिकरण्यं भातमित्याशयेन सिद्धसाधनमाशङ्क्य निराकरोति—**प्रामाण्यविशेषितस्येति भागाऽसिद्धयपरीहारादिति** । तत्र चतुर्थाऽऽदि-क्षणवर्त्तित्वादप्रामाण्यसंशयजन्यत्वाच्च संशयस्य यथोक्तहेतुद्वयाऽभावादिति भावः।

प्रामाण्यस्याऽधिकस्य प्रवेशाद्धेतोः पक्षताऽवच्छेदकत्वेऽपि सिद्धसाधनोद्धारो यद्यपि कर्त्तुं शक्यते तथाऽपि सौकर्यात् समाधानाऽन्तरमाह—**हेतूकृतान्यस्येति** । **ज्ञानेति** । पक्षतावच्छेदकहेत्वभेदनिबन्धनसिद्धसाधनपरीहारस्य प्रकारान्तरेण जातत्वा-दिति भावः ।

माथुरी

अनुव्यवसायेन व्यवसायस्य इदन्त्व-रजतत्वविशिष्टविषयत्वाविषयीकरणे, तत्र[1] प्रमात्वानुपपत्तेरिति भावः । युक्त्यन्तरमाह, 'अत इति, 'धर्मिणीति धर्मितावच्छेदकांशे स्वतः प्रामाण्यग्रहवदित्यर्थः, अयञ्च प्रसाध्याङ्गको दृष्टान्तः[2] 'अवर्जनीयमिति, रजतत्व-प्रकारकत्वं गृह्यत एव रजतत्वविशिष्टविशेषकत्वमपि चेद् गृहीतं तदा प्रामाण्यग्रहे विशेषाभावादिति भावः । दृष्टान्तासिद्धिं परिहरति, 'अत एवेति, **'धर्म्यंशे'** धर्मिता-वच्छेदकांशे । अनुभवास्वीकारेण दृष्टान्त-दार्ष्टान्तोभयमेव दूषयति, 'नैवमिति, 'किन्त्विदमिति, अत्र स्वरूपेणेदंव्यक्तिविषयो बोध्यः, न तु तत्र इदन्त्वमपि प्रकारः, तथा सति तदंशे स्वतः प्रामाण्यप्रसङ्गात् 'अत इदन्त्वं रजत्ववैशिष्ट्यं पुरोवर्त्तिनो नानुव्यवसायविषयः' इत्यग्रिमग्रन्थासङ्गतेश्च । 'प्रकारकत्वेनेति प्रकारिताविशेषणत्वे-नेत्यर्थः । यद्वा **'प्रकारकत्वेन'** प्रकारितासंसर्गेण, ज्ञान इति शेषः । ननु अनुव्यवसाये प्रकारिताभावे किम्मानमिति तटस्थाशङ्कां निराकरोति, 'अन्यथेति' प्रकारित्वस्यानु-व्यवसायाविषयत्व इत्यर्थः, 'प्रकारवाचीति प्रकारितावाचीत्यर्थः, **'रजतत्ववैशिष्ट्यस्य'**

---

१. तत्र व्यवसायगततादृशधर्म्मे इत्यर्थः

२. धर्म्मितावच्छेदकांशे प्रामाण्यस्यापि न्यायनये स्वतस्त्वाभावादिति दृष्टान्तस्य प्रसाध्याङ्गकत्वमुक्तम् ।

आलोकः

वाच्यम्, ज्ञानप्रामाण्यपदवैयर्थ्यापातादिति—मैवम्। अव्यावर्त्तकस्याऽपीश्वराऽनुमाने कृतिविशेषणजन्यपदस्येवोपरञ्जकतयाऽव्यर्थत्वात्।

वस्तुतः हेतुपक्षताऽवच्छेदकैक्येऽप्यंशतः सिद्धसाधनमिति प्राचीनमतानुसारितयाऽप्रामाण्यव्यावर्त्तनाय ज्ञानप्रामाण्यपदोपादानम्। अनभ्यासदशाऽऽपन्नेत्यादिना तत्संशयसामग्री लक्षितेति परमाऽर्थः।

दर्पणः

हेतुमेव पक्षतावच्छेदकीकृत्य सिद्धसाधनं प्रसज्य तद्वारणाय ज्ञानप्रामाण्यमिति समाधानं स्फुटत्वादुपेक्ष्याऽन्यदाह—अव्यावर्त्तकस्याऽपीति। यद्यपि जन्यपदमव्यावर्त्तकमित्युचितमजन्यकृत्यप्रसिद्धेः, इह तु ज्ञानप्रामाण्यपदस्य तृतीयलक्षणवर्तिसंशयविषय अप्रामाण्याऽऽदयो वारणीया इति व्यावर्त्तकत्वं सम्भवत्येव, तथाऽपि पक्षताऽवच्छेदकहेत्त्रैक्येंऽशतः सिद्धसाधनस्याऽदोषतया तद्वारणे प्रयोजनाऽभावात् प्रयोजनव्यावर्त्तकत्वस्याऽभावोऽत्र विवक्षितः।

माथुरी

पुरोवर्त्त्यन्वितरजतत्वसमवायस्य, 'तदर्थत्वे' तृतीयार्थत्वे, तृतीयार्थेति इदं रजतत्वे-नेत्युल्लेखापत्तिरित्यर्थः। नन्वनुव्यवसायस्येदन्त्व-रजतत्वादिविशिष्टेदंविषयकत्वाभावे व्यवसायस्य धर्मिणि रजतत्वेदन्त्वादिप्रकारकत्वे मानाभावात् तस्य धर्म्यंशे निष्प्रकारकत्वापत्तिरित्यत आह, 'तथा चेति' अनुव्यवसायस्य रजत्वदन्त्वादिप्रकारकत्वाभावे चेत्यर्थः, 'धर्मिणीति धर्म्यंशे व्यवसायस्येदन्त्व-रजतत्वप्रकारकत्व इत्यर्थः, 'विषये' धर्मिणि, 'तस्य' व्यवसायस्य, 'निर्विकल्पत्वम्' निष्प्रकारकत्वं। उपसंहरति, 'अत इति, वहिर्विशेष्यकज्ञाने मनसोऽस्वातन्त्र्यादिति भावः।

ननु बहिर्विशेष्यके ज्ञाने मनसोऽस्वातन्त्र्यादित्यत्र किन्नाम अस्वातन्त्र्यं न तावच्चक्षुरादिरूपप्रमाणान्तरासहकारेणाजनकत्वं कविकाव्यादिमूलभूतज्ञानस्य बहिरर्थविषयकस्य प्रमाणान्तरासहकारेणापि खण्डशस्तत्तदर्थोपस्थितिसहकारेण मनसा जननात् परमाणूरूपवन्नवेत्यादिसंशयस्य प्रमाणान्तरं विनापि कोट्युपस्थितिधर्म्मिज्ञानसहकारेण जननाच्च। न वा ज्ञानाद्यसहकारेण जनकत्वम्, तर्हि प्रकृते व्यवसायरूपोपनयसहकारेण बहिर्विशेष्यकज्ञानजनने बाधकाभावात्। न च मनो बहिरान्तरोभयविशेष्यकज्ञाने प्रमाणान्तरमन्तरेणासमर्थं परमाणू रूपवन्न वेति संशयस्तु नोभयविशेष्यक इति वाच्यम्। गौरोऽहं सुखीत्यादिशरीराभेदबुद्धिविलयापत्तेः। न च बहिरान्तरोभयमुख्यविशेष्यकेऽसमर्थमिति वाच्यम्। तादृशनियमे मानाभावात् प्रकृतेऽपि

स्वाऽऽश्रयाऽतिरिक्तग्राह्यं वा। स्वाश्रये सत्यपि तदुत्तरतृतीयक्षणवृत्तिसंशय-

आलोकः

स्वाऽऽश्रयेति। स्वाऽऽश्रयाऽतिरिक्तमात्रग्राह्यमित्यर्थः। अत्र यद्यपि स्वपदस्य समभिव्याहृततत्तत्परत्वेऽप्यप्रामाण्यदृष्टान्ते तदाश्रयाऽग्राह्यत्वसाध्यसम्भवेन स एव कल्पोऽनुसर्त्तुमुचितः, न चैवमर्थेऽपि साध्यसम्भवेन तत्र व्यभिचारवारणार्थं विशेषणोपादानमयुक्तमिति वाच्यम्, प्रमावान् इत्यनुमितिप्रामाण्यसंशयाऽऽहितसंशयविषय-

दर्पणः

प्राचीनमतेति। पक्षताऽवच्छेदकसाध्यसामानाधिकरण्याऽवगाहित्वादनुमितेरिति प्राचां भावः। संशयसामग्रीति। तृतीयक्षणवर्तिसंशयसामग्रीविशिष्टज्ञानप्रामाण्यं पक्ष इत्यर्थः। एवं च न भागाऽसिद्धिः, संशयतत्सामग्र्योरविनाभावादिति भावः। ज्ञानप्रामाण्यपदं चाऽत्रापि कल्पे उपरञ्जक मंशतः सिद्धसाधनवारकं चेति ध्येयम्। अत्र विप्रतिपत्तावनुमानप्रयोगे च पक्षताऽवच्छेदकभेदेऽपि नाऽर्थान्तरमुद्देश्यसिद्ध्यविरोधादिति भावः।

माथुरी

क्षतिविरहाच्च। प्रमाण्यभाने रजतत्वादिविशिष्टस्य धर्म्मिणो विशेष्यतांशे विशेषणतयैव भानात्। अस्तु वा बहिरर्थघटितो यथा तथा नियमस्तथापि सुखत्वादिमति सुखत्वादिप्रकारकत्वरूपान्तरार्थघटितप्रामाण्यज्ञाने बाधकाभावः।

अथ 'बहिर्विशेष्यक इत्यस्य पुरोवर्त्तिविशेष्यकत्वादावित्यर्थः, आदिपदाद्रजतत्वादिप्रकारकत्वपरिग्रहः, 'अस्वातन्त्र्यादित्यस्य विशेष्यकत्व-प्रकारकत्वयोरुपस्थितिं विना ज्ञानजनकत्वासम्भवादित्यर्थः। विशेषणज्ञानस्य विशिष्टबुद्धौ हेतुत्वादिति मणिकृतो निगर्व्वः इति चेत्। न। प्रतियोगित्वाभावत्वयोरिव विशेष्यित्व-प्रकारित्वयोरप्यनुपस्थितयोरेव प्रकारत्वमिति नैयायिकस्यापि सिद्धान्तात्। अन्यथा पुरोवर्त्तिविशेष्यकत्व-रजतत्वप्रकारकत्वयोरपि भानानुपपत्तेः न्यायनये प्रामाण्यभानानभ्युपगमेऽपि तयोर्भानाभ्युपगमात्। किञ्च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं न प्रामाण्यम् किन्तु विशेष्यितासम्बन्धेन तद्विशिष्टवत्त्वे सति प्रकारितासम्बन्धेन तद्वत्त्वमेव प्रामाण्यं लाघवात्। तज्ज्ञानञ्च विशेष्यित्वादेः पूर्वमनुपस्थितावपि सम्भवति तत्र विशेष्यित्वादेः संसर्गतया विशेषणत्वाभावादिति।

अत्रोच्यते। प्रामाण्यसंशयान्यथानुपपत्त्या प्रामाण्यनिश्चयविसामग्रीकल्पनावश्यकत्वेऽनायत्या तद्वति तत्प्रकारकत्वानुपस्थितिविशिष्टतत्प्रकारकज्ञानमेव ज्ञाने तद्वद्विशेष्यकत्वप्रत्यक्षं प्रति प्रतिबन्धकं कल्प्यते, स्वरूपेणेदं विशेष्यकत्वं रजतत्वादिप्रकारकत्वं ज्ञाने गृह्यत एव इदं रजतत्वेन जानामीत्यनुभवस्य दुरपह्नवतया

आलोकः

**प्रमायाः स्वाऽऽश्रयाऽऽत्मग्राह्यतया व्यभिचारेण साऽर्थकत्वं स्यात्, तथाऽपि स्वाऽऽश्रय-ग्राह्यत्वस्य स्वाऽऽश्रयजन्यज्ञानविषयत्वाऽर्थकत्वे प्रकृते सिद्धसाधनाऽऽपत्त्या स्वाऽऽश्रय-विषयत्वमर्थः। न च प्रमारूपेऽर्थे तदस्ति, आत्मनो निर्विषयत्वात्, प्रतिपत्तिव्यापार-**

दर्पणः

चतुर्थीं विप्रतिपत्तिमधिकृत्याह—**न स्वाऽऽश्रयग्राह्यमिति** मूलम्। न यावत्-स्वाऽऽश्रयग्राह्यमित्यर्थः। अन्यथेश्वरज्ञानाऽऽदिरूपेण स्वाऽऽश्रयेण सर्वेषां प्रामाण्यानां ग्राह्यतया बाधाऽऽपत्तेः। एतावता परपक्षनिराकणेऽपि **परतो ग्राह्यत्वरूपस्वमतसिद्धि-र्न जातेति** मूले स्वाऽऽश्रयाऽतिरिक्तेत्यादिद्वितीयं साध्यम्, तच्च यथाश्रुतं सिद्धसाधन-ग्रस्तम्। अतो व्याचष्टे—**स्वाऽऽश्रयातिरिक्तमात्रे**ति। यावत्स्वाऽऽश्रयग्राह्यत्वे सति स्वाऽऽश्रयाऽतिरिक्तग्राह्यमित्यर्थः।

**तदाश्रयेति**। अप्रामाण्याऽऽश्रयेत्यर्थः। **अर्थेऽपि साध्यसम्भवेनेति**। घटत्वाऽऽद्याश्रययावद्भिर्ग्राह्यत्वस्य ग्रहणोपहितत्वस्य घटत्वाऽऽदौ यावद्गुरुत्वाऽऽद्याश्रयग्राह्यत्वस्य ग्रहणयोग्यत्वस्य च गुरुत्वाऽऽदावभावादित्याशयः। **प्रमावानिति**। तत्र चतुर्थाऽऽदिक्षणे संशयात्तद्वारणाय तृतीयेत्यादिविशेषणस्य सार्थकत्वादित्यर्थः। इदञ्चोपलक्षणम्। प्रामाण्यसंशयाऽऽहितसंशयविषये एतद्घटरूपाऽऽदौ घटद्वयसंयोगाऽऽदौ[1] च उक्तरीत्या साध्याऽसत्त्वेन तद्व्यभिचारवारणायाऽपि विशेषणसार्थकत्वं द्रष्टव्यम्। **सिद्धसाधना-ऽऽपत्त्येति**। प्रामाण्याऽऽश्रयीभूतं यद्घटाऽऽदिज्ञानं यावत्तज्जन्यग्रहणविषयत्वाऽभावस्य

माथुरी

रजतत्वाऽऽदिविशिष्टविशेष्यकत्वप्रत्यक्षं प्रत्येव तादृशरजतत्वादिप्रकारकज्ञानस्य प्रति-बन्धकत्वात्। एतेनानभ्यासदशापन्नेऽपि न सर्वत्र प्रामाण्यसंशयः, किन्तु क्वाचिदेव, तथा च यत्र न प्रामाण्यसंशयस्तत्र प्रामाण्यनिश्चये किं बाधकमिति निरस्तं। प्रामाण्य-ग्रहाभावविशिष्टस्य व्यवसायस्य सामान्यत एव तद्वद्विशेष्यकत्वप्रत्यक्षप्रतिबन्धकत्वात्।

अथैवं तत्तत्संशयान्यप्रामाण्याभावविशिष्टबुद्धावेव प्रामाण्यनिश्चयो विरोधीत्येव कल्प्यतां प्रतिबध्य-प्रतिबन्धकभावान्तरकल्पनामपेक्ष्य क्लृप्तप्रतिबध्यतावच्छेदककोटौ[2] विशेषप्रक्षेपस्यैव लघुत्वादिति चेत्। न। अन्यदा प्रामाण्यनिश्चये तदुत्तरमप्रतिबध्य-तत्तत्संशयात्मकप्रामाण्याभावविशिष्टबुद्ध्यनुत्पादाय तत्र तत्रोपस्थितिविशेषस्य हेतुत्वमपि त्वया वक्तव्यमिति महद्गौरवापत्तेः तत्तत्संशयान्यत्वस्य तत्तत्संशयभेदकूटरूपस्य

---

१. व्यापाराऽनुबन्धिनीं विषयतामादाय।

२. क्लृप्तप्रतिबध्य-प्रतिबन्धकभावे अवच्छेदककोटाविति ख०।

आलोकः

मात्रसाधारणैकविषयत्वाभावादिति स कल्पो न युक्त इति स्वपदस्य पक्षीकृतमात्रपरत्वं मन्तव्यम् ।

स्वाश्रय इति । अत्र संशयसमये स्वाऽऽश्रयाऽविद्यमानतया माभूदसिद्धिरिति ।

स्वाऽऽश्रये सति इत्यस्य स्वाऽऽश्रये जात इत्यर्थः, तेन स्वाऽऽश्रयाऽधिकरणक्षणोत्तरतृतीयक्षणवर्त्तिसंशयविषयत्वं पर्यवस्यति, तच्चोभयमतसाधारणम्, ज्ञानस्य क्षणद्वयाऽ-

दर्पणः

प्राभाकरैरपि स्वीकृतत्वादिति भावः। पक्षीकृतमात्रपरत्वमिति । अत्र यद्यप्येतत्क्षणवर्त्तिदेवदत्तज्ञानमिदमिति वाक्येन जनिते एतत्क्षणवर्तिदेवदत्तज्ञानज्ञाने यत्क्षणवर्तिदेवदत्तज्ञानत्वं विषयः तस्य च प्रामाण्यसंशयाऽऽहितसंशयविषयस्य यावत्स्वाऽऽश्रयग्राह्यतया व्यभिचारेण तद्वारणाय समभिव्याहृतपरत्वेऽपि स्वपदस्य तृतीयक्षणवर्त्यादिपदं सार्थकं भवत्येव, तथाऽपि समभिव्याहृतपरत्वपक्षे शब्दसाम्येऽप्यर्थसाम्याऽभावेनाऽनुमाना[1]प्रवृत्तिमभिप्रेत्यैतदुक्तम् । अत एवाऽऽचार्यचरणैः सर्वनाम्नां वक्त्रोरयमन्वय इत्युक्तम् ।

नन्वत्र स्वपदं पक्षतावच्छेदकरूपावच्छिन्नमात्रपरं वा घटत्ववति घटत्वप्रकारकत्वादिप्रत्येकपरं वा। आद्ये सिद्धसाधनम्, तादृशप्रामाण्याश्रयैर्यावद्भिः पक्षीकृतस्य कस्यापि प्रामाण्यस्य ग्रहणाभावात् । द्वितीयेऽशतः सिद्धसाधनम्, घटत्ववतीत्यादिप्रामाण्याश्रयैर्यावद्भिः घटत्ववतीत्यादिप्रामाण्यस्य ग्रहणाभावात् । न च पक्षतावच्छेदकावच्छिन्नं साध्यमनुमितिविषय इति नांशतः सिद्धसाधनं दोष इति

माथुरी

परस्परं विशेषण-विशेष्यभावेन[2] अनन्तप्रतिबध्य-प्रतिबन्धकभावप्रसङ्गाच्च । एतेन तत्तन्निश्चयान्यप्रामाण्यनिश्चयस्यैव प्रतिबन्धकत्वं कल्प्यतां लाघवात् प्रतिबन्धकान्तरकल्पनामपेक्ष्य क्लृप्तप्रतिबन्धकतावच्छेदकसङ्कोचस्योचितत्वादिति परास्तम् । भेदकूटस्य परस्परं विशेषणविशेष्यभावे विनिगमकाभावेनानन्तप्रतिबध्य-प्रतिबन्धकभावप्रसङ्गात् । न चानभ्यासदशापन्नज्ञानेऽपि सर्वत्र न प्रामाण्यसंशयः किन्तु क्वचिदेव, तथा च यत्र प्रामाण्यसंशयस्तत्र प्रामाण्यसंशयहेतुत्वेन क्लृप्तदोषस्यैव प्रामाण्यनिश्चयप्रतिबन्धकत्वं कल्प्यतामन्यत्र तु स्वतः प्रामाण्यग्रह एवास्त्विति वाच्यम् । दोषाणामननुगतत्वादिति ग्रन्थानुयायिनः । तदसत् । इदं रजतमिति व्यवसायानन्तरमिदं रजतत्वेन जानामीत्यनुव्यवसायानुपपत्तेः प्रतिबन्धकीभूतस्येदन्त्वप्रकारकव्यवसायस्य सत्त्वेन इदन्त्वविशिष्टविशेष्यकत्वग्रहासम्भवात् । न च तस्येदमंशे निर्विकल्पकत्वमेवेति

१. अननुगमात् ।

२. विनिगमनाविरहादिति भावः ।

आलोकः

वस्थायित्वयाऽस्मन्मते तदधिकरणीभूतजन्मोत्तरक्षणाऽवधिकतृतीयक्षणे जन्माऽवधिकतृतीयक्षणजातधर्मिज्ञानतृतीयक्षणजातकोटिस्मृतिभ्यां संशयजननात्, तन्मते तत्तदधिकरणजन्मक्षणोत्तरतृतीयक्षण एव स्वप्रकाशाऽऽत्मकधर्मिधीकोटिस्मृतिभ्यां संशयजननात् ।

दर्पणः

वाच्यम्, अत्र सर्वशब्दादिजन्यज्ञाननिष्ठे सर्वत्ववति सर्वत्वप्रकारकत्वे पक्षतावच्छेदकस्यातिप्रसक्तत्वात् तत्सामानाधिकरण्यावगाहिन्या एवानुमितेः स्वकर्त्तव्यत्वादिति ।

अत्रेदं तत्त्वम् । तृतीयक्षणवर्त्तिसंशयविषयीभूतं यद् घटत्ववति घटत्वप्रकारकत्वादि तदेव पक्षीकर्त्तव्यम्, न त्वनभ्यासेत्यादि पक्षे विशेषणं देयम् । तथा च घटत्ववति घटत्वप्रकारकत्वं तदाश्रययावद्ग्राह्यं न । तदाश्रये सति तदुत्तरतृतीयक्षणवर्त्तिसंशयविषयत्वात् घटत्वाभाववति घटत्वप्रकारकत्ववदित्यादिप्रयोगः पर्यवस्यति, विप्रतिपत्तावपि एवमेव पक्षसाध्ये निर्वाच्ये । अत एव च विप्रतिपत्तिप्रयोगयोः पक्षताऽवच्छेदकभेदनिबन्धनाऽर्थान्तरशङ्काऽपि न । न चैवं विप्रतिपत्तिव्याख्यानाऽवसरे मूलोक्तपक्षताऽवच्छेदकहेत्वैक्यनिबन्धनांऽशतः सिद्धसाधनोद्धार उक्तः कथं समाधेय इति वाच्यम् । सामान्यतः प्रामाण्यपक्षतापक्षमाश्रित्य तन्मूलावतारः । अत एवाऽलोक-

माथुरी

वाच्यम् । जात्यतिरिक्तपदार्थस्य किञ्चिद्धर्म्मप्रकारणैव प्रकारत्वनियमात् । न च तद्वद्विशेष्यकत्व-तत्प्रकारकत्वोभयविषयकप्रत्यक्षत्वं प्रतिबध्यतावच्छेदकमत एव प्रत्येकं भासत एव न तु इदम् इदन्त्वेन जानामीति वाच्यम् । इदं रजतत्वेन जानामीत्यनुव्यवसायकाले तदुभयविषयकप्रत्यक्षस्य प्रतिबन्धकसत्वेऽपि रजत्वप्रकारकत्वभानवद्रजतत्वविशिष्टविशेष्यकत्वभानस्यापि दुर्वारत्वापत्तेः । किञ्च ज्ञाने तद्वद्विशेष्यकत्वभानं माभूत् प्रामाण्यभाने च किं बाधकम् । न हि[1] तद्वद्विशेष्यकत्वतत्प्रकारकत्वमात्रं प्रामाण्यम्, रजत-रङ्ग्योरिमे रङ्ग-रजते इति विपरीतभ्रमेऽतिव्याप्तेः । किन्तु तद्विशिष्टविशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम्, अवच्छिन्नत्वञ्च इदमेतद्विशिष्टे एतत्प्रकारकमिति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः, स च संसर्गमर्य्यादया प्रविष्ट इति ।

नव्यास्तु पुरोवर्त्तिनि रजत्वादिमत्त्वज्ञानेऽपि रजतत्वादिविशिष्टविशेष्यकत्वं रजतत्वादिप्रकारकत्वम् अनुव्यवसाये भासत एव, एवं रजतत्वादिप्रकारकत्वे पुरोवर्त्तिविशेष्यकत्वावच्छिन्नत्वमपि भासते परन्तु रजत्वादिप्रकारकत्वे रजत्वादिविशिष्टविशेष्यकत्वावच्छिन्नत्वं न भासते, अवच्छिन्नत्वसम्बन्धेन तत्प्रकारकत्वविशेष्यक-

१. तत्प्रकारकत्वे अवच्छिन्नत्वससर्गेण तद्वद्विशेष्यकत्वं प्रकारः न तु ज्ञाने एतदेवोपपादयन्ति न हीति ।

आलोकः

**अपिस्तु न समुच्चयवचनः किन्तु विरोधप्रदर्शनार्थः। एतेन स्वाऽऽश्रयनिश्चयपरत्वे स्वाऽऽश्रयपदस्य परमतेऽसिद्धिः, यथाश्रुते च स्वमतेऽसिद्धिः स्वाऽऽश्रयोत्पत्तिक्षणाऽवधिकचतुर्थक्षणे संशयदर्शनादितिदूषणमलग्नकं वेदितव्यम्। न चैवमप्यसिद्धिरेव**

दर्पणः

कृत्स्मरणरूपस्वाऽऽश्रयव्युत्पादनाऽवसरे वक्ष्यति—स्वपदं च तत्तप्रामाण्यपरमिति। यद्वा सर्वं तदाऽऽदिजन्यसकलविषयकज्ञानभिन्नज्ञानप्रामाण्यस्य पक्षतया पक्षताऽवच्छेदकाऽवच्छिन्नसाध्यकाऽनुमित्याश्रयणात्, प्रत्येकप्रामाण्यपरत्वे स्वपदस्यांऽशतः सिद्धसाधनोद्धारोऽत्र विधेयः, तदभिप्रेत्यैव स्वपदं चेत्यादि वक्ष्यति, वक्ष्यमाणप्रकारगर्भसाध्ये तु यथाश्रुतमेव सम्यगिति।

**विरोधप्रदर्शनार्थं** इति। साध्याऽसत्त्वे हेतोरुपपत्तिरित्येवंरूपतच्छङ्काप्रदर्शनार्थमित्यर्थः। **एतेनेति**। स्वाऽऽश्रयाऽधिकरणस्य सामान्यतो विवक्षितत्वेनेत्यर्थः। **परमतेऽसिद्धिरिति**। यद्यपि स्वप्रकाशपक्षे प्रथमक्षण एव स्वाऽऽश्रयनिश्चयान्नासिद्धिस्तथाऽपि **स्वाऽऽश्रयनिश्चयपरत्वे** स्वाऽऽश्रयानुव्यवसायपरत्व इत्यर्थः, तथा चाऽनुव्यवसायस्य परैरनङ्गीकारादप्रसिद्धिर्द्रष्टव्या। **यथाश्रुते** स्वाऽऽश्रयोत्पत्तिपरत्वे। **धर्मिधीसहितेति**।

माथुरी

तद्वद्विशेष्यकत्वप्रकारकप्रत्यक्षं प्रति तादृशविशिष्टप्रामाण्यानुपस्थितिकालीनव्यवसायस्य प्रतिबन्धकत्वात्। न च व्यवसायत्वस्यानुगतस्याभावात् कथमनुगतरूपेण प्रतिबन्धकत्वमननुगतानामेव प्रतिबन्कत्वे तन्मतेऽपि प्रामाण्यसंशयस्थलीयतत्तद्व्यवसायव्यक्तेः प्रामाण्यसंशयानुकूलतत्तद्दोषव्यक्तेर्वा प्रतिबन्धकत्वस्य सुवचतयाऽन्यत्र स्वतः प्रामाण्यनिश्चये बाधकाभाव इति वाच्यम्। तद्वति तत्प्रकारकज्ञानत्वेनानुगमात्।

अथैवं द्वितीयानुव्यवसाय एव न्यायनये कथं प्रामाण्यस्य भानम्। न च विशिष्टप्रामाण्योपस्थितिवत् द्वितीयानुव्यवसायसमग्र्यप्युत्तेजिकेति वाच्यम्। द्वितीयानुव्यवसायसामग्रीत्वस्यानुगतस्याभावात् तत्तत्कारणविशेषव्यक्तीनां प्रातिस्विकरूपेणोत्तेजकत्वे तदभावानां परस्परं विशेषणविशेष्यभावे विनिगमकाभावेनानन्तप्रतिबध्य-प्रतिबन्धकभावापत्तेः। न च अनायत्या अनन्तप्रतिबध्य-प्रतिबन्धकभावोऽभ्युपेयत इति वाच्यम्। तथा सति तदपेक्ष्य लाघवात् प्रामाण्यसंशयस्थलीयतत्तद्व्यवसायव्यक्तेस्तत्तद्दोषव्यक्तेर्वा प्रतिबन्धकत्वस्यैवोचिततया अन्यत्र स्वतः प्रामाण्यग्रहस्य दुर्वारत्वादिति चेत्। न। द्वितीयानुव्यवसायेऽपि प्रामाण्यभानस्यानभ्युपगमात्। अग्रे तत्र प्रामाण्यभानाभिधानमेकदेशिमते। न च तथापि गुरुमते व्यवसाये स्वतः प्रामाण्यभाने बाधकाभावः तादृशविशिष्टव्यवसायस्य प्रतिबन्धकस्य पूर्वमभावात् इति वाच्यम्। प्रामाण्यसंशयान्यथानुपपत्त्या कार्य्यसहभावेन तादृशविशिष्टव्यवसाय-

विषयत्वात् अप्रामाण्यसंशयाऽजन्यसंशयविषयत्वाद्वा अप्रामाण्यवत् ।

आलोकः

परमते तन्मते संशयस्य ग्रहणस्मरणाऽऽत्मकत्वेन स्वप्रकाशाऽऽत्मकधर्मिग्रहाऽनन्तर-कोटिद्वयस्मृतेरग्रिमक्षण एव सम्भवेन द्वितीयक्षणे एव संशयसम्भवादिति वाच्यम्, तादृशधर्मिधीजनितसंस्कारेण स्मृतिरूपधर्मिज्ञानस्य तृतीयक्षणे सम्भवात् । तथा च द्वितीयक्षण इव तृतीयक्षणेऽपि संशयस्तदापि कोटिस्मृतिसत्त्वात् ।

नन्वेवं तन्मते द्वितीयक्षणेऽपि संशयसम्भवेनाऽग्रिमक्षणेऽर्थसंशयात् तृतीय-क्षणवर्त्तिसंशयविषयत्वमर्थे व्यभिचारीति चेत्—न । न ह्यस्मन्मत इव तन्मतेऽपि प्रामाण्याऽप्रामाण्यकोटचुपस्थितिरेवाऽर्थतद्वत्त्वाऽतद्वत्त्वकोटचुपस्थितिः, तन्मते स्वतन्त्र-कोटचुपस्थितेरेव संशयत्वेन प्रामाण्याऽप्रामाण्यकोटचुपस्थितेः स्वातन्त्र्येण तद्वत्त्वाऽऽद्यविषयत्वात् । अस्मन्मते तु सा विशेषणधीत्वेन जनिका । तत्र च स्वातन्त्र्यमतन्त्रम्, गौरवात् । तथा च द्वितीयक्षणे तन्मते प्रामाण्यसंशयेऽपि

दर्पणः

प्रामाण्याऽऽदिशरीरनिविष्टधर्मिधीसत्त्वादिति । स्वतन्त्रधर्मिधीसहितेत्यर्थः, अन्यथा आत्मनीति मनोग्राह्योपलक्षणम् । अनुभवरूपायाः संशयेन सह समूहाऽऽलम्बनाऽऽ-त्मकाऽनुभवरूपायाः । अन्यत्र मनोऽयोग्ये । स्मृतिरूपायाः प्रामाण्याऽप्रामाण्यकोटि-स्मृत्या सह समूहाऽऽलम्बनाऽऽत्मकस्मृतिरूपायाः । एवं प्रकार[1] इति । प्रामाण्याऽऽ-प्रामाण्यस्मृत्युत्पत्तिक्षण एव धर्मिणोऽर्थस्य तद्वत्त्वातद्वत्त्वयोश्च स्मृतिरित्यर्थः ।

माथुरी

स्यानुगतस्य प्रतिबन्धकत्वकल्पनात् । किञ्च गुरुमते व्यवसाये व्यवसायनिष्ठतया प्रामाण्यभानमेव न सम्भवति लौकिकविषयत्व-तादात्म्यघटितसामानाधिकरण्य-प्रत्यासत्त्या[1] प्रत्यक्षं प्रति विषयस्य हेतुतया विशेषणत्व-लौकिकविषयत्वघटित-सामानाधिकरण्यप्रत्यासत्त्या[2] मनःसंयुक्तसमवायस्यात्मसमवेतमानसप्रत्यक्षहेतुतया च व्यवसाये व्यवसायभानसम्भवात् व्यवसायोत्पत्तिप्राक्काले व्यवसायरूपविषय-लौकिकसन्निकर्षयोरभावात् प्रामाण्येऽपि लौकिकसन्निकर्षाभावाच्च । न च ज्ञानेतर-विषयकलौकिकप्रत्यक्षं प्रत्येव विषयादेर्हेतुत्वमिति वाच्यम्, ज्ञानेतरत्वप्रवेशे गौरवादिति प्राहुः ।

अन्ये तु प्रामाण्यसंशयान्यथानुपपत्त्या सामान्यतः प्रामाण्यप्रत्यक्षे विशिष्ट-प्रामाण्योपस्थितेर्हेतुत्वं कल्प्यते, तेन प्रामाण्योपस्थितिं विना अनुव्यवसायादिना न प्रामाण्यग्रहः अग्रे च द्वितीयानुव्यवसायेन प्रामाण्यग्रहाभिधानमेकदेशिमताभिप्रायेण ।

१. कार्य्यस्य लौकिकविषयत्वं कारणस्य तादात्म्यं प्रत्यासत्तिः ।
२. कारणस्य विशेषणत्वं कार्यस्य लौकिकविषयत्वं प्रत्यासत्तिः ।

**अर्थे निश्चितेऽपि न तन्निश्चयाऽनन्तरतृतीयक्षणेऽर्थसंशयो न वा प्रामाण्य-**

आलोकः

नाऽव्यवहिताऽग्रिमसमयेऽर्थसंशयः, तत्-क्षणे स्वतन्त्रकोटिस्मरणात्[1]। न च तन्मते सैव स्मृतिः संशय इति वाच्यम्, धर्मिधीसहिताया एव स्मृतेस्तथात्वात्। न च सा धर्मिधीसहिता तदा, धर्मिज्ञानसामग्रीविरहात्। अस्माकं तु आत्मन्यर्थेऽनुभवरूपाया, अन्यत्र स्मृतिरूपाया धर्मिधियः सम्भवाद्भवति चतुर्थेऽर्थसंशयः। यत्र तु न तदुभयसम्भवस्तदानीं तत्र पञ्चमाऽऽदौ संशयेऽपि न काऽपि क्षतिः। न चैवं प्रकारस्तस्याऽपि, तन्मतेऽगृहीताऽसंसर्गधर्मधर्मिधिय एव विशिष्टज्ञानतया तद्वत्त्वाऽऽदि-कोटिस्मृतेः स्मृतिरूपधर्मिज्ञानतायामन्यथाख्यात्यापत्त्या तदनन्तरमेव धर्मिधी-सम्भवादिति सर्वं सुस्थम्।

दर्पणः

अगृहीताऽसंसर्गेति। यद्यपि परस्परनिरूपितधर्मत्वधर्मित्वाऽनवगाहनान्न विशिष्ट-ज्ञानत्वमुभयावगाहनमात्रेणेति प्रागुक्तं तथाऽपि असंसर्गाऽग्रहे धर्मस्याऽन्यधर्मितयाऽनुप-स्थितौ च धर्मधर्मिणोः परस्परनिरूपितधर्मधर्मिभावो गृह्यत एवेति नियमादेवमुक्तम्। तृतीयक्षणवर्त्तिसंशयविषयत्वघटविषयकत्वे धर्मिताऽवच्छेदके **गुरुमते** व्यभिचारि, घटविषयकं प्रमा नवेति संशयात्। एतत्क्षणवर्त्ति देवदत्तज्ञानमिति वाक्येन जनित

माथुरी

ननु विशिष्टप्रामाण्योपस्थितेः प्रामाण्यप्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वे व्यवसाय-विरहदशायामपि खण्डशः प्रामाण्यघटकपदार्थानामुपस्थित्या विशेष्ये विशेषणमिति न्यायेन मानसप्रामाण्यप्रत्यक्षं न स्यादिष्टापत्तौ च विशेष्ये विशेषणमिति न्यायेन प्रामाण्य-प्रत्यक्षस्यैवासिद्धापत्तेः। अथ विशेष्याद्यंशे लौकिकप्रामाण्यप्रत्यक्षत्वं कार्यतावच्छेदकं द्वितीयानुव्यवसाये प्रथमानुव्यवसायोपनीतविशेष्यित्वादिविषयकप्रामाण्यभानस्य चेष्टत्वात्। अत एवाग्रे द्वितीयानुव्यवसायेन प्रामामाण्यग्रहाभिधानमपि साधु सङ्गच्छते इति चेत्। न। तथा सति विशिष्टप्रामाण्योपस्थितिं विनापि विशेष्यितासम्बन्धेन रजतत्वादिविशिष्टवत्त्वे सति प्रकारितासम्बन्धेन रजतत्वादिमत्त्वरूपस्य प्रामाण्यस्य प्रथमानुव्यवसाये उपनीतभाने बाधकाभावात्, अत्र विशेष्यित्वादेः संसर्गत्वात् लाघवात्तस्यैव प्रामाण्यत्वात्। न च ज्ञानांशे लौकिकप्रत्यक्षात्मकप्रामाण्यप्रत्यक्षत्वं कार्य्यतावच्छेदकं प्रथमानुव्यवसाये उच्छृङ्खलप्रामाण्यभानस्य चेष्टत्वादिति वाच्यम्। व्यवसायोत्पत्तिकाले ज्ञानोपस्थितिसत्त्वे प्रथमानुव्यवसाये उपनीतज्ञानविशेष्यकप्रामाण्य-

१. प्रामाण्याप्रामाण्यकोटिस्मृतिरेव हि आत्मानात्मधर्मिज्ञानं नैयायिकमते तथा मीमांसकमतेऽपि तद्वत्त्वातद्वत्त्वकोटिस्मृतिरेवार्थधर्मिज्ञानमिति प्रकार इत्यर्थः।

संशयं विनेति नाऽर्थे व्यभिचारः । विवादपदं न यावत्स्वाऽऽश्रयग्राहकग्राह्यं

आलोकः

विषयत्वं कोटित्वम् । यद्वा धर्म्यंशे संशयत्वाऽभावेन विषयत्वं यथाश्रुतमेवाऽनतिप्रसङ्गात् । स्वाऽऽश्रयस्योत्तरत्वपरिचायकतया अप्रसिद्धिवारकतया यत्किञ्चिदवधिकोत्तरतृतीयक्षणवर्त्तिसंशयविषयेऽर्थे व्यभिचारवारकतया वा सार्थकत्वात् । इदञ्च ज्ञानस्याऽभाववत् सविकल्पकैकवेद्यतापक्षे, अन्यथा जन्मोत्तरक्षणाऽवधिकतृतीयक्षणेऽपि संशयो दुर्लभः, निर्विकल्पकविशिष्टज्ञानाऽऽत्मकधर्मिधीकोटिस्मृतिभ्यश्चतुर्थक्षणे प्रामाण्यसंशयादित्यवधातव्यम् ।

वस्तुतस्तु धर्मिज्ञानं कोट्युपस्थितिः संशय इति प्रणालिकया तृतीयक्षणे संशयः, सामग्रीसत्त्वात् । संशयसाधारणकारणोत्पत्तिमपेक्ष्य कार्योत्पत्तिक्रमेण तदनन्तरतृतीयक्षण एव अपेक्षणीयाऽभावात् । अर्थसंशयस्तु न तावन्मात्रहेतुकः,

दर्पणः

एतत्क्षणवर्त्तिनि देवदत्तज्ञाने च धर्मिणि तृतीयक्षणवर्त्तिसंशयविषये तादृशदेवदत्तज्ञानत्ववद्विशेष्यकतादृशदेवदत्तज्ञानत्वप्रकारकयावत्स्वाऽऽश्रयग्राह्ये उभयमते व्यभिचारीत्यत आह—विषयत्वमिति । ननु प्रथमे न्यायनये व्यर्थता, द्वितीये घटज्ञानप्रामाण्यपक्षतायां व्यर्थतेत्यस्वरसादाह—यद्वेति । यद्यपि धर्म्यपि संशयविषयो भवत्येव, तथाऽपि संशयत्वनिरूपकतापर्याप्त्यधिकरणत्वं विषयत्वपदेन विवक्षितम्, न च धर्मी संशयत्वनिरूपकोऽपि तु कोटिरित्यर्थः । निरूपकत्वं च निरूपकतापर्याप्त्यधिकरणत्वमतो नोक्तरीत्याऽर्थे व्यभिचार इति द्रष्टव्यम् ।

धर्म्यंशे इति । धर्मिताऽवच्छेदकधर्मिरूपांऽशे धर्म्यंशे च इत्यर्थः । वस्तुतस्तु घटत्वाऽऽदिकमपि प्रामाण्यशरीरनिविष्टतया संशयकोटिरेवेत्यर्थे व्यभिचारवारणाय कोटितापर्याप्त्यधिकरणत्वं विवक्षितमिति ध्येयम् । ननूत्तरतृतीयक्षणवर्त्तिसंशयविषयत्वमेव हेतुरस्तु किमिति स्वाऽऽश्रयाऽऽधिकरणक्षणेति विशेषणमित्यत आह—स्वाऽऽश्रयस्येति । स्वाऽऽश्रयाऽधिकरणस्येत्यर्थः ।।अप्रसिद्धीति । अवधिज्ञानं विना साऽवधिपदार्थाऽज्ञानादिति

माथुरी

भानस्य दुर्वारत्वापत्तेः प्रथमानुव्यवसाये उच्छृङ्खलप्रामाण्यभानाभ्युपगमे तदनन्तरं रजतत्वप्रकारकत्वं रजतत्ववद्विशेष्यकत्वावच्छिन्नं न वेत्यादिसंशयानुपपत्तेश्चेति । मैवम् । विशेष्ये विशेषणमिति न्यायेनाभावादिप्रत्यक्षवत् प्रामाण्यप्रत्यक्षस्यानभ्युपगमात् । न चैवमनवस्थेति वाच्यम् । बीजाङ्कुरवदनादित्वादित्याञ्जसमिति संक्षेपः ।

उक्तमेवार्थं प्रयोगारूढमाह, 'तस्मादिति', अनभ्यासदशेति अनभ्यासदशापन्नं यद्घटत्वादिस्वाश्रयोत्पत्तिक्षणावधिकतृतीयक्षणवृत्तिसंशयविषयीभूतं यज्ज्ञानप्रामाण्यं

आलोकः

तावन्मात्रसत्त्वेऽपि तस्य प्रामाण्यसंशयविलम्बेनाऽनुत्पादात् । तथा च न तदवधिक-तृतीयक्षण इति वस्तुरीतिः । तथा च प्रामाण्यसंशयः संशयसामान्यहेतुलोऽर्थसंशयस्तु संशयविशेषसामग्रीमपेक्षते । एवञ्च तृतीयक्षणस्योपलक्षणतया संशयसामान्य-सामग्र्यव्यवहितोत्तरक्षणवर्त्तिसंशयविषयत्वं हेतुः पर्यवस्यति । तथा च सत्यर्थे विशेषसामग्र्यपेक्षया सामान्यसामग्र्यव्यवहितोत्तरक्षणवर्त्तिसंशयाऽविषये क्व व्यभिचारवार्त्ता क्व वा क्षणगणनया असिद्धिप्रसङ्गपक्ष इति । यथाश्रुते तु हेतोरसिद्धिपरीहाराय सविकल्पकैकवेद्यतापक्षोऽनुसरणीयः । तथा च घटविषय-त्वाऽऽदिकं समानधर्मो वाच्यः । ज्ञानत्वस्य समानधर्मस्याऽपि व्यवसायोत्पत्ति-द्वितीयक्षणे वैशिष्ट्यभानात् । तथा च ज्ञानं प्रमा न वेत्याकारः संशयो न स्यात् स्याच्च घटविषयकं प्रमा न वेति, स्वहेतुसमानधर्मवद्धर्मिविषयत्वनियमात् संशयस्य ।

दर्पणः

भावः । परिचायकस्य हेतौ प्रवेशौ न युक्त इत्यत आह—**यत्किञ्चिदिति** । चतुर्थक्षणे स्वाऽऽश्रयस्थितिक्षणाऽपेक्षया अग्रे वक्तव्यदोषेण प्रथमकल्पं विहाय कल्पाऽन्तरमाह—**वस्तुतस्त्विति** ।

**संशयसामान्येति** । आश्रये विद्यमाने संशयसामान्यसामग्रीमात्राऽव्यवहितोत्तर-क्षणवर्तिसंशयविषयत्वं हेतुरित्यर्थः । प्रथमकल्पे दोषमाह—**यथाश्रुत** इति । **स्वहेत्विति** । स्वहेतुज्ञानविषय इत्यर्थः । तथा च स्वहेतुज्ञानविषयो यः समानधर्मस्तद्विशिष्टधर्मि-विषयत्वनियमादित्यर्थः । भवतु घटविषयकं प्रमा न वेत्याकारकः संशयस्तथाऽप्यनुमाने न किञ्चिद्दूषणमित्यस्वरसादाह—**किञ्चेति** । **उक्तप्रकारादिति** । स्मृतिरूपधर्मिधियः तृतीयक्षणे उत्पादात् स्वतन्त्रकोटिस्मृतिधर्मिज्ञानाऽऽत्मकाऽर्थसंशयस्य स्वाऽऽश्रयोत्पत्ति-क्षणाऽवधिकतृतीयक्षणेऽसत्त्वाच्चेत्यर्थः । असिद्ध्युद्धारेऽपि अर्थे व्यभिचारतादवस्थ्यमाह-**घटज्ञानस्येत्यादि** । तृतीयक्षणे यथा ज्ञानरूपस्य धर्मिणः स्मृतिः तथाऽर्थरूपस्याऽपि धर्मिणः स्मृतिः स्यादेव । तथा च ज्ञानरूपधर्मिस्मृतिसहितायाः प्रथमोत्पन्नप्रामाण्य-

माथुरी

र्मत्ति घटत्वादिप्रकारकत्वमित्यर्थः । प्रत्येकंदलव्यावृत्तिस्तु अनुपदमेव विवेचनीया । 'सांशयिकत्वादिति स्वाश्रयोत्पत्तिक्षणावधिकतृतीयक्षण-वृत्तिशसंयविषयत्वादित्यर्थः, अत्रापि प्रत्येकदलव्यावृत्तिरनुपदं विवेचनीया । 'परग्राह्यत्वादिति' 'सिद्धसाधनमित्यग्रे-तनेनान्वयः । ननु परमात्रग्राह्यत्वं वक्तव्यं तत्राह, 'स्वस्यापीति' तथा च मात्रपदव्य-वच्छेद्याप्रसिद्धेरिति भावः । ननु घटत्ववति घटत्वप्रकारकत्वं यावत्स्वाश्रयाग्राह्यत्वे सति ग्राह्यमिति साधनीयं तत्राह, 'भट्टमत' इति, मिश्रमते चेत्यपि बोध्यम् । 'स्वस्यापीत्यत्र शङ्कते, 'न चेति, 'ग्राह्यप्रामाण्येति ग्राह्यं प्रामाण्यं यस्येत्यर्थः,

आलोकः

किञ्च ग्रहणस्मरणाऽऽत्मकसंशयवादिनो द्वितीयक्षणे संशयादसिद्धिस्तथा च तृतीयक्षणवर्त्तिसंशयविषयेऽर्थे[1] व्यभिचारः। न चोक्तप्रकारादुभयसमर्थनम्। घटज्ञानस्य घटज्ञानोभयविषयस्य कोटिस्मृतिसमयजन्मना संस्कारेणाऽग्रिमक्षणे जनितया घटज्ञानोभयविषयस्मृत्या तृतीयक्षणे प्रामाण्यसंशयसमर्थनेऽर्थव्यभिचारस्य वज्रलेपत्वात्।

यथा च[2] सा स्मृतिर्धर्मि[3] धीरिति पूर्वोत्पन्नकोटचुपरिस्थिततृतीयक्षणेऽपि संशयस्तथा सा घटरूपधर्मिधीरपीति तत्सहिततदनन्तरोत्पन्नाऽर्थतथात्वाऽऽदिकोटि-स्मृतिरपि संशयः। भवति च तस्याऽस्मन्मत इव ज्ञानोत्पत्तिद्वितीयक्षणाऽवधिक-तृतीयक्षणवर्त्तित्वम्, स्वाऽऽधिकरणत्वमात्रस्य त्वदभिमतत्वात्, तस्य द्वितीयप्रथम-साधारण्यात्। न हि तन्मते जन्मक्षणो मन्मते स्थितिक्षण एव स्वाऽऽश्रयक्षण इति साधारणहेतुशब्देन वक्तुं शक्यमित्यापातचमत्कार एवाऽयमुक्तप्रकारो न विचारसहः।

दर्पणः

कोटिस्मृतेर्यथा तृतीयक्षणे प्रामाण्यसंशयरूपत्वं तथाऽर्थरूपधर्मिस्मृतिसहितायाः चतुर्थ-क्षणोत्पन्नाऽर्थतद्वत्त्वात्तद्वत्त्वकोटिस्मृतेरपि अर्थसंशयत्व[4]मित्याह —**यथा च** सेति। इदमुपलक्षणम्। **गुरुमते** द्वितीयक्षणोपजाततद्वत्त्वाऽतद्वत्त्वस्मृतितृतीयक्षणोपजाताऽर्थ-रूपधर्मिस्मृत्यात्मकोऽर्थसंशयः स्वाऽऽश्रयोत्पत्तिक्षणाऽवधिकतृतीयक्षणेऽपि संभवत्येवेत्यपि ध्येयम्। स्वाऽश्रये विद्यमाने इति विशेषणाऽसिद्धि शङ्कते—**नन्विति**। **धर्मिज्ञानाऽऽदिना** सविककल्पकरूपधर्मिज्ञानस्याऽदिना कारणेन निर्विकल्पकेन। **कथञ्चिदिति**। आत्मन्यर्थे

माथुरी

'ग्राहकस्यापीति ग्राहकत्वेन नैयायिकाभिमतस्यापीत्यर्थः, '**तदपेक्षया**' ग्राह्यप्रामाण्या-पेक्षया, '**परत्वाभावात्**' भिन्नत्वाभावात्, 'स्वाग्राह्येति स्वग्राह्यत्वेन पराभ्युपगतस्य प्रामाण्यस्य घटत्ववति घटत्वप्रकारकत्वादेराश्रयस्तदन्यमात्रग्राह्यत्वे साध्ये इत्यर्थः, 'अप्रामाण्येति तादृशप्रामाण्याश्रयस्यापि प्रामाण्यानुमितीश्वरज्ञानादेस्तदग्राहकत्वेन विषयबाधादनुमितेरप्रामाण्यं स्यादित्यर्थः, प्रामाण्यानुमितेरपि प्रामाण्यघटकतया घटत्वविशिष्टाद्यवगाहित्वेन घटत्ववतीत्यादिप्रामाण्याश्रयत्वादिति भावः। 'अग्राह्य-प्रामाण्यापेक्षयेति पाठे अग्राह्यप्रामाण्यम् अग्राह्यत्वेन नैयायिकाभिमतस्य घटत्व-

---

१. विषयत्वेनार्थे इति नपुस्तके।

२. हीति कपुस्तके।

३. 'ज्ञानरूपाधर्मि' इति नपुस्तके।

४. तथा सति स्थितिरूपस्वाश्रयाधिकरणक्षणोत्तरतृतीयक्षणवर्त्तिसंशयविषयत्वमर्थे व्यभिचारीत्याहेत्यर्थः।

आलोकः

तदुक्तं सोन्द (डो) पाध्यायैस्तृतीयत्वमविवक्षितमव्यवधानमात्रस्यैवोपलक्षितत्वादिति । अव्यवधानञ्च सामान्यसामग्र्यनन्तरत्वमिति नाऽसिद्धिः ।

ननु तथाऽपि हेतुरसिद्धः । स्वाऽऽश्रयस्य तदानीं धर्मिज्ञानाऽऽदिना विनाशे उपनयद्वारा मानससंशयाऽभ्युपगमात् कथंचित्सम्भवेऽपि किन्तदुपादानेन तद्विनाकृतहेतोरेवाऽव्यभिचारभावादिति ।

अत्र ब्रूमः—तद्वति तत्प्रकारकत्वमात्रमिह पक्षो न त्वनुभवत्वगर्भमित्युक्तम् । न च तत्प्रतिज्ञानमन्यत्, समानविषयकसमानप्रकारकज्ञानानां तद्वतीत्यादेरभेदात् । स्वपदञ्च तत्तत्परम्, समभिव्याहाराद्व्युत्पत्तेः । तथा च घटज्ञानाऽऽदीनां तत्तदनुव्यवसायेन विनाशेऽपि तत्तत्समयजन्मना व्यवसायजनितसंस्कारेण कोटिस्मृतिसमकालजनितघटस्मृतेः पक्षीकृतघटत्ववतीत्यादिप्रामाण्याऽऽश्रयस्य प्रामाण्यसंशयविनाश्यत्वेन तत्समये विद्यमानत्वम् । न चैवं प्रकारस्याऽसार्वत्रिकता । हेतोरेव फलत

दर्पणः

अनुभवरूपाया इत्याद्युक्तप्रकारेणेत्यर्थः । घटस्मृतेरित्युपलक्षणम् । मनोयोग्येऽर्थेप्रामाण्यसंशयकाले तदनुभवोऽपि बोद्धव्यः । फलत इति । हेतुकृतसंशयसामग्र्याः पक्षताऽवच्छेदकत्वादिति भावः ।

स्वरूपाऽसिद्धिं निराकृत्य वैयर्थ्यंदोषं निराकरोति—न चेति ।

सामान्यसामग्रीजन्येति । सामान्यसामग्रीमात्रजन्येत्यर्थः । स्वाऽश्रये सतीति विशेषणे दत्तेऽर्थे व्यभिचारी नाऽस्तीत्याह - न च स्मृतिरूपेति । प्रामाण्यसंशयाऽव्यवहितोत्तरक्षणे घटस्मरणं ततो घटो न वेति संशय इत्याह—संशयाऽनुभवरूपतयेति । धर्मिज्ञानाऽऽदिविलम्बेनेति । धर्मिज्ञानमेवाऽऽदिः कारणं तद्विलम्बेनेत्यर्थः । न च प्रामाण्यस्मरणकालीनघटस्मरणस्योक्तत्वात्तस्य च प्रामाण्यसंशयकाले विद्यमानत्वादग्रिमक्षणेऽर्थे संशयोत्पत्तौ कथं विलम्ब इति वाच्यम्, यत्रैव प्रामाण्याऽप्रामाण्यस्मरणकाले

माथुरी

वतीत्यादेराश्रयः, तथा च पूर्वोक्त एवार्थ इति । 'अनभ्यासदशापन्ने'ति अनभ्यासदशापन्नं स्वाश्रयोत्पत्तिक्षणावधिकतृतीयक्षणवृत्तिसंशयविषयीभूतम्, यज्ज्ञानप्रामाण्यं यद्घटत्वादिमति घटत्वादिप्रकारकत्वमित्यर्थः, पक्षे हेतोः सत्त्वप्रदर्शनाय भूतान्तार्थकमनभ्यासदशापन्नपदं स्वरूपकथनं न तु पक्षतावच्छेदकप्रविष्टार्थकं विप्रतिपत्तौ तस्य पक्षतावच्छेदकाघटकतया अत्र तेन रूपेण पक्षत्वे अर्थान्तरापत्तेः ज्ञानभेदेपि घटत्ववति घटत्वप्रकारकत्वादेरभिन्नत्वेनाव्यावर्त्तकत्वाच्च । न च यस्य विषय-

१. व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावोऽस्तीतिमतप्रवर्त्तकैरिति ।

आलोकः

उक्तक्रमेण पक्षताऽवच्छेदकतया यत्रैवं सम्भवः तस्यैव पक्षत्वात् । न च तद्विना-कृतहेतोरेव गमकत्वमित्यपि । अन्येन व्यभिचारात् । तत्र सामान्यसामग्रीजन्य-संशयस्याऽपि भावात् । न च स्मृतिरूपेऽपि घटनिश्चये तत्संशयः प्रामाण्यसंशयं विना । तथा च प्रामाण्यसंशयजन्यसंशयविषये विशेष्यस्याऽभावात्, तदविषये विशेषणाऽभावात् विशिष्टहेत्वभाव उभयत्राऽविशिष्ट इति नाऽर्थे व्यभिचारलेशः । न चैवं कोटिस्मृतिसमकालीनघटस्मृतेः स्वाऽऽश्रयस्य प्रामाण्यसंशयाऽनन्तरभाव्यर्थ-संशयकालेऽसत्त्वनियमेन स्वाऽऽश्रये विद्यमाने संशयविषयत्वादित्येव समञ्जसमिति वाच्यम्, संशयाऽनुभवरूपतया[1] तत्काले घटस्मृत्यनुत्पत्तिनियमेन तदनन्तरमप्युक्त-न्यायेन घटस्मृतिसम्भवात् । तस्याऽर्थसंशयपर्यन्तमवस्थानस्याऽपि प्रायशो भावात् । न चाऽनुभवसामग्र्यपेक्षया स्मृतिसामग्रीदौर्बल्येन प्रामाण्यसंशयाऽनन्तरमर्थसंशय

दर्पणः

न घटस्मरणं तत्रैवोक्तरीत्या प्रामाण्यसंशयाऽग्रिमक्षणे घटस्मरणस्वीकरात् व्यभिचारेण संशयसामान्येत्यादिविशेषणस्य साऽर्थकत्वादिति भावः । न च तथा सति पक्षे हेत्वसिद्धिः प्रामाण्यसंशयोत्पत्तिकाले स्वाऽऽश्रयाऽसत्त्वादिति वाच्यम्, स्थलाऽन्तरमादाय तस्मिन्नेव प्रामाण्ये हेतुसत्त्वादिति । अत एवोक्तं—**प्रायश** इति । वक्ष्यति च **प्रायेणेति** । प्रायिकत्वं च घटस्मरणाऽन्वितमुभयत्रेति ध्येयम् ।

वस्तुतस्तु प्रामाण्यस्मृतिकाले स्मृतस्य घटस्य प्रामाण्यसंशये उपनीतभानमादाय स्वाऽऽश्रयविद्यमानताऽस्ति । यद्वा स्वाऽऽश्रये विद्यमाने इत्यस्य संशयोत्पत्त्यव्यवहित-पूर्वक्षणे स्वाऽऽश्रयविद्यमानत्वमर्थः । तथा च प्रामाण्याऽप्रामाण्यकोटिस्मृतिकालीन-घटस्मृतिमादायैव प्रामाण्येऽर्थे न स्वाऽऽश्रये विद्यमान इति विशेषणस्य संगतिरिति ध्येयम् ।

फलांऽशयोर्विरोधमाशङ्क्य निषेधति—**न चेति** । **घटोऽयमिति** । घटः स इत्यर्थः, अयमिति यदा नाऽस्ति तदा सम्यगेव । **उच्चत्वस्येवेति** । (तथा च

माथुरी

विशेषघटितप्रामाण्यस्य स्वाश्रयोत्पत्तितृतीयक्षणे संशय एव न जातस्तत्र स्वरूपा-सिद्धिवारणाय तस्य पक्षतावच्छेदकघटत्वमावश्यकमिति वाच्यम् । घटत्ववति घटत्व-प्रकारकत्वादेः प्रातिस्विकरूपेणैव पक्षतया तस्य पक्षबहिर्भावादेव स्वरूपासिद्धि-विरहात् । अन्यथा तस्य पक्षत्वे घटत्ववति घटत्वप्रकारकत्वादौ तद्विशेषणोपादानेऽपि तत्र स्वरूपासिद्धेर्दुर्वारत्वात् । न च तत्रैव तद्विशेषणमिति वाच्यम् । काञ्चनमयः पर्वतो वह्निमानित्यादाविवाश्रयासिद्धापत्तेः । न च घटत्ववति घटत्व-प्रकारकत्वादिना प्रातिस्विकरूपेण न पक्षत्वमपि तु सामान्यतः प्रमापदप्रवृत्तिनिमित्तत्वेन तथा च यस्य विषयविशेषघटितप्रमापदप्रवृत्तिनिमित्तस्य तृतीयक्षणे न संशयस्तत्र भागासिद्धिवारणाय

१. संशयस्यार्थिभवतथेति पाठान्तरम् ।

आलोकः

एव न घटस्मृतिरिति वाच्यम्, धर्मिज्ञानाऽऽदिविलम्बेन प्रामाण्यसंशयाऽव्यवधाने-नाऽर्थसंशयाऽनियमात् । प्रत्युताऽर्थसंशयाऽनुरोधेन धर्मिधियः स्मृतिरूपायाः प्रायेण सम्भवेन तत्काले घटस्मरणाऽवश्यकत्वस्यैव प्राप्तेः । न च घटस्मरणस्याऽर्थसंशय-हेतुधर्मिधीत्वे घटोऽयं घटो न वेतिसंशयाऽऽकाराऽऽपत्तिः । घटत्वस्योच्चत्वस्येव संशयाऽप्रयोजकत्वात् । तस्यैव च संशयविषयत्वनियमात् । घटत्वस्य विरोधित्वेन संशयाऽप्रयोजकत्वात्[१] । सामग्र्योरपि विरोधो नेहेत्यग्रे दर्शयिष्यमाणत्वमेवेत्य-लमधिकेनेति ।

वस्तुतस्तु नाऽयमुभयमतसिद्धो हेतुः, पक्षीकृतस्य तद्वद्विशेष्यकत्वस्य गुरुमते संशयाऽसंस्पर्शात् । इदं ज्ञानद्वयमेकं वेति तन्मते प्रामाण्यसंशयात् । तथा च स्वाऽऽश्रये

दर्पणः

साधारणधर्मतया यथोच्चत्वं प्रकृते संशयप्रयोजकं तथा न घटत्वमित्यर्थः[२]) व्यतिरेके दृष्टान्तः, तथा च संशयप्रयोजतया धर्म्यंशे घटत्वं न विषय इति स घटो न वेति संशये फलाऽऽशयोर्न विरोध इति भावः । ननु तथाऽपि कोटिनिश्चयाऽऽत्मकधर्मिज्ञाने कोटिद्वयज्ञानयोः संशयसामग्र्यंशयोर्विरोधः स्यात् । कोटिनिश्चयस्य संशयप्रतिबन्ध-कत्वादित्यत आह—सामग्र्योरपीति । सामग्र्यंशयोरपीत्यर्थः । अप्रामाण्यशङ्काशून्य-जातीयकोटिनिश्चयस्यैव संशयप्रतिबन्धकत्वं नाऽन्यस्येत्यर्थादग्रेऽनुभवं पृच्छेत्यत्र दर्शयिष्यत इत्यर्थः । तदवधिकेति । स्वाऽऽश्रयजन्यक्षणेनाऽसमानकालीनोऽव्यवहितश्च यः क्षणः तेनाऽसमानकालीनोऽव्यवहितः स्वाऽऽश्रयजन्मक्षणाऽसमकालीनश्च यः क्षणः तद्वृत्तिसंशयविषयत्वस्येत्यर्थः । यद्यप्यर्थसंशयाऽनन्तरं विशेषदर्शनजनितघटनिश्चयस्य स्वाऽऽश्रयतया तज्जन्मक्षणाऽवधिकपूर्वतृतीयक्षणवर्त्तिसंशयविषयत्वमर्थे व्यभिचार्येव, तथाऽपि स घटनिश्चयो न स्वाऽऽश्रयः तृतीयक्षणवर्त्तिसंशयविषयप्रामाण्याऽऽश्रयस्य तत्त्वात्, तत्र च विशेषदर्शनमूलकतया तृतीयक्षणे प्रामाण्यसंशयाऽभावादिति भावः ।

माथुरी

तस्य पक्षतावच्छेदकघटकत्वमावश्यकमिति वाच्यम् । प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वे साध्येऽपि स्वपदस्य सामान्यतः प्रमापदप्रवृत्तिनिमित्तपरत्वे तदाश्रययावद्ग्राह्यात्वस्य प्रतियोगिनो न्यायनये अप्रसिद्धा साध्याप्रसिद्ध्यापत्तेः । विशिष्य घटत्ववति घटत्व-प्रकारकत्वाद्येकैकपरत्वे पटत्ववति पटत्वप्रकारकत्वादौ प्रमापदप्रवृत्तिनिमित्तान्तरे अंशतः सिद्धसाधनापत्तेः । न च पक्षतावच्छेदकात्र्च्छेदेन साध्यासिद्धिरुद्देश्येति वाच्यम् । साध्ये स्वपदस्य प्रामाण्यवति प्रामाण्यप्रकारकत्वपरतादशायां तद्घटकीभूतप्रामाण्ये

१. घटत्वस्य विरोधादित्येव कखपुस्तकयोः ।
२. इत्यधिकः पाठः काशीस्थसरस्वतीभवनपुस्तके ।

आलोकः

जाते तदुत्तराऽवधिकस्तृतीयो यः क्षणस्तद्वृत्तिसंशयविषयत्वादिति विवक्षितो हेतुर्न्न तु तदुत्तरतृतीयक्षणं, तदुत्तरत्वस्य व्यर्थत्वात्। तदवधिकपूर्वोत्तरसाधारणतृतीयक्षणवर्त्तिसंशयविषयत्वस्याऽव्यभिचारात्। उत्तरात् तृतीय इत्यर्थे चतुर्थक्षणपर्यवसायिनि उत्तरत्वस्य तृतीयत्वपरिचायकतया स्वाऽऽश्रये सतीत्यस्योत्तरत्वपरिचायकतयाऽप्रसिद्धिवारकत्वेन व्याप्तिग्रहौपयिकतया स्वाऽऽश्रयपदस्य यत्किञ्चिदुत्तराऽवधिकतृतीयक्षणवर्त्तिसंशयविषयाऽर्थव्यभिचारवारकतया वा सार्थकत्वमिति न काचिदनुपपत्तिरिति वयम्।

स्वाऽऽश्रये सति स्वाऽऽश्रयनिश्चये सति, इत्यन्ये।

स्वाऽऽश्रये सति संशयविषयत्वादिति परमते,

स्वमते तु तदुत्तरतृतीयेत्यादिहेतुद्वयमेवेत्यपि कश्चित्।

दर्पणः

केचित्तु न तु तदुत्तरेत्यनेन मूलस्योत्तरशब्दाऽर्थो न दूष्यते किन्तूत्तरादिति यत्स्वयमुक्तं तत्र तदुत्तर इति तृतीयक्षणे विशेषणं व्यर्थतया दूष्यते। तथा च ज्ञानत्वविशिष्टज्ञानग्रहरूपं धर्मिज्ञानमाश्रित्य स्वाऽऽश्रयोत्तरादित्यनेन स्वाऽऽश्रयस्थितिक्षणादुत्तरोऽभिमतः. न च तत्पूर्वतृतीयक्षणेऽर्थसंशयस्तदा स्वाऽऽश्रयस्य सत्त्वादित्यर्थमाहुः। चतुर्थेति। निर्विकल्पकाऽनङ्गीकारे स्वाऽऽश्रयजन्मक्षणात् तदङ्गीकारे स्वाऽऽश्रयस्थितिक्षणाच्चतुर्थत्वमिति भावः।

निश्चये सतीति। स्वप्रकाशमादाय प्रथमः क्षणः, प्राभाकराणां अनुव्यवसायमादाय द्वितीयः[1] क्षणश्च नैयायिकानां स्वाऽऽश्रयनिश्चयः क्षणः, तथा च स्वाऽऽश्रयनिश्चयोत्पत्तिक्षणोत्तरतृतीयक्षणवर्त्तिसंशयविषयत्वमुभयमतसाधारणो हेतुरित्यर्थः। तृतीयक्षणे स्मरणरूपे स्वाऽऽश्रयनिश्चयोत्पत्तौ तदनन्तरं स्वतन्त्रधर्मिज्ञानकोटिज्ञानाऽऽत्मकसंशयस्य प्राभाकरमते प्रागुक्तत्वादुक्तहेतुरर्थे व्यभिचार्येव, घटत्ववति घटत्वप्रकारकत्वस्य च तन्मते संशयाऽस्पर्शश्चेत्यरुचेरुक्तम्—अन्ये इति। तदुत्तरतृतीयेत्यादिस्वाऽऽश्रयाऽधिकरणक्षणोत्तरतृतीयक्षणवर्त्तिसंशयविषयत्वमर्थः, गुरुमते उक्तप्रामाण्यस्य

माथुरी

अंशतो बाधापत्तेः, विप्रतिपत्तौ घटत्ववति घटत्वप्रकारकत्ववत्वादिरूपेण पक्षतया प्रमापदप्रवृत्तिनिमित्तत्वेनात्र पक्षत्वेऽर्थान्तरापत्तेश्च।

एतेन ज्ञानभेदेन घटत्ववति घटत्वप्रकारकत्वादेर्भिन्नत्वाद् यस्या घटत्ववति घटत्वप्रकारकत्वव्यक्तेस्तृतीयक्षणे न संशयः तत्र भागासिद्धिवारणाय तस्य पक्षतावच्छेदकघटकत्वमावश्यकम्, साध्ये च स्वाश्रयपदं तत्तज्ज्ञानपरम्, पक्षतावच्छेदकावच्छेदेन

१. तृतीयक्षण इति तालपत्रपुस्तके।

दर्पणः

संशयाऽस्पर्शः **न्यायनयेऽपि** सविकल्पकैकवेद्यताऽऽदिदोष[1] उक्त एवेत्यरुचेरुक्तम्— **कश्चिदिति ।**

अत्रेदं निर्गलितम् स्वाऽऽश्रयाऽधिकरणक्षणोत्तरतृतीयक्षणवर्त्तिसंशयकोटिता-पर्याप्त्यधिकरणत्वमुभयमतसाधारणो हेतुः । तत्र **न्यायनये** प्रथमक्षणेऽयं घट इति ज्ञानं तदेव स्वाऽऽश्रयः, ततो ज्ञानत्वांऽशे निर्विकल्पकरूपो घटविषयकत्वांऽशे च सविकल्पकरूपोऽनुव्यवसायः, स एव धर्मिग्रहः, ततः कोटिस्मृतिः, ततो घटविषयकं प्रमा न वेति संशयः, स च स्वाऽऽश्रयाऽधिकरणादनुव्यवसायक्षणादुत्तरतृतीयक्षणवर्त्ती भवति । **गुरुमते**ऽयं घट इति ज्ञानं स्वाऽऽश्रयस्तदेव धर्मिज्ञानम्, ततः कोटिस्मरणम्, ततः पुनरपि स्मृतिरूपं धर्मिज्ञानम्, तदेव पूर्वोत्पन्नकोटिद्वयसहितं संशयः, स च स्वाऽऽश्रयाऽधिकरणादाद्यक्षणादुत्तरतृतीयक्षणवर्त्ती भवति । तत्र दूषणं दत्तमपरमपि किञ्चिदुच्यते— जन्मक्षणाऽपेक्षया तृतीयक्षणेऽप्यर्थे **गुरुमते** संशयः सम्भवतीति व्यभिचारः, प्रामाण्याऽप्रामाण्यकोटिस्मृतिकाले घटस्मृतेः सम्भवात् । न च विशिष्ट-ज्ञानाऽपत्तिः घटत्वाऽभावघटयोरेकज्ञाने विषयत्वे स्यादित्युक्तमिति वाच्यम्, स्वतन्त्रयोर्धर्मधर्मिणोरेकज्ञानविषयत्वे परस्परनिरूपितधर्मत्वधर्मित्वाऽवगाहने वा विशिष्टज्ञानस्वीकारात्, प्रकृते च तदभावात् । किञ्च स्वाऽऽश्रयाऽधिकरणक्षणोत्तरतृतीय-क्षणवर्त्तिसंशयविषयत्वं **न्यायनये**ऽप्यर्थे व्यभिचारि, यत्र प्रामाण्याऽप्रामाण्यकोटिद्वयं घटज्ञानं घटं च विषयीकृत्य समूहाऽऽलम्बनमुत्पन्नं तत्र तदग्रिमक्षणेऽर्थसंशये च बाधकाऽभावात् । घटाऽनुभवेन प्रामाण्याऽप्रामाण्यकोट्योरुपनीतयोरवगाहने तदग्रिमक्षणे धर्मिज्ञाने तदग्रिमक्षणे प्रामाण्यसंशये तदग्रिमक्षणेऽर्थसंशये च बाधकाऽभावात् । किञ्च स्वाऽऽश्रयस्थितिक्षणाऽवधिकोत्तरतृतीयक्षणे प्रामाण्यसंशयश्च प्रामाण्यस्य यावत्स्वाऽऽश्रय-ग्राह्यत्वेऽप्युपपन्नः, घटज्ञानेन प्रामाण्याऽवगाहनेऽपि तस्य तृतीयक्षणे नाशाच्चतुर्थ-क्षणवर्त्तिप्रामाण्यसंशये बाधकाऽभावादित्यप्रयोजको हेतुः । किञ्च स्वाऽऽश्रये विद्यमाने संशयसामान्यसामग्रीत्यादिहेतुरपि व्यभिचारी, अयं घटो न वेति स्वाऽऽरसिकसंशयस्य

माथुरी

साध्यसिद्धेरुद्देश्यत्वान्नांशतः सिद्धसाधनमन्यथा स्वाश्रयपदस्य सामान्यतः पक्षीकृतघटत्व-वति घटत्वप्रकारकत्वाद्याश्रयपरत्वे यावत्तद्ग्राह्यत्वाभावस्य चालनीन्यायेन सर्वत्र सत्त्वात् सिद्धसाधनापत्तिरिति कस्यचित् प्रलपितमप्यपास्तम् । तस्य पक्षतावच्छेदक-घटकत्वे विप्रतिपत्तौ तेन रूपेणापेक्षत्वादर्थान्तरापत्तेः, किन्तु ज्ञानभेदेन प्रामाण्यभेदमते वस्तुगत्या यद् यज्ज्ञानव्यक्तेरुत्तरतृतीयक्षणे तत्र प्रामाण्यसंशयः प्रातिस्विकरूपेण

१. वेद्यतानिर्दोष इति तालपत्रपुस्तके पाठः ।

दर्पणः

स्वाऽऽश्रयतया तमादाय तदग्रिमक्षणोत्पन्नतादृशसंशयाऽन्तरमादाय हेतोरर्थे सत्त्वात्। न च निश्चयरूपस्वाऽऽश्रये सतीति विवक्षितमतो नोक्तदोष इति वाच्यम्, पुरुषाऽन्तरीयं स्वाऽऽश्रयमादाय[1] तथाऽपि व्यभिचारात्, असिद्धेश्च[2] संशयसामान्यसामग्रीमात्रजन्यत्वं हि विशेषकारणाऽजन्यत्वपर्यवसितम्, तच्चाऽऽसम्भवि, सर्वत्र कार्ये विशेषकारण-सत्त्वात्। न च प्रामाण्यसंशयरूपविशेषकारणाऽजन्यत्वं तदर्थः, संशयसामान्यकारण-जन्यत्वस्य वैयर्थ्यात्। न च तत्त्याज्यमेवेति वाच्यम्, अग्रिमहेत्वभेदाऽऽपत्तेः। स्वाऽऽश्रये सतीति विशेषणं विना[3] चाऽग्रिमो हेतुर्व्याख्यास्यत इति चेत्—तथाऽपि पुरुषाऽन्तरीयं स्वीयञ्च भिन्नधर्म्यादिकं स्वाऽऽश्रयमादाय व्यभिचारस्याऽनुद्धारादिति।

अत्र ब्रूमः। अगृहीताऽप्रामाण्यं समानाधिकरणं निश्चयरूपं यत्पक्षीकृत-प्रामाण्याऽऽश्रयो ज्ञानं तदधिकरणक्षणाऽव्यवहितोत्तरक्षणे तद्धर्मिणि तद्धर्मिताऽ-वच्छेदकाऽच्छेदेन सन्देहकोटितापर्य्याप्त्यधिकरणत्वं हेतुः। तद्धर्मिणि तद्धर्मिताऽ-वच्छेदकाऽवच्छेदेन यावत्सु पक्षीकृतप्रामाण्याऽऽश्रयज्ञानेषु प्रकारो नेति साध्यम्। यद्वा अगृहीताऽप्रामाण्याऽसमानाधिकरणा निश्चयरूपा या ज्ञानव्यक्तिः तदधिकरणक्षणाऽ-व्यवहितोत्तरक्षणे तद्धर्मिणि तद्धर्मिताऽवच्छेदकाऽवच्छेदेन कोटितापर्याप्त्यधिकरणत्वं हेतुः। तद्धर्मिणि तद्धर्मिताऽवच्छेदकाऽवछेदेन तस्यां ज्ञानव्यक्तौ प्रकारो नेति साध्यम्।

ननु प्रथमे कल्पे घटत्ववति घटत्वप्रकारकत्वाऽऽदीनां यत्र ज्ञाने धर्मिणि यदवच्छेदेन स्वाऽऽश्रयाऽधिकरणाऽव्यवहितोत्तरक्षणवर्त्तिसंशयकोटितापर्याप्त्यधिकरणत्वं तत्र तदवच्छेदेन यावत्सु पक्षीकृतप्रामाण्याऽऽश्रयज्ञानेषु प्रकारत्वाऽभावस्य गुरुमतेऽपि सत्त्वात् सिद्धसाधनमिति चेत्।

न। तत्र धर्मिणि तदवच्छेदेन स्वाऽऽप्रकारकयावत्तादृशस्वाऽश्रयकत्वस्य साध्यत्वात् यावत्स्वाऽऽश्रयाप्रकारकत्वस्य चाऽर्थल्लाभात्। द्वितीयकल्पेऽपि यस्मिन् धर्मिणि यदवच्छेदेन यत्स्वाऽऽश्रयव्यक्तिप्रकारत्वं सम्भावितं तस्मिन् तदवच्छेदेन तत्प्रकारत्वनिषेधे, अर्थात् यावत्स्वाऽऽश्रयाऽप्रकारत्वलाभादिति। मूलोक्तं तृतीयत्वमुक्ताऽ-व्यवधानपरमेव, अव्यवधानमात्रस्येति सोन्दलोपाध्यायवचनमप्युक्ताऽव्यवधानपरमेव।

माथुरी

तत्तज्ज्ञानवृत्तिघटत्ववति घटत्वप्रकारकत्वत्वादिना पक्षीकृत्य तत्तज्ज्ञानग्राह्यत्वाभावः साधनीय इति दिक्।

'न स्वाश्रयग्राह्यमिति', ज्ञानभेदेऽपि घटत्ववति घटत्वप्रकारकत्वादेरभेदनये स्वपदं सामान्यतः पक्षीकृतघटत्ववति घटत्वप्रकारकत्वादिपरम्, यावत्त्वेन चाश्रयो विशेषणीयः, अन्यथा सकलप्रामाण्याश्रयसर्वविषयकेश्वरादिज्ञानग्राह्यतया प्रामाण्या-

---

१. संशयमादायेति तालपत्रपुस्तके पाठः।
२. असिद्धश्चेति तालपत्रपुस्तके।
३. विनैवेति तालपत्रपुस्तके।

आलोकः

ननु घटं घटत्वेन पटञ्च किञ्चित्त्वेन समूहाऽऽलम्बनाऽऽत्मना ज्ञानेन ज्ञात्वा पटे घटोऽयं न वेति भवति तृतीयक्षणे संशयस्तत्कोटित्वमप्यस्ति घटत्वस्य न स्वाऽऽश्रयाऽग्राह्यत्वमिति व्यभिचार इति चेत्—न। स्वपदस्य पक्षीकृतसंशय-

दर्पणः

अत्र च तस्मिन् धर्मिणि तदवच्छेदेन यावतां स्वाऽऽश्रयाणां स्वप्रकारकत्वे तस्मिन् धर्मिणि तदवच्छेदेन तस्यां ज्ञानव्यक्तौ स्वस्य प्रकारकत्वे वा हेत्वसम्भवः, सति प्रतिबन्धके कार्याऽनुत्पत्तेरिति विपक्षबाधकस्तर्कः सुदृढः। न चाऽग्रिमहेत्वभेदः, स्वाऽऽश्रये विद्यमाने सतीत्यस्याऽप्रवेशात्। प्रवेशेऽप्यत्र स्वाऽऽश्रयोत्तरतायाः प्रवेशात्। तत्र अप्रामाण्यसंशयाऽजन्यत्वस्य संशयविशेषणत्वादिग्रहाऽगृहीताऽप्रामाण्यत्वस्य स्वाऽऽश्रयविशेषणत्वात्।

अत्र रूपं गुण इदं ज्ञानं प्रमा न वेति समूहाऽऽलम्बनाऽऽत्मकस्वाऽऽश्रयाऽधिकरणक्षणाऽव्यवहितोत्तरक्षणे रूपं गुणो न वेति संशयमादाय गुणत्वे व्यभिचारादगृहीताऽप्रामाण्यमिति। रूपं गुण इति देवदत्तीयनिश्चयाऽधिकरणक्षणाऽव्यवहितोत्तरक्षणे यज्ञदत्तीयं रूपं गुणो न वेतिसंशयमादाय गुणत्वे व्यभिचारात् समानाऽधिकरणमिति। इदं रूपं न वेति स्वारसिकसंशयस्य स्वाऽऽश्रयतया तदग्रिमक्षणोत्पन्नतादृशसंशयमादाय तत्र व्यभिचारात् निश्चयरूपमिति[1]। घटनिश्चयाऽधिकरणक्षणाऽव्यवहितोत्तरक्षणे तादृश[2] संशयमादाय तत्र व्यभिचारात् पक्षीकृतप्रामाण्याऽऽश्रय[3] इति। रूपं गुण इति निश्चयाऽधिकरणक्षणाऽव्यवहितोत्तरक्षणे तादृश[4] संशयमादाय तत्र व्यभिचारादुत्तरेति। रूपं गुण इतिनिश्चयाऽधिकरणक्षणाऽव्यवहितोत्तरक्षणे ज्ञानं गुणो न वेति संशयमादाय तत्र व्यभिचारात् तद्धर्मिणीति। नीलो गुण इति निश्चयाऽधिकरणक्षणाऽव्यवहितोत्तरक्षणे नीले धर्मिणि तादृशसंशयमादाय तत्र व्यभिचाराद्धर्मिताऽवच्छेदकाऽवच्छेदेनेति। रूपं गुण इतिनिश्चयाऽधिकरणक्षणाऽव्यवहितोत्तरक्षणे रूपं गुण इतिनिश्चये कोटित्वं धर्मिताऽवच्छेदकाऽन्यप्रकारत्वाऽऽत्मकमादाय तत्र व्यभिचारात्सन्देहेति। रूपं गुण इतिनिश्चयोत्तरं रूपं गुणो वायुवृत्तिर्न वेतिसंशयमादाय धर्मिताऽच्छेदके तत्र व्यभिचारात् कोटितेति। रूपं गुण इतिनिश्चयोत्तरं ज्ञानं प्रमा न

माथुरी

नुमितेरपि प्रामाण्यघटकत्वेन घटत्ववति घटत्वप्रकारकत्वाद्याश्रयत्वात्तद्ग्राह्यतया च बाधावत्तेः। न च तथापि सर्वविषयकत्ववति सर्वविषयत्वप्रकारकत्वादौ सर्वान्तर्गतत्वेन यावत्स्वाश्रयग्राह्ये बाध इति वाच्यम्। तस्यापक्षत्वात्। घटत्ववति घटत्वप्रकार-

१. तादृशसंयाऽऽत्मकस्वाऽऽश्रयाऽधिकरणक्षणाऽव्यवहितोत्तरक्षणे तादृशसंशयमादाय तत्र व्यभिचारान्निश्चयरूपमितीति गपुस्तके पाठः।
२. रूपं गुणो न वेति।
३. यं धर्मिणं विशेष्यीकृत्य सन्देहः स पक्षीकृतप्रामाण्याऽऽश्रयपदेन विवक्षितः।
४. गुणत्ववति गुणत्वप्रकारकत्वरूपप्रमात्वकोटिषट्के गुणत्वे।

आलोकः

**सामग्रीविशिष्टप्रामाण्यपरतया तत्र प्रामाण्यसंशयाऽभावेन विशिष्टाऽभावरूपसाध्य-सत्त्वेनाऽव्यभिचारात् । न हि तादृक् संशयः प्रामाण्यसंशयजन्मेति सम्भवतीति दिक् ।**

दर्पणः

वेतिसंशयमादाय तत्कोटिषट्के[1] तत्र व्यभिचारात् पर्याप्तीति एकादश हेतुविशेषणानि । रूपं गुण इतिनिश्चयोत्तरं ज्ञानं गुणो न वेतिसंशयमादाय तत्र हेतुसत्त्वात् ज्ञानं गुण इतिज्ञाने स्वाऽऽश्रये संशयधर्मिणि संशयधर्मिताऽवच्छेदकाऽवच्छेदेन प्रकारत्वाऽव्य-व्यभिचारात् यथाश्रुतसाध्ये यावत्स्विति । स्वाऽऽप्रकारकयावत्तादृशस्वाऽऽश्रयकत्वे साध्ये पर्यवसिते रूपं गुण इतिनिश्चयोत्तरमिदं ज्ञानं गुणो न वेतिसंशयमादाय हेतुसत्त्वादिदं ज्ञानं गुण इति गृहीताऽप्रामाण्याऽऽदिज्ञानप्रकारतया व्यभिचारात्तादृशेति । अगृहीताऽप्रामाण्यसमानाधिकरणनिश्चयाऽऽत्मकाऽव्यवहितपूर्वक्षणवर्त्तीत्यर्थः । सिद्ध-साधनवारणाय यावदिति । उद्देश्यसिद्ध्यर्थं स्वाऽऽश्रयेति । ज्ञानं प्रमेयवदितिनिश्चयोत्तर-मिदं ज्ञानं प्रमा न वेतिसंशयकोटौ प्रमात्वे व्यभिचारात् प्रकार इति विशेषण-चतुष्टयमिति सर्वं रमणीयम् ।

यथाश्रुते शङ्कते—ननु **घटमिति** । **विशिष्टाऽभावेति** । ननु तादृश[2] संशय-विशेष्या यावन्तः स्वाऽऽश्रयास्तावद्ग्राह्यत्वाऽभावः साध्यः, यज्ज्ञानव्यक्त्यधिकरण-क्षणोत्तरतृतीयक्षणवर्त्तिसंशयकोटित्वं प्रामाण्यसंशयविशेष्यतज्ज्ञानव्यक्तिग्राह्यत्वाऽभावो वा । आद्ये घटज्ञानाऽऽत्मकाः प्रामाण्यसंशयविशेष्या यावन्तोऽन्ये स्वाऽऽश्रयस्तावद्-ग्राह्यत्वं घटत्वेऽस्त्येवेति कथं तदभावरूपं साध्यम् । अन्त्ये प्रामाण्यसंशयविशेष्यत्वं तज्ज्ञानव्यक्तौ नाऽस्तीति विशिष्टाऽप्रसिद्ध्या कथं विशिष्टाऽभाव इति चेत्—उच्यते । प्रामाण्यसंशयविशेष्यत्वस्वग्राहकत्वोभयाऽऽभाववत्तद्व्यक्तिकत्वमिह[3] साध्यम् । स्वपदं च यत्र यद्यत्साध्यं योज्यते तत्परं विशिष्टाऽभावशब्देन चोभयाऽभाव एव विवक्षित-मिति । **सम्भवतीत्यनन्तरं** येन तदनुरोधेन तृतीयक्षणे प्रामाण्यसंशयः तत्र स्यादिति शेषः । तादृक् स्वाऽऽश्रयोत्पत्तौ तृतीयक्षणवर्त्तीत्यर्थः । नाऽप्यनुभवसिद्धस्तत्र घटज्ञाने प्रामाण्यसंशय इति दिगर्थः ।

माथुरी

कत्वादिकं प्रतिज्ञानमन्यदिति मते तु स्वाश्रयपदं तज्ज्ञानव्यक्तिपरं पक्षतापि तत्तज्ज्ञानवृत्ति घटत्ववति घटत्वप्रकारकत्वत्वादिनेत्युक्तमेव, तथाचैतज्ज्ञानवृत्ति घटत्ववति घटत्वप्रकारकत्वं नैतज्ज्ञानग्राह्यमिति फलितम्, अन्यथा सामान्यतो घटत्व-वति घटत्वप्रकारकत्वाद्याश्रयपरत्वे यावत्त्वविशेषणस्याप्युक्तक्रमेणावश्यकतया कुत्रापि

---

१. पूर्वक्षणवर्त्ति रूपं गुणो न वेति ।

२. प्रामाण्यमिति भावः ।

३. प्रकृते प्रामाण्यसंशयविशेष्यत्ववत्तद्व्यक्तिकत्वं नास्तीति भावः ।

आलोकः

ननु रूपं गुण इति ज्ञानाऽनन्तरं ज्ञानाऽनुव्यवसायकोटिस्मृतिभ्यां तृतीयक्षणे तत्र ज्ञाने गुणो न वेति यदा सन्देहस्तदा स्वाऽऽश्रयोद्भवतृतीयक्षणवर्त्तिसंशयविषयत्वम् अप्रामाण्यसंशयाऽजन्यसंशयविषयत्वं च गुणत्वे गतं न च स्वाऽऽश्रयाऽग्राह्यत्वमिति व्यभिचारः। न च स्वपदस्य तृतीयक्षणवर्त्तिसंशयविषयप्रामाण्याऽऽदिपरतया प्रकृते च तथा संशयाऽभावेन तादृशसंशयविषयप्रामाण्याऽऽश्रयाऽग्राह्यत्वरूपविशिष्टाऽभावसत्त्वेन साध्यसत्त्वान्नैवमिति वाच्यं, गुणत्वप्रामाण्ययोः समूहाऽऽलम्बनसंशयस्याऽपि भावात्। न च संशयविशेष्य इति साध्ये पूरणीयम्। कदाचित्तस्याऽपि संशयविशेष्यत्वात्। न च तृतीयक्षणवर्त्तिसंशयविशेष्ये इति साध्ये पूरणीयम्, तथा च रूपे गुणत्वग्राहिणोऽपि ज्ञानस्य प्रकृतसंशयविशेष्यज्ञानधर्मिकगुणत्वाऽग्राहिणः साध्यसत्त्वान्नोक्तदोष इति वाच्यम्, अर्थंव्यभिचारवारणाऽर्थं विशेषणोपादानाऽनुपपत्तेः, विवक्षितसाध्यस्य तत्र

दर्पणः

यथाश्रुत एव शङ्कते—ननु रूपमिति। यद्यपीदमाशङ्कितप्रायं तथाऽपि अधिकाऽऽशङ्काऽर्थमुत्थापितम्, अप्रामाण्येति। यथाश्रुतहेत्वभिप्रायेण, अग्रे विवक्षणीयस्य स्वरूपाऽयोग्यत्वघटितहेतोः प्रकृतेऽभावात्। इदमुपलक्षणम्। संशयसामान्यसामग्रीत्वाऽऽदिहेतुरपि तत्र गत इति ध्येयम्। तादृशेति। स्वाऽऽश्रयाऽधिकरणक्षणोत्तरतृतीयक्षणवर्त्तीत्यर्थः। अत्रापि तादृशप्रामाण्यसंशयविशेष्यत्वस्वग्राहकत्वोभयाऽभाववत्तज्ज्ञानव्यक्तिकत्वं साध्यमिति भावः।

गुणत्वप्रामाण्यया[1]दिति। तथा चोभयोः सत्त्वान्नोभयाऽभाव इति भावः। तस्याऽपि रूपस्याऽपि। तृतीयक्षणवर्त्तिसंशयविशेष्य इति। स्वाऽऽश्रयद्व्यक्त्यधिकरणक्षणोत्तरतृतीयक्षणवर्त्तिसंशयकोटित्वं तद्व्यक्त्यधिकरणक्षणोत्तरतृतीयक्षणप्रमाण्याऽप्रामाण्यकोटिकसंशयविशेष्ये तया व्यक्त्या न गृह्यत इति साध्यसत्त्वादित्यर्थः। देवदत्तज्ञानं प्रमा गुणश्चेतिनिश्चये तृतीयक्षणे प्रमात्वगुणत्वसंशये तदुत्तरक्षणे देवदत्तज्ञाने प्रमात्वसंशये गुणत्वे व्यभिचारात् तद्व्यक्त्यधिकरणक्षणोत्तरतृतीयक्षणवर्त्तीत्युक्तम्। रूपं वायुवृत्ति न वेत्यादिसंशयमादाय दोषतादवस्थ्यात् प्रामाण्याऽ

माथुरी

घटत्ववति घटत्वप्रकारकत्वव्यक्तौ यावद्घटत्ववति घटत्वप्रकारकत्वाश्रयग्राह्यत्वासत्त्वेन सिद्धसाधनापत्तेः।

ननु स्वाश्रयग्राह्यत्वाभावसिद्धावपि परतो ग्राह्यत्वं न सिद्धम् अग्राह्यत्वेऽपि तदुपपत्तेरित्यतः साध्यान्तरमाह, 'स्वाश्रयातिरिक्ते'ति, नन्वत्र बाधः नैयायिकसिद्धप्रामाण्यानुमित्यादेरपि प्रामाण्यघटकतया घटत्वादिमत्त्वावगाहित्वेन घटत्ववति घटत्व-

१. ज्ञानं घटे घटत्वं गृह्णाति न तु ज्ञाने इति हृदयम्।

आलोकः

सत्त्वात्। न च समभिव्याहारव्युत्पत्त्या हेतोरेव स्वपदवाच्यत्वेन तत्राऽर्थव्यभिचार-वारकतृतीयक्षणाऽऽदिरूपविशेषणाऽनुपादाने संशयविशेष्ये संशयविषयप्रामाण्याऽऽश्रया-ग्राह्यत्वं साध्यं पर्यवसितमर्थे व्यभिचार्येव स्यादिति साध्ये तादूप्यलाभाऽर्थं हेतावपि तद्विशेषणमर्थे व्यभिचारवारणपर्य्यवसन्नमुपादेयमेवेति वाच्यम्, स्वपदपरित्यागेन तृतीयक्षणवर्त्तिसंशयविशेष्ये न स्वाश्रयग्राह्यमिति[1] विशिष्याऽपि साध्यनिर्देशसम्भवात्। न चैवं प्रयोगाऽन्तरसम्भवेऽपि प्रकृतप्रयोग उक्तगतिरेवेति वाच्यम्, स्वपदं त हि[2] नाऽनुमानोपयोगि किन्त्वर्थं इति हेतुव्यर्थविशेषणताया दुरुद्धरत्वादिति।

अत्र ब्रूमः। स्वाऽऽश्रयानिवर्त्तनीयसंशयविशेष्ये न स्वाऽऽश्रयग्राह्यमिति साध्यम्। अस्ति च स्वाऽऽश्रयाऽनिवर्त्तनीयः स्वाऽऽश्रयगोचरः प्रामाण्यसंशयः, तदाहितार्थ-

दर्पणः

प्रामाण्येत्युक्तम्। सर्वं ज्ञानं गुण इत्याकारकेण स्वाऽऽश्रयतृतीयक्षणवर्त्तिप्रामाण्य-संशयविशेष्ये यस्मिन् गुणत्वग्रहणात्तयेत्युक्तम्—विवक्षितेति। स्वाश्रययद्व्यक्त्यधि-करणक्षणोत्तरतृतीयक्षणवर्त्तिसंशयकोटित्वं तया व्यक्त्या तादृशप्रामाण्यसंशयविशेष्ये ज्ञानेऽर्थस्य घटत्वाऽऽदेर्ग्रहणादिति भावः। इदमुपलक्षणम्। व्यभिचारोऽपि द्रष्टव्यः। सर्वं ज्ञानं गुण इति ज्ञाने इदं ज्ञानं प्रमा न वा रूपं गुणो न वेतिसमूहाऽऽलम्बन-संशयविषयगुणत्वे साध्याऽसत्त्वादिति। न तु हेतुकृतसंशयविशेष्ये न स्वाऽऽश्रय-ग्राह्यत्वमिति साध्यमभिप्रेतम्, न च संशयाऽन्तरमपि हेतुः कदाचित् क्रियत एवेति वाच्यम्, समभिव्याहारात् प्रकृतहेतोरेव हेतुपदेन लाभात्। तथा च तृतीयेत्यादि-हेतुविशेषणं सार्थकमित्याशङ्क्य निराचष्टे—न चेति। हेतोः प्रकृतहेतोः। स्वपदेति। स्वस्य हेतोः पदं स्वपदं हेतुपदमिति यावत्। एवमग्रिमस्वपदयोरपि।

यत्तु स्वविशेष्ये न स्वाऽऽश्रयग्राह्यमितिसाध्यममिमतं तत्र च हेतुप्रविष्टसंशय एव स्वपदेनोच्यत इति व्याख्यानम्, तत्—न। तृतीयेत्यादिहेतुविशेषणं विनाऽपि

माथुरी

प्रकारकत्वाश्रयतया स्वाश्रयातिरिक्तत्वाभावात्। न च स्वाश्रयपदं सामान्यतो न घटत्ववति घटत्वप्रकारकत्वाद्याश्रयपरमपि तु तदाश्रयत्वोपलक्षिततत्तद्व्यवसायव्यक्ति-परमिति वाच्यम्। सिद्धसाधनापत्तेः गुरुणा नैयायिकसिद्धप्रामाण्यानुमित्यादिनापि प्रामाण्यग्रहस्वीकारादि चेत्। न। स्वाश्रयातिरिक्तमात्रग्राह्यत्वस्य साध्यत्वात्।

१. तादृशसंशयविषयप्रामाण्याश्रयाग्राह्यत्वमिति क पुस्तके। प्रामाण्याश्रयाग्राह्यमिति नपुस्तके।

२. प्रतिबन्धकम्।

३. कुत्रचित् 'हि' इति पाठः।

आलोकः

संशयश्च । तथा च रूपे गुणत्वग्राहिणा ज्ञानेन ज्ञाने गुणत्वाऽग्राहिणा व्यभिचाराऽभावेऽपि तदनिवर्त्यंप्रामाण्यसंशयाऽऽहिताऽर्थसंशयविशेष्येऽर्थे तु घटत्वाऽदिग्राहिणा मा भूद् व्यभिचार इति तद्वारणार्थं तृतीयक्षण इत्यादि हेतुद्वये विशेषणमवश्यं प्रवेश्यम्, अन्यथा व्यभिचाराऽनुद्धारादिति दिक् ।

वयन्तु पक्षे प्रामाण्याऽप्रामाण्यमात्रकोटिक एव संशयः संशयपदेन विवक्षणीय इति, अतः तादृशसंशयविषयप्रामाण्यस्यैव साध्ये स्वपदार्थत्वात् उक्तरीत्या व्यभिचार-निरासादलं विशेषणदानाऽऽयासेनेत्यनुमन्यामहे ।

दर्पणः

पक्षताऽवच्छेदकतादृशसंशयस्य स्वपदेन लाभसम्भवे शङ्काया अनुक्तिसम्भव-त्वादिति । स्वपदं त्विति । इदमुपलक्षणम् । सर्वं ज्ञानं गुण इत्यादिनोक्तो गुणत्वे व्यभिचारोऽपि द्रष्टव्यः ।

अत्र ब्रूम इति । ननु ज्ञानं प्रमा न वेति संशयाऽनन्तरं रूपं गुणो न वेति स्वाश्रयाऽनिवर्त्तनीयस्य संशयस्य विशेष्यमेव रूपमिति कथं व्यभिचारनिरासः । न च स्वाऽऽश्रयोत्पत्तिक्षणे तृतीयक्षणवर्त्ती स्वाऽऽश्रयानिवर्त्तनीयः संशयो विवक्षित इति वाच्यम् ज्ञानं गुणे इति निश्चयाऽनन्तरं तृतीयक्षणे रूपं गुणो न वा इदं ज्ञानं प्रमा न वेतिसमूहाऽऽलम्बनसंशयतादृशस्वाऽऽश्रयानिवर्त्तनीयप्रमात्वसंशयविशेष्यज्ञाने गुणत्वस्य स्वाऽऽश्रयेणाऽवगाहनाद्व्यभिचाराऽनिरासादिति ।

अत्र ब्रूमः । स्वाऽऽश्रयानिवर्त्तनीयसंशयविशेष्य इति विशेषणं ददतो हेतु-निविष्टस्य संशयस्य स्वाऽऽश्रयाऽनिवर्त्तनीयत्वं विवक्षितम् । तथा चाऽगृहीताप्रामाण्य-स्वाऽऽश्रयोत्पत्तिक्षणोत्तरतृतीयक्षणवर्त्तिस्वाऽऽश्रयाऽनिवर्त्तनीयसंशयकोटित्वं हेतुः । न तु साध्ये विशेषणमिदम् । तथा च यः स्वाश्रयाऽनिवर्त्तनीयः स न तृतीयक्षणवर्त्ती,

माथुरी

स्वाश्रयातिरिक्तमात्रग्राह्यत्वञ्च यावत्स्वाश्रयाग्राह्यत्वे सति ग्राह्यत्वं नातो बाधताद-वस्थ्यम्, स्वपदं पूर्व्ववत् पक्षीकृतघटत्ववति घटत्वप्रकारकत्वादिपरम्, निखिलप्रामाण्या-श्रयसर्व्वविषयकभगवज्ज्ञानादिमादाय प्रामाण्यानुमितिमादाय च बाधवारणाय यावत्त्वोपादानम् परन्तु यदि ज्ञानभेदेन घटत्ववति घटत्वप्रकारकत्वादिदं विभिन्नं तदा स्वाश्रयपदं तत्तद्व्यवसायव्यक्तिपरं यावत्त्वञ्च नोपादेयं तथा चैतज्ज्ञानवृत्ति घटत्ववति घटत्वप्रकारकत्वमेतज्ज्ञानाग्राह्यत्वे सति ग्राह्यमिति फलितमिति दिक् ।

'स्वाश्रये सतीति सतिसप्तमीमहिम्ना स्वाश्रयसामानाधिकरण्यं संशयविशेषणं लभ्यते तथा च स्वाश्रयसमानाधिकरणो यस्तदुत्तरतृतीयक्षणवृत्तिसंशयस्तद्विषयत्वादि-

**स्वाऽऽश्रयनिश्चये सति तदुत्तर-तृतीयक्षणेऽप्रामाण्यसंशयं विना वा सन्दिह्यमानत्वात् अप्रामाण्यवत् ।**

आलोकः

अप्रामाण्येति । यद्यप्यप्रामाण्यसंशयाऽजन्योऽपि विषये संशय इत्यर्थे व्यभिचारस्तथाऽपि नञ्व्यत्यासेनाऽप्रामाण्यसंशयजन्यसंशयाऽविषयत्वं विवक्षितम् । संशयाऽविषयत्वं तु संशयाऽयोग्यत्वम् अतोऽसंशयविषयीभूताऽर्थविशेषे न व्यभिचारः । अप्रा-

दर्पणः

यश्च तृतीयक्षणवर्त्ती स तस्मिन्नंशे न स्वाऽऽश्रयाऽनिवर्त्तनीय इति प्रामाण्यसंशयाऽहितस्य स्वारसिकस्य चाऽर्थसंशयस्य वारणेषु क्व व्यभिचारः । रूपं गुण इदं च ज्ञानं प्रमा न वेति समूहाऽऽलम्बने सति अप्रामाण्यसंशयाऽऽहिततृतीयक्षणवर्त्तिसंशयकोटौ गुणत्वे व्यभिचारादगृहीताऽप्रामाण्येति स्वाऽऽश्रयविशेषणम् । धर्मिभेदात् धर्मिताऽवच्छेदकभेदात् । स्वाऽऽश्रयस्य व्यधिकरणत्वात् स्वाऽऽश्रयस्य संशयरूपत्वात् । तृतीयक्षणे संशयमादाय गुणत्वे व्यभिचारात् स्वाऽऽश्रयऽनिवर्त्तनीयेति संशयविशेषणम् । धर्मिताऽवच्छेदके व्यभिचारात् कोटित्वमुक्तम् । अप्रामाण्यसंशयाऽजन्यसंशयस्वरूपाऽयोग्यत्वं वा हेतुः । अतो न गुणत्वाऽदौ व्यभिचारः ! साध्यञ्चाऽत्र यावत्स्वाऽऽश्रयाऽग्राह्यत्वम् ।

वस्तुतस्तु सर्वं ज्ञानमभिधेयवदिति शाब्दज्ञाने सति तृतीयक्षणवर्त्तिसंशयकोटौ तत्प्रमात्वे व्यभिचारात् यावत्स्वाऽऽश्रयाऽप्रकारत्वं तज्ज्ञानव्यक्त्यप्रकारत्वं वा साध्यम् ।

माथुरी

त्यर्थः, स्वपदं पक्षीभूतप्रामाण्यपरम् । नन्विदं स्वरूपासिद्धं व्यवसायोत्पत्तिस्ततोऽनुव्यवसायस्ततः प्रामाण्याप्रामाण्यकोट्यनुपस्थितिः ततः प्रामाण्यसंशय इतिक्रमेण व्यवसायचतुर्थक्षण एव प्रामाण्यसंशयोत्पत्तेः । न च स्थितिक्षणापेक्षया तृतीयत्वं विवक्षितम् तच्च चतुर्थक्षणेऽप्यस्तीति वाच्यम् । गुरुमते अप्रयोजकत्वापत्तेः प्रामाण्यनिश्चयात्मकव्यवसायस्य तृतीयक्षण एव विनष्टतया निश्चयसत्त्वे संशयासम्भवरूपस्यानकूलतर्कस्यासम्भवादिति चेत् । न । यत्र स घटः प्रामाण्याप्रामाण्ये चेति समूहालम्बनस्मरणात्मको व्यवसायः ततो घटविषयकं ज्ञानमिति स्मरणरूपं धर्मिज्ञानं तत्र तृतीयक्षणे घटविषकं ज्ञानं प्रमा न वेति प्रामाण्यसंशयसम्भवादिति भावः । अत्र संशयविषयत्वमात्रोक्तावयं घटो न वेत्यादिसंशयविषये घटत्वादौ व्यभिचारः तत्र घटत्ववतीत्यादिप्रामाण्याश्रयग्राह्यत्वाभावविरहादतः तदुत्तरतृतीयक्षणवृत्तीति, अयं घटो न वेत्यादिसंश्रयश्चायं घट इत्यादिव्यवसायोत्तरतृतीयक्षणवृत्तिरेव नेति न व्यभिचारः । तदुत्तरक्षणवृत्तिसंशयविषयत्वोक्तावपि अयं घट इति निश्चये प्रामाण्यसंशयाधीनार्थसंशयविषये घटत्वादौ

यद्वा अनभ्यासदशाऽऽपन्नैतज्ज्ञानप्रामाण्यम् एतत्प्रामाण्यसंशयपूर्वकालीनैतज्ज्ञाननिश्चयाऽविषयः, एतज्ज्ञाननिश्चयाऽनन्तरं सन्दिह्य-

आलोकः

माण्यं तु प्रामाण्यविरोधि, तदपि पक्षीकृतप्रामाण्यविरोधीति। स्वसंशयस्य स्वसंशयाऽहेतुत्वेन प्रामाण्येऽपि प्रामाण्याऽन्तरसंशयहेतुकसंशयविषयतया नाऽसिद्धिरिति। न च फलाऽनुपधानस्थले तादृशसंशयाऽप्रसिद्धौ योग्यताया अपि विरहः, तज्ज्ञानाऽन्तरे प्रसिद्धेस्तस्यैकत्वात्। योग्यता च तत्तत्प्रामाण्याऽऽश्रयविषयत्वेनैवेति ध्येयम्। न चैवं पक्षविशेषणमनादेयमेव। अत्र हेताविष्टाऽऽपत्तेः। अयमेव हि पूर्वहेतोर्विशेष इत्यस्वरसो वेत्यनेन दर्शितः।

दर्पणः

यद्वा हेतुनिविष्टसंशय एव स्वाऽऽश्रयाऽनिवर्त्तनीयसंशयशब्देन विवक्षितः। स्वाऽऽश्रयाऽधिकरणक्षणाऽव्यवहितोत्तरक्षणे जायमानस्य तस्य स्वाऽऽश्रयाऽनिवर्त्तनीयत्वात्। द्वयोरेव संशययोः स्वाऽऽश्रयाऽनिवर्त्तनीयत्वकथनं तूपलक्षणम्। तथा चाऽगृहीताऽप्रामाण्यसमानाऽधिकरणनिश्चयत्वरूपयावत्स्वाऽऽश्रयव्यक्त्युत्पत्तिक्षणाऽव्यवहितोत्तरक्षणवर्त्तियत्संशयकोटिर्यः स तत्संशयस्य यो धर्मी यच्च धर्मितावच्छेदकं तत्र तदवच्छेदेन तथा स्वाऽऽश्रयव्यक्त्या न प्रकारीक्रियत इति साध्यविशेषणमहिम्नैव व्यभिचारनिरास इति। इदञ्च प्रकारद्वयं पूर्वोक्तपर्यवसितमेवाऽस्माभिरुन्नीतमिति संक्षेपः।

हेतौ तृतीयक्षणवर्त्तिविशेषणकृत्यमाह—तथा चेति।

केचित्तु द्विमात्रकोटिकत्वं हेतुनिविष्टसंशये विशेषणमाहुः। तेषामिदं तात्पर्यं यज्ज्ञानव्यक्त्युत्पत्तिक्षणोत्तरतृतीयक्षणवर्त्तिद्विमात्रकोटिकसंशयकोटित्वं यस्य तस्य तज्ज्ञानव्यक्त्युत्पत्तिक्षणोत्तरतृतीयक्षणवर्त्तिप्रामाण्यसंशयविशेष्यत्वस्वग्राहकत्वोभयाऽभाववत्तद्व्यक्तित्वमिति।

तन्न। प्रमात्वगुणत्वयोर्विरोधं जानतो ज्ञानं प्रमा गुणो वेति संशयमादाय गुणत्वे व्यभिचारात्। किञ्च अयं घटः प्राचीनघटज्ञानञ्च प्रमेति समूहाऽऽलम्बनोत्तरतृतीयक्षणेऽयं घट इत्यंशे प्रमा न वेति संशयमादाय प्रमात्वे हेतुरस्ति न तूभयाऽभाववत्तद्व्यक्तिकत्वमिति व्यभिचारः। न च यदवच्छेदेन तादृशसंशयकोटित्वं तदवच्छेदेनोभयाऽभाववत्तद्व्यक्तिकत्वं साध्यमिति वाच्यम्। द्विमात्रकोटिकत्ववैयर्थ्याऽऽपत्तेः। किञ्च यत्र गुणज्ञाने द्वितीयक्षणे एव प्रमात्वसंशयात्तृतीयक्षणे गुणत्वे संशयस्तत्र यत्र

माथुरी

व्यभिचारोऽतः 'तृतीयेति' प्रामाण्यसंशयाधीनार्थसंशयश्च चतुर्थक्षणादिवृत्तिरेवेति न व्यभिचारः। तृतीयक्षणवृत्तिसंशयविषयत्वादित्युक्तौ यत्र स्थाणुर्न वेति संशयस्ततो विशेषदर्शनं ततः अयं स्थाणुरिति निश्चयस्तत्र पूर्वतृतीयक्षणवृत्तिसंशयविषयत्वमादाय

**मानत्वात्, अप्रामाण्यवत् । न च स्वपदस्य प्रामाण्यमात्रपरत्वात्तदाश्रयाऽ-**

**आलोकः**

**वस्तुतः प्रथमकल्पेऽपि न भागाऽसिद्धिपरीहाराय पक्षविशेषणम्, घटत्ववति घटत्वप्रकारकत्वाऽदीनां घटज्ञानाऽऽदिमात्रसाधारणतया अनभ्यासदशाऽऽपन्नघटज्ञाने संशयविषयतया प्रामाण्यमात्रे संशयात् । नहि अनभ्यासाऽभ्यासयोर्घटज्ञाने प्रामाण्य-भेदः, किन्तु प्रामाण्यमात्रपक्षत्वे बाधवारणाय विशिष्टाऽभावोपपत्तये पक्षविशेषणम् ।**

**दर्पणः**

च रूपं गुण इति ज्ञाने पुरुषान्तरस्य तृतीयक्षणे प्रामाण्यसन्देहस्तत्र ज्ञानं गुणो न वेति संशयमादाय गुणत्वे व्यभिचारतादवस्थ्यमिति कृतं विस्तरेण ।

स्वाऽऽश्रये सतीति पूर्वहेतुतोऽनुषङ्गः । तत्र च स्वाऽऽश्रयशब्देन समानाधिकरण-निश्चयरूपस्वाऽऽश्रयविवक्षा । ततश्च समानाधिकरणे निश्चयरूपे स्वाऽऽश्रयेऽव्यवहित-पूर्वलक्षणवर्त्तिनि तस्मिन् धर्मिणि तदवच्छेदेनाऽप्रामाण्यसंशयाऽजन्यसंशयकोटित्वं हेतुः स्फुटत्वादुपेक्ष्याऽनुषङ्गं विनैव व्याख्यातुमारभते—यद्यपीति । तथाऽपीत्यादेरयं निर्गलिताऽर्थः, घटत्ववति घटत्वप्रकारकत्वं घटत्ववति घटत्वप्रकारकत्वाऽऽश्रयया-वद्ग्राह्यं न, घटत्ववति घटत्वप्रकारकत्वविरोधिसंशयजन्यसंशयस्वरूपाऽयोग्यत्वात् । तथा च प्रमाण्याऽभाववति प्रामाण्यप्रकारकत्वं प्रामाण्यवति प्रामाण्यप्रकारकत्वा-भाऽवरूपं च यत्प्रामाण्यविरोधिद्वयं तत्संशयाऽऽहितसंशयविषयेऽपि पक्षे न हेत्वसिद्धिः ।

**स्वसंशयस्येति** । स्वविरोधिसंशयस्येत्यर्थः । यद्यप्युत्तरोत्तरसंशये विशेषण-ज्ञानत्वाऽदिना पूर्वपूर्वस्याऽप्रामाण्यसंशयस्य जनकत्वमस्त्येवेत्यसिद्धितादवस्थ्यं, तथाऽप्यप्रामाण्यसंशयत्वेन रूपेण जन्यत्वस्य विवक्षितत्वात्, प्रकृते च तदभावान्न दोषः । इदञ्च निश्चिताऽर्थगोचरसंशयं प्रत्यप्रामाण्यसंशयस्य तत्त्वेन कारणतामात्र-स्योक्तम्, अन्यथाऽप्रामाण्यसंशयस्योत्तेजकतया कारणत्वाऽभावादिति ध्येयम् । **विरहोऽप्रसिद्धिः । तज्ज्ञानेति** । धर्म्यन्तरविशेष्यकघटत्वाऽऽदिज्ञानेऽप्रामाण्यसंशयस्य तज्जन्यसंशयस्य च प्रसिद्धेरित्यर्थः । न च धर्मिविशेषाऽवच्छेदेन तादृशसंशयविषय-त्वाऽभावेऽपि तादृशसंशयविषयत्वसामान्याभावस्य हेतोर्घटत्वादावसत्त्वात्स्वरूपयोग्य-त्वधावनं व्यर्थमिति वाच्यम्, सामान्याऽभावलाभार्थमेव तद्धावनादिति । न चैकपुरुष-मात्रप्रतीतवस्तुगोचरज्ञानेऽप्रामाण्यसंशयस्यैवमप्यप्रसिद्धिरेवेति वाच्यम्, तत्प्रामाण्य-स्याऽपक्षत्वादिति भावः ।

**माथुरी**

स्थाणुत्वे व्यभिचारोऽतो ध्वंसघटिततृतीयत्वलाभाय 'उत्तरेति' ध्वंसघटिततृतीयत्वञ्च तद्ध्वंसाधिकरणत्वं तत्पदद्वयञ्च यद्व्यवसायव्यक्तेस्तृतीयक्षणे प्रामाण्यसंशयोऽनुभव-सिद्धः तादृशयत्किञ्चिदेकव्यक्तिव्यवसायपरं न तु स्वाश्रयसामान्यपरं तथासत्यनादौ

ग्राह्यत्वेन बाधः[1], स्वपदस्य सम्बन्धिपरत्वेन समभिव्याहृतपरत्वात् ।

आलोकः

तच्च द्वितीयहेतावप्यविशिष्टमिति सारम् । अत एव मकरन्देऽ'नभ्यासदशे'ति न पक्षविशेषणतया व्याख्यातमिति । एवं चाऽत एव सामञ्जस्येनाऽर्थविशेषे व्यभिचारवारणाय संशयपूर्वतृतीयक्षण इत्यादि साध्ये विशेषणं प्रक्षिप्य यथाश्रुतहेत्वादरो नोचित इति ।

न यावदिति । विप्रतिपत्तौ यथा साध्यमुपवर्णितं तदभाव इह साध्य इत्यर्थः ।

दर्पणः

एवमिति । अप्रामाण्यसंशयजन्यसंशयस्वरूपाऽयोग्यत्वस्य हेतुत्वे इत्यर्थः । तस्य सकलप्रामाण्यनिष्ठत्वेन भागाऽसिद्ध्यभावादिति भावः ।

वस्तुत इति । इदञ्चाऽऽपाततः सकलप्रामाण्यपक्षतायां संशयाऽविषयीभूतप्रामाण्यविशेषे वक्ष्यमाणद्वितीयबाधस्थले च भागाऽसिद्धिसम्भवादिति ।

बाधेति । सर्वत्ववति सर्वत्वप्रकारकत्वे अंशतो बाधे इत्यर्थः । इदञ्च यावत्त्वाऽऽश्रयाऽग्राह्यत्वे यथाश्रुते साध्ये सर्वत्ववतीत्यादिप्रामाण्येऽपि सर्वशब्दजज्ञानाऽप्रकारे यावत्त्वाऽश्रयाऽप्रकारत्वस्य विवक्षितसाध्यस्य सत्त्वादिति ।

वस्तुतस्तु अयं घट एतद्रूपवान् इदञ्च ज्ञानं प्रमेति एकपुरुषमात्रप्रतीतौ एतद्रूपवतीत्यादि यत्प्रामाण्यं तदीश्वरयोगितत्पुरुषज्ञानेषु यावत्त्वाऽऽश्रयेषु प्रकार इति तऽत्रांशतो बाधो ज्ञेयः । विप्रतिपत्त्यवसर उक्तमंशतः सिद्धसाधनमपि तत्रैव ज्ञेयम् ।

विशिष्टाऽभावेति । तृतीयक्षणवर्तिसंशयविषयत्वे प्रामाण्यविशेषणे दत्ते तदाश्रयस्य स्वाऽनाश्रयतया स्वाऽऽश्रयत्वरूपविशेषणाऽभावाद्विशिष्टाऽभावोपपत्तिरित्यर्थः । विशिष्टाऽभावश्च तत्स्वाऽऽश्रयव्यक्त्यबाधकतृतीयक्षणवर्त्तिसंशयसमानाऽधिकरणस्यतत्संशयकोटिप्रामाण्याऽऽश्रयत्वस्वग्राहकत्वानां त्रयाणामभावः, न तु पूर्ववदुभयाऽभावोऽप्रसिद्धेरिति ध्येयम् । तथा च साध्यविशेषणमेव तन्न तु पक्षविशेषणमिति भावः ।

अत एवेति । साध्यविशेषणत्वस्यैवाऽभिप्रेतत्वादित्यर्थः । विशिष्टे तृतीयक्षणवर्त्तिसंशयविषयत्वेन व्यावर्त्तितपक्षेऽभावरूपस्य साध्यस्योपपत्तये इत्यर्थ इति कश्चित् । तन्न । अत एवेत्यादेरसङ्गतत्वाऽऽपातादिति ।

अप्रामाण्यवदिति मूलम् । पक्षीकृतप्रामाण्यविरोधिकोटिवदित्यर्थः ।

गुरुमतं निराकृत्य त्रितयसाधारणीं तृतीयां विप्रतिपत्तिमधिकृत्य स्वतोग्राह्यत्वं

माथुरी

संसारे सर्व्वस्मिन्नेव क्षणे घटत्ववतीत्यादिप्रामाण्याश्रयज्ञानध्वंसवत्त्वेन तद्ध्वंसाधिकरणकालध्वंसानधिकरणक्षणस्यैवाप्रसिद्धेः[1] । तद्व्यक्तितृतीयक्षणवृत्तिपुरुषान्तरीय-

१. तद्ध्वंसाधिकरणकालध्वंसानधिकरणकालस्यैवाप्रसिद्धेः इति ख० ।

**अन्यथा स्वस्य परत्वात् परस्य च स्वत्वात् तदेतदन्यत्वस्य च स्वपर-साधारणत्वात् स्वतः परतो वेति संशयो न स्यात् ।**

आलोकः

पूर्वकालीनेत्यत्र **पूर्वकालस्तृतीयक्षणः** । निश्चयाऽनन्तरं **तृतीयक्षण इति** शेषः ।

**ननु तत्त्वं स्वत्वं तदन्यत्वं परत्वमिति कोट्योर्विरोधात् अस्तु संशय इत्यत आह—तदिति । कश्चिदित्यनेन प्रामाण्यं परतो वेद्यं सांशयिकत्वात् इत्युक्तकल्पाऽपेक्षया**

दर्पणः

**निराकर्त्तुं न यावदिति** मूलम् । तच्च ज्ञानपदाऽऽदिना प्रामाण्याऽग्रहणात् सिद्धसाधन-ग्रस्तमित्यत आह—**विप्रतिपत्तौ यथेति** । सविषयकज्ञानग्राहकघटितमित्यर्थः । यत्र चाऽप्रामाण्यग्राहकमवतरति तज्ज्ञानप्रामाण्यं न पक्ष इति भावः ।

**स्वाऽऽश्रयनिश्चय** इति मूलम् । सविषयकत्वाऽऽश्रयग्राहकोऽगृहीताऽप्रामाण्यः समानाधिकरणो यः स्वाऽऽश्रयनिश्चयः तद्धर्मिणि तद्धर्मिताऽवच्छेदकाऽवच्छेदेन तदव्यवहितोत्तरक्षणे संशयकोटित्वादित्यर्थः ।

**प्रामाण्येति** मूलम् । समानाऽधिकरण-स्वसविषयस्वाऽऽश्रयनिश्चयस्य सत्त्वे प्रामाण्यसंशयं बिना तद्धर्मिणि तद्धर्मिताऽवच्छेदेन सन्दिह्यमानत्वादित्यर्थः ।

षष्ठीं विप्रतिपत्तिमधिकृत्य **अनभ्यासेत्यादि** मूलम् । एतत्पदाऽर्थपरिचयाऽर्थ-मेवाऽनभ्यासेत्यादि न तु व्यावर्त्तनाऽर्थम्, एतत्पदेनैव घटज्ञानाऽदिरूपविशेषला-भादित्यवधेयम् । घटज्ञानं प्रमेत्युत्तरकालीननिश्चयविषयतया बाध इति मूले **पूर्व-कालीनेति** विशेषणम् । तत्र व्यवहितपूर्वकालीननिश्चयविषयतया दोषतादवस्थ्या-दाह—**तृतीयक्षण** इति । संशयाऽव्यवहितपूर्वकाल इत्यर्थः । एवमपि पुरुषाऽन्तरीय-निश्चयविषयतयाऽप्रामाण्यसंशयाऽऽक्रान्तस्वीयनिश्चयविषयतया च बाधात् समानाऽ-धिकरणत्वमप्रामाण्यसंशयाऽनाक्रान्तत्वञ्च साध्यगतनिश्चये विशेषणं ज्ञेयम् ।

तदयं निर्गलिताऽर्थः, तद्धर्मिकतद्धर्मिताऽवच्छेदककृतत्संशयकोटित्वं हेतुः, तस्मिन् धर्मिणि तदवच्छेदेन तत्संशयाऽव्यवहितपूर्वकाले समानाधिकरणस्याऽप्रामाण्य-संशयाऽनाक्रान्तस्य कस्याऽपि निश्चयस्य प्रकारो नेति साध्यम् ।

माथुरी

संशयमादाय घटत्वादावर्थे व्यभिचार इति स्वाश्रयसमानाधिकरणेति संशयविशेषणम् । न च पुरुषान्तरीयसंशयोऽपि तत्पुरुषीयस्वाश्रयसमानाधिकरण एवेति तद्दोषतादवस्थ्य-मिति वाच्यम् । स्वाश्रयपदस्य तद्व्यक्तिपरत्वात् तथा च तद्व्यक्तिसमानाधिकरण-तद्व्यक्तितृतीयक्षणवृत्तिसंशयविषयत्वादित्यर्थः, विषयत्वञ्च कोटित्वपर्य्याप्त्यधिकरणत्वं नातः प्रामाण्यसंशयमादाय प्रामाण्यघटकार्थे व्यभिचारः । अथ यत्र घटविषकं ज्ञानं

**प्रामाण्यस्य स्वग्राह्यत्वे बाधात् परिशेषेणाऽन्यथाग्राह्यत्वं परतो ग्राह्यत्वमिति कश्चित् । प्रथमं च प्रामाण्यज्ञानं व्यतिरेकिणा ।**

आलोकः

**प्रामाण्य न स्वतो वेद्यं सांशयिकत्वात् । तथा च परतो वेद्यं स्वतोऽवेद्यत्वे सति वेद्यत्वादित्यनुमानद्वयकल्पनागौरवमित्यस्वरसो दर्शितः ।**

यद्वा अप्रामाण्याऽग्राहकसविषयकज्ञानग्राहकयावद्घटज्ञाननिश्चये स्वप्रकारो नेति साध्यम् । समानाऽधिकरणप्रामाण्यसंशयाऽनाक्रान्तसविषयकज्ञानग्राहकाऽप्रामाण्याऽग्राहकघटज्ञाननिश्चयाऽव्यवहितोत्तरक्षणे तन्निश्चयधर्मिणि तद्धर्मिताऽवच्छेदकाऽवच्छेदेन संशयप्रकारत्वादिति हेतुः । एनं पक्षमधिकृत्यैव **निश्चयाऽनन्तरमिति** मूले विशेषणम् । तत्र व्यवहितसंशयप्रकारे घटज्ञाननिश्चयविषये व्यभिचारादाह—**तृतीयक्षण इति** । अव्यवहितोत्तरक्षण इत्यर्थः ।

वस्तुतो धर्मिभेदाऽऽदिकमादाय यत्र संशयो नाऽस्ति तादृशनिश्चयविशेष एव एतत्पदेन विवक्षितः । तथा च घटत्ववति घटत्वप्रकारकत्वं निश्चयविशेषाऽविषयः । निश्चयविशेषाऽव्यवहितोत्तरकाले समानाधिकरणसंशयकोटित्वादिति विशिष्टस्यैवाऽनुमानम् । अतो न विशेषणबाहुल्यगौरवमिति ।

मूले **प्रामाण्यमात्रेति** । प्रामाण्यसामान्येत्यर्थः । मूले **बाध इति** । प्रामाण्याऽश्रययावद्ग्राह्यत्वस्य क्वचिदप्यप्रसिद्धया तदभावाऽप्रसिद्धेरनुमित्यनुत्पत्तिरित्यर्थः । मूले **समभिव्याहृतेति** । पक्षीकृतप्रामाण्येत्यर्थः ।

ननु तत्त्वं परत्वं तदः परोक्षवाचित्वात्, एतत्त्वं स्वत्वं एतदः समीपतरवाचित्वात् । अतएव तदन्यत्वं स्वत्वमेतदन्यत्वं परत्वमिति वाऽस्त्वित्यत आह—मूले **तदिति** । **टिप्पण्यां** च तत्त्वं परत्वं तदन्यत्वं स्वत्वमित्यन्वयः । अन्यथा अनुक्तिसम्भवादिति मूलेऽन्यथाग्राह्यत्वमित्यस्य विवरणं **परतो ग्राह्यत्वमिति** । **इत्यस्वरस इति** । व्यावर्त्याऽभावेन वेद्यत्वं व्यर्थमित्यप्यस्वरसो द्रष्टव्यः ।

माथुरी

स घटः प्रामाण्याप्रामाण्ये चेति समूहालम्बनात्मको व्यवसायस्ततस्तस्मिन् व्यवसाये प्रामाण्यसंशयोऽनन्तरं स घटो न वेति संशयस्तत्र च तद्विषयत्वमादाय घटत्वादौ व्यभिचारः, एवं यत्रायं घटः पटश्चेति ज्ञानानन्तरं घटत्व-तदभावोपस्थितिः ततः पटो घटो न वेति संशयस्तत्र तद्विषयत्वमादाय घटत्वे व्यभिचारः, एवं यत्रादौ अयं घट इति ज्ञानं ततः समवाय-तदभावोपस्थितिः ततो घटः समवायवान्न वेति संशयस्तत्र तद्विषयत्वमादाय समवाये व्यभिचारः तत्र प्रामाण्याश्रयग्राह्यत्वाभावाभावादिति चेत् । न । तदुत्तरेत्यत्र तत्पदेन पक्षीभूतप्रामाण्याश्रयद्व्यक्तेरुत्तरतृतीयक्षणे तस्य पुंसः प्रामाण्य एव संशयो न तद्धर्मादिषु तद्व्यक्तेरुक्तत्वात् । संशयपदञ्च कोटितारूप-

**ननु प्रामाण्यप्रसिद्धिं विना व्याप्त्यग्रहात् कथमनुमानम्? अथ**

दर्पणः

अत्र केचित्। संशयस्थले ज्ञानग्राहकेण प्रमात्वस्याऽग्रहेऽपि न स्वतस्त्वहानिः। यथा ह्यप्रमात्वाऽऽरोपस्थले प्रमात्वाऽग्रहो दोषादिति मीमांसकैरुपेतं तथा संशयस्थलेऽपि दोषादेव प्रमात्वाऽग्रह इत्युपेयम्। अत एवाऽप्रामाण्यग्रहजनकदोषाऽसमवहितत्वरूपम-प्रामाण्याऽग्राहकत्वं सामान्यत एव स्वतस्त्वे निवेशितम्, न तु विशिष्याऽप्रामाण्याऽ-निश्चायकत्वमिति। न च संशयस्थले दोष एव दुर्वच इति वाच्यम्, भ्रमस्येव संशयस्याऽपि दोषजत्वेन फलबलेन कस्यचिद्दोषस्य कल्पनात्। तस्मान्न स्वतस्त्वे संशयाऽनुपपत्तिः। नाऽपि ग्राहकाऽभावादेव प्रमात्वाऽग्रहो मनसो बहिरस्वातन्त्र्यादिति वाच्यम्, उपनयसहकारेण बहिः प्रवृत्तौ मनसः पारतन्त्र्याऽविरोधात्। मनसा चैव-मित्यादौ स्वयमेव तथाऽभिधानादिति।

अत्रोच्यते—सविषयके ज्ञाने प्रकाराऽन्तराऽनुपस्थितविषयसत्ताके भासमाने विषयवैशिष्ट्यांऽशे सत्तानिश्चयो न भवतीत्यन्वयव्यतिरेकाभ्यामवधारितम्। तथा हि घटविषयकज्ञानवान् देवदत्तो घटाऽभिलापवत्त्वादित्यनुमाय घटाऽर्थी निष्कम्पं न प्रवर्त्तते, तत्रैव च घटविषयकप्रमावानित्यनुमाय निष्कम्पं प्रवर्तते। तत्र प्रमात्वस्य विषयसत्ताघटितस्य प्रकाराऽन्तरोपस्थितत्वात् सत्तानिश्चयाऽभावश्च ज्ञानविशेषण-त्वाऽवच्छेदेन विवक्षितः, तेन सुरभि चन्दनं सुरभिविषयकञ्च ज्ञानमित्यादौ न व्यभिचार इति ध्येयम्। अत एव शब्दखण्डे स्मारितपदाऽर्थसंसर्गज्ञानपूर्वकानीति साध्ये विषयसत्तानिश्चयो न स्यादित्याशङ्क्य ज्ञानपदं प्रमापरतया व्याख्यायते। तदिह पुरोवर्त्तिनि घटत्वाऽऽदिवैशिष्ट्यसत्तायाः प्रकाराऽन्तरेणाऽनिश्चये ज्ञानविषयतया च ततः कुतो कथं निश्चयः स्यादिति प्रामाण्यनिश्चायकसामग्र्यभावादेव प्रामाण्यस्य स्वतस्त्वाऽभावः, सत्तानिश्चयत्वञ्च स्वरूपसम्बन्धविशेष उत्तरकालीनसंशयाऽऽद्य-भावकल्प्य इति सर्वजनीनम्। स च सम्बन्धविशेषो यथा प्रामाण्यसन्देहस्थले संशयाऽन्यथाऽनुपपत्त्या नाऽस्ति तथा सन्देहाऽभावस्थलेऽपि नाऽस्ति सत्तानिश्चयत्वाऽ-भावनियामकस्योक्तस्य तुल्यत्वादिति प्रतिपादयितुं संशयाऽनुपपत्तिप्रदर्शनम्।

माथुरी

विषयताविशेषलाभाय प्रतिबध्य-प्रतिबन्धकभावात्मकानुकूलतर्कस्फोरणाय वा, न तु संशयत्वं हेतुघटकं पक्षदृष्टान्तसाधारणस्य न्यायमत-गुरुमतोभयसाधारणस्य च संशयत्व-स्यानुगतस्यैकस्य दुर्व्वचत्वात् प्रयोजनविरहाच्च। एतेन संशयपदवाच्यत्वं संशयत्वं सर्व्वसाधारणमनुगतं सुवचमित्यपि निरस्तम्। तथापि व्यर्थविशेषणत्वादिति न काप्य-नुपपत्तिः। 'अप्रामाण्ये'ति। न चाप्रामाण्यसंशयाजन्यस्वारसिकसंशयविषयघटत्वादौ व्यभिचार इति वाच्यम्। नञ्व्यत्यासेनाप्रामाण्यासंशयाविषयत्वस्य विवक्षितत्वात्।

**व्याघातदण्डभयेन प्रमातद्विषयसिद्धौ तद्दृष्टान्तेन ज्ञेयत्वाऽऽदिना वह्नेः**

**आलोकः**

**अथ व्याघातेति । विशेष्याऽवृत्त्यप्रकारकं ज्ञानं नाऽस्तीति परप्रतिषेधो व्याघातः,**

**दर्पणः**

**आलोककृतस्तु** घटत्ववद्विशेष्यकत्वं मनसा ग्रहीतुं न शक्यते, घटनिष्ठस्य विशेष्यत्वस्य ज्ञानाऽनुपनीतस्य मनसो ग्रहणे सामर्थ्याऽभावादिति वक्ष्यन्ति, तन्न । एवं सति घटत्वप्रकारकत्वमपि कथं ग्राह्यम्, घटत्वनिष्ठस्य ज्ञानाऽनुपनीतस्य तस्याऽपि ग्रहे मनसोऽसामर्थ्यात् । भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम्, तच्च स्वरूप-सम्बन्धाऽत्मकं पूर्वाऽज्ञातमपि प्रकारो भवतीति कल्पनीयम्, संसर्गमर्यादया वा तद्भानमिति यदि, तदा भासमानवैशिष्ट्याऽनुयोगित्वे विशेष्यत्वेऽपि तुल्यम् । वह्निगुञ्जयोर्गुञ्जावह्नी इति समूहाऽऽलम्बनेऽतिव्याप्त्या वह्नित्ववद्विशेष्यकत्वे सति वह्नित्वप्रकारकत्वं न प्रमात्वमपि तु वह्नित्ववद्विशेष्यकत्वाऽवच्छेदेन वह्नित्वप्रकारकत्वं वह्नित्ववद्विशेष्यकत्वे सति स्वरूपसम्बन्धित्वाऽवच्छेदेन वह्नित्वप्रकारकत्वं वा । तथा च वह्नित्ववद्विशेष्यकत्वस्य वह्नित्वस्य वाऽवच्छेदकत्वाऽग्रहान्न स्वतस्त्वमिति, तथा सति वह्नित्ववन्निरूपितभासमानसम्बन्धप्रतियोगिवह्नित्वकत्वं प्रामाण्यम् । तच्च विशेष्ये वह्नित्ववत्तानिर्वाहकसम्बन्धस्य प्रकारतानिर्वाहकसम्बन्धस्य चाऽभेदघटितम्, अन्यथाऽतिप्रसङ्गात् । तत्र चाऽनुव्यवसायेन स्वरूपसम्बन्धाऽत्मकप्रकारत्वस्य पूर्वाऽज्ञातस्य ग्रहणेऽपि पूर्वाऽज्ञातस्य सम्बन्धत्वाऽऽदेः कथं ग्रहणम् ? एतेनाऽऽत्मसुखाऽऽदि-स्थले तद्वत्वांऽशे मनसः स्वातन्त्र्यात्सत्तानिश्चयो मनसा सम्भवत्येवेति कथं न स्वतः प्रामाण्यमिति निरस्तम् । तत्राऽप्युक्तविशेषणानां पूर्वाऽज्ञातत्वेनाऽनुव्यवसाये प्रकारत्वाऽसम्भवादिति तत्त्वम् ।

**व्याघातेति मूलम्** । व्याघात एव दण्डो व्याघातदण्डः । **परप्रतिषेध इति** । परोक्तमभावबोधकं वाक्यमित्यन्वयः । व्याघातो विरोध इत्यादि व्याख्यानन्त्वयुक्तम् । प्रामाण्यनिषेधरूपस्य परकीयव्याघातस्येत्याद्यग्रिममूले कुसृष्टिकल्पनाऽऽपत्तेः ।

**माथुरी**

न चैवं प्रामाण्यस्यापि प्रामाण्यवति प्रामाण्यप्रकारकत्वरूपप्रामाण्यज्ञानप्रामाण्यसंशया-धीनसंशयविषयता स्वरूपासिद्धिरिति वाच्यम् । अप्रामाण्यपदेन पक्षीभूतघटत्ववति घटत्वप्रकारकत्वादिरूपप्रामाण्यविरोधिनो घटत्ववति घटत्वप्रकारकत्वाभावस्य घटत्वा-भाववति घटत्वप्रकारकत्वरूपभ्रमत्वस्य चोक्तत्वात् । न च यत्रार्थविशेषे अप्रामाण्य-संशयाहितसंशयः कदापि न कृतस्तत्रार्थे व्यभिचार इति वाच्यम् । तद्घटितप्रामाण्यं पक्षीकृत्य तदाश्रयग्राह्यत्वाभावस्य असाधनीयत्वादिति । नन्वेवमपि स्वरूपासिद्धिः धारावहिकाप्रामाण्यसंशयस्थले उत्तरोत्तरसंशयस्य विशेषणज्ञानविधया पूर्व्वंपूर्व्वंतत्-

**प्रमाविषयत्वमनुमेयम्, ततश्च सामान्यतस्तत्सिद्धौ न साध्याऽप्रसिद्धिः, विशिष्यानिर्णयान्नाऽन्वयित्वाऽसाधारण्ये। न च प्रामाण्यं नाऽनुगतम्, किन्तु**

आलोकः

तस्य भयं प्रतियोग्यज्ञानेऽभावज्ञानाऽसम्भवरूपम्। तेन प्रामाण्योपस्थितिस्तदन्यथाऽनुपपत्त्या तत्सिद्धिः, विषयसिद्धिश्च ज्ञानाऽन्यथाऽनुपपत्त्या, ततो वह्निरयं विशेष्याऽवृत्तिप्रकाराऽनवच्छिन्नज्ञानविषयो ज्ञेयत्वात्, सामान्यतः-सिद्धज्ञानविषयवदिति वह्नेः प्रमाविषयत्वमनुमेयम्। प्रमेयत्वस्याऽनुमेयतया साध्याऽविशेषभयादप्रसिद्धेश्च ज्ञेयत्वाऽऽदिनेत्युक्तम्।

आदिपदन्तु सामान्यतः सिद्धप्रमाविषयवृत्तिधर्मपरम्।

ततश्चेति। व्याघातभिया सामान्यतः तत्प्रसिद्ध्या नाऽत्रान्वयिनि साध्याऽप्रसिद्धिरित्यर्थः। न चैवं सामान्यतः साध्यप्रसिद्ध्याऽपि कुत्र व्याप्तिग्रह इति वाच्यम्,

दर्पणः

अभावज्ञानेति। स्वजनकाऽभावज्ञानस्याऽसम्भवरूपमित्यर्थः। तेनेति। विपक्षबाधकेनेत्यर्थः। प्रयोगस्त्वेवम्, इदं वाक्यं प्रतियोगिज्ञानपूर्वकम्, अभावज्ञानपूर्वकत्वात्। प्रतियोगिज्ञानाभावेऽभावज्ञानाऽसंभवादिति तर्कः। प्रामाण्योपस्थितिः प्रामाण्याऽऽश्रयज्ञानस्य ज्ञानाऽनुमितिः।

तदन्यथाऽनुपपत्त्येति। अनुमितस्य ज्ञानस्य विषयं विनाऽनुपपत्त्येत्यर्थः। तत्सिद्धिः प्रमासिद्धिः। तस्याः प्रमाया विषयं विनाऽनुपपत्त्या विषयाऽनुमितिरित्याह— विषयसिद्धिश्चेति। इयञ्च प्रणाली स्वातन्त्र्येण प्रमाऽदिसिद्ध्यर्थम्। अन्यथा प्रमानुमित्यैवाऽवच्छेदकतया प्रमाऽऽदेर्विषयीकरणादिति ध्येयम्।

वस्तुतस्तु गूढाऽऽशय आह मूले— सामान्यत इति। सामान्यरूपेण वह्निविशेष्याऽवृत्तिप्रकाराऽनवच्छिन्नज्ञानविषय इत्यन्वयिना साध्यसिद्धाविदं वह्निज्ञानं प्रमेतिव्यतिरेकिणि न साध्याऽप्रसिद्धिरित्यर्थः।

माथुरी

संशयजन्यत्वात् तत्संशयस्य विषयत्वात् तादृशप्रामाण्यतदीयज्ञानप्रामाण्योभयसमूहालम्बनजन्यसंशस्य विषयत्वाच्च। न च तत्तदप्रामाण्यसंशयत्वेन जनकत्वं विवक्षितमिति वाच्यम्। क्वचिदपि तथा जनकत्वाभावात् अप्रामाण्यसंशयस्य निश्चयप्रतिबन्धकतायामुत्तेजकत्वादिति चेत्। न। जन्यत्वं हि उत्तेजकतया प्रयोज्यत्वं तथा च प्रकृतप्रामाण्यविरोधिविषयकबुद्ध्यनाक्रान्तत्वविशिष्टधर्मावच्छिन्नस्वप्रतिबन्धकताकसंशयाविषयत्वं हेतुरिति न कोपि दोषः, 'स्वपदं' संशयपरमिति भावः। हेतुद्वय एव घटत्वादावर्थे व्यभिचारमुद्धरति, 'अर्थे निश्चितेऽपीति अर्थे घटत्वादौ, 'अर्थसंशयः'

प्रतिज्ञानं विषयप्रकारभेदाद्भिन्नम्, तथा च वह्निज्ञानस्य वह्न्यवृत्ति-

आलोकः

निश्चितहेतुमति व्यभिचार[1]संशयस्याऽदोषतया साध्याऽभावनिश्चयस्य क्वचिदप्य-सम्भवेन व्यभिचारज्ञानाऽभावेन सामान्यतः सिद्धप्रमाविषये सहचारज्ञानेन प्रसिद्धाऽनुमाने महानस इति व्याप्तिग्रहसम्भवात्। न चाऽलीके ज्ञेये विशेष्याऽवृत्तिप्रकाराऽनवच्छिन्नज्ञानाऽविषये व्यभिचारः। तादृशज्ञानाऽविषयत्वस्याऽप्रामाण्यपर्यवसायितया तस्याऽप्यनुमेयतया तदानीं साध्याऽभावाऽनवधारणात्। अलीकस्य ज्ञानाऽविषयत्वेन ज्ञेयत्वहेत्वसत्त्वाच्च। शुक्तिरजततादात्म्याऽऽदीनां पारमार्थिकत्वनियमात्।

दर्पणः

ततश्चेति। स्वरसात् अन्वयिनो विशेषविषयत्वस्य टीकाकृतैव वक्ष्यमाणत्वाच्च।

अत्राऽन्वयिनीति। वह्निरयमित्यादावित्यर्थः।

कुत्रेति। साधनसाध्याऽधिकरणस्य विशिष्टोपस्थितिर्व्याप्तिग्रहे तन्त्रं तदभावात्, सन्देहरूपव्यभिचारज्ञानाच्च न व्याप्तिग्रह इति भावः।

विशिष्याऽधिकरणोपस्थितिर्न तन्त्रं साध्याऽभावांऽशे सन्देहरूपं व्यभिचारज्ञानञ्च न प्रतिबन्धकमित्याह—निश्चितेति।

असदेव वैशिष्ट्यं भ्रमविषय इति मतेन व्यभिचारमाशंक्य निराकरोति—न चेति।

- ज्ञेयत्वेन गृहीते प्रमाविषयत्वाऽभावस्तावन्न गृहीतुं शक्यते यावत् तस्मिन्नप्रमाविषयत्वं न गृह्यते इत्याशयेन व्यभिचारज्ञानाऽभावमाह—तादृशेति। एतादृशनियमस्याऽप्रामाणिकत्वात्सदेव भ्रमविषय इति नवीनमतमनुसृत्याऽऽह—अलीकस्येति। यथा चैतत्तथाऽन्यथाख्यातिशेषे उपपादयिष्यते।

माथुरी

घटत्वादौ संशयः, 'प्रामाण्यसंशयं विनेति, अर्थे निश्चिते अर्थसंशय इत्यनुषज्यते। गुरुमतं निराकृत्य भट्ट-मिश्रौ निराकर्त्तुं तन्मतसिद्धस्वतस्त्वव्यतिरेकं साधयति, 'विवादेति 'ग्राहकं' ग्रहः, 'ग्राह्यं' विषयः, तथा च स्वाश्रयविषयकयावद्ग्रहविषय इत्यर्थः, स्वपदं पक्षीभूतघटत्ववति घटत्वप्रकारकत्वादिपरम्, प्रकृतप्रामाण्यग्रहप्रतिबन्धकासमवहितत्वेन च ग्रहो विशेषणीयः तेन न सिद्धसाधनम्। एवं तृतीयविप्रतिपत्तौ साध्ये यद्यद्विवक्षितं तत्सर्व्वमत्रापि बोध्यम्, हेतौ च तदुत्तरेत्यत्र तच्छब्देन यावत्त्वाविशेषितस्तादृशग्रहश्च परामर्शनीयः[2] 'सन्दिह्यमानत्वञ्च तत्र सन्दिह्यमानत्वं बोध्यम्,

---

१. साध्याभावेति कखपुस्तकयोः।

२. यावत्त्वविशेषितपरामर्शे अप्रसिद्धिरितिभावः।

प्रकाराऽनवच्छिन्नत्वाऽऽदिकं साध्यं तच्चाऽप्रसिद्धमिति वाच्यम् ।

आलोकः

वस्तुतस्तु अलीके ज्ञानविषयत्वेऽपि न विशेष्याऽवृत्तिप्रकाराऽनवच्छिन्नज्ञान-विषयत्वतदभावयोरन्यतरस्याऽपि ज्ञानम् । तदिदमुक्तम्—अत्र सचेतसां मूकतैवोचितेति । न हि तत्र विधिनिषेधयोरन्यतरस्याऽप्यवधारणमिति न व्यभिचारधीः । अतो व्यभिचारधीविरहसहकृतसहचारधीसत्त्वान्न व्याप्तिग्रहप्रत्यूह इति तत्त्वम् ।

नाऽन्वयित्वेति । ततो वह्निज्ञानमिदं वह्न्यवृत्तिप्रकाराऽनवच्छिन्नम्, दाह-समर्थविषयकप्रवर्त्तकज्ञानत्वात्, यन्नैवं तन्नैवमितिव्यतिरेकिणि क्वचिदपि विशिष्य साध्यनिश्चयाऽभावेन साध्यनिश्चयवतो हेतुतदभावयोरन्यतरस्याऽप्यनिश्चयेन साध्य-निश्चयवति हेतुनिश्चयाऽधीनमन्वयित्वं हेत्वभावनिश्चयाऽधीनमसाधारण्यं न भवती-

दर्पणः

असद्वैशिष्ट्यज्ञानवादिनोऽपि संसर्गमर्यादयैव तद्भानम्, न तु विधिनिषेधाऽधि-करणतया । तथा च तन्मताऽभ्युपगमेऽपि न व्यभिचारधीरित्यभिप्रायेणाऽभ्युपेत्याऽऽह—वस्तुतस्त्विति । विरुद्धव्याप्त्युपनायकत्वादिति । साध्यविरोधिप्रतियोगिकव्याप्त्युप-

माथुरी

तेन धर्म्मंयन्तरसन्दिह्यमाने ज्ञानत्वादौ न व्यभिचारः, अन्यत् सर्वं पूर्व्ववदिति । ज्ञानभेदेन प्रामाण्यभेदमते प्रकारान्तरेणानुमानमाह, 'यद्वेति, अत्र झटिति एतत्पदार्थ-परिचयार्थमनभ्यामदशापन्नेत्यादि विशेषणं न तु व्यावर्त्तकम् एतत्पदेनैव विशेषलाभात् । प्रामाण्यानुमित्यात्मकैतज्ज्ञाननिश्चयस्य तदुत्तरं प्रमावानहमित्यादिनिश्चस्य च विषयत्वाद् बाधवारणाय साध्ये 'कालीनान्तं निश्चयविशेषणम्, पूर्व्वकालीनत्वं पूर्व्वं-तृतीयक्षणवृत्तित्वम्, नातो बाधतादवस्थ्यम् । 'एतज्ज्ञाननिश्चयानन्तरमिति, तृतीयक्षण इति शेषः, नातो ज्ञानत्वादौ व्यभिचारः, 'सन्दिह्यमानत्वादित्यस्य अत्र ज्ञाने इत्यादिः, अन्यथा धर्म्मंयन्तरसन्दिह्यमानज्ञानत्वादौ व्यभिचारापत्तेः । एवञ्च साध्येऽपि अत्र ज्ञाने इति पूरणीयम्, अन्यथा तृतीयक्षणे ज्ञाने सन्दिह्यमानघटत्वादौ व्यभिचारापत्ते-रिति दिक् । 'तदाश्रयाग्राह्यत्व इति, साध्ये इति शेषः । 'बाध इति अप्रसिद्धि-रित्यर्थः, सर्व्वस्यैव प्रमाविषयत्वादिति भावः । 'समभिव्याहृतेति तथा च पक्षीकृत-प्रामाण्यपरमिति भावः[1] । 'अन्यथा' समभिव्याहृतपरत्वाभावे । ननु तत्त्वमेतत्त्वं वा स्वत्वम्, तदन्यत्वमेतदन्यत्वं वा परत्वमित्यत आह, 'तदिति' 'स्वग्राह्यत्वे' स्वाश्रय-ग्राह्यत्वे, 'परिशेषेण' स्वाश्रयाग्राह्यत्वेन, 'अन्यथा ग्राह्यत्वमित्यस्य विवरणं 'परतो

१. 'समभिव्याहृतेति तथा च पक्षीकृतप्रामाण्यपरमिति भावः' इत्यत्र सम्बन्धिपदत्वेन समभिव्याहृतपदत्वेन समभिव्याहृतपरत्वात् पक्षीकृतप्रामाण्यपरत्वादिति ख० ।

आलोकः

**स्यर्थः। हेतुनिश्चयस्याऽन्वयव्याप्तिनिश्चायकत्वात्, हेत्वभावनिश्चयस्य च साध्याऽभावसिद्धिपर्यवसायिनः सत्प्रतिपक्षतया दोषत्वं विरुद्धव्याप्त्युपनायकत्वात्, न च सन्देहस्तथेति। सन्देहोत्थापकतापक्षेऽप्यतुल्यबलतया न हेत्वभावसन्देहस्य कोटिद्वयोपस्थापकत्वमिति भावः। न च व्याघातबलेन साध्यप्रसिद्धौ तत एव व्यतिरेक्युपपत्तौ किं ज्ञेयत्वहेतुकाऽन्वयिना, तत एव फलसिद्धौ किं व्यतिरेकिणेति वाच्यम्, प्रकाराऽर्थं व्यतिरेक्यादर इति व्यतिरेकिप्रकारस्य वह्न्यवृत्तित्वाऽऽदेर्व्याघातादनुपस्थितेरन्वयिनश्च पक्षधर्मताबलेन तत्पर्यवसानस्य वह्निज्ञानस्येत्यादिग्रन्थ एव स्फुटत्वात्। अत एव नाऽग्रिमव्यतिरेकिव्यर्थताऽपि, प्रकाराऽर्थं तदवतारात्, अन्यथा व्यतिरेकिमात्रविलयाऽऽपत्तेः। अत्र वह्न्यवृत्तिप्रकाराऽनवच्छिन्नत्वमपि व्याघातबलादेवाऽस्तूपस्थितं किमन्वयिना। न च तस्याऽसार्वत्रिकत्वं दोषः, तर्हि प्रकृतेऽपि तथेत्याह—तर्हीति।**

दर्पणः

स्थापकत्वादित्यर्थः। सन्देहेत्युपलक्षणम्। विरोधिव्याप्तिद्वयनिश्चायकसामग्रीसत्त्ववदसाधारणस्य व्याप्तिनिश्चयप्रतिबन्धकतया दोषत्वपक्षेऽपि तुल्यबलत्वाऽभावे दोषत्वं नाऽस्तीति द्रष्टव्यम्।

माथुरी

ग्राह्यत्वमिति' स्वाश्रयातिरिक्तमात्रग्राह्यत्वमित्यर्थः, 'कश्चिदित्यनेनास्वरसो दर्शितः, तद्बीजन्तु पूर्व्वोक्तक्रमेण स्वतोग्राह्यत्वाभावं प्रसाध्य पश्चात्तेनैव हेतुना स्वाश्रयातिरिक्तमात्रग्राह्यत्वरूपं परतो ग्राह्यत्वं साध्यमित्यनुमानद्वयकल्पने गौरवमिति।

ननु प्रामाण्यस्य स्वतोग्राह्यत्वाभावे प्राथमिकप्रामाण्यग्रहः कथं स्यादित्यतः प्रामाण्यज्ञानप्रकारमाह,'प्रथमञ्चेति, व्यतिरेकिणेति वह्निविशेष्यकज्ञानमिदं वह्न्यवृत्तिप्रकारानवच्छिन्नं दाहसमर्थविशेष्यकप्रवृत्तिजनकत्वादिति व्यतिरेकित्यर्थः, व्याघातदण्डभयेनेति प्रमा नास्तीति शब्दरूपो यः परकीयव्याघातः स एव प्रतिवादिदुःखहेतुत्वाद्दण्डः तस्य भयेन तस्य प्रतियोगिज्ञानं विनानुपपत्त्येत्यर्थः, तथा च इदं वाक्यं प्रतियोगिज्ञानपूर्व्वकम् अभावज्ञानपूर्व्वकत्वात् इत्यनुमानेन प्रतियोगिज्ञानं विना अभावज्ञानासम्भवादिति तर्कसहकृतेन प्रमासिद्धिरिति भावः। 'तद्विषयेति प्रमासिद्धौ प्रमा सविषया ज्ञानत्वादित्यनुमानात् प्रमाविषयसिद्धिरित्यर्थः,'तद्दृष्टान्तेनेति सामान्यतः सिद्धप्रमाविषयदृष्टान्तेनेत्यर्थः, 'ज्ञेयत्वादिनेति वह्निविशेष्यावृत्त्यप्रकारकज्ञानविषयो ज्ञेयत्वादित्यनुमानेनेत्यर्थः। इदञ्च प्रामाण्यविशेषस्योक्तव्यतिरेकिसाध्यस्य प्रसिद्धये, अत्र तल्लाभश्च पक्षधर्म्मताबलादित्याकर एवाग्रे स्फुटम्। न च व्याघातदण्डभयेन प्रमासिद्धो वह्निज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वादिति व्यतिरेकिणैव पक्षधर्म्मताबलात् प्रामाण्यविशेषलाभोऽस्तु किमनेनानुमानेनेति वाच्यम्। एतस्याप्युपायान्तरत्वादिति

वह्निज्ञानस्य हि विशेष्याऽवृत्तिप्रकाराऽनवच्छिन्नत्वाऽऽदिकं साध्यमानं पक्षधर्म्मताबलेन वह्निविषयकप्रमात्वे पर्य्यवस्यतीति चेत्—तर्हि

आलोकः

ननु प्रामाण्यमज्ञात्वैव स्वयं प्रामाण्यं निषिध्यतामित्यत आह—प्रामाण्यमिति। प्रामाण्यमज्ञात्वाऽपि चेत्—तन्निषेध्यम्, तदा व्याघातबलादपि न तदुपस्थितिरित्यर्थः।

दर्पणः

आशयमविदुषः शङ्कां निषेधति मूले—न चेति।

आशयं प्रकटयति मूले—वह्निज्ञानस्येति। वह्निर्विशेष्याऽवृत्तिप्रकाराऽनवच्छिन्नज्ञानविषय इत्यन्वयिनेति शेषः।

माथुरी

भावः। 'सामान्यत इति ज्ञानत्वरूपेण यत्र कुत्रचिद्वह्निज्ञाने इत्यर्थः, 'तत्सिद्धौ' वह्न्यवृत्तिप्रकारानवच्छिन्नत्वसिद्धौ, 'न साध्याप्रसिद्धिरिति वह्निविशेष्यकज्ञानमिदं वह्न्यवृत्तिप्रकारानवच्छिन्नं दाहसमर्थविषयकप्रवृत्तिजनकत्वादिति व्यतिरेकिणि न साध्याप्रसिद्धिरित्यर्थः। न च पूर्व्वान्वयिनैव पक्षधर्मतावलाद्वह्निज्ञानस्य प्रामाण्यविशेषसिद्धौ किमनेन व्यतिरेकिणेति वाच्यम्। ज्ञानत्वरूपेण यत्र कुत्रचिद्वह्निज्ञाने प्रमात्वे ज्ञातेऽपि प्रवृत्तिजनकत्र्वह्निज्ञाने इदं वह्निविशेष्यकं ज्ञानं वह्न्यवृत्तिप्रकारानवच्छिन्नमित्याकारकस्य निष्कम्पप्रवृत्त्युपयुक्तस्यासिद्धेः, अत एवोक्तं 'सामान्य इति। 'विशिष्ये'ति हेतुसामानाधिकरण्येन हेत्वभावसामानाधिकरण्येन वा अनिश्चयानित्यर्थः[1]। ननु व्यतिरेकिणा वह्न्यवृत्तिप्रकारानवच्छिन्नत्वं साध्यं तच्च न ज्ञेयत्वहेतुकानुमानेन प्रसिद्धम्, न हि वह्निः वह्न्यवृत्तिप्रकारानवच्छिन्नज्ञानविषयः ज्ञेयत्वादिति साधनीयं, व्यभिचाराद्व्याघातादपि तादृशासाध्याप्रसिद्धेश्च। सिद्धौ वा किं ज्ञेयत्वहेतुकानुमानेनेत्याशङ्क्य निराकरोति, 'न वेति, 'साध्यं' व्यतिरेकिणा साध्यम्, 'तच्चाप्रसिद्धमिति, ज्ञेयत्वहेतुकानुमानेन सामान्यतः प्रमेयत्वस्यैवसिद्धोरिति भावः।

'वह्निज्ञानस्येति वह्नेर्विशेष्यावृत्तिप्रकारानवच्छिन्नज्ञानविषयत्वं साध्यमानमित्यर्थः, 'वह्निविषयकप्रमात्व इति वह्न्यवृत्तिप्रकारानवच्छिन्नत्व इत्यर्थः। यद्यपीदमयुक्तं ज्ञेयत्वहेतुकानुमानेन पक्षधर्म्मताबलाद्वास्तविकवह्नित्वप्रमासिद्धावपि वह्न्यवृत्तिप्रकारानवच्छिन्नत्वस्वरूपेणासिद्धेः अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमात्तस्यानुपस्थितत्वाच्च उपस्थितौ प्रथमं तदनुमानस्य व्यर्थत्वात्। तथापि स्फुटत्वादिदमुपेक्ष्य दूषणान्तरमाह, 'तर्हीति, ननु परकीयव्याघातानवतारेऽपि स्वीयप्रामाण्यनिषेधानुपपत्त्येव

१. साध्यवन्निष्ठाभावप्रतियोगित्वमसाधारण्यमिति भावः।

प्रथमं कस्याऽपि स्वाऽर्थं प्रामाण्याऽनुमानं न स्यात्, प्रामाण्यनिषेधरूपस्य परकीयव्याघातस्य तदा अनुपस्थितेः, स्वयं प्रामाण्यनिषेधस्य तज्ज्ञानपूर्वकत्वात् प्रामाण्यमपरिज्ञाय प्रामाण्यनिषेधेन परकीयव्याघातस्याऽव्यज्ञानाच्च। प्रवृत्तिसंवादविसंवादाभ्यां तद्धेतुज्ञान[1]वैचित्र्याऽनुमानेऽपि यथोक्तरूपप्रामाण्यस्य विशिष्याऽप्रतीतेरिति—उच्यते। प्राग्भवीय[2]-संस्काराद्विशेष्याऽवृत्त्यप्रकारकत्वं तद्वति तत्प्रकारकज्ञानत्वं वा प्रामाण्यमात्रं स्मृतं वह्निज्ञानाऽऽदौ साध्यमानं सर्वनाममहिम्ना पक्षधर्म्मताबला-

आलोकः

अपिः स्वव्याघातसमुच्चयाऽर्थः। न परप्रतिषेधेन न वा स्वप्रतिषेधेन तत्प्रसिद्धिरिति भावः।

दर्पणः

अत्र वदन्ति—वह्निर्विशेष्याऽवृत्तिप्रकाराऽनवच्छिन्नज्ञानविषय इत्यन्वयिना कथं वह्न्यवृत्तिप्रकाराऽनवच्छिन्नज्ञानविषयत्वं विषयीकर्त्तव्यम्; अनुमितेर्व्यापकताऽवच्छेदकप्रकारकत्वनियमात्। वह्न्यवृत्तिप्रकाराऽनवच्छिन्नज्ञानस्याऽपि विशेष्याऽवृत्तीत्यादिव्यापकताऽवच्छेदकाऽऽक्रान्ततया तादृशविषयतानियमाच्चाऽनुमितेः सङ्गतमेवेदमिति चेत्—न। तथाऽपि वस्तुगत्या वह्न्यवृत्तिप्रकाराऽनवच्छिन्नज्ञानविषयः स्यान्न तु वह्न्यवृत्तिप्रकाराऽनवच्छिन्नत्वं तद्धर्मः। न च पक्षधर्मताबलेन तद्विषयत्वमुक्तमेवेति वाच्यं, यद्विषयीकरणमन्तरेणाऽनुमितिर्नोत्पद्यते तस्यैव पक्षधर्मताबललभ्यत्वादन्यथाख्यातिप्रसङ्गात्, पक्षधर्मताबललभ्यस्याऽप्रकारतया तत्प्रकारकसाध्यप्रसिद्ध्यभावेन व्यतिरेक्यनुपयोगाच्चेति।

माथुरी

प्रामाण्यप्रसिद्धिरिष्टव्येत्यत आह, 'स्वयमि'ति। ननु प्रामाण्यमज्ञात्वापि प्रामाण्यं निषिध्यतामित्यत आह, 'प्रामाण्यमिति, 'अज्ञानात्' अज्ञापकत्वात्, अपिना स्वीयनिषेधः समुच्चितः। इदमुपलक्षणं परवाक्ये श्रोत्राप्रमात्वेन प्रतियागित्वेन वा प्रमानुमेया आद्ये अप्रसिद्धिः, द्वितीये प्रमात्वप्रकारकव्यतिरेकिण्यनुपयोग इत्यपि द्रष्टव्यम् ननु संवादिप्रवृत्तिर्विसंवादिप्रवृत्तिकारणविचित्रकारणजन्या तद्विलक्षणकार्य्यत्वाद् घटवदित्यनुमानादेव पक्षधर्म्मताबलात् प्रामाण्यात्मकं वैचित्र्यं सेत्स्यतीत्यत आह, 'प्रवृत्ती'ति प्रवृत्तिनिष्ठसंवादित्वप्रकारेणेत्यर्थः, तद्धेतुज्ञानेति संवादिप्रवृत्तिहेतुज्ञानेत्यर्थः, 'उक्तरूपप्रामाण्यस्येति, उक्तरूपप्रामाण्यत्वेनेति शेषः, विचित्रत्वेनैव तस्य भानादिति

---

१. संवादिप्रवृत्तिहेतुज्ञानेति भावः। २. जन्मान्तरीयेत्यर्थः।

**द्वह्निज्ञानस्य विशेष्याऽवृत्त्यप्रकारकत्वाऽऽदौ पर्य्यवस्यति, स्वतः प्रामाण्य-निषेधे[1] प्राथमिकप्रामाण्यज्ञानस्याऽन्यथोपपादयितुमशक्यत्वादिति** संप्रदायविदः।

आलोकः

**प्रामाण्यमात्रमित्यत्र मात्रशब्देन विषयाऽऽदिव्यवच्छेदेनाऽन्वयित्वशङ्का निराकृता।**

**प्राग्भवीयसंस्कारोद्बोधको न जीवनाऽदृष्टादन्यो दृष्टचरः, तच्च तदा स्याद्यदि**

दर्पणः

मैवम्। उपनीतभानमादाय विशेष्याऽवृत्तिप्रकाराऽनवच्छिन्नज्ञानविषयो वह्नि-रित्यनुमितेर्विशेष्ये वह्नित्वप्रकारत्वसम्भवात्, एकदेशिनाऽनुमितावुपनीतभानाऽभ्यु-पगमे क्षत्यभावात्। न चाऽग्रिमव्यतिरेकिवैयर्थ्यम्, ज्ञानविशेषस्य वह्न्यवृत्तिप्रकाराऽन वच्छिन्नत्वसिद्ध्यर्थं तदादरात्, तेन विना निष्कम्पप्रवृत्त्यनुत्पत्तेः। इदमभिप्रेत्यैव टीकायामुक्तं—इदं वह्निज्ञानमिति', प्रकाराऽर्थं तदवतारात् इति च, ज्ञानविशेष-विशेष्यकप्रकाराऽर्थमित्यर्थः।

ननु **प्रामाण्यमिति**। अत्र च व्याख्यानेऽज्ञानाच्चेति मूले। अज्ञानात् अज्ञाप-कत्वादित्यर्थः। चकारश्च प्रामाण्यनिषेधेन इत्यनन्तरं योज्यः। यद्वा माऽस्तु स्वाऽर्था-नुमान इयं गतिः, परार्थाऽनुमाने तु स्यादेव इत्याशङ्क्य मूले—**प्रामाण्यमिति** प्रामाण्य-ज्ञानरहितस्य परस्य निषेधवाक्ये कर्त्तव्ये व्याघाताऽऽत्मकवाक्यविषयस्याऽभावस्याऽ-ज्ञानादित्यर्थः। वाक्यप्रयोगकर्त्राऽपि प्रामाण्याऽभावस्याऽज्ञानादिति यावत्। तथा च नाऽभावज्ञानेन प्रतियोगिज्ञानाऽऽद्यनुमानमिति भावः।

समुच्चयाऽर्थतामेव विवृणोति—न **परप्रतिषेधेनेति**। यदि च शब्दविधयैव परकीयं स्वकीयञ्च वाक्यं पूर्वाऽज्ञातमेव प्रामाण्यं अभावप्रतियोगितया बोधयेदिति पक्षस्तदा स्वस्याऽज्ञातप्रामाण्यस्याऽभिप्रायं विना तादृशशब्दोच्चारणाऽनियमादसार्व-

माथुरी

भावः। 'प्राग्भवीयेति जन्मान्तरीयेत्यर्थः, 'सर्व्वनामेति सामान्यतः सर्व्वविषयकस्मरण-सहकारेणेत्यर्थः। 'विशेष्यावृत्त्यप्रकारकत्वादौ' वन्ध्यवृत्त्यप्रकारकत्वादौ, आदिपदा-वह्नित्ववति वह्नित्वप्रकारत्वपरिग्रहः, 'स्वतः प्रामाण्येति प्रामाण्यस्य स्वतस्त्वनिषेधे इत्यर्थः, 'सम्प्रादयविद इति, अत्रेदमस्वरसबीजं विशेष्यत्वस्य तद्वत्त्वस्य चैकस्याभावात् कथं सामन्यतः स्मरणम्। न च विशिष्यैव स्मरणीयं घटत्ववतीत्यादिप्रामाण्यस्य पूर्व्वजन्मन्यत्यनुभवादिति वाच्यम्। अपूर्व्वचैत्रत्वादिज्ञानप्रामाण्ये तथात्वासम्भवादिति।

१. प्रामाण्यस्य स्वतस्त्वनिषेधे इति भावः।

**वयन्तु ब्रूमः । प्रथममप्रामाण्याऽभाव एव प्रामाण्यं व्यतिरेकिणा**

आलोकः

तद्विना न जीवनमित्यपरितुष्यन्नप्रसिद्धसाध्यकोऽपि व्यतिरेकीति इतरभेदस्थले व्यवस्थापितमेकदेशिना, तन्मतमत्र सञ्चारयन्नाह—वयन्त्विति ।

ननु प्राथमिकप्रामाण्याऽभावाऽनुमानस्थले यदि साध्यसन्देहस्तदा कोटिप्रसिद्ध्यनुरोधेन जन्माऽन्तरीयसंस्काराऽपेक्षेति पूर्वकल्प एव सम्यक् किमनेन । यदि च न सन्देहस्तदा निःशङ्कादर्थनिश्चयादेव प्रवृत्तिरिति किं प्रामाण्याऽनुमानेनेत्युभयथाऽप्यसामञ्जस्यमिति ।

मैवम् । संशयो हि न प्रवृत्तिप्रतिबन्धको येन तदुच्छेदाऽर्थं प्रामाण्याऽनुमानम्, तदानीं संशयेनाऽर्थनिश्चयस्यैवोच्छेदेन हेत्वभावादेवाऽप्रवृत्त्युपपत्तेः, संशयपूर्वं प्रवृत्त्यापत्तेश्च । न वा साध्यसन्देहः पक्षता, व्याप्तिस्मृत्यादिना तन्नाशेऽनुमितिपूर्वक्षणे तदभावे-

दर्पणः

त्रिकत्वमेव दूषणं द्रष्टव्यम् । एतच्च सर्वमुपलक्षणम् । परकीयवाक्यश्रोत्रा प्रमात्वेन प्रतियोगित्वेन वा प्रमाऽनुमेया । तत्र नाद्योऽप्रसिद्धेः । न द्वितीयः, प्रमात्वप्रकारकव्यतिरेकिण्यनुपयोगादित्यपि दूषणं द्रष्टव्यम् ।

विषयाऽऽदीति । विषयविशेषाऽऽदीत्यर्थः, मूले–सर्वनाममहिम्नेति दृष्टान्ताऽर्थम् । तथा च यथा शाब्दबोधः सर्वनाममहिम्ना विशेषे पर्यवस्यति तथेत्यर्थः । यद्वा पक्षधर्मताया विशेषबोधनसामर्थ्यं सर्वनाममहिमपदेनोक्तमन्यथाऽनुमितौ तदनुपयोगादिति । प्राग्भवीयेत्युपलक्षणम् । देवदत्तत्ववति देवदत्तत्वप्रकारकत्वाऽऽदिप्राणाण्यस्थले प्राचीनसंस्कारो नाऽस्तीत्यपि बोध्यम् ।

सञ्चारयन्निति । तथा च विषयविशेषे सञ्चारस्य स्वकर्तृकत्वात् । वयमिति । निर्देश इति भावः । प्रामाऽण्याऽनुमानेन अप्रामाण्याऽभावाऽनुमानेन । एवमग्रेऽपि ।

ननु माऽस्तु प्रवृत्तिप्रतिबन्धकाऽप्रामाण्यतदभावकोटिकसंशयः, पक्षताघटकस्तु स्यादेव, तथा च पक्षताऽनुरोधेन पुनः संशयाभ्युपगमे जन्माऽन्तरीयसंस्काराऽपेक्षैवाऽगतेत्यत आह—न वेति ।

माथुरी

नन्वेतस्य सुग्रहत्वेऽपि प्रवृत्त्यौपयिकं प्रामण्यं दुर्ग्रहमेवेत्यत आह, 'तत एवेति अप्रामाऽण्यशङ्काविधूननस्य ततोऽपि भावादिति भावः'[1] । लाघात्तद्वतीत्यादिज्ञानं प्रवृत्तिहेतुरिति यो ब्रूयात्तं प्रति तुष्यन्त्विति[2] न्यायेनाह, 'तदेव वेति । ननु पक्षधर्मताबलादपि व्यापकतावच्छेदकावच्छिन्नमेव सिद्ध्यति तद्वतीनीत्यादिकं तु न तथा अप्रामाऽण्याभाव-प्रामाऽण्ययोर्भेदादित्यत आह, 'तदनन्तरमिति 'अर्थात्' व्यतिरेक्यनुमानात्;

१. अत्रापि भावादिति भाव इति ख० । २. तुष्यतु दुर्जन इति न्यायेनेत्यर्थः ।

**साध्यम्, तत एव निष्कम्पप्रवृत्तेरुपपत्तेः, तदेव वा सिध्यत् पक्षधर्मताबलेन तद्वति तत्प्रकारकत्वाऽदिकमादाय सिध्यति, तदनन्तरं अर्थाद्वा[1] सिध्यतीति**

आलोकः

**नाऽनुमित्यनुत्पादाऽऽपत्तेः। पक्षताहेतुत्वस्य सिद्धसाधनेऽनुमित्यनुत्पादेन सर्वसम्मतत्वात्। किन्तु उभयत्र तदुभययोग्यता। सा चाऽगृहीतप्रामाण्यज्ञानाऽसमानविषयत्वमेकत्रोद्देश्यसाध्यवत्वनिर्णयनिवर्त्त्यसंशयोत्पत्तिप्रतिबन्धकमानाऽभावरूपा।**

**अपरत्र संशय एव नाऽस्ति कुतः कोटिस्मृतिः कुतस्तरां च तदनुरोधेन प्राग्भवीयसंस्काराऽपेक्षा ?**

**वस्तुतस्तु नेह प्रामाण्याऽनुमानं प्रवृत्त्यर्थम्, प्रवृत्तिहेतुत्वस्यैव लिङ्गत्वात्। न च तद्योग्यतापरं, तदा तदग्रहात्। फलतस्तस्यैव साध्यत्वात्। न च तत एव निष्कम्पप्रवृत्तेरित्यनेन विरोधः, तस्य हि आहत्याऽनेन निष्कम्पप्रवृत्तिरिति नाऽर्थः, किन्त्वर्थनिश्चये जाते संशयादपि प्रवृत्तौ प्रवृत्तिहेतुत्वलिङ्गनिश्चये तेनाऽप्रामाण्याऽभावाऽनुमाने तदनन्तरमुत्तरोत्तराऽर्थनिश्चयेषु तदनुमानादेव निष्कम्पप्रवृत्त्युपपत्तेः, न तु प्रामाण्याऽनुमानपर्यन्तपर्येषणमिति तात्पर्यम्। न चाऽग्रिमसौकर्यार्थमिदमिति यदि फक्किकाऽर्थः, तदा तदनन्तरमित्यादिप्रकारेणोत्तरं प्रामाण्याऽनुमानसौकर्येऽपि कथमेतदुपन्यास इति**

दर्पणः

ननु पक्षताविरहात् कथमनुमित्यनुभवः ? तस्या अनुमितिं प्रति अजनकत्वादित्यत आह—**पक्षताहेतुत्वस्येति**। **उभयत्र** प्रतिबन्धेऽनुमितौ च। **उभययोग्यता** प्रामाण्यसंशययोग्यता साध्यसन्देहयोग्यता च। **अगृहीतप्रामाण्येति** अगृहीताऽप्रामाण्यविरोधीत्यर्थः। **एकत्र** प्रवृत्तिप्रतिबन्धे। **अपरत्राऽनुमितौ**। तथा च प्रामाण्यसंशयं विनाऽपि प्रवृत्तिप्रतिबन्धकप्रामाण्यसंशययोग्यतारूपस्याऽगृहीतप्रामाण्यज्ञानसमानविषयत्वस्य निरासाऽर्थमप्रामाण्याऽभावाऽनुमानमिति भावः। प्रवृत्तिसामान्ये प्रामाण्यसंशययोग्यतायाः प्रतिबन्धकत्वाऽसम्भवान्निष्कम्पप्रवृत्तौ कुत्रचिदप्रामाण्यसंशयनिरासद्वाराऽप्रामाण्याभावाऽनुमानस्योपयोग इत्याह—**वस्तुतस्त्विति**।

माथुरी

'अयमिति दाहसमर्थविशेष्यक इत्यर्थः, इदञ्च वह्नित्वभ्रमे अंशतो बाधवारणाय, वह्नावह्नित्वभ्रमे भागासिद्धिवारणाय 'वह्नित्वेनेति, 'अनुभवः' निश्चयात्मकोऽनुभवः, नातः अनिश्चये भागासिद्धिः, अनुभवत्वघटितत्वान्न हेतु-पक्षतावच्छेदकयोरभेदः। 'तदभाववतीति वह्नित्वाभाववद्विशेष्यकत्वावच्छिन्नवह्नित्वप्रकारकताश्रयो नेत्यर्थः, अवह्नीति अवह्निवृत्तिर्या वह्नित्वप्रकारता तदाश्रयो नेत्यर्थः, वृत्तित्वमवच्छेदकता-

१. ननूभयारोपसामग्री उभयारोप एको।

वक्ष्यते । तथा हि—अयं वह्नित्वेनाऽनुभवो न वह्नित्वाऽभाववति वह्नित्व-प्रकारकः, अवह्निवृत्तिप्रकारको न, विशेष्याऽवृत्तिप्रकारको न, वह्नित्व-

आलोकः

वाच्यं, तदनन्तरमर्थापत्त्यवतारस्याऽसार्वत्रिकत्वात्, क्वाचित्कत्वेनाऽपि प्रामाण्याऽनुमानस्याऽनभ्यासदशाऽऽपन्ने सम्भवेन तत्र प्रकारोपन्यासादिति । एतावताऽपि प्रामाण्यसाध्यकाऽनुमानाऽशक्यतायां स्वतोऽवेद्यं तदवेद्यमेव स्यादित्यनुशयादाह—तदेव वेति ।

ननु अनुमितेर्व्यापकताऽवच्छेदकप्रकारकत्वनियमेनाऽप्रामाण्याऽभावाऽनुमितौ कथं प्रामाण्यं विषयः ? न चाऽयमनियमः, तथा सत्यपि व्यापकताऽवच्छेदकाऽवच्छिन्न-विषयत्वस्य सर्वसम्मतत्वेन तद्दोषतादवस्थ्यात् । न चान्वयिन्येव तथा, व्यतिरेकिणि हेत्वभावव्याप्याऽभावप्रतियोगिविषयतानियमस्य तन्नियमस्थानीयत्वात् । न च पक्षता-घटकसन्देहे कोट्योरन्यतरबाधेऽन्यतरप्रकारकतानियमः । प्रागुक्तयुक्त्या सन्देहस्य तदघटकत्वात् । जन्माऽन्तरीयसंस्काराऽनपेक्षतया पृथक् कल्पाऽऽश्रयणे कोटिस्मृतेरुपपा-दयितुमशक्यत्वाच्च ! न च पक्षताघटकयोग्यताप्रतियोगिसन्देहकोट्योरन्यतरबाधे तथा नियमः, अज्ञातस्य प्रकारत्वाऽयोगादित्यस्वरसेनाऽऽह—तदनन्तरमिति ।

दर्पणः

कर्तृत्वस्य व्यापकताऽवच्छेदकत्वेऽपि एककर्तृकत्वप्रकारकाऽनुमितिदर्शनाद-नियममाशंक्याऽऽह—न चेति । एककर्तुरपि कर्तृत्वाऽऽलिङ्गितत्वमस्ति न तु प्रामाण्यस्याऽप्रामाण्याऽभावत्वाऽऽलिङ्गित्वमिति भावः । तथेति व्यापकताऽवच्छेद-काऽवच्छिन्नविषयत्वनियम इत्यर्थः ।

न च पक्षताघटकेति । यद्यपि साध्यसन्देहस्य पक्षताघटकत्वादप्रामाण्यतद-भावकोटिकः संशयस्तथा, न तु प्रामाण्यकोटिकः संशय इति शंकेयमनुपपन्ना, तथाऽपि केवलाऽन्वयित्वबोधेन साध्यसिद्धिनिवर्त्यसंशयत्वेन पक्षताघटकत्वात् प्रामाण्याऽप्रामाण्यसन्देहोऽपि तथेत्याशयः ।

प्रकारत्वाऽयोगादिति । यद्यपि अन्यतरप्रकारकतानियम इत्यस्याऽन्यतर-विषयकतानियम इत्यर्थोऽस्तु तथा चाऽप्रामाण्याऽभाववत् प्रामाण्यं विशेष्यमेवाऽस्तु,

माथुरी

सम्बन्धेन तथा चावह्न्यवच्छिन्नवह्नित्वप्रकारकताश्रयो नेति फलितार्थः । न तु यथाश्रुतं तत्प्रतियोगिनो वह्नित्वभ्रमत्वरूपत्वाभावात् प्रमुष्टतत्ताकवह्नित्वभ्रमाव्याप्तेः इदं जलमित्यादिबुद्धावतिव्याप्तेश्च । किञ्च यथाश्रुते बाध एव स्यात् अवह्निवृत्तिसत्ता-देरपि तत्र प्रकारत्वात् । न च विवक्षिते पूर्वाभेदः, वह्नित्वात्यन्ताभाव-वह्न्यन्यो-

**प्रकारकत्वे सति वह्न्यविशेष्यको न, वह्नित्वव्यधिकरणप्रकाराऽवच्छिन्नो न, वह्न्यवृत्तिप्रकारको न वा दाहसमर्थविषयकप्रयत्नजनकत्वे सति**

आलोकः

न वह्नित्वाऽभाववतीति वह्नित्वाऽभाववद्विशेष्यत्वं सप्तम्यर्थः। तथा च न वह्नित्वाभाववद्विशेष्यक इत्येव साध्यम्, तत्प्रसिद्धिश्च वह्निप्रमायामेव सुलभा, न तु यथाश्रुतं प्रकाराऽन्तर्भावेनैव साध्यम्, व्यर्थविशेषणत्वाऽऽपत्तेः, व्यतिरेकव्याप्तौ साध्याऽभावस्य व्याप्यकोटिप्रवेशेन साध्ये व्यर्थविशेषणत्वस्य वज्रलेपत्वात्। प्रकाराऽन्तर्भावेन साध्ये विशिष्टाऽभावरूपसाध्यसिद्धिरपि नाऽवह्न्यविषयकत्वमात्रसिद्धिरित्यग्रेतन[1] व्यतिरेकिहेतुसिद्ध्यर्थमन्तराऽनुमानाऽन्तरस्वीकाराऽऽपत्तेश्च। न च वह्नित्वप्रकारकत्वे निश्चिते विशिष्टाऽभावोऽपि विशेष्यविरहपर्यवसन्न इति वाच्यं, तत्पर्यवसन्नो हि तन्नियतः, न त्वन्यथा, व्यापकताऽवच्छेदकाऽऽद्यनवच्छिन्नत्वात्। एवमग्रेऽपि साध्यं वह्नित्वप्रकारकत्वे सति इत्यन्तशून्यमेव।

विशेष्याऽवृत्तीत्यत्र प्रकृतज्ञानविशेष्याऽवृत्तीति।

एवं सर्वत्राऽन्योन्याऽत्यन्ताऽभावभेदेन साध्यभेदो द्रष्टव्यः।

दाहेति। निश्चयत्वादिति।

दर्पणः

तथाऽपि तस्याऽखण्डत्वाऽभावाद्विशेषणीभूतस्य तद्वतीत्यादिभागस्याऽनुपस्थित्या विशेष्यताऽपि नेति भावः।

अर्थादिति मूले वक्ष्यमाणव्यतिरेकिविशेषादित्यर्थः।

अयं वह्नित्वेनेति मूलम्। वह्नित्वप्रकारकाऽनुभवमात्रस्य पक्षत्वे इह वह्नौ द्रव्यत्वमित्यादावंशतो बाधः तद्वारणाय अयमिति। अयं वह्निरित्याकारकोऽनुभवविशेष इत्यर्थः।

इत्येव साध्यमिति। यद्यपि वह्नित्वाऽभाववद्विशेष्यकत्वाऽभावे साध्यमपि नाऽप्रामाण्याऽभावाऽसिद्धिः, वह्निविशेष्यकगुञ्जात्वप्रकारकज्ञाने तस्य सत्त्वात्, तथाऽपि वह्नित्वप्रकारकाऽनुभवविशेषे तदभावोऽप्रामाण्याऽभावपर्य्यवसित इति भावः।

अवह्निवृत्तीत्यादिसाध्यानान्तत्त्वे हेतूनां च विवेकः शेषे करिष्यते।

अग्रेतनेति। वह्नित्वाऽभाववद्विशेष्यकत्वे सतीति विशेषणसिद्ध्यर्थमित्यर्थः।

माथुरी

न्याभावाभ्यां भेदात्। 'विशेष्यावृत्तीति स्वविशेष्यावृत्तीत्यर्थः। ननु स्वविशेष्यावृत्तिप्रकारकत्वं नाप्रामाण्यं वह्नि-गुञ्जयोर्गुञ्जा-वह्नी इति भ्रमे अव्याप्तेः। न च यत्कि-

1. 'अग्रिम' इति पाठान्तरम्। दर्पणपाठाऽनुरोधेन 'अग्रेतन' इति पाठोऽत्र धृतः।

वह्नित्वप्रकारकनिश्चयत्वात्, दाहसमर्थविशेष्यकवह्नित्वप्रकारकवह्नित्वप्रकारकनिश्चयत्वाद्वा, यन्नैवं तन्नैवं तन्नैवं यथा वह्न्यप्रमा ।

आलोकः

वह्निभ्रमजलाऽऽदिप्रमयोर्व्यभिचारीत्यत उक्तम्—दाहसमर्थेति ।

दाहसमर्थविषयकप्रयत्नजनकत्वमात्रमत्र वह्नित्वमिति निश्चये वन्हिप्रवर्त्तके व्यभिचारीति वह्नित्वप्रकारकेत्युक्तम् ।

निश्चयपदं च संशयाऽन्यज्ञानपरम् । संशयस्य च समानधर्मिकविरुद्धनानाप्रकारकज्ञानतया समानधर्मिकत्वाऽन्तर्भावेन व्यर्थविशेषणतया विरुद्धनानाप्रकारकज्ञानमात्रपरतया तदन्यज्ञानस्य निश्चयस्य चाऽविरुद्धप्रकारकधीपरता । तथा च भ्रमाऽभ्रमरूपवह्नित्वप्रकारकसमूहाऽऽलम्बने व्यभिचारवारणाय निश्चयपदम् । समूहाऽऽलम्बनेऽन्तत इदन्त्वप्रकारस्य विरुद्धस्याऽपि स्फुरणात्, यदि विरुद्धप्रकारकज्ञानाऽन्यत्वं, तदा वैयर्थ्यमेव न, विशिष्टाऽभावत्वात् ।

दर्पणः

न त्वन्यथेति । न तु तदनुमितावेव विषय इत्यर्थः । व्यापकेति । वह्नित्वाऽभाववद्विशेष्यकत्वाऽभावस्येति शेषः । अवच्छेदकाऽऽदीति पाठे व्यतिरेकिणि विषयतानियामकं व्याप्याभावत्वमादिशब्दाऽर्थः ।

वह्नित्वप्रकारकत्वे सतीति साध्येऽपि सत्यन्तं न विवक्षितमित्याह—एवमिति ।

वह्नित्वप्रकारत्वघटिताऽप्रामाण्याऽभावसिद्ध्यर्थमाह—प्रकृतेति स्वविशेष्याऽवृत्तिवह्नित्वप्रकारत्वस्य भ्रमे प्रसिद्धस्याऽभावः साध्य इत्यर्थः ।

ननु पञ्चमषष्ठयोरभेदः वह्नित्वव्यधिकरणशब्देनाऽपि वह्न्यवृत्तित्वस्यैव प्रतिपादनादित्यत आह—एवं सर्वत्रेति । यत्र पौनरुक्त्यशङ्का तत्रेत्यर्थः ।

अन्योऽन्येति । वह्निवृत्तित्वं द्विरूपम्, अग्रिमनञर्थो वेति भावः ।

वह्निभ्रमेति । वह्नित्वप्रकारकभ्रमेत्यर्थः । जलाऽऽदीति । यद्यपि वह्नित्वप्रकारकत्वेन सा वारिता, तथाऽप्यनेनाऽपि वार्य्यत इत्याशयः ।

नन्वत्र निश्चयपदं वह्निधर्मिकस्याऽयं वह्निर्वा गुञ्जापुञ्जो वेति संशयस्य वारणाय, तस्य च समानधर्मिकविरुद्धप्रकारकज्ञानाऽन्यज्ञानत्वमर्थः, तत्र चरमज्ञानपदं व्यर्थम् । न चाऽन्यत्वाऽन्तमेव विवक्षितमिति वाच्यम्, तथाऽपि आद्यभाग-

माथुरी

च्छित्स्वविशेष्यावृत्तिप्रकारकत्वं वक्तव्यमिति वाच्यम् । वह्निगुञ्जे इति समूहालम्बनप्रमायामतिव्याप्तेः प्रकृते बाधापत्तेश्च इदन्त्वांशे परिमाणत्वादेरपि प्रकारत्वात् ।

आलोकः

निश्चयत्वं जातिरव्याप्यवृत्तिरितिमतेऽयं हेतुरिति न वैयर्थ्याऽऽशङ्केति केचित् ।

वस्तुतस्तु अत्र वह्नित्वमिति ज्ञाने वह्नित्वाऽभाववद्विशेष्यके व्यभिचारो मा भून्माभूच्च फलज्ञानाऽऽदौ फलविशेष्यके व्यभिचार इति दाहसमर्थविषयकप्रयत्न-जनकत्वं वह्नित्वप्रकारकतया विशेषितम्, तत्र वह्नेः प्रकारतया विशिष्टाऽभावसत्त्वात् । केवलवह्नित्वप्रकारत्वे च हेतौ वह्निभ्रमे व्यभिचारः स्फुट एव । न चेह वह्नित्वमिति ज्ञानमप्रवर्त्तकमेव, इष्टताऽवच्छेदकधर्माऽप्रकारकत्वादिति वाच्यम्, इष्टताऽवच्छेदक-प्रवृत्तिविषयवैशिष्ट्याऽवगाहिज्ञानस्यैव लाघवेन प्रवर्त्तकत्वात् । न तु तद्विशिष्टेष्टताऽ-वच्छेदप्रकारकज्ञानस्येत्यलमनेन ।

दर्पणः

वैयर्थ्यात् । स्वरूपाऽसिद्धत्वेऽपि तद्वारकविशेषणाऽऽद्यौचित्यात् । किञ्च तादृशसंशये साध्यसत्त्वात् किञ्चिदपि तद्वारणाय न देयमित्याशङ्क्याऽऽह—निश्चयपदमिति ।

व्यर्थविशेषणतयेति । आयासगौरवाऽऽपत्येत्यर्थः, विशिष्टाऽभावे व्यर्थत्वाऽ-सम्भवात् । इदञ्च वस्तुगतिमभिप्रेत्य तद्विशेषणेऽपि प्रकृते क्षत्यभावादिति । विरुद्धाऽप्रकारकधीपरता परस्परविरुद्धप्रकारकभिन्नप्रत्यक्षपरतेत्यर्थः ।

तथा चेति । भिन्नत्वाऽन्तं समूहाऽलम्बनवारणायेत्यर्थः । तत्र च विशिष्टाऽ-भावतया नाऽद्यभागवैर्थ्यम् । स्मरणस्य प्रवर्तकत्वमते तादृशसमूहाऽऽलम्बनरूप-स्मरणे भ्रमांऽशे प्रमुष्टतत्ताके व्यभिचारवारणाय प्रत्यक्षपदम् । प्रत्यक्षे च नेदन्तामोष इति भावः । इदन्त्वप्रकारविरोधस्येति क्वचित्पाठः । तदा विरुद्ध्यत इति विरोधो विरुद्धम् । तथा च इदन्त्वस्यैव प्रकारविरुद्धस्य स्फुरणादित्यर्थः ।

ननु प्रत्यक्षत्वे हेतौ समानाधिकरण्येन विरुद्धप्रकारकाऽन्यत्वाऽपेक्षया सप्रकार-काऽन्यत्वं लघ्ववच्छेदकमुचितम् । यदि प्रत्यक्षत्वञ्च व्यर्थम् उपादानप्रत्यक्षत्वेन प्रवृत्तिहेतुतायां स्मरणस्याऽप्रवर्त्तकत्वादित्यरुचेराह—यदीति । न चाऽत्रापि सप्रकारकाऽन्यत्वमेव लघुहेतुरस्त्विति वाच्यम्, अवच्छेदकयोरेकधर्म्यंसमावेशादिति भावः । निश्चयत्वं जातिरिति । तथा च वह्निगुञ्जाऽपुञ्जयोरिमो वह्नी न वेति संशयवारणाय निश्चयत्वमिति भावः । एतच्च इमो वह्नी इति निश्चयस्याऽवारणे-नाऽव्याप्यवृत्तिजातिस्वीकारेऽपि सिद्धान्तेन चाऽयुक्तमित्यरुच्या किञ्चिदित्युक्तम् ।

निश्चयपदस्य व्यावर्त्याऽन्तरं वक्तुं पूर्वोक्तमेव युक्तिमनुवदति—वस्तुतस्त्वि-

माथुरी

न च वह्नौ वह्न्यवृत्तिप्रकारकत्वं विवक्षितमिति वाच्यम् । अस्यापि वह्नित्वप्रामाण्या-भावानात्मकत्वात् लोहितो वह्निरित्यत्रापि तत्सत्त्वात् वह्नित्वप्रकारकप्रवृत्त्युपयुक्तत्वेन

आलोकः

न चैवं निश्चयपदं व्यर्थम्, समूहाऽऽलम्बनेंऽशभेदप्रामाण्याऽनुमानस्याऽकर एव स्फुटत्वेन व्यभिचाराऽप्रसङ्गादिति वाच्यम्, वह्नौ वह्नित्वं न वेति संशये व्यभिचार-वारकत्वात्। तत्र हि वह्नित्वाऽभाववद्वह्नित्वं विशेष्यमिति साध्याऽभावः, वह्नित्वं प्रकारोऽपीति, दाहसमर्थविषयकप्रयत्नजनकत्वं वह्नित्वप्रकारकज्ञानत्वञ्चेति न हेत्व-

दर्पणः

त्यादिना न चैवं निश्चयेत्यतः प्राक्तनेन ग्रन्थेन। फलेति। इदं च फलविशेष्यक-ज्ञानस्य प्रवर्त्तकत्वपक्षे।

विशिष्टेति। वह्नित्वप्रकारकत्वविशिष्टस्य हेतोरभावसत्त्वादित्यर्थः। अंशेति। इदमुपलक्षणम्। विरुद्धाऽप्रकारकत्वेनैव वह्निभ्रमवारणे दाहेत्यादिवैयर्थ्यम्। न च प्रमुष्टतत्ताकभ्रमरूपस्मरणवारणाय तदिति वाच्यम्, प्रयत्नजनकत्वेनैव तद्वारणे दाहसमर्थांऽशवैयर्थ्यादित्यपि ज्ञेयम्।

तस्य दाहेति। इदञ्च दाहार्थिप्रयत्नमभिप्रेत्य आपातत उक्तम्। वस्तुतोऽग्रे वाच्येन वह्नित्वाऽभावविषयकत्वविशेषणेन एतद्वारणमिति ध्येयम्।

ननु इह वह्नित्वं नेति निश्चयवदिह वह्नित्वं न वेति संशयस्याऽपि दाह-समर्थप्रयत्नजनकत्वं न भविष्यतीत्यत आह—न च संशयोऽप्यप्रवर्त्तक इति।

अत इति। अत्र वह्नित्वमितिनिश्चयवारणाय वह्नित्वप्रकारकपदम्, अत्र वह्नित्वं न वेति संशयवारणाय निश्चयपदं यत इत्यर्थः।

न च भ्रमेऽपीति। यद्यपि वह्नितादात्म्याऽऽरोपे दाहसमर्थनिरूपितं वैशिष्ट्यं वह्नित्वे विषय एव, तथाऽपि तादात्म्येनेतराऽविशेषणदाहसमर्थनिरूपितसमवायो दाहसमर्थवैशिष्ट्यशब्देन विवक्षितः, तथा च तत्र दाहसमर्थस्य तादात्म्येनेतर-विशेषणत्वान्नोक्तदोषः दाहार्थीतिविशेषणाऽपेक्षया हेतुद्वये।

यद्वा द्वितीयहेतावेव व्यभिचारमाशङ्क्याह—न चेति। पर्वतो वह्नित्वाऽभाव इति। वह्न्यधिकरणे वह्नित्वाभाव इदंवृत्तिः। निर्णयत्वनियमाऽऽदीति। इदं च संशये धर्मिणो विशेष्यत्वं कोट्योः प्रकारत्वन्नियतमिति सिद्धान्तमनुसृत्योक्तम्।

वस्तुतोऽनुमितौ पर्वतो वह्निमान् पर्वते वह्निरिति द्वैरूप्यात् संशयेऽपि द्वैरूप्य-मेवोचितमिति नियमाच्चेति पाठे तस्य चेत्यन्वयः।

ननु वह्नित्वाऽभावाऽविषयकत्वं यदि निश्चयपदाऽर्थः तदा भ्रमाऽभ्रमरूपे वह्नौ

माथुरी

तदभावस्यैव च सिषाधयिषितत्वादिति चेत्। न। वह्न्यवृत्तिर्या वह्नित्वप्रकारिता

आलोकः

भावः। न चेह वह्नित्वं न वेति ज्ञाने न वह्नित्वं प्रकारः, वह्नौ वह्नित्वनिश्चयेन वह्नित्वं न वेति ज्ञानञ्च न भवत्येव, वह्नित्वविशिष्टत्वेनोपस्थिते तदभावसन्देहाभावादिति वाच्यम्, वह्नित्वं नेत्यस्यैव ज्ञानस्य वह्नित्वप्रकारकतया प्रथमप्रत्यय एव व्यभिचारात्, वह्नित्वाभावविशेष्यके ज्ञाने प्रतियोगिनो वह्नित्वस्य प्रकारत्वात्।

दर्पणः

इति समूहाऽऽलम्बने व्यभिचारतादवस्थ्यमित्यत आह—समूहेति। उक्तमिति। अंशभेदेन तत्राऽपि साध्यमस्त्येवेत्युक्तमित्यर्थः।

नन्वत्र वह्नित्वं न वेति संशयस्य च तेनैव वारणे निश्चयपदं व्यर्थमिति चेत्—अत्रोच्यते। (नन्वत्र वह्नित्वं न वेति संशयेऽभावांऽशे वह्नित्वप्रकारकेऽपि दाहसमर्थांऽशे वह्नित्वप्रकारत्वं नाऽस्ति, तच्चाऽवश्यं वाच्यम्, अन्यथाऽत्र वह्नित्वसम्बन्ध इति निश्चये इह वह्नित्वं वह्नित्वभिन्नधर्मवदितिप्रत्यये च व्यभिचारस्य वज्रलेपत्वाऽऽपत्तेः। तथा च वह्नित्वाऽभाव इदं वृत्तिरिति ज्ञानस्याऽत्र वह्नित्वं न वेति संशयस्य च तेनैव वारणे निश्चयपदं व्यर्थमिति चेत्—अत्रोच्यते[1]—) वह्नित्वाऽभावाऽविषयकशब्देन (वह्नित्वविशेषितदाहसमर्थाऽन्याऽविषयत्वस्य विवक्षितत्वादत्र सम्बन्धादेरेव तथाभूतस्य भानादिति[2]) वह्नित्वसाक्षाद्विशेषणकतया दाहसमर्थभिन्नविषयकादन्यत्वं विवक्षितमिति नोक्तदोषः।

तदिह संक्षेपः। वह्नित्वाऽभाववद्विशेष्यकत्वाऽभावः प्रथमसाध्याऽर्थः। वह्न्यविशेष्यकत्वाऽभावश्चतुर्थसाध्याऽर्थः। दाहसमर्थविषकप्रयत्नजनकत्वे सति वह्नित्वसाक्षाद्विशेषणतया दाहसमर्थभिन्नविषयकादन्यत्वं प्रथमहेत्वर्थः। तत्र च वह्निताादात्म्यभ्रमवारणाय दाहेत्यादितात्म्येनेतरविशेषणदाहसमर्थनिरूपितं समवायमवगाहते, वह्नित्वं प्रकारीकरोति, वह्नित्वसाक्षाद्विशेषणकतया दाहसमर्थभिन्नं नाऽवगाहते च यत्तत्त्वं द्वितोयहेत्वर्थः।

नन्वत्र वह्नौ रूपमित्यादिज्ञाने उक्तहेत्वोर्व्यभिचारः। किञ्च द्वितीयतृतीयपञ्चमषष्ठसाध्येष्वग्रे निर्वाच्येषु व्यर्थविशेषणतया नोक्तौ हेतू युज्येते इति चेत्—न, एतदस्वरसादेवाऽत्र दाहेत्यादिना खण्डितहेतरुपादनस्य करिष्यमाणत्वात्।

माथुरी

तद्वत्तेत्यर्थः। तदवृत्तिता च इहैतत्प्रकारकं ज्ञानमिति प्रतीतिसिद्धावच्छेदकतासम्बन्धेन बोध्येति दिक्।

---

१. इति 'क' पुस्तकपाठः। २. कोष्ठस्थपाठोऽधिकः कपुस्तके।

आलोकः

न चेह वह्नित्वं नेति निश्चये व्यभिचारतादवस्थ्यम्, तस्य दाहसमर्थविशेष्यकप्रयत्न-जनकत्वाऽभावेनैव हेत्वभावात्। न च संशयोऽप्यप्रवर्त्तक इति सम्भवति, येन निश्चय-पदम् अनर्थकं स्यात्। अत एवाऽग्रिमहेतावपि वह्नित्वप्रकारकनिश्चयपदयोः सार्थकता।

दर्पणः

वस्तुतस्तु प्रयत्नस्य व्यापार्यतया वह्निरिव साध्यतया वह्न्यादनक्रिया-[1] विषयः। तथा चेदन्त्वावगाहिवह्निप्रत्यक्षमिव वह्न्यादानमिष्टसाधनमित्यनुमितिरपि दाहसमर्थविषयकप्रत्यक्ष[2]हेतुरिति वस्तुस्थितिः। एवञ्च गुञ्जापुञ्जेऽयं वह्निरित्यत्र व्यभिचारात् दाहेति। अत्र च वह्नित्वमित्यादिप्रत्यक्षे व्यभिचारात् वह्नित्वेति। तदर्थंश्च विशेषणगततया इदन्त्वाप्रकारकत्वम्। तेनेह वह्नौ द्रव्यत्वमित्यादेरपि प्रत्य-क्षस्य निवारणम् अनुमितौ व्यभिचारात् निश्चयेति। तदर्थंश्च प्रत्यक्षत्वम्।

न चोपनीतभानात्मकेष्टसाधनताप्रत्यक्षे एवमपि व्यभिचार इति वाच्यम्, लौकिकप्रत्यक्षत्वस्य विवक्षितत्वात्। द्वितीयहेतौ तु इह वह्नौ द्रव्यत्वमित्यादौ व्यभि-चारात् दाहेति। न च तावदेवास्त्विति वाच्यम्, वह्नितादात्म्यारोपे वह्निः तादात्म्यप्रतियोगितया भासमानोऽपि संसर्गतया संसर्गप्रतियोगितया च न भासते। भासते चेति सर्वंजनीनम्। तदेव[3]चात्र विशेष्यमभिमतमिति तादृशभ्रमे व्यभिचारात् निश्चयेति तच्चैकस्मिन् धर्मिणि परस्परविरुद्धाप्रकारकपरम्। तादृश-भ्रमजनिते प्रमुष्टतत्ताके स्मरणे व्यभिचारात् वह्नित्वेति। तच्च विशेष्यनिष्ठासा-धारणधर्मप्रकारकपरम्।

यद्वा दाहेत्यादिना दाहसमर्थाप्रकारकत्वं यथाश्रुतमेव, वह्नित्वप्रकारकत्वं निश्चयेत्यनेन वह्नित्वविशेषणकतया दाहसमर्थभिन्नविषयकत्वं विवक्षितम्। तथा चेह वह्नौ द्रव्यत्वमित्यादौ व्यभिचारादाद्यम्। अयं घट इत्यादौ व्यभिचाराद् द्वितीयम्। गुञ्जपुञ्जे वह्निर्न वेत्यादिव्यभिचारात् तृतीयं विशेषणमिति दिक्।

अत्र केचित्। प्रवृत्तिविषयविशेष्यकमेव ज्ञानं प्रवर्त्तकम्। तथा च वह्निप्र-कारके भ्रमे व्यभिचारवारणाय दाहसमर्थेति। वह्निगुञ्जयोर्विपरीतसमूहालम्बने

माथुरी

'वह्न्यविशेष्यको नेति अवह्निविशेष्यको नेत्यर्थः। न तु यथाश्रुतम्, तत्प्रतियोगिनो वह्नित्वाप्रामाण्यानात्मकत्वात् वह्निगुञ्जयोर्गुञ्जा-वह्नी इति भ्रमा-

१. प्रयत्नहेतुरिति गपुस्तके।

२. व्यापारत्वेनेति शेषः।

३. संसर्गतया संसर्गप्रतियोगितया वा भासमानत्वे सति भासमानत्वमेवात्र विशेष्यमित्यर्थः।

आलोकः

न चेह वह्नित्वमितिज्ञानस्य प्रवर्त्तकतया भवतु प्रथमहेतावुक्तव्याख्यानसम्भवः, न च वह्नित्वमपि दाहसमर्थं येन तद्विशेष्यकप्रत्यये व्यभिचारप्रसङ्गेनोभयोः पदयोर्वैयर्थ्यं समर्थ्येतेति वाच्यम्, दाहसमर्थविशेष्यकत्वस्य दाहसमर्थवैशिष्ट्यविषयकत्वपरत्वात्। न च भ्रमेऽपि दाहसमर्थवैशिष्ट्यं वह्नित्वस्य विषयो येन व्यभिचारः स्यादिति सर्वं रमणीयम्।

दर्पणः

व्यभिचारवारणाय वह्नित्वप्रकारकेति। सति सप्तमीमहिम्ना दाहसमर्थविषयकप्रयत्नजनकतावच्छेदेन दाहसमर्थविशेष्यकत्वावच्छेदेन च वह्नित्वप्रकारकत्वलाभात्। न च गुञ्जवह्न्योर्वह्निः इति भ्रमाभ्रमरूपे समूहालम्बने व्यभिचार इति वाच्यम्, दाहसमर्थविषयकप्रयत्नमात्रजननानुकूलवह्नित्वप्रकारकत्ववन्निश्चयस्य दाहसमर्थमात्रविशेष्यकवह्नित्वप्रकारकत्ववन्निश्चयस्य च विवक्षितत्वात्। न च निश्चयपदवैयर्थ्यम्, प्रथमचतुर्थमात्रविशेष्यकवह्नित्वप्रकारकत्ववन्निश्चयस्य च विवक्षितत्वात्। न च निश्चयपदवैयर्थ्यम्, प्रथमचतुर्थसाध्ययोस्तदप्रवेशात्। वह्निविशेष्यकेऽयं वह्निर्गुञ्जा वेति संशयेऽवह्निवृत्तेर्विशेष्यावृत्तेर्वह्नित्वव्यधिकरणस्य वह्न्यवृत्तेश्च गुञ्जात्वस्य प्रकारतया साध्यचतुष्टयाभावेन तत्रैव निश्चयपदप्रवेशात्। प्रथमचतुर्थसाध्ययोरपि संशयव्यावृत्तिलाभाय निश्चयप्रकारीभवद्वह्नित्वाभाववद्विशेष्यको न निश्चयप्रकारीभवद्वह्नित्ववद्विशेष्यको नेत्यत्र पर्यवसाने वा निश्चयपदस्य सार्थकत्वात्। न चैकधर्मिकविरोधिनानाप्रकारकज्ञानान्यज्ञानत्वं निश्चयत्वम्, तत्र चाद्यभागश्चरमज्ञानशब्दश्च व्यर्थं इति वाच्यम्, विशिष्टाभावत्वाच्चरमज्ञानशब्दस्याप्रवेशाच्च।

यद्वा निश्चयत्वं जातिरेवेति न व्यर्थतेति वदन्ति। तत्र प्रथमचतुर्थयोस्तदप्रवेशादिति दूषयन्ति—एवञ्च सर्वत्रेति।

वह्निगुञ्जयोरित्यादिलाभादित्यन्तमनुवदति—यस्त्विति।

वह्निविशेष्यके इत्यादिप्रवेशादित्यन्तमनुवदति—निश्चयपदञ्चेति तत्र व्यधिकरणेति। तथा च वह्नित्वव्यधिकरणेत्यादिसाध्यस्य तत्राभाव इति भावः। इदमुप-

माथुरी

व्याप्तेः। न च प्रथमाभेदः, विशेषण-विशेष्यभावभेदेन भेदात्। 'वह्नित्वेति वह्नित्वानधिकरणे तत्प्रकारको नेत्यर्थः। न च प्रथमाभेदः, इहाधिकरणत्वाभावप्रवेशात्। 'वह्न्यवृत्तीति वह्न्यवृत्तिर्या वह्नित्वप्रकारता तद्वत्तेत्यर्थः। न च तृतीयाभेदः, वृत्तित्वात्यन्ताभाव-तदन्योभावभेदाभ्यां भेदादिति दिक्। 'दाहसमर्थेति दाहसमर्थतेजो-

आलोकः

न च वह्नौ पर्वतो वह्नित्वाभाव इदं वृत्तिरिति ज्ञाने व्यभिचारः, संशयो हि न भासमानविरोधिकोटिद्वयविषयकज्ञानमात्रम्, पीतः शङ्ख इत्यस्याऽपि तथात्वाऽऽपत्तेः, किन्तु एकत्र परस्पराऽभावविषयकज्ञानम्, अतोऽत्र निश्चयो वह्नित्वाऽभावाऽविषयकज्ञानमेवाऽभिमत इति न व्यभिचारस्तस्य तदभावगोचरत्वात् उक्तसंशये व्यभिचार-

दर्पणः

लक्षणम्। अपरसाध्यत्रयस्याप्यभावो द्रष्टव्यः। तत्र यथाश्रुतनिश्चयपदार्थमादाय शङ्कां निरस्यति—न चेति। दाहेत्यादिकमिति। प्रथमहेतौ दाहसमर्थविषयकप्रयत्नजनकत्वम्। द्वितीयहेतौ च दाहसमर्थविशेष्यत्वमित्यर्थः। प्रमुष्टेति। प्रमुष्टतत्ताके स्मरणरूपे प्रमुष्टेदन्ताके प्रत्यक्षरूपे वह्नित्वप्रकारके भ्रमे विशेष्यावृत्तिप्रकारको नेति साध्यासत्त्वादिति भावः।

अत्रावह्नीति वह्नित्वव्यधिकरणेति वह्न्यवृत्तीति-साध्यत्रयस्य प्रमुष्टतत्तेदन्ताकवह्निभ्रमे सत्त्वात् तत्र दाहेत्यादिकमनर्थकमेवेति स्फुटत्वात् उपेक्ष्य पूर्वोक्तं ग्रन्थविरोधं चास्त्वित्यादिनाऽदोषत्वेनाभ्युपेत्य तृतीयसाध्ये निश्चयपदं दूषयति—विशेष्यावृत्तीति। विशेष्यावृत्तिवह्नित्वप्रकारकत्वाभावस्य वह्निधर्मिकसंशये सत्त्वात्तद्वारणाय निश्चयपदं व्यर्थमित्यर्थः।

प्रकारान्तार्भावेनेति। त्वयैव वह्नित्वस्य प्रवेशादिति भावः। इदमुपलक्षणम्। अवह्निवृत्तीतिसाध्येऽपि इदन्ताख्येतिप्रकारविशेषणस्य द्रव्यभयं वह्निरित्यत्र व्यभिचारवारकस्यावश्यकत्वे उक्तसंशये साध्यसत्त्वेन निश्चयपदं व्यर्थमित्यपि ध्येयम्। यच्च भ्रमाभ्रमरूपसमूहालम्बनवारणाय वह्नित्वप्रकारकपदमिति यत्त्वित्यादिनाऽनूदितम्—तदयुक्तम्, अंशभेदेन साध्यसत्त्वादित्यपि द्रष्टव्यम्।

विशेष्यज्ञानस्येति। विशिष्टप्रत्यक्षस्येत्यर्थः। अभेदेति। अभेदविषयकत्वनियमेत्यर्थः। प्रमुष्टेति! तथा च दाहसमर्थविषयकेति व्यर्थम्, प्रयत्नजनकत्वेनैव तद्वारणादिति भावः।

माथुरी

विशेष्यकप्रवृत्तिजनकतांशे वह्नित्वप्रकारनिश्चयत्वादित्यर्थः। तेन वह्निगुञ्जयोर्गुञ्जावह्नी इति विपरीतभ्रमे दाहजनकेन्धनविशेष्यकवह्नित्वभ्रमे च न व्यभिचारः। न वा चन्द्रादितेजोविशेष्यकवह्नित्वभ्रमे व्यभिचारः। अत्र तादृशप्रयत्नफलोपधानं न सार्व्वत्रिकं दुर्ज्ञेयञ्च, अगृहीतप्रयत्नज्ञानकार्य्यकारणभावे तत्स्वरूपयोग्यत्वमपि स्वरूपयोग्यतावच्छेदकापरिचये दुर्ज्ञेयं गुरुतरञ्चेत्यतस्तदुपेक्ष्यहेत्वन्तरमाह, 'दाहसमर्थेति, अत्र प्रथमे साध्ये दाहसमर्थविशेष्यकत्वावच्छिन्नवह्नित्वप्रकारताकनिश्चयत्वादित्यर्थः, तेन

आलोकः

स्याऽप्युक्तक्रमेणैव निश्चयपदाद् व्यावृत्तेः, न तु यथाश्रुतनिश्चयपदात्। इह वह्नित्वं तदभावो वेत्याकार उक्तसंशयो हि वह्निवृत्तित्वाऽऽदिकोटिकः समूहाऽऽलम्बनाऽऽत्मा, तस्य धर्मिनिर्णयत्वनियमाच्च। समूहाऽऽलम्बनस्थले च व्यभिचारसम्भव इति पूर्वमुक्तमिति न काप्यनुपपत्तिः। एवं च सर्वत्र साध्ये। यथोक्तहेतुसमर्थने प्रथमचतुर्थपरित्यागेन निश्चयगर्भहेतूपादाने स्वीकारः कुसुमाञ्जलिप्रकाशविरोधादेव नोचितः। तत्र हि सिद्धवत्प्रथमसाध्य एव निश्चयगर्भहेतूपादानात्।

दर्पणः

निश्चयप्रकारीभवदित्यादि दूषयितुमनुवदति—यद्यपीति तत्कालीनेति। इदमुपलक्षणम्। स्वसमानविशेष्यकेत्यपि ज्ञेयम्। अन्यथा—वह्न्यन्तरगोचरवह्नित्वप्रकारकनिश्चयसमानकालोक्तसंशयाव्यावृत्तेरिति।

अप्रसिद्धेरिति[1]। तादृशप्रकारत्ववद्वह्नित्वस्येति शेषः। तथा च तदभावाप्रसिद्ध्या तद्घटितव्यभिचारवारणाय हेतौ निश्चयपदं व्यर्थमिति भावः। यद्यपि स्वसमानाधिकरणस्वसमानविशेष्यकनिश्चयप्रकारत्वविशेषितवह्नित्वस्य स्वकालेऽभावो यत्र तत्र तद्विशेष्यकत्वाभावस्य तादृशवह्नित्वतः स्वकाले यत्र ज्ञाने विशेष्यत्वं नास्ति तदन्यत्वस्य च साध्यत्वे नायं दोषः, तथापि स्वशब्देन निश्चयाभिधाने संशये साध्यमेवेति न तद्व्यावृत्तिः, स्वशब्दस्य समभिव्याहृतपरतया क्वचित्संशयपरत्वे क्वचिच्च निश्चयपरत्वेऽननुगमादनुमानप्रवृत्तिरिति दूषणं द्रष्टव्यम्। दाहसमर्थमात्रविशेष्यकवह्नित्वप्रकारकनिश्चयत्वे द्वितीयहेतौ मात्रपदेनैव विपरीतसमूहालम्बनवारणे वह्नित्वप्रकारकपदं व्यर्थमिति केचित्। दाहसमर्थविषयकप्रयत्नमात्रजननानुकूलवह्नित्वप्रकारकतावन्निश्चयत्वादित्यत्र वह्नी इति भ्रमाभ्रमरूपसमूहालम्बने गुञ्जांशे दैवाद्दुःखसाधनताग्रहाद् व्यभिचारः। दुःखसाधनताज्ञाने सति तदंशे प्रयत्नाभावादित्यन्ये।

पूर्वोक्तास्वरसात् खण्डितहेतूनालम्बते—अत्र दाहेति। विरुद्धाप्रकारकपरत्वादिति। विरुद्धाप्रकारकप्रत्यक्षपरत्वादित्यर्थः। तेन प्रमुष्टतत्ताकभ्रमरूपस्मृतौ

माथुरी

वह्नि-गुञ्जयोर्गुञ्जा-वह्नी इति ज्ञाने न व्यभिचारः। वह्न्यवह्न्योर्वह्नित्वज्ञाने व्यभिचारवारणाय 'निश्चयेति, निश्चयत्वञ्च दाहसमर्थासमर्थयोर्वह्नित्वप्रकारकान्यत्वमिति। एवं द्वितीयसाध्येपि। तृतीये च निश्चयत्वं नोपादेयं व्यर्थत्वात्। एवं षष्ठेपि। चतुर्थ-पञ्चमयोस्तु प्रथमवदित्यलं विस्तरेणेति। 'यदेवं तन्नैवमित्येव पाठः, वह्नित्वा-

1. अप्रसिद्धिरिति ग पुस्तके।

आलोकः

यत्तु वह्निगुञ्जयोर्वह्निगुञ्जे इति समूहालम्बने दाहसमर्थविषयकप्रयत्नजनके व्यभिचारवारणाय वह्नित्वप्रकारकपदम्, तेन वह्नित्वप्रकारकत्वपुरस्कारेण तादृशप्रयत्नजनकत्वरूपहेतुलाभात्। इयमेव चाग्रिमहेतावपि तत्पदप्रयोजनं दाहसमर्थे विशेष्ये तत्प्रकारकत्वलाभात्, निश्चयपदञ्च वह्निर्वा गुञ्जा वेति संशये व्यभिचारवारणाय, तत्र[1] व्यधिकरणप्रकारकत्वात्। न च वह्निरयं गुञ्जापुञ्जश्चेति समुच्चये व्यभिचारः, निश्चयपदस्य विरुद्धाप्रकारकज्ञानपरत्वात्। न च गुञ्जात्ववह्नित्वे परस्परविरुद्धे। न च विरुद्धाप्रकारकतयैव भ्रमवारणे दाहेत्यादिकमनर्थकम्, प्रमुष्टतत्तेदन्ताकवह्निभ्रमे व्यभिचारवारकत्वादिति।

तन्न। अस्तु प्रथमसाध्यं[2] विहाय निश्चयोपादाने ग्रन्थान्तरविरोधः विशेष्यावृत्तिप्रकारकत्वाभावस्य साध्यस्य वह्नित्वांशविशेषणविशेषितत्वेनात्रापि निश्चय-

दर्पणः

न व्यभिचारः। अत एवाग्रे विरुद्धाप्रकारकज्ञानेति वक्ष्यति। विरुद्धाप्रकारकप्रत्यक्षेति तदर्थः। अत्र वह्नित्वाभाववद्विशेष्यकत्वाभावे वह्नित्ववदविशेष्यकत्वाभावे च साध्ये दाहसमर्थविषयकप्रयत्नजनकप्रत्यक्षत्वमाद्यो हेतुः, प्रत्यक्षत्वाप्रवेशे इष्टसाधनतानुमितौ व्यभिचारात्। इतरविशेषणनिरूपितवह्नित्वप्रकारकविरुद्धप्रकारकभिन्नप्रत्यक्षत्वं द्वितीयो हेतुः, अनिरूपितेत्यन्तस्याप्रवेशे इह वह्नौ रूपमित्यादौ व्यभिचारात्। प्रत्यक्षत्वाप्रवेशे च प्रमुष्टतत्ताकभ्रमरूपस्मरणे व्यभिचारात्। दाहसमर्थविशेष्यकत्वं तृतीयो हेतुः। इतरविशेषणानिरूपितवह्नित्वप्रकारकविरुद्धप्रकारकत्वात्यन्ताभावप्रत्यक्षत्वं चतुर्थो हेतुः। तत्र च विशेषणकृत्यं द्वितीयहेताविव ज्ञेयम्।

ननु द्वितीयसाध्यस्य यथाश्रुतत्वेऽयं वह्निर्द्रव्यमित्यत्र व्यभिचारः, वह्निनवृत्तीति नञ्व्यत्यासे चरमाभ्यां सह पौनरुक्त्यम्, अनुष्णो वह्निरित्यत्र व्यभिचारश्च। इदन्ताख्येति प्रकारविशेषणे एतद्रूपवानयं वह्निरित्यत्र व्यभिचारः।

माथुरी

भाववति वह्नित्वप्रकारकत्वरूपप्रतियोगि-हेत्वभावयोरेव व्याप्तेरत्राभिमतत्वात् यन्नैवमिति पाठस्तु प्रामादिकः, साध्याप्रसिद्धौ तदभावाप्रसिद्धेरिति ध्येयम्।

---

१. दर्पणपाठानुरोधादत्र 'तस्य चे'ति स्थाने 'तत्र' इति पाठः स्वीकृतः।

२. प्रथमहेतुसाध्यमिति नपुस्तके। प्रथमे साध्ये हेतुमिति कपुस्तके।

तत्र[1] बाधानन्तरं स्मृत्युपनीते भ्रमे वह्नित्वाभाववति वह्नित्वेन

आलोकः

पदोपादानानुपपत्तेः तदुपादानस्य चावश्यकत्वात्, प्रकारान्तर्भावेन[2] प्रामाण्यस्यानुमेयत्वात्, तस्यैव प्रवृत्त्यौपयिकत्वात्। तद् वक्ष्यति—पृथिव्यांशे प्रमैवेति।

यत्तु प्रमुष्टेत्यादि, तदसत्, विशेष्यज्ञान[3]स्येदन्ताप्रमोषे प्रत्यभिज्ञाया अपि तथाभावापत्तौ अभेदोच्छेदापत्तेः। प्रमुष्टतत्ताकस्मरणस्य प्रवर्त्तकत्वे च भ्रमपूर्वजातस्मरणस्य प्रवर्त्तकतापत्तेः। यदपि निश्चयपदसार्थकत्वाय साध्ये निश्चयप्रकारीभवद्वह्नित्वाभाववतीत्यादि विवक्षणीयम्, तेन वह्निर्नवा वेति वह्निविशेष्यकसंशये दाहसमर्थविशेष्यकप्रयत्नजनके व्यभिचारवारणाय हेतौ निश्चयपदम्—

तन्न। पुरुषान्तरीयकालान्तरीयनिश्चयविषयतया वह्नित्वस्योक्तसंशये साध्याभावासत्त्वे व्यभिचाराप्रसङ्गात् तत्कालीनतत्पुरुषीयनिश्चयप्रकारकत्वविवक्षायां त्वप्रसिद्धेरिति संक्षेपः। अत्र दाहसमर्थविषयकप्रयत्नजनकत्वं वह्नित्वप्रकारकनिश्चयत्वञ्च हेतुद्वयम्। अत्र वह्नित्वमित्यादेर्वह्न्यप्रवर्त्तकत्वस्य वक्ष्यमाणत्वात्, निश्चयपदस्य विरुद्धाप्रकारकपरत्वाच्च, भ्रमस्य चान्योन्यविरुद्धेदंत्ववह्नित्वादिप्रकारकत्वात्। न चाग्रिमहेतौ हेतुभेदपक्षे द्वितीयाभेदः। विरुद्धाप्रकारकज्ञानविरुद्धप्रकारज्ञानान्यज्ञानत्वरूपार्थयोर्भेदादिति रहस्यम्।

दर्पणः

विशेष्यनिरूपितेदन्ताख्येति विशेषणे इहायं वह्नित्वसम्बन्ध इत्यत्र व्यभिचार इति चेत्—न, स्वजन्यप्रयत्नविषये क्वचिदवह्निवृत्तीदन्त्वाख्यप्रकारको नेति साध्यार्थत्वात्। तत्र दाहसमर्थविषयकप्रयत्नजनकत्वम्, वह्नित्वप्रकारकत्वे सति विरुद्धविरुद्धप्रकारकभिन्नत्वम्, दाहसमर्थविशेष्यकत्वम्, वह्नित्वप्रकारकत्वे सति विरुद्धप्रकारकत्वाभाववत्त्वञ्च हेतवः। एवमेव पञ्चमं षष्ठञ्च साध्यम्। एत एव च तयोर्हेतवः। विशेष्यावृत्तिवह्नित्वप्रकारको नेति च साध्यं तृतीयम्। तत्र च

माथुरी

ननु प्रामाण्यवदप्रामाण्यमपि प्रथमतो दुर्ज्ञेयमिति कथं तदभावोऽनुमेय इत्यत आह, 'तत्रेति 'तत्र' अप्रमायाम्, 'परिच्छिद्यते' इत्यन्वयः। 'बाधावतारेति विषयबाधनिश्चयानन्तरमित्यर्थः। 'स्मृत्युपनीत इति भ्रमे स्मृत्युपनीते सतीत्यर्थः। यत्र च मनसा न तज्ज्ञानं तत्राप्यनुमानादेव तज्ज्ञानमित्याह, 'मानानन्तरेण वेति। न चाप्रामाण्याप्रसिद्धौ कथमनुमानात् तद्ग्रह इति वाच्यम्। वह्नित्वप्रकारकत्वेन ज्ञानं पक्षीकृत्य वह्नित्वाभाववद्विशेष्यक-प्रवृत्तिजनकत्वहेतुना वह्नित्वाभाववद्विशेष्यकत्व-

१. अप्रमायामिति भावः।

२. 'प्रकारविशेषान्तर्भावेणे'ति पाठान्तरम्।

३. सविशेष्यकानुभवस्येति कपुस्तके।

मम ज्ञानं वृत्तमित्यप्रामाण्यं मनसैव परिच्छिद्यते मानान्तरेण वेति[1] सर्वसिद्धम्[2] । एवं वह्न्यप्रामाण्यां वह्नित्वाऽभाववति वह्नित्वप्रकारकत्वाऽऽदिसमर्थप्रवृत्तिजनकत्वाऽभावयोर्व्याप्तिग्रहेऽप्रामाण्यव्यापकहेत्वभावाऽभावरूपाद्धेतोरप्रामाण्याऽभावरूपं साध्यं सिध्यति । यद्व्यापकतया हेत्वभावो

आलोकः

सर्वत्र न मनसा स्मृतोपनयः, अन्यथा प्रामाण्येऽपि तथाभावापत्तेरित्यत आह—मानान्तरेण वेति ।

ननु साध्यप्रसिद्धिं विना तदभावाग्रहाद् व्यतिरेकव्याप्त्यग्रहे कथमेतदित्यत आह—यद्व्यापकतयेति । यस्य व्यापकतया हेत्वभावो गृहीतस्तदभावो हेतुना सिद्ध्यतीति प्रतियोगिप्रसिद्धिरेवाऽङ्गं न तु तदभावरूपसाध्यप्रसिद्धिरपीत्यर्थः ।

ननु यत्र दुःखाभाव एव सुखमिति ज्ञात्वा तद्व्यापकतया मुक्तत्वाऽभावो गृहीतस्तत्र मुक्तत्वेन सुखाऽभावानुमानं न स्यात्, वस्तुतो दुःखाभावव्यापकतया हेत्वभावग्रहादिति ।

दर्पणः

दाहसमर्थविषयकप्रयत्नजनकत्वम् इतरविशेषणानिरूपितवह्नित्वप्रकारकत्वे सति विरुद्धप्रकारकभिन्नप्रत्यक्षत्वं दाहसमर्थविशेष्यकत्वम् इतरविशेषणानिरूपितवह्नित्वप्रकारकत्वे सति विरुद्धप्रकारकत्वाभाववत्प्रत्यक्षत्वञ्च हेतवो ज्ञेयाः । अत्र चायं वह्निरित्यनुभवे इदन्ताघटितसाध्यानामप्यप्रामाण्याभावे पर्यवसानान्नोद्देश्यासिद्धिशङ्का तेष्विति दिक् ।

मानान्तरेण वेतीति । इदं ज्ञानं वह्नित्वाभाववद्विशेष्यकं विसम्वादिप्रवृत्तिजनकत्वादित्याद्यनुमानेन शब्देन वेत्यर्थः । यद्यपि शब्देन वाक्यार्थमर्यादया पूर्वाज्ञानानामप्रामाण्यं बोध्यते, अनुमाने तु यत्र ज्ञाने साध्यप्रसिद्धिः तत्रैव व्यतिरेक-

माथुरी

साधने अर्थादप्रामाण्यसिद्धेरिति भावः । 'सर्व्वसिद्धमिति, अप्रामाण्यस्य परतस्त्वे मीमांसकस्याप्यविवादादिति भावः । 'वह्नित्वप्रकारकत्वादीति प्रकृतसाध्याभावरूपेत्यर्थः । 'यद्व्यापकतयेति यत इत्यादिः । नन्वप्रामाण्यप्रसिद्धावपि तदभावरूपसाध्याप्रसिद्ध्या कथं व्याप्तिग्रह इत्यत आह, 'यत्र त्वभावे'ति भावभिन्नसाध्याभावेत्यर्थः, 'तां विनेति प्रतियोगिनः साध्यस्य ज्ञानं विना तदभावज्ञानासम्भवादिति भावः ।

---

१. मानान्तराद् वेति पाठान्तरम्

२. अप्रामाण्यस्य परतस्त्वे च मीमांसकस्याप्यविवादादिति भावः ।

गृहीतस्तदभाव एव हेतुना साध्यते । यत्र त्वभावस्य व्यापकता हेत्वभावस्य ज्ञायते तत्र साध्यप्रसिद्धिरङ्गं, तां विना[1] तदज्ञानात् ।

यत्र तु भावव्यापकता हेत्वभावस्य, तत्र न तदङ्गम्, तेन विनाऽपि व्यतिरेकव्याप्तेर्ग्रहात् । अत एवेतर[2]व्यापकता आकाशत्वाऽभावस्य गृही-

आलोकः

नैवम् । येन रूपेणोपस्थितं यं प्रति व्यापको हेत्वभावो गृहीतस्तदभावत्वेन तदभावो हेतुना[3] सिध्यतीति तत्सिद्धान्तादित्यनुमानपरिच्छेदे विवेचयिष्यामः ।

इतरेति । इतरतादात्म्येत्यर्थः । यथा चेतरतादात्म्यव्यापकाऽभावप्रतियोगिना हेतुना अन्योन्याऽभावः सिध्यति तथा च तादात्म्यं तदसाधारणधर्ममात्रम् । यथा चाऽन्योन्याऽभावस्याजानिकः संसर्गाऽभावभेदस्तत्सर्वमग्रे वक्ष्यामः ।

वस्तुतस्तु यदभावव्यापकतया यदभावो गृहीतः स तेन सिद्ध्यतीति नियमः । तेनेतरतादात्म्याऽभावाऽरूपत्वेऽपि इतराऽन्योन्याभावस्य इतराऽन्याऽभावाऽभावरूपे- तरतादात्म्यव्यापकाऽभावप्रतियोगिना हेतुनेतराऽन्योन्याऽभावसिद्धिरप्रत्यूहाऽप्रत्यूहा

दर्पणः

व्याप्तिग्रहसम्भवेऽस्य वैयर्थ्यम्, तथापि साध्यवसिद्ध्यधिकरणे यत्र प्रकृतहेतोरसत्त्वं न ज्ञातं तत्र तदनुमानमप्युपयुज्यत एवेति भावः ।

तद्व्यापकतया कालिकतद्व्यापकतया । न स्यादित्युपलक्षणम् । स्याच्च मुक्तत्वेन दुःखाऽनुमानमित्यपि द्रष्टव्यम् । यमित्यनन्तरं कञ्चिदिति शेषः ।

तदभावत्वेनेति । तद्धर्माऽवच्छिन्नाऽभावत्वेन तद्धर्मावच्छिन्नाऽभावः सिद्ध्यतीत्यर्थः । व्यधिकरणधर्मावऽच्छिन्नाऽभावपरतया वा इदं योज्यमिति केचित्—तन्न, सुखत्वाऽवच्छिन्नदुःखाऽभावाऽभावस्य केवलाऽन्वयितया व्यतिरेकित्वाऽयोगादिति ।

माथुरी

'भावव्यापकतेति भावरूपसाध्याभावेत्यर्थः । 'तेन विनाऽपीति, भावग्रहे प्रतियोगि- ज्ञानानुपयोगादितिभावः । 'इतरेति आकाशेतरेत्यर्थः, तादात्म्यसम्बन्धेनेति भावः । 'इतरान्योऽन्याभावः' आकाशेतरान्योऽन्याभावः, पृथिवीत्वादिहेतुस्थले प्रत्यक्षेणापि साध्यप्रसिद्धिसम्भवादाकाशत्वेनेत्युक्तम्, 'प्रामाण्यविशिष्टानुमितिः' अप्रामाण्याभाव- विशिष्टानुमितिः, 'न कथञ्चित् प्रथममित्यनन्तरं छेदः, 'प्रामाण्यम्' अप्रामाण्याभावः, 'अनुमित्यनन्तरं' साध्यविशेष्यकानुमित्यनन्तरं, 'तेनैव हेतुनेति पूर्वोक्तेनैव हेतुनेत्यर्थः,

---

१. प्रतियोगिनः साध्यस्य ज्ञानं विना तदभावज्ञानासम्भवादिति भावः ।

२. आकाशेतरेत्यर्थः ।

३. तत्वच्छिन्नाभावभावो हेतुनेत्यादि नपुस्तके ।

तेत्याकाशत्वेनाऽप्रसिद्ध एवेतराऽन्योन्याऽभावः सिध्यति। विशेषणज्ञानं विना कथं प्रामाण्यविशिष्टाऽनुमितिरिति चेत्—प्रथमं न कथञ्चित्। ज्ञाने प्रामाण्यमित्यनुमित्यनन्तरं तेनैव हेतुना तत्रैव प्रामाण्यविशिष्टाऽनुमितिः, अभावविशेष्यकप्रतीत्यनन्तरमभाववद्भूतलमिति ज्ञानवत्। एवञ्चेदं

आलोकः

च यत्रेतराऽन्योन्याऽभावाऽभावस्तत्र पृथिव्यन्योन्याभाव इति व्याप्त्यवगमेनाऽपि पृथिव्यन्योन्याऽभावाऽभावाऽऽत्मनाऽपि पृथिवीत्वेनेतराऽन्योन्याऽभावसिद्धिरिति सर्वं सुस्थम्।

ज्ञाने प्रामाण्यम्। ज्ञानेऽप्रमाण्याऽभाव इत्यर्थः।

प्रामाण्यविशिष्टाऽनुमितिरिति। अप्रामाण्याऽभावविशिष्टाऽनुमितिरित्यर्थः। अयञ्च प्रकारो व्यतिरेकिणि व्यतिरेकव्याप्त्यवगमस्य गमकत्वपक्षे नाऽन्यथेति वक्ष्यते।

ननु चरममपि कथं तद्विशिष्टाऽनुमितिः, प्रथममपि वा कुतो न तद्विशिष्टाऽनुमितिः, पक्षविशेष्यकपरामर्शस्य पक्षविशेषणकाऽनुमित्यजनकत्वात् कथमुक्ताऽनुमितिः, कुतो वा तेनैव हेतुनेति, मनसैव तथासम्भवादिति[1]।

दर्पणः

ननु द्रव्यत्वव्यापकतया संयोगाऽभावो गृहीत इति संयोगेन द्रव्यत्वाऽभावाऽनुमानाऽऽपत्तिः। न च हेत्वभावे प्रतियोगिव्यधिकरणत्वविशेषणान्नैष दोष इति वाच्यम्, विभागाऽभावं प्रति संयोगाऽऽभावस्य व्यापकत्वे गृहीतेऽपि तं प्रति प्रतियोगिव्यधिकरणस्य तस्य व्यापकत्वाऽग्रहात् संयोगेन विभागाऽननुमानाऽऽपत्तेरित्यत आह—इत्यनुमानपरिच्छेद इति। प्रतियोगिव्यधिकरणस्य यद्धर्माऽवच्छिन्नोपस्थितिकस्य यत्सम्बन्धाऽवच्छिन्नस्य व्यापकतया यद्धर्माऽवच्छिन्नस्याऽभावो यत्सम्बन्धाऽ-

माथुरी

'तत्रैव' 'प्रामाण्यविशिष्टेति अप्रामाण्याभावविशिष्टानुमितिरित्यर्थः, समानप्रकारकसिद्धेरजातत्वात् न सिद्धसाधनमिति भावः। 'तदेव वां सिद्ध्येदित्युक्तमुपपादयति, 'एवञ्चेति, 'तद्वतीति तद्वद्विशेष्यकं तदभाववद्विशेष्यकं वेत्यर्थः, 'उपसंहर्तुं' ज्ञातुम्, 'ज्ञाननित्यत्ववदिति यथा क्षितिर्ज्ञानजन्या कार्य्यत्वादितीश्वरानुमानेऽनित्यज्ञानबाधेन ज्ञानस्य नित्यत्वसिद्धिवदित्यर्थः।

नन्विदमयुक्तम् इदं वह्नित्वप्रकारकज्ञानं न वचित्वाभाववति वह्नित्वप्रकारकमित्यनुमितेर्वह्नित्ववति वह्नित्वप्रकारकत्वमविषयीकृत्यापि सम्भवति, किञ्च पक्ष-

१ ननु चरममपि कथं तद्विशिष्टानुमितिः। पक्षविशेष्यकपरामर्शस्य पक्षविशेषणकानुमित्यजनकत्वात्। कुतो वा तेनैव हेतुनेति मनसैव तथासम्भवादित्यादर्शतालपत्रपुस्तकधृतपाठः।

वह्नित्वप्रकारकज्ञानं तद्वति तदभाववति वेति संशयाऽनन्तरं तदभाववति तत्प्रकारकत्वव्यतिरेकः सिध्यन् तद्वति तत्प्रकारकतामादाय सिध्यति, तृतीयप्रकाराऽभावेन तेन विना साध्यस्योपसंहर्तुमशक्यत्वात्, ज्ञाननित्यत्ववत्[२] ।

आलोकः

मैवम् । साध्यप्रसिध्या विशेषणज्ञानेन चरमं प्रकारत्वसम्भवात्, न च प्रथमम्, अज्ञातस्य प्रकारत्वाऽयोगेन परामर्शाऽनुमित्योरेकत्रोपसर्ज्जनस्याऽपरत्राऽप्युपसर्ज्जनतानियमेन पक्षविशेषणकपरामर्शास्वीकारात् । तेनैव हेतुनेति चोपलक्षणम् । एवंविधाऽन्तरस्याऽबाधादिति[३] न किञ्चिदेतत् ।

वह्नित्ववद्विषयक[४]मिति । वह्नित्ववद्विशेष्यकमित्यर्थः । एवं हेतावपि । यथा च वह्नित्वाऽभाववद्विशेष्यकत्वाऽभावः प्रागनुमानात् सिद्धो न विशिष्टाऽभावस्तथोपपादितमधस्तात् ।

दर्पणः

वच्छिन्नप्रतियोगिताकः प्रतियोगिव्यधिकरणो गृहीतस्तत्सम्बन्धाऽवच्छिन्नतद्धर्माऽवच्छिन्नप्रतियोगिकाऽभावस्तत्सम्बन्धवता तद्धर्माऽवच्छिन्नेन तेन सिद्धयतीति निर्गलिते नोक्तदोषो न वा सम्बन्धभेदाऽऽदिकमादायाऽतिप्रसङ्ग इति भावः ।

ननु यथाश्रुतमितरेति मूलमसङ्गतम्, आकाशे इतरस्य शब्दाऽऽदेः सत्त्वेऽपि आकाशत्वाऽभावाऽभावात् । इतरशब्दस्येतरत्वपरत्वे तद्व्यापकतया आकाशत्वाऽभावग्रहेऽपि इतरत्वाऽत्यन्ताभावः सिद्धयेन्न त्वितराऽन्योन्याऽभाव इत्यत आह—इतरतावात्म्येत्यर्थ इति ।

माथुरी

धर्म्मताबलादपि व्यापकतावच्छेदकावच्छिन्नं पूर्व्वोपस्थितमेत्र सिद्धयति तद्वतीत्यादिप्रामाण्यन्तु नाप्रामाण्याभावत्वावच्छिन्नं न वा तेन रूपेण पूर्वोपस्थितमित्यस्वरसादाह, 'वह्नित्ववद्विषयकं' 'वह्नित्ववद्विशेष्यकं, 'वह्नित्वा'यद्वेति, 'इदं' दाहसमर्थविशेष्यकम्, तेन वह्नित्वाभाववदिति, वह्नित्वाभाववदविशेष्यकत्वे सति सविशेष्यकत्वादित्यर्थः, न वा निर्व्विकल्पके व्यभिचारः । नचात्र भाववतो वह्नित्वादेर्व्विषयत्वेऽपि नासिद्धिः,

---

१ ज्ञातुमित्यर्थः । २. यथा पृथिवीज्ञानजन्या, कार्यत्वादितीश्वरसिद्धयनुमानेऽनित्यज्ञानबाधेन ज्ञानस्य नित्यत्वसिद्धिस्तद्वदिति भावः ।

३. विधान्तराबाधान्तराबाधादिति आदर्शतालपत्रपुस्तकधृतः पाठः ।

४. विषयत्वमिति पाठान्तरम् ।

यद्वा इदं वह्नित्वप्रकारकज्ञानं वह्नित्ववद्विषयकम्, वह्नित्वाऽभाववदविषयकत्वे सति सविषयकत्वात्, यन्नैवं तन्नैवम्, यथा वह्न्यप्रमेति व्यतिरेक्यन्तरात्तत्सिद्धिः। अतिरिक्तविषयतापक्षे अयं वह्नित्वेनाऽनु-

आलोकः

नन्वत्र वह्नित्ववद्विशेष्यकत्वं साध्यमप्रसिद्धम्, किं बहुना सविशेष्यकत्वहेत्वसिद्धिरेव। ज्ञानग्राहिणा तदग्रहात्। अन्यथा प्रामाण्यस्य स्वतस्त्वाऽऽपत्तेः। न च ज्ञानाऽन्तरात् तत्सिद्धिः। तद्धि किञ्चिद्विशेष्यकत्वं वा वह्न्यवह्न्यन्यतरविशेष्यकत्वं वा। नाऽऽद्यः, मानाऽभावात्। नान्त्यः, तत एव। प्रामाण्याऽप्रामाण्याऽन्यतरावधारणप्रसङ्गाच्चेति।

मैवम्। जन्माऽन्तरीयसंस्कारवशादनुव्यवसायविशेषेण ज्ञानाऽन्तरोपस्थितौ वा सविशेष्यकत्वग्रहात्। न चैतावताऽपि साध्याऽप्रसिद्धिर्न परिहृतेति वाच्यम्, इदं सविशेष्यकं सप्रकारकत्वादिति सामान्यतो दृष्टेनाऽवह्निविशेष्यकत्वबाधसहकृतेनैव एतज्ज्ञानविशेष्यत्वं वह्निवृत्त्यवह्न्यवृत्तित्वे सति वृत्तिमत्त्वादित्यनेनाऽनुमानेन वा तत्सम्भवात्। न चैवं व्यतिरेकिवैयर्थ्यम्, प्रकारार्थं तदुपासनात्। न च द्वितीयाऽनुमानेन प्रकृतज्ञानविशेष्यत्वं वह्नौ गृहीतं न तु वह्नि[1]विशेष्यकत्वं ज्ञान इति वाच्यम्,

दर्पणः

ननु तादात्म्यव्यापकत्वे हेत्वभावस्य गृहीते कथमितराऽन्योन्याऽभावसिद्धिः, तावता तादात्म्यात्यऽन्ताभावस्यैव सिद्धिसम्भवादित्यत आह—यथा चेति। यस्य सम्बन्धिनो यत्सम्बन्धाऽवच्छिन्नस्य व्यापकतया हेत्वभावो गृहीत इत्यपेक्षया सम्बन्धव्यापकत्वस्य लघुतया गमकत्वेन तादात्म्यलक्षणसम्बन्धव्यापकतैवेतरव्यापकता, तया च तादात्म्यसम्बन्धाऽवच्छिन्नाऽभावः सिद्ध्यतीत्यर्थः।

ननु तादात्म्यं भेदाऽभेदरूपः सम्बन्धः। स चाऽप्रसिद्ध इत्यत आह—तथा चेति।

माथुरी

सत्यन्तदलमेवासिद्धं पूर्व्वोक्तानुमानाद्वह्नित्वाभाववति वह्नित्वप्रकारकत्वाभवरूपस्य विशिष्टाभावस्य सिद्धावपि वह्नित्वाभाववद्विशेष्यकत्वाभावासिद्धिरिति वाच्यम्। पूर्वोक्तविविष्टाभावानुमानानन्तरं वह्नित्वप्रकारकत्वे सतीति सत्यन्तदलसहकृतेन तेनैव हेतुना व ह्नित्वाभाववद्विशेष्यकत्वाभावस्यापि सिद्धेः। सविशेष्यकत्वज्ञानुव्यवसायादेव सिद्धं विशेष्यत्वादेरनुपस्थितस्यापि प्रकारतया प्रथमानुव्यवसायेऽपि तद्भाने बाधकाभावात् प्रथमानुव्यवसाये सविशेष्यकत्वस्य निर्व्विकल्पकोपस्थित्या द्वितीयानुव्यवसाये तस्य प्रकारतया भानसम्भवाच्च। न च तथापि वह्नित्ववद्विशेष्यकत्वं साध्यमप्रसिद्धमिति

१. ईदृशेति गपुस्तके।

आलोकः

समानवित्तिवेद्यत्वात् । न चैवमिदं ज्ञानं वह्नित्वविशेष्यकम्, वह्नित्वनिष्ठविशेष्यत्वप्रतियोगित्वादित्येव व्यतिरेक्यव्याकुल इति वाच्यम्, उपायस्योपायाऽन्तरादोषत्वादिति सर्वमवदातम् ।

अत्र वयं तु ब्रूमः । वह्नित्वाऽभाववद्विशेष्यकत्वाऽभावाऽनुमानपूर्वकमेव सर्वत्राऽनुमानमिति नोचितम्, किन्त्वयमपि क्वाचित्कः प्रकार इतीदमुपन्यस्तम् । तथा हि—वह्नित्वाऽभाववद्विशेष्यकत्वस्य प्रतियोगिनः किं मनसोपस्थितिरनुमानतो वा ? शब्दाऽऽदिस्तथाप्रसंगस्य तथाविषयनियमाऽऽदिना असार्वत्रिकत्वात् । आद्ये प्रत्यक्षेण योग्याऽनुपलब्ध्यैव तदभावो ज्ञायताम् । प्रतियोग्यधिकरणयोर्योग्यत्वादनुपलम्भसम्भवाच्च । किञ्च तस्य योग्यत्वे तद्वत्प्रामाण्यमपि योग्यमेव किमनया प्रणालिकया ? वह्नित्वाऽभाववत्त्वस्य बाधगम्यतया तदपेक्षया सम्वादगम्यतद्वत्त्वस्य सुग्रहत्वात् । तस्य च प्रकारस्याऽऽकर एवाऽग्रे सुप्रतिपादितत्वात् ।

दर्पणः

अत्र केचित्—इतरत्वाऽत्यन्ताभाव एव इतराऽन्योन्याभावः, इतरत्वम् इतराऽन्योन्याऽभावविरहरूपम् । अत एव इतराऽन्योन्याभावस्य इतरत्वविरहाऽऽत्मकत्वमावश्यकम् । यो यद्विरहरूपः स तद्विरहरूप एवेति व्याप्तेरित्याहुः । तत्राऽऽह—यथा चेति । समानाधिकरणव्यधिकरणनिषेधधीगम्यत्वेन इतरत्वाऽऽवच्छिन्नेतरज्ञानेतरत्वज्ञानाऽधीनज्ञानत्वेन अधिकरणयोग्यताप्रतियोगियोग्यताधीनसाक्षात्कारविषयतया स्वयमेव स्वीकारेण च तयोर्भेदोऽनुमानखण्डे वाच्य इत्यर्थः ।

ननु सर्वमिदमनुपपन्नम्, इतरत्वाऽत्यन्ताऽभाववत्त्वेतराऽन्योन्याऽभाववत्त्वरूपधर्माऽवच्छेदेन विरुद्धधर्माणामुपपत्तेः । यच्चोक्तं—'सम्बन्धाऽव्यापकत्वं लघ्वि'ति—

माथुरी

वाच्यम् । विशिष्टप्रामाण्यस्यैवानुव्यवसायाग्राह्यतया केवलवह्नित्ववद्विशेष्यकत्वस्याप्यनुव्यवसायेन ग्रहे बाधकाभावात् । नचैवमनुमानवैयर्थ्यमिति वाच्यम् । वह्नित्वप्रकारकत्वावच्छिन्नवह्नित्ववद्विशेष्यकत्वरूपविशिष्टप्रामाण्यसिद्ध्यर्थमनुमानस्यावश्यकत्वात् । नचैतदनुमानादपि न विशिष्टप्रामाण्यसिद्धिः वह्नित्ववद्विशेष्यकत्वस्यैव साध्यत्वादिति वाच्यम् । वह्नित्वप्रकारकत्वस्य पक्षतावच्छेदकतया तदपच्छिन्नतया वह्नित्ववद्विशेष्यकत्वसिद्ध्या वह्नित्वप्रकारकत्वावच्छिन्नवह्नित्ववद्विशेष्यकत्वरूपप्रामाण्यसिद्धेः । न च पक्षतावच्छेदकस्य स्वरूपसम्बन्धरूपावच्छेदकतया अनुमितिविषयत्वे मानाभावः व्यापकत्वरूपस्यैवावच्छेदकत्वस्य तद्विषयत्वोपगमादिति वाच्यम् । असति बाधनिश्चये स्वरूपसम्बन्धरूपावच्छिन्नतासम्बन्धेन पक्षतावच्छेदकस्यापि साध्ये प्रकारीभूय भानाभ्युपगमात् । अन्यथा मूलावच्छिन्नो वृक्षः कपिसंयोगी गन्धप्रागभावकालत्वच्छिन्नो घटो गन्धवानित्याद्यनुमितेर्भ्रमत्वानुपपत्तेरिति भावः ।

आलोकः

अपि च प्रामाण्यग्रहलिङ्गं दाहसमर्थविशेष्यकत्वमगृहीत्वा क्व प्रामाण्यग्रह-वार्ता तत्प्रकारश्चाऽग्रे प्रदर्शनीयः। तथा च तदवगमकाले वह्नित्ववद्विशेष्यकत्वं किं हस्तपिहितम्। प्रत्युत वह्नित्वस्य लघुत्वेन दाहसमर्थताऽवच्छेदकत्वेनोपजीव्यतया च प्राथमिकोपस्थितिरिति मानमेव प्राथमिकप्रामाण्यग्रह इत्येव ज्यायः, न त्वियं कल्पना, असार्वत्रिकत्वात्, उक्तक्रमेण हेतुग्रहपूर्वं प्रामाण्यग्रहे सिद्धसाधनाच्च।

वस्तुतस्तु प्रामाण्यग्रहोत्तरमप्यर्थविशेष्यकव्यवसायाऽनन्तरं प्रवृत्त्यर्थमास्थेयम्। तथा च स एव प्रामाण्यग्रहः, अत एव संवादेन प्रामाण्यं गृह्यत इति सिद्धान्तप्रवादः। न चाऽर्थनिश्चयस्य न प्रामाण्यनिश्चयत्वं ज्ञानाऽगोचरत्वादिति वाच्यम्, व्यवसायाऽनन्तरमनुव्यवसायोपनीतघटत्वप्रकारकज्ञानविषयत्वविशिष्टस्याऽर्थस्य द्वितीयनिश्चय-

दर्पणः

तदपि न। सम्बन्धिविशेषितसम्बन्धव्यापकतायामुच्यमानायां सम्बन्धिसम्बन्धोभय-प्रवेशस्योभयत्र तुल्यत्वाद्विशेषस्याऽभावमात्रविपरिवर्त्तनात्।

अत्रोच्यते—पृथ्वीतरत्वस्याऽभावतया पृथिवीतरस्य भावतया तदत्यन्ताऽभावतदन्योन्याऽभावयोर्भावाऽऽत्मकयोः कथमैक्यम्? सामान्याऽभावव्यवस्थापनाऽवसरे स्वयमेव भावाऽभावकरम्बितवस्त्वापातादिति वक्ष्यमाणत्वात्।

किञ्चैतद्घटप्रागभावाऽऽदीनामारोप्यसम्बन्धभेदेन विशेषाऽभावसामान्याऽभावयोश्च प्रतियोगितावच्छेदकभेदेन भेदव्यवस्थितौ आरोप्यसम्बन्धभेदवतोः प्रतियोगिताऽवच्छेदवतोश्चानयोः कथमैक्यमिति। सम्बन्धं प्रति व्यापकता तु बाधकाऽभावमात्रादुक्ता, तादात्म्याऽवच्छिन्नेतरव्यापकताऽप्यत्र द्रष्टव्या। यदभावव्यापकतया यदीयाऽभावं प्रति व्यापकतयेत्यर्थः। यदभावो[1]योऽभावो यस्येति बहुव्रीहिः। तेन यत्प्रतियोगीत्यर्थः।

माथुरी

अन्ये तु वह्नित्वप्रकारकत्वमेव पक्षीकृत्यावच्छिन्नतासम्बन्धेन वह्नित्ववद्विशेष्यकत्वं साधनीयं हेतुश्च दाहसमर्थविशेष्यकत्वावच्छिन्नवह्नित्वप्रकारितात्वं, वह्नित्वभ्रमस्य वह्नित्वप्रकारित्वं व्यतिरेके दृष्टान्तः, तदनन्तरञ्च इदं वह्निज्ञानं वह्नित्ववद्विशेष्यकत्वावच्छिन्न-व ह्नित्वप्रकारकत्ववत् दाहसमर्थव ह्नित्वप्रकारकत्वात् यन्नैवं 'तन्नैव' यथा वह्नित्वभ्रम इति ज्ञानविशेष्यकप्रामाण्यज्ञानमित्याहुः।

'अतिरिक्तविषयतापक्ष इति विषयता विशेष्यवृत्तिरतिरिक्तः पदार्थः सैव च

१. 'यदभवो यदभावकभावः' इति कपुस्तकपाठः।

भवोऽवह्निवृत्तिवह्नित्वप्रकारकविषयताको न, वह्नित्वोऽसमानाधिकरण-वह्नित्वप्रकारकविषयताको न, विषयताश्रयाऽवृत्तिप्रकारो न वेति साध्यम्, वह्निवृत्तिवह्नित्वप्रकारकविषयताकत्वं विषयताश्रयवृत्तिप्रकारकत्वं

आलोकः

विषयतया प्रामाण्यनिश्चयत्वसम्भवात्। प्रामाण्यनिश्चयाऽनुरोधेनाऽपि द्वितीयप्रवर्त्त-काऽर्थनिश्चयपूर्वं प्रथमाऽर्थनिश्चयाऽनुव्यवसायस्य स्वीकारात्। न चोपनीतभानेऽपि घटविशेष्यत्वं नोपस्थितमिति वाच्यम्, अयं घटो वस्तुत एतर्हि घटत्वप्रकारकं ज्ञान-मित्येतावत एव प्रामाण्यग्रहत्वात्। न चैतावताऽपि घटविशेष्यकस्तद्ग्रहोऽस्तु, न तु ज्ञानविशेष्यकं प्रामाण्यविशेषणकं वा ज्ञानमिति वाच्यम्, तावद्दूरस्याऽनपेक्षितत्वात्। कथमप्यपेक्षणे वा मानसतादृशप्रत्ययस्योत्तरकालसुलभत्वात्। न चैवं सर्वत्र प्रामाण्यस्य मनोवेद्यत्वे प्रथमतो व्यतिरेकिणा चरमं तज्जातीयत्वेनाऽन्वयिना प्रामाण्य-ग्रह इति ग्रन्थविरोध इति वाच्यम्, सर्वत्रैवमुपनयनियमाऽभावेन सर्वसामञ्जस्यात्।

ननु अस्तु प्रामाण्यमनुमानोपस्थितमिति द्वितीयः कल्प इति—

दर्पणः

अत्र वदन्ति—नन्वेवं पृथिवीतरत्वव्यापकतया गन्धाऽभावग्रहे गन्धेन पृथि-वीत्वाऽनुमाने पृथिवीत्वस्य गन्धव्यापकत्वग्रहे पृथिव्यन्योन्याभावेन गन्धाभावाऽनुमाने चोक्तनियामकस्याऽसम्भव इति।

अत्रोच्यते—यदभावव्यापकतयेत्यस्य प्रतियोग्यनुयोगिभावलक्षणसम्बन्धवतो-यद्विरोधिनो व्यापकतयेत्यर्थः[1]। यदभाव इत्यस्य च प्रतियोग्यनुयोगिभावलक्षण-सम्बन्धवान् यद्विरोधीत्यर्थः। तथा च व्याप्याऽभावरूपस्य व्याप्यप्रतियोगिनश्च हेतोः संग्रह इति क्वाऽपि नाऽव्याप्तिरिति। विधाऽन्तरं प्रकाराऽन्तरम्[2]।

माथुरी

सप्रकारिका सविशेष्यिका च न तु ज्ञानं सविशेष्यिका सप्रकारिका वेति मत इत्यर्थः। 'अयमिति दाहसमर्थवृत्तिर्या वह्नित्वप्रकारकविषयता तन्निरूपकोऽनुभव इत्यर्थः,

---

१. एवं यत्र पृथिवीभेदस्तत्रगन्धाभाव इति व्याप्तिग्रहे इयं पृथिवी गन्धवत्त्वादित्यनु-मानं न स्यात्। नहि पृथिव्यन्योन्याभावः पृथिवीत्वाभाव इति। मैवम्। यदभावव्यापकतये-त्यत्र यद्विरोध्यभावव्यापकतयेत्यर्थः। भवति च पृथिवीत्वविरोधी पृथिव्यन्योन्याभावोऽपीति प्रतियोग्यनुयोग्यन्यतरसम्बन्धवत एव तद्विरोधित्वादिति।

२. विधान्तरमपि हेत्वन्तररूपं मनोरूपञ्च। तत्राद्ये यथापरामर्शव्यवस्था, अन्त्ये तु सति परामर्शेऽनुमितिरेव। मानसज्ञानसामग्रीतस्तत्सामग्र्या बलवत्त्वाद् असति तु मनसेति व्यवस्थेति।

**वा अर्थात् सिध्यति, न तु प्रथमम्, साध्याऽप्रसिद्धेः। वह्निभ्रमे च विषयताऽऽश्रयो न वह्निः, विषयताया विशेष्यवृत्तित्वादिति भ्रमत्वेन न सिद्धसाधनम्।**

आलोकः

नैवम्, तथा सत्यन्योन्याऽऽश्रयाऽऽपत्तेः। तथा हि—वह्निज्ञानस्योक्तक्रमेण तद्वह्नित्वाऽभाववद्विशेष्यत्वाऽभावाऽनुमानं वह्नित्वाऽभाववति तज्ज्ञानस्य तूक्तरीत्या वह्निविशेष्यकत्वाऽभावरूपाऽप्रामाण्याऽनुमानं ततस्तदनुमानम्। अन्यथा वह्नित्वाऽभाववद्विशेष्यकत्वमेव नोपस्थितं कुतस्तदभावप्रत्ययव्याप्तिबोधाऽऽदिः? तथा च वह्नित्वाऽभाववद्विशेष्यकत्वे ज्ञाते तदभावाऽनुमानपूर्वकाऽर्थापत्त्या वह्निविशेष्यकत्वसिद्धिः, वह्निविशेष्यकत्वे च ज्ञाते तदभावाऽनुमानपूर्वकाऽर्थापत्त्या वह्नित्वाऽ-

दर्पणः

तादात्म्यभ्रमव्यावृत्त्यर्थमाह—वह्नित्ववद्विशेष्यकमिति।

एवं हेतावपीति। यथाश्रुते वह्नित्वाऽभाववतो वह्नित्वादेर्विषयत्वेन स्वरूपाऽसिद्ध्यापत्त्या वह्नित्वाऽभाववद्विशेष्यकत्वाऽभावे सतीत्यर्थः। निर्विकल्पकाऽऽदौ व्यभिचाराच्च सविषयकत्वस्य सविशेष्यकत्वमर्थः विशिष्टाऽऽभावतया चा[1]-वैयर्थ्यमिति भावः।

विशेषणाऽसिद्धिं परिहरति—यथा चेति। अन्यथा प्रामाण्यस्येति। विशेष्यत्वाऽऽशं विहायाऽन्येषां भागानां स्वतो ग्रहे बाधकाऽसम्भवादि[2]त्युक्तत्वादिति।

तद्धीति फक्किकाऽनन्तरं गृह्णीयादिति शेषः। मानाऽभावादिति। किञ्चिद्विशेष्यकत्वग्राहिज्ञानेनोत्पादकाऽभावादित्यर्थः। तत एवेति। वह्निविशेष्यकत्वग्राहिज्ञाने अवह्निविशेष्यकत्वग्राहिज्ञाने चोत्पादकाऽभावादित्यर्थः।

अग्रिमपक्षद्वये दोषाऽन्तरमाह—प्रामाण्येति। जन्मेति। जन्माऽन्तरीयसंस्कारेण स्मृतं सविशेष्यकत्वमनुव्यवसायेन प्रकृतज्ञाननिष्ठतया गृह्यते।

यद्वा स्मृत्यादिनोपस्थिप्रकृतज्ञाने स्मृत्युपस्थितसविशेष्यकत्वं मनसा सप्रकारकत्वेन लिङ्गेन वा परिच्छिद्यत इत्यर्थः। व्यापकताऽवच्छेदकाऽनाक्रान्तस्य नाऽनु-

माथुरी

वह्नित्वभ्रमेऽशंतो बाधवारणाय वृत्त्यन्तं विषयताविशेषणम्, वह्नावह्निभ्रमे भागासिद्धि वारणाय 'वह्नित्वप्रकारकेति तद्विशेषणमिति भावः। अवह्नीति, वह्निभिन्नवृत्तिर्या वह्नित्वप्रकारकविषयता तन्निरूपकेणेत्यर्थः, वह्नि-गुञ्जे इति प्रमायां व्यभि-

१. कपुस्तके 'च' नास्ति। २. बाधकाभावादिति गपुस्तके।

अन्ये तु वह्निभ्रमे या विशेषणवृत्तिविषयता सा विशेष्यवृत्तिविषयता अभिन्नेति न सा वह्नित्वाऽसामानाधिकरणधर्म्माऽनवच्छिन्नेति न सिद्धसाधनमिति।

न च मणिज्ञानस्य प्रामाण्याऽनुमाने[1] मणिप्रभायां मणिभ्रमेण प्रवृत्तस्य मणिप्राप्तौ[2] मणिगोचरप्रयत्नजनकमणित्वप्रकारकनिश्चयत्वमनै-

आलोकः

त्यन्ताऽभाववद्विशेष्यकत्वसिद्धिरिति व्यक्तमन्योन्याऽऽश्रय इति नैष प्रकारः, किन्तु कदाचिदयमपीत्युक्तमिति युक्तमुत्पश्यामः।

किञ्चोक्ताऽप्रामाण्याऽभावाऽनुमानाऽनन्तरं प्रामाण्याऽनुमानमपि साध्याऽप्रसिद्ध्यादिना दुर्लभमित्युक्तम्। तथा च तल्लाभाय कथितप्रकारानुसरणमेव रमणीयमिति किं प्राथमिकाऽप्रामाण्याऽभावाऽनुमानेनेति नाऽयं पन्थाः। अपूर्वव्यक्तिगोचरज्ञानप्रामाण्यस्य पूर्वमननुभवात् स्मरणाऽसम्भवेनैतस्य प्रकारस्य अवश्याऽश्रयणीयत्वमिति वृद्धैः परिशीलितः पन्थाः।

दर्पणः

मितिविषयत्वमित्यरुचेराह—एतज्ज्ञानविशेष्यत्वमिति। वह्नित्वाऽभाववद्विशेष्यकत्वप्रसिद्ध्या वह्न्यभाव[3]वद्विशेष्यकत्वाभावमनुव्यवसाये च वह्नित्ववद्विशेष्यकत्वमनुमेयमेवेति नियमद्वयं नाऽस्ति, किन्तु कदाचिदियमपि रीतिः सम्भवतीति मणिकृतोऽभिसन्धिरिति।

वयन्तु ब्रूम इत्यादेः पन्था इत्यन्तस्य प्रघट्टकस्याऽर्थः पूर्ववदेव। सर्वत्रेति। प्रामाण्याऽनुमानस्याऽप्रामाण्याऽभावाऽनुमानपूर्वकत्वनियमः सार्वत्रिकत्वञ्च न युक्तमित्यर्थः।

माथुरी

चारवारणाय 'वह्नित्वप्रकारकेति विषयताविशेषणं, हेतुश्च दाहसमर्थवृत्तिवह्नित्वप्रकारकविषयताकनिश्चयत्वं निश्चयत्वञ्च दाहसमर्थासमर्थोभयवृत्तिवह्नित्वप्रकारकविषयताकान्यत्वं तेन वह्न्यवह्न्योर्व्वह्नित्वज्ञाने न व्यभिचारः। पक्षेऽप्यनुभवपदमेतादृशनिश्चयपरं तेन तादृशवह्नित्वज्ञाने न भागासिद्धि-बाधौ।

---

१. मणिगोचरप्रयत्नजनकत्वे सति मणित्वप्रकारकनिश्चयत्वेन हेतुना प्रामाण्यानुभवो इति भावः।

२. मणिप्राप्तिस्थले इति यावत्।

३. वह्नित्वाभाववद्विशेष्यकत्वेति गपुस्तकपाठः।

कान्तिकमिति[1] वाच्यम्, मणिप्रभाविषयज्ञानेन भिन्नविषयतया मणिगोचरप्रयत्नाऽनुत्पादात्, मणिप्राप्तिस्तु नाऽन्तरीयकत्वात्[2] । ज्ञानप्रयत्नयोरसमानकालत्वेऽप्यनुभवस्मरणयोरिव मनसा कार्यकारणभावग्रह इति नाऽसिद्धिः । अभावसाध्यके च निर्विकल्पकस्य प्रथमं सपक्षत्वेनाऽनिश्च-

आलोकः

विशेष्यविशेषणयोरुभयोरपि एकविषयताऽभ्युपगमपक्षेऽपि वह्नित्वाऽसमानाधिकरणधर्माऽनवच्छिन्नत्वं विषयताया अंशभेदेनैव वाच्यम्, अन्यथा वह्निभ्रमायामपि साध्यबाधाऽऽपत्तेः । अत्राऽपि वह्नित्वविशेषणवृत्तितया विषयतायास्तद्वृत्तिवह्नित्वाऽसमानाऽधिकरणवह्नित्वत्वाऽद्यवच्छिन्नत्वात् । तथा चांऽशभेदविवक्षायामत्राऽपि वह्नित्वाऽसमानाधिकरणधर्माऽनवच्छिन्नत्वमस्त्येवेति भ्रमत्वेन सिद्धसाधनतादवस्थ्यम् । तथा च तद्वारणाय विशेष्यांऽशे वह्नित्वाऽसमानाऽधिकरणधर्माऽवच्छिन्नविषयताकत्वविशिष्टविशेष्यताकत्वाऽभावपर्यन्तं साध्यमिति पदाऽन्तरप्रक्षेपगौरवमित्यरुचिं प्रकाशयति—अन्ये त्विति ।

दर्पणः

तत्राऽप्रामाण्याऽभावाऽनुमानपूर्वकत्वनियमं निराकरोति—तथा हीत्यादिना सिद्धसाधनाच्चेत्यन्तेन । प्रत्यक्षेणेति । तथा चाऽप्रामाण्याऽभावज्ञानपूर्वकत्वनियमेऽपि न तदनुमानपूर्वकत्वनियम इति भावः । किमनयेति । तथा च न तज्ज्ञानपूर्वकत्वेऽपि इति भावः । प्रामाण्याऽप्रामाण्ययोर्योग्यतायां विशेषमुक्त्वा प्रामाण्येऽतिशयमाह—वह्नित्वाऽभाववत्त्वस्येति । तद्घटिताऽप्रामाण्यस्येत्यर्थः । एवं तद्वत्त्वस्येत्यत्राऽपि । बाधेति । वह्निभ्रमे जाते तत्रैव नाऽयं वह्निरिति बाधाऽवतारे वह्नित्वाऽभाववत्येव मम ज्ञानं वृत्तमित्यप्रामाण्यबाधगम्यमित्यर्थः । एवं प्रामाण्ये सम्वादगम्यत्वम् ।

माथुरी

केचित्तु दाहसमर्थवृत्तिवह्नित्वप्रकारकविषयताकान्यत्वं हेतुरित्याहुः । तदसत् पक्षे वह्नित्वप्रकारत्वपदवैयर्थ्यापत्तेः ।

द्वितीयसाध्यमाह, वह्नित्वासमानाधिकरणेति वह्न्यवृत्तीत्यर्थः, हेतुश्चोक्त एव । तृतीयसाध्यमाह, 'विषयताश्रयेति स्वाधिकरणावृत्ति वह्नित्वप्रकारकविषयताको नेत्यर्थः, बाधवारणाय स्वाधिकरणावृत्तीति वह्नित्वविशेषणं खं विषयता, हेतुश्च

१. मणिप्रभायां मणित्वभ्रमेऽभ्रमेऽनैकान्तकमिति भावः ।

२. मणिप्रभाश्र करणे देशे मणेरप्यवश्यं सत्त्वादिति भावः।

याज्ञाऽसाधारण्यम्। तथेयं पृथिवीत्यनुभवः पृथिवीत्वाऽभाववति पृथिवीत्वप्रकारको न, अपृथिवीवृत्तिप्रकारको न, विशेष्याऽवृत्तिकारको न, पृथिवीत्वप्रकारकत्वे सति पृथिव्यविशेष्यको न, पृथिवीत्वव्यधिकरण-

आलोकः

ननु प्रभागोचरमणित्वनिश्चये मणित्वाऽभाववद्विशेष्यत्वाऽभावो नाऽस्तीति व्यभिचार इत्यत आह—न चेति। न च मणिप्रभाजनके मणौ प्रभागोचरमणिभ्रमे मणिर्मणिजनक इति ज्ञानवतः फलज्ञानत्वेन प्रभागोचरमणित्वनिश्चयस्य मणिप्रवर्त्तकतया मणित्वाऽभाववद्विशेष्यतया च व्यभिचारः स्यादिति वाच्यम्, समानविषयत्वेनाऽफलज्ञानत्वाऽऽदिना वा जनकत्वस्य विवक्षणादिति भावः।

दर्पणः

यद्वा वह्नित्वाऽभाववत्त्वस्येति यथाश्रुतमेव, बाधगम्यत्वं च बाधविषयत्वम्। एवं तद्वत्त्वस्येत्यत्राऽपि संवादगम्यत्वं च विसंवादाऽविषयत्वम्। साध्यपर्यालोचनया अनुमानपूर्वकत्वनियमं निरस्य हेतुपर्यालोचनया निरस्यति—अपि चेति। प्रामाण्येति। अप्रामाण्याऽभावेत्यर्थः। हेतुप्रामाण्ययोरविशेषमुक्त्वा प्रामाण्येऽतिशयमाह—प्रत्युतेति। किं हस्तपिहितमित्युपसंहरति—इति मामेवेति। प्रत्युतेत्युपसंहरति—उक्तक्रमेणेति। सार्वत्रिकत्वं निरस्यति–वस्तुत इति। प्रामाण्यनिश्चयेति। अनुव्यवसायाऽभावे पक्षाज्ञानान्नाऽप्रामाण्याऽभावनिश्चय इति तत्पूर्वमवश्यमनुव्यवसाय इति भावः। एतर्हीति। एतद्विशेष्यकमित्यर्थः। एतच्च विशेष्यत्वांऽशस्याऽनुव्यवसायग्राह्यतापक्षमवलम्ब्योक्तम्।

अन्योन्याऽऽश्रयेति। यथा वह्निप्रमायां वह्नित्वाऽभाववद्विशेष्यकत्वलक्षणाऽप्रामाण्यस्याऽभावमनुमाय वह्नित्ववद्विशेष्यकत्वाऽनुमितिः तथा वह्निभ्रमे वह्नित्ववद्विशेष्यकत्वाऽभावलक्षणं प्रामाण्यस्याऽभावमनुमाय वह्नित्वाऽभाववद्विशेष्यकत्वाऽनुमितिरिति अप्रामाण्यज्ञानप्रामाण्यज्ञानयोः परस्पराऽपेक्षत्वाऽऽपत्तेरित्यर्थः। वह्नित्वाऽभाववद्विशेष्यकत्वाऽभावाऽनुमानमित्यनन्तरं ततो वह्निविशेष्यकत्वाऽनुमानमिति शेषः। तदनुमानमिति। वह्नित्वाऽभावद्विशेष्यकत्वाऽनुमानमित्यर्थः।

उक्तमन्योन्याऽऽश्रयं स्पष्टयति—तथा चेति। प्रामाण्यज्ञानस्याऽवश्यकत्वेऽपि ना प्रामाण्याऽभावानुमानपूर्वकतानियमः, दाहेत्यादिहेतुना मनसा वा तत्सम्भवादि-

माथुरी

पूर्व्ववत्। नन्वेतावता भ्रमत्वाभावसिद्धावपि न भावरूपप्रामाण्यसिद्धिरित्यत आह, 'वह्नवृत्तोति, 'विषयताश्रयेति स्वाधिकरणवृत्तिप्रकारकविषयताकत्वमित्यर्थः, 'अर्थादिति, इयं वह्नत्वप्रकारकविषयता वह्नवृत्तिः दाहसमर्थविशेष्यकवह्नत्वप्रकारक-

प्रकाराऽवच्छिन्नो न, पृथिव्यवृत्तिकारको न वा गन्धवद्विशेष्यकपृथिवीत्व-प्रकारकनिश्चयत्वादिति व्यतिरेकी। पृथिवीत्वभ्रमः पृथिवीत्वाभाववति

आलोकः

ज्ञानप्रयत्नयोरिति। अत्र वदन्ति—कार्यकारणभावज्ञानं तदुभयाऽवच्छेदकाऽवधारणसाध्यम्। न च समर्थप्रवृत्तिजनकताऽवच्छेदकं प्रामाण्यादन्यत्। तथा च तदवगमाऽनवगमाभ्यामुभयथाऽप्यसिद्धो हेतुरवगमे सिद्धसाधनादाश्रयासिद्धेरनवगमे च स्वरूपाऽसिद्धेः।

ननु 'तृणाऽरणिमणिन्यायेन'[1] व्यक्तावेव तद्ग्रहः। ततस्तज्जनकत्वे गृहीते सामान्यधर्मेण तेनैव सर्वोपस्थितौ व्याप्तिग्रहः। अस्तु वा अवच्छेदकग्रहणपूर्वकतानियमः कार्यकारणभावग्रहस्य। न चैतदपि दुर्लभम्। तथा हि दाहसमर्थविषयक-

दर्पणः

त्याह—किञ्चेति। इदञ्चोपलक्षणम्, शङ्कानिरासाऽर्थं प्रामाण्याऽनुमानम्, शङ्का चाऽप्रामाण्याऽभावानुमित्यैव निरस्तेति व्यर्थमप्रामाण्याऽभावाऽनुमानपूर्वकं प्रामाण्याऽनुमानम्। न चाऽप्रामाण्यतदभावकोटिकशङ्कायास्तदा निरासेऽपि प्रामाण्यतदभावकोटिकशङ्काया निरासाऽर्थं प्रामाण्याऽनुमानमिति वाच्यम्, सन्देहनिरासे विरोधिविषयकनिश्चयमात्रस्य हेतुतया ग्राह्याऽभावनिश्चयपर्यन्तस्याऽनावश्यकत्वात्।

दर्पणः

तथाऽपि अप्रामाण्याऽभावाऽनुमानपूर्वकत्वे नियामकाऽभावाच्चेत्यपि द्रष्टव्यम्। अपूर्वव्यक्तिगोचरज्ञानप्रामाण्यस्य पूर्वमननुभवात्स्मरणाऽसम्भवेन एतस्य प्रकारस्याऽवश्याश्रयणीयत्त्वमिति वृद्धैः परिशीलितः पन्था इति क्वचित्पाठः स चाऽयुक्तः। दाहसमर्थविशेष्यकत्वन्यायेन तत्राऽपि प्रामाण्यस्योपनीतभानसम्भवादिति।

माथुरी

विषयतात्वात् इयं विषयता स्वाधिकरणवृत्तिप्रकारिका दाहसमर्थविशेष्यकवह्नित्वप्रकारकविषयतात्वात् यन्नैवं तन्नैवं यथा वह्नित्वभ्रमे वह्नित्वप्रकारकविषयतेति क्रमेण खण्डशः प्रसिद्धया व्यतिरेक्यनन्तरमिदं ज्ञानं वह्निवृत्तिवह्नित्वप्रकारकविषयताकं वा दाहसमर्थवृत्तिवह्नित्वप्रकारकविषयताकत्वात् यन्नैवं तन्नैवं यथा वह्नित्वभ्रम इति व्यतिरेक्यन्तरादित्यर्थः, 'साध्याप्रसिद्धेरिति विशिष्टस्य प्रामाण्यस्याप्रसिद्धेरित्यर्थः। ननु यथोक्तपक्षतावच्छेदकस्य वह्नेस्तादात्म्यारोपसाधारणत्वात् तत्राभावसाध्यकानुमाने

---

१. तार्णवह्निं प्रति तृणस्य आरणेयवह्निं प्रति अरणेः, मणिजन्यवह्निं प्रति मणेश्च कारणत्वम्, न तु वह्नित्वावच्छिन्नं प्रति तृणादेः कारणत्वम्, परस्परव्यभिचारात। एवं यत्र कार्यकारणभावबाहुल्यं कार्यतावच्छेदकं कारणतावच्छेदकं च नाना तत्रास्य न्यायस्य प्रवृत्तिः।

पृथिवीत्वप्रकारक इति न भ्रमत्वेन सिद्धसाधनं, न वा गन्धवद्विशेष्यक इति न व्यभिचारः। पृथिवीत्ववति पृथिवीत्वप्रकारकत्वादिकमर्थात् सिद्धयति।

आलोकः

प्रयत्नजनकत्वं हि विशिष्टं लिङ्गम्। तत्र च द्वयी विशिष्टवैशिष्ट्याऽवगाहिधीसामग्री एका विशिष्टज्ञानपूर्विका, अपरा विशेष्ये विशेषणम्, तत्र च विशेषणाऽन्तरमिति। तत्र आद्यायाः प्रामाण्यरूपाऽवच्छेदकाऽग्रहादसम्भवेऽपि द्वितीयायाः स्वविषयाऽवच्छेदेन प्रवृत्तिसामान्यं प्रति गृहीतज्ञानसामान्यकारणत्वस्य प्रवृत्तिविषये विशेष्ये दाहसामर्थ्यरूपविशेषणाऽन्तरज्ञानसम्पत्तेः को वारयितेति तेनैव कल्पेन हेतोरियमसिद्धिरुद्धरणीयेति।

अस्तु तावदेवम्, तथाऽप्यसिद्धिः। तथा हि–मनसा द्वयोः कार्यकारणग्रहो द्वयोरुपस्थितौ, न च द्वयोर्युगपदवस्थानं येन मनसोभयोपस्थितिः। न च स्मृत्युपनीते तद्ग्रहः। स्मृतेरपि तद्गोचरायाः तदनुव्यवसायपूर्वकत्वात्। तथा च प्रवर्त्तके ज्ञाने जाते यदि तदनुव्यवसायस्तदा तत्र प्रवर्त्तकज्ञानविनाशे प्रवृत्तिरेव हेत्वभावे दुर्लभा, कुतस्तद्धेतुत्वधीः, अननुव्यवसाये च संस्काराऽनुत्पादे क्व स्मृतिद्वारोपनयो यतः कार्य-

दर्पणः

विषयताश्रयेति मूलम्। स्वविषयताऽऽश्रयाऽवृत्तिवह्नित्वप्रकारको नेत्यर्थः। प्रकारविशेषघटिताऽप्रामाण्याऽभावस्य सिषाधयिषितत्वात् विषयताऽऽश्रयेति मूलम्। अत्राऽपि स्वविषयताऽऽश्रयवृत्तिवह्नित्वप्रकारकत्वं साध्यं ज्ञेयम्। वह्निभ्रम इति मूलम्। वह्नितादात्म्याऽऽरोप इत्यर्थः। वह्नित्वाऽसमानाऽधिकरणधर्माऽवच्छिन्नविषयत्वाऽभावपर्यन्तमिति पाठेऽप्यभावपदस्य पूर्वत्र नयनेन वह्नित्वाऽसमानाधिकरणधर्माऽनवच्छिन्नविषयताकत्वमेवाऽर्थ इति ज्ञेयम्। पदाऽन्तरं वह्निवृत्तिपदम्।

माथुरी

द्वितीयसाध्ये अंशतः सिद्धसाधनं तत्र वह्नित्वप्रकारकविषयताया विशेषणीभूतवह्निवृत्तित्वेन वह्नित्वसमानाधिकरणत्वात् प्राचीननये पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽप्यंशतः सिद्धसाधनस्य दोषत्वादित्यत आह, 'वह्नित्वभ्रमे चेति वह्नेस्तादात्म्याचेत्यर्थः 'विशेष्यवृत्तित्वादिति, मुख्यविशेष्यमात्रवृत्तित्वादित्यर्थः, 'भ्रमत्वेनेति वैशिष्ट्यं तृतीयार्थः, न भ्रमत्वविशिष्टे सिद्धसाधनमित्यर्थः, तस्य यथोक्तपक्षतावच्छेदकानाक्रान्तत्वादिति भावः। इदमुपलक्षणम् अत्रसिद्धसाध्यकत्वादेव नांशतः सिद्धसाधनावकाश इत्यपि बोध्यम्।

विषयतापक्षे[1] अयं पृथिवीत्वेनाऽनुभवः अपृथिवीवृत्तिपृथिवीत्वप्रकारकविषयताको न, पृथिव्यवृत्तिपृथिवीत्वप्रकारकविषयताको न, पृथिवीत्वाऽसमानाऽधिकरणपृथिवीत्वप्रकारकविषयताको न, विषयताऽऽश्रयाऽवृत्तिप्रकारताको न वेति साध्यम्[2] । पृथिवीत्वसमानाधिकरण[3]पृथिवीत्वप्रकारकविषयताकत्वादिकम् अर्थात् सिद्ध्यति ।

आलोकः

कारणभावधीः ? न हि गुरोरिवाऽस्माकमपि व्यवसाय एवाऽनुव्यवसायो येन संस्कारसुलभतया स्मृतिनिबन्धनं हेत्ववधारणमिति ।

अत्र ब्रूमः—ज्ञाने जाते तस्य ज्ञानत्वेन समानविषयकज्ञानत्वेन वा सामान्यलक्षणया ज्ञाने तत्तज्ज्ञानेन चाऽनागतस्याऽपि विषयीकृतत्वे तादृशस्य ज्ञानाऽन्तरस्य

दर्पणः

ननु वह्नित्ववृत्तिपदस्यैव विशेष्ये वह्नित्वाऽसमानाधिकरणधर्माऽनवच्छिन्नत्वमर्थोऽन्येषामभिमतस्तत्कुतो गौरवमिति चेत्—

अत्र ब्रूमः । विशेष्यांऽशे वह्नित्वसमानाधिकरणवह्नित्वप्रकारकविषयताकत्वमेव लघु साध्यमस्तु कृतं गुरुणा विशेष्यांऽशे वह्नित्वाऽसमानाधिकरणेत्यादिना इत्यभिप्रायः । तदिदमुक्तम्—पदाऽन्तरेति । नञ्द्वयाऽऽदीत्यर्थः ।

यथाश्रुतं निश्चयपदार्थमादायाऽऽशङ्कामाह—नन्विति । मणिर्मणिजनक इति । यद्यपि प्रभाविशेष्यकमणित्वप्रकारकभ्रमे व्यभिचारात् स एव वक्तव्यो न त्विदमपि ज्ञानम्, तथाऽपि तस्य फलज्ञानत्वनिष्पत्तये इदमुक्तम्-समानेति । इदञ्च फलविशेष्यकज्ञानस्य प्रवृत्तिजनकत्वमभ्युपेत्योक्तम् ।

माथुरी

केचित्तु[4] विशेष्यताया मुख्यविशेष्यमात्रवृत्तित्वेन साध्यासत्त्वान्नांशतः सिद्धसाधनमिति मणिकृतो निगर्व्वं इत्याहुः । तदसत् विशेषणे तादृशविषयताविरहे तदंश एव तादृशविषयताकत्वविरहसत्त्वेन साध्यसत्त्वसम्भावात् ।

---

१. अतिरिक्तविषयतापक्षे इति राजपुस्तकपाठः ।

२. साध्यम् इति नास्ति राजपुस्तके ।

३. पृथिवीवृत्ति इति पाठो राजपुस्तके ।

४. केचित्त्वित्यादिपाठः ख-ग-पुस्तके नास्ति ।

अन्ये तु पृथिवीत्वाऽसमानाधिकरणप्रकाराऽवच्छिन्नविषयता-कत्वाऽभावः साध्यः, गन्धाऽसमानाधिकरणाऽप्रकारकगन्धसमानाधिकरण-प्रकारकविषयताप्रतियोगिज्ञानत्वात् । तेन संशयव्यवच्छेदः निश्चयत्वं वा विवक्षितमित्याहुः ।

शीता पृथिवीत्यनुभवः पृथिव्यंशे प्रमैव । भ्रमप्रमारूपे च समूहाऽऽलम्बने न व्यभिचारः, अंशे तस्याऽपि प्रमात्वात्, विशेष्यभेदेन विषयताभेदाच्च । न च प्रकारभेदेन विषयताभेदः, मानाऽभावात् ।

आलोकः

पुनरुत्पादे प्रवृत्त्यनन्तरं कार्यकारणभावपरिच्छेदः, सामान्यलक्षणया प्रागेव विषयीकृतस्य चरमोत्पन्नस्य प्रवृत्तिजनकस्य ज्ञानस्य प्रवृत्त्युत्तरं स्मृत्युपनये बाधाऽभावात् । इदमेव च सामान्यलक्षणाऽस्वीकारे बीजाऽन्तरम् । अन्यथा तदस्वीकर्त्तॄणां गुरुप्रभृतीनामिच्छाप्रयत्नाऽऽदिक्षणिकवस्तुकारणधीर्दुर्लभेति वक्ष्यते ।

दर्पणः

वस्तुतस्तु तदेव नाऽस्तीति द्रष्टव्यम् । आश्रयाऽसिद्धिरिति । प्रभात्वनिश्चयस्याऽप्रभात्वाऽभावनिश्चयपूर्वकतया पक्षविशेषेणपक्षताविरहादिति भावः । स्वरूपाऽसिद्धेः अज्ञानरूपाऽसिद्धेः । ज्ञायमानत्वरूपोऽसाधारणो यो धर्मः स्वरूपं तदसिद्धेरित्यर्थः । अभावसाध्यक इति मूलम्—अप्रामाण्याऽभावसाध्यक इत्यर्थः । निर्विकल्पकस्येत्युपलक्षणं घटाऽदेरपि द्रष्टव्यम् । न च द्वयोर्युगपदवस्थानमिति । यद्यपि प्रत्यक्षरूपं वह्निज्ञानं साक्षादेव प्रयत्नजनकमिति द्वयोर्युगपदवस्थानमेव तथाऽपि तद्विद्यमानमेव विशेष्यं जनकमिति मतमाश्रित्य वह्निप्रत्यक्षस्य प्रत्यक्षाऽसंभवाऽर्थं-प्रयत्नोत्तरक्षणे द्वयोर्युगपदनवस्थानमुक्तम् ।

माथुरी

वह्निभ्रम इति वह्नितादात्म्यारोपे इत्यर्थः, 'अभिप्रेतीति मतेऽपीति शेषः । 'न चेति, तथा च वह्नित्वासमानाधिकरणधर्म्मावच्छिन्नवह्नित्वप्रकारकविषयताको नेत्येव साध्यमितिभावः । अवच्छिन्नत्वञ्च सामानाधिकरण्यम् । अत्रेदमस्वरसवीजम्, एवं सति बाधः स्यात् वह्नित्वप्रमायामपि तादृशविषयताया वह्नित्ववृत्तितया वह्नित्वसमानाधिकरणवह्नित्वत्वावच्छिन्नत्वात् । 'न च मणिज्ञानस्येति, 'प्रामाण्यनुमाने' मणिगोचरप्रयत्नजनकत्वे सति मणित्वप्रकारकनिश्चयत्वेन हेतुना प्रामाण्यानुमाने, 'मणिप्राप्तौ' मणिप्राप्तिस्थले, अनैकान्तिकमिति मणिप्रभायां मणित्वभ्रमेऽनैकान्तिकमित्यर्थः । 'नान्तरीयकत्वादिति मणिप्रभाधिकरणे देशे मणेरप्यवश्यं सत्त्वादित्यर्थः । यद्यप्येवमपि

यत्त्वियं पृथिवीत्यनुभवः पृथिवीत्वसमानाऽधिकरणधर्माऽवच्छिन्न-पृथिवीविशेष्यकविषयताकः पृथिवीत्वव्यधिकरणधर्माऽनवच्छिन्नपृथिवी-विशेष्यकविषयताकः, पृथिव्यवृत्तिधर्मानवच्छिन्नपृथिवीवृत्तिविषयताको वा, गन्धाऽसमानाधिकरणधर्माऽप्रकारकविषयताप्रतियोगिज्ञानत्वात् अगन्धवद-वृत्तिपृथिवीत्वप्रकारकविषयताकत्वात्; गन्धसमानाधिकरणविषयताप्रति-योगिज्ञानत्वाद्वेति ।

आलोकः

अभावेति । इदञ्चोपलक्षणम्, प्रामाण्यसाधके समूहाऽऽलम्बनस्येति द्रष्टव्यम् । सपक्षत्वेन साध्यवत्त्वेन, अन्यथा सपक्षशब्दस्य निश्चितसाध्यवद्वचनतया निश्चय-निश्चयाऽभावो हेतुर्लभ्यते । न चैवं युज्यते, निश्चयज्ञानस्याऽभासत्वाऽप्रयोजकत्वादिति ।

वयन्तु ब्रूमः—असाधारणो दशाविशेष इति सर्वसिद्धम् । तथा च साध्यवत्त्वा-निश्चयान्नासाधारण इत्युक्तम् । तथा सति घटाऽऽदावेवाऽसाधारणत्वस्य दुर्वारत्वाऽऽ-

दर्पणः

यद्वा व्यापारवत्तया वह्निरिष्टसाधनं कृतिसाध्यश्चेति ज्ञानस्याऽपि उपादान-गोचरचिकीर्षाद्वारा प्रयत्नजनकतया तदभिप्रायेण युगपदनवस्थानं द्वयोरुक्तमिति ।

गुरुमते ज्ञानस्य स्वप्रकाशतयोपपत्तिमभिप्रेत्याऽऽह—इच्छेति । कारणत्व-धीर्दुर्लभेति । अत्र वदन्ति—ज्ञाने जाते द्वितीयक्षणे तदनुव्यवसाये तृतीयक्षणे च विनश्यत्ता, तेनेच्छायां जनितायां चतुर्थे च तदनुव्यवसाये विनश्यन्त्या तया पञ्चमे यत्नोपपत्तौ बाधकाऽभावात् सम्भवस्येव ज्ञानेच्छयोः स्मृत्युपनयः । न च निर्विकल्प-

माथुरी

मणिर्मणिजनक इति मणित्वप्रकारकप्रभाजनकताज्ञानाद्यत्र मणौ प्रवृत्तिस्तत्र तज्ज्ञाने व्यभिचारः । तथापि निश्चयपदेन मण्यमण्युभयविशेष्यकमणित्वप्रकारकज्ञानान्यज्ञानस्य विवक्षितत्वादेव न तव व्यभिचार इति भावः । ननु ज्ञान-प्रयत्नयोर्युगपदनवस्थानाद-युगपत् सन्निकर्षासम्भवेन तयोः कार्य्य-कारणभावग्रहासम्भवादज्ञानासिद्धो हेतुरित्यत आह, 'ज्ञान-प्रयत्नयोरिति, 'मनसेति, ज्ञान-प्रयत्नयोरुपनयलक्षणसन्निकर्षसहकारादिति शेषः । न च प्रयत्नोपधायकज्ञानव्यक्तेः कदाचिदप्यग्रहात् कथं तदुपनय इति वाच्यम् । ज्ञानत्वसामान्यलक्षणप्रत्यासत्त्या अनुमानेन वा फलोपधायकज्ञानव्यक्तेरपि ग्रहसम्भवात् फलोपधायकव्यक्तेर्ज्ञानाभावेऽपि क्षतिविरहाच्च । सर्व्वत्रानुपधायकज्ञानं स्मारं स्मारमेव कार्य्य-कारणभावग्रहसम्भवात्तस्यापि स्वरूपयोग्यत्वात् स्वरूपयोग्यतायाश्च ग्राह्यत्वा-दिति भावः । 'अभावसाध्यके चेति अप्रामाण्याभावरूपप्रामाण्यसाध्यके चेत्यर्थः । 'निर्व्विकल्पकस्य' सप्रकारकभिन्नस्य निष्प्रकारकज्ञान-घटादेरिति यावत्, 'सपक्षत्वेना-

तन्न । साध्याऽप्रसिद्धेः । किन्त्वर्थादेव तत् सिध्यति । एवं यत्प्रकारव्याप्यतया यद्गन्धस्नेहसमर्थप्रवृत्तिजनकत्वकरचरणाऽऽदिकमवगतं तद्वति तत्प्रकारकज्ञानत्वमेव प्रामाण्ये लिङ्गम् । ननु वह्निज्ञानस्य दाहसमर्थविषयत्वं न दाहसमर्थोऽयमिति व्यवसायगम्यम्, ज्ञानविषयतयोस्तदविषयत्वात् । नाऽपि तदनुव्यवसायगम्यम्, पुरोवर्तिदाहसामर्थ्यस्य तदगोचरत्वात् । व्यवसायोपनीतदाहसामर्थ्यस्य च भाने तदसामर्थ्यात् ।

आलोकः

पातात् । न हि तस्याऽपि साध्यसत्त्वाऽनिश्चयः, सविषयकत्वाऽभावेनैवाऽप्रामाण्याऽभावसाध्यनिश्चयात् । वह्नित्वाऽभाववद्विशेष्यत्वाऽऽदीनां मनसा मानाऽन्तरेण वा व्यतिरेकव्याप्त्यवगमानुरोधेनाऽऽवश्यकोपस्थित्यभ्युपगमे घटाऽऽदौ तदभावाऽवधारणाऽऽवश्यकत्वात् । न हि तदा तदुपस्थितिर्हस्तपिहिता । अस्तु वोपस्थित्यनियमः ।

दर्पणः

काऽर्थमेवैकक्षणवद्भ्रमे ज्ञानेच्छयोः इच्छाप्रयत्नयोश्चाऽव्यवधानं न सम्भवतीति वाच्यम्, नरसिंहाऽऽकारयोर्ज्ञानत्वेच्छात्वांशऽनिर्विकल्पकत्वरूपयोरनुव्यवसाययोः स्वीकारात् । न च तथा सति ज्ञानत्वेच्छात्वविशिष्टगोचरस्मृत्यभावात्तेन तेन रूपेण हेतुता न गृह्येतेति वाच्यम्, तावताऽपि क्षत्यभावात् हेतुतामात्रस्य प्रकृतत्वात् ; पूर्वकाले दैवाऽधीनत्वेच्छात्वोपस्थितौ विशिष्टज्ञानस्याऽपि सम्भवाच्च । न च ज्ञानस्य

माथुरी

निश्चयादिति साध्याप्रसिद्धया साध्यवत्त्वेनानिश्चयादित्यर्थः । वह्निज्ञानस्य प्रामाण्यानुमानप्रकारमभिधाय पृथिवीज्ञानस्य प्रामाण्यानुमानप्रकारमाह, 'तथेति, 'अयमिति गन्धवद्विशेष्यक इत्यर्थः, प्रत्येकदलप्रयोजनन्तु पूर्ववत् । 'अपृथिवीवृत्तीति अपृथवीवृत्तिर्या पृथिवीत्वप्रकारकता तदाश्रयो न वृत्तित्वावच्छेदकतासम्बन्धेन पृथिव्यन्यावच्छिन्नपृथिवीत्वप्रकारकताश्रयो नेति यावत् । 'विशेष्यावृत्तीति पृथिव्यवृत्तिर्या पृथिवीत्वप्रकारकता तद्वान्नेत्यर्थः, पृथिव्यवृत्तित्वं पृथिव्यनवच्छिन्नत्वम् । 'पृथिव्यविशेष्यक इति पृथिवीभिन्नविशेष्यक इत्यर्थः, विशेषण-विशेष्यभावभेदेन प्रथमतो भेदः । पृथिवीत्वव्यधिकरणेति पृथिवीत्वानधिकरणे पृथिवीत्वप्रकारको नेत्यर्थः, अधिकरणत्वाभावप्रवेशान्न प्रथमाभेदः । 'पृथिव्यवृत्तीति पृथिव्यवृत्तिर्या पृथिवीत्वप्रकारकता तद्वान्नेत्यर्थः, पृथिव्यवृत्तित्वं पृथिव्यनवच्छिन्नत्वम् । न च तृतीयाभेदः, अवच्छिन्नत्वात्यन्ताभाव-तद्वदन्योन्याभावभेदाभ्यां भेदादिति दिक् । व्याख्यावीजन्तु वह्निज्ञानप्रामाण्यानुमानवद्बोध्यम् । ननु पृथिवीत्वाभाववति पृथिवीत्वप्रकारकत्वाभास्य साध्यस्य पृथिवीत्वभ्रमेऽपि सत्त्वात् कुतः प्रामाण्यरूपत्वमित्यत आह, 'पृथिवीत्वभ्रम इति, भ्रमत्वेनेति वैशिष्ट्यं तृतीयार्थः,

अन्यथा व्यवसायोपनीतस्य पुरोवर्त्तिनि वह्नित्वस्य अनुव्यवसायविषयत्वे स्वतः प्रामाण्यग्रहाऽऽपत्तेः। एवं पृथिवीजलज्ञानयोर्गन्धस्नेहवद्विषयकत्व-ग्रहोऽप्यनुपपन्न इति। उच्यते। वह्नित्वप्रकारकाऽनुव्यवसाये सति तत्र विषये दाहसमर्थस्य ज्ञानाऽनन्तरं स्मृत्युपनीते वह्निव्यवसाये स्मृत्युपनीत-दाहसामर्थ्यविषयकत्वम्। एवं जलपृथिवीज्ञानयोः स्मृत्युपनीतयोः ज्ञानो-पनीतं स्नेहगन्धवद्विषयकत्वं मनसा परिच्छिद्यते। गन्धाऽऽदिमत्येव मम

आलोकः

यदा तूपस्थितिस्तदाऽसाधारण्ये को वारयिता? न च विपक्षबाधकेन हेतोः साध्य-व्याप्यतया साध्याऽभावसिद्धिपर्यवसायिन्याः सपक्षव्यावृत्तेरतुल्यबलतया नाऽस्य दोष-तेति वाच्यम्, तथा सति निर्विकल्पके साध्यनिश्चयेऽपि का क्षतिरिति तदनिश्चयोप-वर्णनमसङ्गतं स्यात्। न च तन्निर्विकल्पकाऽऽदि तन्निष्ठहेत्वादि वा तदा नोपस्थित-मिति वाच्यम्, सपक्षत्वेनेति व्यर्थताऽऽपत्तेः, निर्विकल्पकत्वाऽऽदेरेव हेतुत्वाच्च।

दर्पणः

यत्नकर्त्तव्ये इच्छाद्वारम्, द्वारत्वञ्च द्वारिणि सत्येव तत्तत्फलजनकत्वमिति कथमुक्त-रीत्या निर्वाह इति वाच्यम्, व्यापारत्वमात्रेणोपपत्तौ द्वारत्वे मानाऽभावादिति।

अत्रोच्यते—इच्छाप्रयत्नसामग्रीबलवत्त्वेन ज्ञानेच्छानुव्यवसायो दुर्घटः। न हीच्छाप्रयत्नयोः प्रतिबन्धकम् अनुव्यवसाययोश्चाऽप्रतिबन्धकं किञ्चित्तत्र पश्याम इति। यद्यपि प्रयत्नाऽग्रिमक्षणे विनश्यदविनश्यदवस्थयोरिच्छाप्रयत्नयोर्ग्रहेऽनुपपत्त्य-भावः, तथाऽपि विद्यमानस्यैव विशेष्यस्य जनकत्वमिति मतेनेदमुक्तम्। निर्विकल्प-काऽऽदीति। तथा च तदनुपस्थितौ न तस्य साध्यवत्त्वनिश्चय इति भावः। तन्निष्ठेति। तथा च निर्विकल्पकाऽऽद्युपस्थितावपि साध्यसाधनहेत्वाऽऽदेरज्ञानान्न साध्यवत्त्वनिश्चय इति भावः।

माथुरी

पृथिवीत्वभ्रमत्वविशिष्ट इत्यर्थः, 'सिद्धसाधनं' साध्यसत्त्वम्। नन्वेवं तत्रैव व्यभिचारः इत्यत आह, 'न वेति, पृथित्वभ्रम इत्यनुषज्यते, 'अर्थादिति अयं पृथिवीत्वप्रकारकोऽनु-भवः पृथिवीत्वाभाववदविशेष्यकत्वे सति सविशेष्यकत्वात् यन्नैवं तन्नैवं यथा पृथिवीत्वा-प्रमेति व्यतिरेक्यन्तरादित्यर्थः। 'विषयतापक्षे इति अतिरिक्तविषयताया एव सप्रकार-कत्वादिमत इत्यर्थ, 'अयं पृथिवीत्वेनेत्यादिसर्व्वं पूर्व्वोक्तक्रमेण वह्निज्ञानस्थलवद्बोध्यम्, हेतुश्चात्र गन्धवद्वृत्तिपृथिवीत्वप्रकारकविषयताकनिश्चयत्वं।

'अन्ये त्विति, 'पृथिवीत्वासमानाधिकरणः' पृथिव्यवृत्तिः, यः 'प्रकारः' यो धर्म्मः, तदवच्छिन्नविषयताकान्यत्वमित्यर्थः, तदवन्निश्चयत्वञ्च न तत्प्रकारकत्वं प्रमुष्टतत्ताक-

पृथिवीत्वाऽऽद्यनुभव इति तत्र गन्धाऽऽदिमत्त्वपरिच्छेदाऽनन्तरमनुभवात् । स्मृत्युपनीते धूमाऽऽदौ व्याप्तिपरिच्छेदवत् चक्षुषा चन्दने सौरभज्ञानवच्च । तर्हि पृथिवीत्वज्ञाने गन्धवद्विशेष्यकत्ववत् चक्षुषा गन्धवति पृथिवीत्वोपनयाऽनन्तरमियं पृथिवीति पृथिवीत्वप्रकारकाऽनुभवे उपनीते पृथिवीत्ववति पृथिवीत्वप्रकारकत्वं, तथा तत्रैव ज्ञाने घटत्वप्रकारकताविरहवत् पृथिव्यवृत्तिप्रकाराऽभाववत्त्वं विशेष्याऽवृत्तिप्रकाराऽभाववत्त्वं वा प्रामाण्यं मनसैव

आलोकः

किञ्चैवं निश्चयत्वाऽदिकमपि हेतौ त्यज्यताम् । तदा संशयाऽऽद्याऽनुपस्थित्यैव व्यभिचाराऽज्ञानमित्यादेरपि सुवचत्वात् । तस्मात् संशयोत्थापकतापक्षे सत्प्रतिपक्षोत्थापकतापक्षे वा द्वयोस्तुल्यबलत्वेनाऽसाधारणावतार इति वाच्यम्, अन्यतरस्य व्याप्तिनिश्चये अन्यतरस्य दुर्बलत्वनियमेनाऽसाधारणाऽप्रसङ्गात् । न चेह द्वयोस्तुल्यबलत्वम् ।

दर्पणः

आद्यं दूषयति — सपक्षत्वेनेति । द्वितीयं दूषयति — निर्विकल्पकत्वाऽऽदेरेवेति ।

सिद्धान्तमाह — तस्मादिति वह्नित्वप्रकारकेति सप्रकारकेत्यर्थः । साध्यस्येत्यनन्तरं व्यापकत्वमिति शेषः । युक्तमुत्पश्याम इति । यद्यपि विशिष्टाऽभावस्य व्यापकतायां न वैयर्थ्यं तथाऽपि व्यतिरेकसहचारात् अन्वयव्याप्तिरेव गृह्यत इति पक्षे अन्वयव्याप्तिं गृहीत्वा सत्प्रतिपक्षसंशयाववतारणीयौ । तत्र च लाघवात् सप्रकारकनिश्चयत्वस्यैवाऽप्रामाण्यव्याप्यतेत्यभिप्रेत्येदमुक्तम् । मूले पृथिवीत्वाऽभाववतीत्यादिसाध्यकषट्कं साधनञ्च पूर्ववद्व्याख्येयम् । मूले विषयताऽश्रयेति । स्वविषयताऽऽश्रयाऽवृत्तिपृथिवीत्वप्रकारको नेत्यर्थः । मूले साध्यमित्यनन्तरं गन्धवद्विशेष्यकपृथिवीत्वप्रकारकनिश्चयत्वादिहेतुनेति शेषः । मूले अर्थात् सिद्ध्यतीति । पृथिवीतादात्म्याऽऽरोपे च न विशेषणभूतायां पृथिव्यां विषयतेति न भ्रमत्वेन सिद्धसाधनमित्युक्तप्रायम् ।

माथुरी

भ्रमसाधारण्यप्रसङ्गात् प्रमामात्रवृत्तिधर्म्मस्यैव चात्र सिषाधयिषितत्वात् हेतौ गन्धसमानाधिकरणपदवैयर्थ्यप्रसङ्गाच्च, अपि तु तत्सामानाधिकरण्यम्, तथा च पृथिव्यवृत्तिधर्म्मसमानाधिकरणविषयताकान्यत्वं साध्यं पर्य्यवसितम् । न चैवं पृथिवीत्वप्रमायां बाधः विशेषणेऽपि विषयताङ्गीकाराद् तद्विषयताया अपि पृथिव्यवृत्तिपृथिवीत्वसमानाधिकरणत्वादिति वाच्यम् । विशेष्यताया मुख्यविशेष्यमात्रवृत्तित्वात् अस्यैव वात्रारुचिबीजत्वात् । हेतौ च इदन्त्वाच्छेदेन पृथिवीत्वभ्रमे जलादिधर्म्मिकपृथिवीत्वसंशये च व्यभिचारवारणाय 'गन्धासमानाधिकरणप्रकारकेति तदर्थश्च गन्धवदवृत्त्यप्रकारकत्वम्, तेन गगने गगनत्वमित्याद्यवृत्तिप्रकारकज्ञाने न व्यभिचारः, जलादि-

परिच्छिद्यतामिति स्वत एव प्रामाण्यग्रह इति चेत्, न। ज्ञानाऽन्तरोपस्थापितज्ञानवृत्तिप्रामाण्यग्रहे परतस्त्वाऽनपायात्। यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं यावत्स्वाऽऽश्रयग्राहकग्राह्यत्वम्, तज्ज्ञानविषयकजन्यज्ञानाऽजन्य-

आलोकः

यत्राऽप्रामाण्याऽभावस्तत्र दाहसमर्थविषयकवह्नित्वप्रकारकनिश्चयत्वाऽभाव इति सपक्षव्यावृत्तेः साध्याऽभावसिद्धिपर्यवसानाऽभावात्[1], व्यर्थविशेषणतया हेत्वभावस्य साध्यव्यापकत्वाऽग्रहात्, वह्नित्वप्रकारकनिश्चयत्वाऽभावमात्रस्यैव साध्यव्यापकत्वग्रहेण व्यर्थविशेषणत्वात्। न हि निर्विकल्पकं घटाऽऽदिकं वा परित्यज्य तदा साध्यमुपस्थितं येन व्यभिचारवारकतया विशेषणमर्थवत् स्यात्। न च व्यापके न व्यर्थविशेषणता, बीजसाम्यात्। तस्मात् साध्याऽभावव्यापकत्वमेव हेत्वभावस्य

दर्पणः

ये तु विशेषणविशेष्ययोरेकां विषयतां मत्वा पृथिवीत्वाऽसमानाधिकरणधर्म्माऽनवच्छिन्नविषयताकत्वं साध्यं वर्णयन्ति न तत्र नञ्द्वयाऽऽदिगर्भत्वगौरवमिति पूर्ववदेव सर्वं द्रष्टव्यम्। अपृथिवीवृत्तिपृथिवीत्वप्रकारकविषयताकत्वाऽभावाऽऽदीनि चत्वार्यभावरूपाणि साध्यानि स्वयमुक्त्वा अन्येषां मतेनाऽभावसाध्यकमनुमानमाह मूले -- अन्ये त्विति। तदेति। पृथिव्यवृत्तिधर्मो यां विषयतां प्रति अनतिप्रसक्तस्तद्विषयतावत्त्वस्य जलनिर्विकल्पके सत्त्वात् तद्वारणाय गन्धसमानाधिकरणेति विशेषणमित्यर्थः।

अत्राऽस्वरसमाह—अन्यथेति। वैयर्थ्येन प्रकारपदस्य धर्मपरत्वाऽभावे निर्विकल्पके विषयताविरहे चेत्यर्थः। इदमुपलक्षणम्! सप्रकारकत्वमात्रेण निर्विकल्पक-

माथुरी

निर्विकल्पके प्रमुष्टतत्ताकपृथिवीत्वभ्रमे च व्यभिचारवारणाय 'गन्धसमानाधिकरणप्रकारकेति सविधेयकार्थकम्, प्रमुष्टतत्ताकभ्रमे च पृथिवीत्वं न विधेयं, विषयता च स्वातिरिक्तवृत्तिधर्म्मानवच्छिन्नविशेष्यताकत्वेन स्वातिरिक्तवृत्तिधर्म्मानवच्छिन्नत्वेन वा विशेषणीया तेन द्रव्यं पृथिवी गन्धवती पृथिवीत्यादौ द्रव्यत्व-गन्धवत्त्वरूपेण जलादौ पृथिवीत्वभ्रमे न व्यभिचारः। गन्धवन्मात्रविशेष्यकज्ञानस्य पक्षत्वान्नांशतो बाधभागासिद्धी इति भावः। 'तेनेति गन्धासमानाधिकरणाप्रकारकत्वविशेषणेनेत्यर्थः, 'संशयव्यवच्छेद इति जलादिधर्म्मिकपृथिवीत्वसंशयव्यवच्छेद इत्यर्थः। इदमुपलक्षणम् इदं पृथिवीति भ्रमे च न व्यभिचार इत्यपि बोध्यम्। लाघवादाह, 'निश्चयत्वं वेति अप्रकारान्तं विशेषणं विहाय निश्चयत्वं वा विवक्षितमित्यर्थः। निश्चयत्वञ्च पृथिवीत्वविरुद्धाप्रकारकत्वं पृथिव्यवृत्त्यप्रकारकत्वमिति यावत्, तेनेदं जलमित्यादिप्रमाया-

१. पर्यवसायिन्याः इति कपुस्तके।

जन्यज्ञानग्राह्यत्वं वा स्वतस्त्वम्, तदन्यथा ग्राह्यत्वम् तु परतस्त्वम्, मनसा चैवं प्रामाण्यग्रहस्याऽभ्युपगमे तज्ज्ञानविषयकजन्यज्ञानजन्यज्ञानग्राह्यत्वान्न परतस्त्वहानिः । व्यतिरेक्यनन्तरं तज्जातीयत्वे-

आलोकः

गृहीतं न [1]तु साध्यव्यापकत्वमिति क्व संशयः साप्रतिपक्षता चेति । यत्रैवोभयोस्तुल्यबलता न त्वन्यतरत्र विनिगमना तत्रैवाऽसाधारणो दोष इति युक्तमुत्पश्यामः ।

पृथिवीत्वाऽसमानाधिकरणेति । साध्ये यदि प्रकारपदं धर्ममात्रपरं निर्विकल्पके च विषयता तदा तद्व्यभिचारवारणाय गन्धसमानाधिकरणेत्यादिकमर्थवत्, अन्यथा तावन्मात्रस्य पृथिवीत्वसंशयव्यभिचारितया गन्धाऽसमानाधिकरणेत्यादेरावश्यकत्वेन

दर्पणः

वारणे गन्धसमानाऽधिकरणपदवैयर्थ्यम् । जलविशेष्यके पृथिवीत्वप्रकारके प्रमुष्टतत्ताके स्मरणे व्यभिचारित्वं वाऽरुचिबीजं द्रष्टव्यम् । गन्धसमानाधिकरणप्रकारकेति । गन्धव्याप्यप्रकारकविषयताप्रतियोगिनिश्चयत्वमित्यर्थः । जलगोचरपृथिवीत्वसंशयभ्रमयोर्वारणाय निश्चयपदं तस्य परस्परविरुद्धाऽप्रकारकपरत्वात् । इह पृथिव्यां रूपमिति ज्ञानस्य वारणाय विषयताधावनम् । इदं जलं द्रव्यमिति प्रमाया वारणाय गन्धव्याप्येति । प्रमुष्टतत्ताकोक्तस्मरणस्य वारणाय साध्यस्थप्रकारपदं यथाश्रुतमेवेति भावः । बाध इति ।

ननु अवच्छेदकत्वमनतिप्रसक्तत्वम् । तथा च शीता पृथिवीत्यनुभवस्याऽपि विषयता पृथिवीवृत्तित्वेनैवाऽवच्छिद्यते न तु शीतत्वेनेति साध्यसत्त्वान्न बाधः ।

माथुरी

मिदन्त्वावच्छेदेन पृथिवीत्वभ्रमे च न व्यभिचारः, विषयता च पूर्वोक्तविशेषणेन वशिषणीया तेन गन्धवत्त्वादिरूपेण जलादौ पृथिवीत्वभ्रमे न व्यभिचार इति भावः । ननु भवन्नते पृथिवीभिन्नवृत्तिपृथिवीत्वप्रकारकविषयताकत्वाभावस्य प्रथमसाध्यस्य प्रमात्वरूपत्वे शीता पृथिवीतिभ्रमस्यापि प्रमात्वापत्तिरित्यत आह, 'शीतेति । नन्वेकदेशिप्रयोगे पाथः पृथिव्योः पाथसि प्रमुष्टतत्ताकं पृथिव्यंशे च इदन्त्वावच्छेदेन पृथिवीत्वप्रकारकं यज्ज्ञानं प्रमा-भ्रमरूपं तत्र व्यभिचारइत्यत आह, 'प्रमा-भ्रमेति, 'अंशे' पृथिव्यंशे, 'प्रमात्वादिति पृथिव्यवृत्तिधर्म्मसमानाधिकरणविषयताकत्वाभावादित्यर्थः । ननु तादृशसमूहालम्बनभ्रमस्य पृथिवीजलवृत्तिरेकैव विषयता प्रकारभेदेनैव विषयताभेदात् तथा च कथं पृथिव्यंशे तादृशविषयताभाववत्त्वमित्यत आह, 'विशेष्यभेदेनेति, अग्रिमचकरोऽत्र योजनीयः स च अप्यर्थः तथा च विशेष्य-

---

१. तद्वीत्यन्तरं ।

नाऽन्वयिना प्रामाण्याऽनुमानम् । यथेदं शरीरज्ञानं प्रमा करचरणवति शरीरज्ञानत्वात् स्वशरीरज्ञानवत् । न च करचरणाऽन्तरवति करचरणाऽन्तरवत्त्वज्ञाने व्यभिचारः, शरीरांऽशे तस्य प्रमात्वात् । एतेन

आलोकः

तत एव व्यभिचारे निरस्ते गन्धसमानाधिकरणेत्यादिकमफलमापद्येतेत्यरुचेराह— निश्चयत्वं वेति । तेन गन्धसमानाधिकरणप्रकारकनिश्चयत्वं हेतुरिति वेत्यर्थः ।

न चाऽत्रैकदेशिप्रयोगे[1] शीता पृथिवीत्यनुभवपक्षत्वे बाध इत्याह—शीतेति । पृथिवीत्वांशे तस्मिन्ननुभवे पक्षे तत्साध्यसाधनादित्यर्थः[1] ।

न चेमाः पृथिव्य इति समूहाऽऽलम्बने व्यभिचार इत्याह—भ्रमेति ।

दर्पणः

अत्रोच्यते—बाधपदेन हेतुबाधोऽत्र विवक्षितः । गन्धाऽसमानाधिकरणप्रकारकत्वाद्विरुद्धप्रकारकत्वाच्च । यद्वा निश्चयत्वगर्भहेतुपक्षे पृथिवीत्वाऽसमानाधिकरणप्रकारोऽनतिप्रसक्तो यत्र तद्विषयतावत्त्वाऽभावः पृथिवीत्वाऽसमानाधिकरणप्रकारकविषयताकत्वाऽभावश्च साध्यः सम्भवति । तत्र द्वितीयं साध्यमादाय बाध उक्तः । न चैवं प्रमुष्टतत्ताकस्मरणमादायाऽर्थान्तरम् । अनुभवपक्षत्वेनैव तद्वारणादिति ।

वस्तुतस्तु शीतेत्यारभ्य प्रथमाऽनुमानेष्वेव योज्यम् । तथा हि ननु पृथिव्यवृत्तिपृथिवीत्वप्रकारकविषयताकत्वाऽभावः शीता पृथिवीतिभ्रमे गतस्तत्कथं भ्रम-

माथुरी

भेदेनापि विषयताभेदादित्यर्थः, 'न च' न तु, 'प्रकारभेदेन' प्रकारभेदेनैव, 'मानाभावात्' विनिगमकाभावात् ।

'पृथिवीत्वसमानाधिकरणेति पृथिवीवृत्तिधर्म्मप्रकारकत्वमवच्छिन्नान्तार्थः, पृथिवीविशेष्यकत्वं पृथिवीवृत्तित्वं पृथिवीवृत्तित्वं, एवमग्रेपि, पृथिवीत्वव्यधिकरणेति पृथिव्यवृत्तिधर्म्माप्रकारकेत्यर्थः, 'पृथिव्यवृत्तीति पृथिव्यवृत्तिधर्म्मासमानाधिकरणेत्यर्थः, पृथिवीवृत्तीति पृथिवीत्वप्रकारकेत्यर्थः, 'गन्धसमानाधिकरणेति, अत्रेदं जलमित्यादिज्ञाने व्यभिचारवारणायाप्रकारकान्त विषयताविशेषणं, तदर्थश्च गन्धवदवृत्तिधर्म्मप्रकारकत्व-गन्धवदवृत्तिधर्म्मसमाणाधिकरणत्वान्यतरशून्यत्वं, तेन पृथिव्यां जलभ्रमे जले प्रमुष्टतत्ताकपृथिवीत्वभ्रमे च न व्यभिचारः, अयञ्च द्वितीयसाध्ये हेतुः न तु प्रथमतृतीययोः पृथिवीत्वनिर्व्विकल्पके व्यभिचारापत्तेः । त्रितयसाधारणं हेतुमाह, 'अगन्धेति पृथिवीत्वप्रकारकभ्रमे व्यभिचारवारणायावृत्त्यन्तं विषयताविशेषणं, तदर्थश्च गन्ध-

१. एकदेशिमते इति कपुस्तके ।

१. पृथिवीत्यनुभवपक्षे तत्साध्यसाधनादित्यर्थं इति कनपुस्तकयोः ।

**करचरणवति शरीरज्ञानत्वादित्यत्र करचरणवत्त्वं नोपलक्षणं व्यावृत्त्योपलक्ष्याऽभावात् । न च विषयता ज्ञानविशेषणम्, करचरणादिवत्त्वप्रकारकशरीरज्ञानत्वस्य व्यभिचारात्, शरीरमिति ज्ञाने तदसिद्धेश्च । विषय-**

आलोकः

नन्विमाः पृथिव्य इत्यत्र पृथिवीत्वाऽसमानाधिकरणाधर्म्माऽवच्छिन्ना विषयता यदंशे तत्र हेत्वभाव इत्याह—विशेष्येति ।

न च प्रकारभेदेन विषयताभेद इति सर्वपृथिव्यपृथिवीवृत्तिः पृथिवीत्वप्रकारिकैव विषयता । तथा च पृथिवीत्वाऽसमानाधिकरणप्रकाराऽवच्छिन्ना या विषयता तत्प्रतियोगित्वं पृथिव्यंशे ज्ञानस्याऽस्तीत्युक्तव्यभिचारस्तदवस्थ इत्यत आह—प्रकारभेदेनेति । तेन तथाऽनभ्युपगमादित्यर्थः ।

दर्पणः

व्यावृत्तं साध्यमत आह—शोतेति । ननु जलपृथिव्योरिमे पृथिव्याविति समूहाऽऽलम्बने गन्धवद्विशेष्यकपृथिवीत्वप्रकारकनिश्चयत्वादिति हेतुरस्ति । अपृथिवीवृत्तिपृथिवीत्वप्रकारकविषयताकत्वाऽभावरूपसाध्यं नाऽस्तीति व्यभिचार इत्यत आह—भ्रमेति । पृथिव्यंशे साध्यहेत्वोः सत्त्वान्न व्यभिचार इति भावः ।

ननु द्वयोर्विशेष्ययोरेकैव विषयता, तथा च पृथिव्यंशेऽपि साध्यं नाऽस्तीत्यत आह—विशेष्येति । ननु पृथिवीत्वस्य प्रकारस्यैकत्वादेकैव विषयता प्रकारभेदेन विषयताभेदादित्यत आह—न च प्रकारेति ।

केचित्तु पृथिवीत्वाऽसमानाधिकरणप्रकारकत्वपृथिवीत्वाऽसमानाधिकरणधर्मसमानाधिकरणत्वाऽन्यतरवद्विषयताकत्वाऽभावः साध्यतयाऽभिप्रेतः तत्तांऽश[1]रहि-

माथुरी

वद्भिन्नावृत्तित्वं, पृथिवीत्वप्रकारकेत्यनुक्तौ प्रथमतृतीयसाध्ये पृथिव्यां प्रमुष्टतत्ताकजलभ्रमे पृथिवीत्वनिर्व्विकल्पके च व्यभिचारः, द्वितीयसाध्ये पृथिव्यां जलभ्रममात्रे व्यभिचार इति तदुपादानम् । त्रितयसाधारणं हेत्वन्तरमाह, 'गन्धेति, अत्रापि विषयता पृथिवीत्वप्रकारकत्वेन विशेषणीया क्वचित्तथैव पाठः । 'साध्याप्रसिद्धेरिति प्रथमं विशिष्टसाधने साध्याप्रसिद्धेरित्यर्थः । इदमुपलक्षणं प्रथम-द्वितीयसाध्ययोः पृथिवीविशेष्यकगन्धादिप्रकारकज्ञानेऽपि सत्त्वेन पृथिवीत्वप्रमात्मकतया तत्सिद्धावपि पृथिवीत्वांशे प्रमात्वस्यासिद्धेरित्यपि बोध्यः । किन्त्वर्थादिवेति इयं पृथिवीवृत्तिधर्म्मप्रकारिका पृथिव्यवृत्तिधर्म्मप्रकारिका वा विषयता पृथिवीवृत्तिः गन्धवद्वृत्तित्वात्, द्वय पृथिवी-

१. तत्तांशेति गपुस्तकपाठः । २. उभयाभावेति कपुस्तकपाठः ।

**विशेषणत्वे करचरणवद्विषयकशरीरज्ञानत्वस्य व्यभिचारात्, शरीरज्ञानस्यापि वस्तुतः कराऽऽदिमद्विषयकत्वात् । नाऽपि करचरणादिशून्ये यच्छरीरत्वेन ज्ञानं तदन्यत्वे सतीति विवक्षितम् । शून्य इत्यत्र विषयत्वं**

आलोकः

एवमिति । यत्प्रकारः पृथिवीत्वाऽऽदिः ।

तद्वति व्याप्यवति, व्याप्यवद्विशेष्यकत्वे सतीति यावत् ।

तत्प्रकारकज्ञानत्वं व्यापकप्रकारकज्ञानत्वम् ।

दर्पणः

ताऽयथार्थस्मरणे पृथिवी जलं वेति पृथिवीविशेष्यकसंशये एकैकगर्भसाध्यस्य गतत्वेन उभय²गर्भताया आवश्यकत्वात् । हेतौ च संशयवारणाय गन्धासमानाधिकरणाऽप्रकारकत्वम्, संशये च प्रकारभेदेन विषयताभेदो नाऽस्ति । प्रत्येक स्मरणं हि विषयताभेदे मानं न च संशयस्थले तदस्तीति संशये साध्यहेत्वोः सत्त्वं नाऽशङ्कनीयम् पृथिवीत्वाऽसमानाधिकरणत्वञ्च साध्ये पृथिव्यवृत्तित्वम् । हेतो च गन्धाऽसमानाधिकरणत्वं गन्धाऽनधिकरणवृत्तित्वमभिमतम् । तथा च जलाऽऽदिनिर्विकल्पके गगने गगनत्वमिति ज्ञाने प्रमुष्टतत्ताकाऽयथार्थपृथिवीस्मरणे च व्यभिचारवारणाय गन्धसमानाधिकरणप्रकारकत्वम् । तत्र आद्ये सप्रकारकत्वेन द्वितीये साऽधिकरणसप्रकारकत्वेन तृतीये गन्धेत्यादिना व्यभिचारवारणमिति द्रष्टव्यम् । गन्धसमानाधिकरण-

माथुरी

त्वप्रकारकविषयता पृथिव्यवृत्तिधर्म्मासमानाधिकरणा गन्धवद्वृत्तित्वात् यन्नैवं तन्नैवं यथा पृथिवीत्वभ्रमस्य विषयतेति क्रमेण खण्डशः प्रसिद्ध्या व्यतिरेक्यनन्तरमेवैतदनुमानात् तत् सिद्ध्यतीत्यर्थः । 'समर्थप्रवृत्तिजनकत्वेति दाहसमर्थेत्यर्थः प्रामाण्यज्ञानप्रामाण्यानुमानाभिप्रायेणेदमित्यपि केचित् । 'दाहसमर्थविषयत्वं' दाहसमर्थविषयकत्वम्, 'तदसामार्थ्यादिति मनसोऽसामर्थ्यादित्यर्थः, 'स्वतः प्रामाण्येति प्रामाण्यस्यानुव्यवसायग्राह्यत्वापत्तेरित्यर्थः । 'वह्नित्वप्रकारकेति वह्नित्वप्रकारकप्रमाया अनुव्यवसाये सतीत्यर्थः । 'तत्र विषय इति मानान्तरादितिशेषः । 'ज्ञानानन्तरमिति तज्ज्ञाननाशे सतीत्यर्थः, 'वह्निव्यवसाये' पुरोवर्त्तिविशेष्यकवह्नित्वप्रकारकप्रमायाम्, 'स्मृत्युपनीतेति उच्छृङ्खलस्मृत्युपनीतदाहसमर्थत्वरूपेण स्मृत्युपनीतं पुरोवर्त्तिविशेष्यकत्वं 'मनसा परिच्छिद्यत इति योजना । न चैतावता दाहसमर्थविशेष्यकत्वग्रहेपि तदवच्छिन्नवह्नित्वप्रकारकत्वस्य विशिष्टस्याग्रहात् हेत्वसिद्धिरिति वाच्यम् । तदानीमुपनीते वह्नित्वप्रकारकत्वे अवच्छिन्नतासम्बन्धेन दाहसमर्थविशेष्यकत्वप्रकारकत्वग्रहेपि बाधकाभावादिति भावः । 'ज्ञानोपनीतेति उच्छृङ्खलस्मृत्युपनीतगन्ध-स्नेहादिमत्त्वरूपेण स्मृत्युपनीतं

सप्तम्यर्थ इति करचरणशून्यविषयकशरीरज्ञानाऽन्यशरीरज्ञानत्वादित्यर्थः, तथा चाऽसिद्धिः, शरीरज्ञानस्य तच्छून्यशरीरत्वादिविषयकत्वनियमात् । न वा करचरणशून्ये यच्छरीरत्वेन ज्ञानं न भवतीति विवक्षितम्, तृतीयाऽर्थ-

आलोकः

न च समर्थप्रवृत्तिजनकत्वसमभिव्याहाराऽनुपपत्तिः । न हि गन्धस्नेहवत्तस्याऽपि प्रकारव्याप्यतया प्रामाण्यग्राहकत्वं ज्ञानवृत्तित्वेन तावत एव प्रामाण्यग्रहसमर्थत्वान्न तु विषयवृत्तित्वादिति वाच्यम्, प्रामाण्यज्ञानप्रामाण्यं प्रति समर्थप्रवृत्तिजनकत्वस्यैव तद्व्याप्यत्वेन तद्वति प्रामाण्यज्ञानत्वस्य तत्प्रामाण्यव्याप्यत्वमित्यभिसन्धानात् ।

दर्पणः

प्रकारकत्वं तादृशप्रकारसमानाऽधिकरणत्वम्, तेन व्यभिचारवारणं सम्भवति । यद्यपि गन्धसमानाऽधिकरणत्वमेव विषयताविशेषणमुचितं न त्वधिकम्, तथाऽपि यथोक्तविशेषणविशेष्यभावे न वैयर्थ्यमिति । शीतेति । प्रकारभेदेन विषयताभेदादिति भावः ।

माथुरी

पुरोवर्त्तिविशेष्यकत्वं मनसा परिच्छिद्यत इत्यर्थः । शङ्कते, 'तर्हीति, 'पृथिवीत्वोपनया-नन्तरमिति पृथिवीत्वप्रकारकव्यवसायानन्तरमित्यर्थः, 'उपनीत इति पुरोवर्त्तिविशेष्य-कत्वे सति पृथिवीत्वप्रकारकत्वरूपेणानुव्यवसित इत्यर्थः, व्यवसायनाशे सतीति शेषः । 'पृथिवीत्ववतीति पृथिवीत्व-तद्वद्विशेष्यकत्व-पृथिवीत्वप्रकारकत्वव्यवसायानां सर्व्वेषा-मेवोपनयसत्त्वात् प्रतिबन्धकस्य व्यवसायस्यासत्त्वाच्चेति भावः । 'प्रामाण्यमिति स्मृत्युपनीतमिति शेषः, 'मनसैवेति एवकारोऽप्यर्थे, 'स्वत एव प्रामाण्यग्रह इति न प्रामाण्यस्य परतो ग्रह इत्यर्थः । 'ज्ञानान्तरेति मनसा ज्ञानान्तरोपस्थापिते ज्ञाने क्वचित् प्रामाण्यग्रह इत्यर्थः । अनपाये हेतुमाह, 'यावज्ज्ञानग्राहकेति, 'यावत्स्वाश्रयग्राहकेति स्वाश्रयविषयकयावद्ग्रहविषयत्वमित्यर्थः, 'तदन्यथेति तादृशस्वतस्त्वाभाववत्त्वे सति ग्राह्यत्वमित्यर्थः, ननु यावज्ज्ञानग्राहकग्राह्यत्वाभावादिरूपस्य परतस्त्वस्याहानावपि तज्ज्ञानविषयकजन्यज्ञानाजन्यजन्यज्ञानविषयत्वाभावरूपस्य परतस्त्वस्य हानिरेवेत्यत आह, 'मनसा चेति, 'तज्ज्ञानविषयकजन्यज्ञानजन्यत्वादिति पाठः, 'तज्ज्ञानविषयक-जन्यज्ञानजन्यज्ञानग्राह्यत्वादिति पाठे 'ग्राह्यत्वादित्यस्य रूपत्वादित्यर्थः, 'न परतस्त्व-हानिरिति न तज्ज्ञानविषयकेत्यादिरूपस्यापि परतस्त्वस्य हानिरित्यर्थः । न च परत-स्त्वानपायेपि उक्तक्रमेण दाहसमर्थविशेष्यकत्वे सति वह्नित्वप्रकारकत्वस्य स्मृतिकाले वह्नित्ववद्विशेष्यकत्वे सति वह्नित्वप्रकारकत्वस्यापि ग्रहे बाधकाभावात् सिद्धसाधनं दुर्व्वारमिति वाच्यम् । कदाचिन्मनसा दाहसमर्थविशेष्यकत्वे सति वह्नित्वप्रकारकत्वग्रहे

**विषयत्वे उक्तदोषादन्यस्याऽसम्भवादिति निरस्तम्, करचरणवद्विशेष्यक-शरीरत्वप्रकारकज्ञानत्वस्य हेतुत्वात्, शरीरभ्रमे च करचरणवतः शरीरस्य**

आलोकः

ज्ञानाऽनन्तरमिति । अनन्तरं तदनुव्यवसाये सतीति शेषः ।

शरीरज्ञानम् । प्रमा शरीरत्ववति शरीरत्वप्रकारकमित्यर्थः ।

दर्पणः

ननु विशेष्ययोर्विषयतैक्ये पृथिव्यंशेऽपि न साध्यमस्तीत्यत आह—**विशेष्येति** ।

ननु शीता पृथिवीति ज्ञानेऽपि सन्देह इवेकैव विषयता तत्कुतः साध्यसत्त्व-मित्यत आह—**न च प्रकारेति** । निश्चयरूपज्ञाने प्रकारभेदे सत्यपि विषयताभेदो नेति न चेत्यर्थः । मानाभावात् ।

प्रत्येकाऽस्मरणरूपमानाऽभावादिति वदन्ति । तत्र गगनगन्धयोर्विरोधग्रहे गगनवान् गन्धवान् वेति घटविशेष्यकसंशये व्यभिचारात् ।

साधिकरणमात्रप्रकारकत्वमत्र **केचिदाहुः**—तदपि न। प्रमुष्टतत्ताकाऽयथार्थ-पृथिवीस्मरणे व्यभिचारादिति गन्धाऽधिकरणाऽवृत्त्यप्रकारकत्वरूपं प्रथमविशेषण-मुक्तसंशयवारकम् । द्वितीयस्य गन्धसमानाधिकरणः सन् प्रकारो यस्या इत्यर्थः । तेन

माथुरी

तन्मात्रस्मरणादेव प्रामाण्यानुमानसम्भवात् । न हि दाहसमर्थविशेष्यकत्वे सति वत्तित्व-प्रकारकत्वस्मृतिकालेपि वह्नित्ववद्विशेष्यकत्वे सति वह्नित्वप्रकारकत्वस्य स्मृतिनियमः, येन सिद्धसाधनं स्यादितिभावः । 'व्यतिरेक्यनन्तरमिति कुत्रचिज्ज्ञाने व्यतिरेकिणा प्रामाण्यानुमानानन्तरमित्यर्थः, तदुत्तरवर्त्तिषु ज्ञानान्तरेष्विति शेषः । 'अन्वयिनेति अन्वयिनापीत्यर्थः, 'प्रमेति शरीरत्ववति शरीरत्वप्रकारकमित्यर्थः, 'कर-चरणादीति, 'शरीरज्ञानत्वात्' शरीरत्वप्रकारकज्ञानत्वात्, करादिकन्तु प्रत्येकमेव हेतुघटकं न तु मिलितं व्यर्थत्वात्, 'स्वशरीरज्ञानेति स्वीयपूर्व्वशरीरज्ञानेत्यर्थः, शरीराभेदभ्रमे व्यभि-चारमाशङ्क्य निराकरोति, 'न चेति, 'करचरणान्तरवतीति कर-चरणवद्भिन्ने इत्यर्थः, 'कर-चरणान्तरवत्त्वज्ञान इति शरीराभेदभ्रम इत्यर्थः, 'शरीरांश इति, मुख्यविशेष्यता-पर्य्यन्तस्य साध्ये अविवक्षितत्वादिति भावः । 'एतेनेति वक्ष्यमाणरीत्येत्यर्थः, 'इत्यत्रेति कर-चरणवद्वृत्तिशरीरत्वज्ञानत्वादित्यर्थक इति शेषः, वृत्त्यन्तं ज्ञानत्वविशेषणम्, 'कर-चरणवत्त्वमिति कर-चरणवाचकपदमित्यर्थः, 'नोपलक्षणमिति न ज्ञानवृत्तिधर्म्मान्तरं लाक्षणिकमित्यर्थः, 'व्यावृत्तेति लक्षणीयस्य भ्रमव्यावृत्तस्य धर्म्मान्तरस्य तदानीं ज्ञाना-भावादित्यर्थः । 'विषयतयेति प्रकारितयेत्यर्थः, तथा च प्रकारितासम्बन्धेन यत् कर-

**विशेषणत्वात् । विश्वयतापक्षे करचरणाऽदिशून्यनिष्ठशरीरत्वप्रकारक-विषयताप्रतियोगित्वशून्यत्वे सति शरीरज्ञानत्वादिति हेतुः ।**

**ननु न गृहीतप्रामाण्यं ज्ञानं परप्रामाण्यनिश्चयरूपम्, अनवस्था-नात् । नाऽपि ज्ञायमानप्रामाण्यम्, स्वतः प्रामाण्यग्रहाऽऽपत्तेः । अतोऽ-**

आलोकः

न चेति । न च शरीरत्ववतीत्यत्र सप्तम्यर्थस्य विषयतया भ्रमे साध्यसत्वात् न व्यभिचार इति वाच्यम्, तद्विशेष्यकत्वस्य तदर्थत्वादिति भावः ।

दर्पणः

गन्धसमानाऽधिकरणाऽऽत्मकसम्बन्धेन प्रकार इति लभ्यते । तथा च प्रमुष्टतत्ताकाऽ-यथार्थपृथिवीस्मरणे तेन व्यभिचारवारणम्, साध्यं चाऽत्र पूर्वोक्तमन्यतरधर्मवद्विषय-ताकत्वाऽभावरूपमेव ।

यद्वा पृथिव्यवृत्तिप्रकारकविषयताकत्वाऽभावः साध्यः । गन्धाऽनधिकरण-वृत्त्यप्रकारकनिरधिकरणप्रकारकविषयताप्रतियोगित्वं हेतुः । तत्र इदं जलमिति धी-दारणाय गन्धाऽनधिकरणेत्यादि । गगने पट इतिधियश्च वारणाय निरधिकरणेत्या-दिविशेषणे, ज्ञानत्वनिश्चयत्वविशेषणमहिम्नैवोक्तहेतुलाभान्न तद्वैयर्थ्यमिति वयम् ।

**पृथिवीविशेष्यकेति** मूलम् । विषयतायाः सविशेषकत्वमादाय, यद्वा पृथिवी-निष्ठेत्यर्थः । एवमग्रेऽपि । **पृथिवीत्वव्यधिकरणेति** मूलम् । पृथिवीवृत्तिभिन्नमात्राऽ-प्रकारकेत्यर्थः ।

माथुरी

चरणादिमत्त्वज्ञानं तद्वृत्तिशरीरत्वज्ञानत्वादिति हेत्वर्थ इति भावः । 'शरीरज्ञानत्वस्येति शरीरत्वज्ञानत्वस्येत्यर्थः, फलितहेत्वर्थस्येति शेषः, 'व्यभिचारादिति स्थान्वादौ कर-चरणवत्त्व-शरीरत्वोभयप्रकारकभ्रमे व्यभिचारादित्यर्थः, 'ज्ञान इति पक्षीभूत इति शेषः । विषयविशेषणत्व इति करादिमत्त्वं विषये स च ज्ञाने विशेषणमित्युक्ते इत्यर्थः, 'शरीरज्ञानत्वस्येति 'शरीरत्वज्ञानत्वस्येत्यर्थः, फलितहेत्वर्थस्येति शेषः, 'व्यभिचारादिति स्वाश्रयाभेदसम्बन्धेन शरीरत्वप्रकारकभ्रमे व्यभिचारादित्यर्थः । व्यभिचारमेव विवृ-णोति, 'शरीरभ्रमस्यापीति सम्बन्धेन शरीरत्वप्रकारकभ्रमस्यापीत्यर्थः, 'असिद्धिरिति अप्रसिद्धिरित्यर्थः, 'शरीरज्ञानस्य' शरीरत्वज्ञानस्य । तृतीयार्थमादाय दूषणदानाय पुनराशङ्कते, 'न वेति, 'कर-चरणादिशून्य इति यच्छरीरत्वेन ज्ञानं कर-चरणशून्ये न भवतीत्यर्थः । 'शरीरभ्रमे चेति शरीरसम्बन्धेन शरीरत्वप्रकारकभ्रमे इत्यर्थः, 'विशेषण-त्वादिति अविशेष्यत्वादित्यर्थः । यद्वा विशेषणतावच्छेदकसम्बन्धत्वादित्यर्थः[1] ।

१. विशेषणतावच्छेदकत्वादित्यर्थः इति ग० ।

गृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यनिश्चयरूपमास्थेयम् । तथा च व्यवसायोऽप्यगृहीतप्रामाण्य एव स्वविषयं निश्चाययतु, किं विषयनिश्चयाऽर्थं तत्प्रामाण्यनिश्चयेन । अथ व्यवसायस्याऽप्रामाण्यदर्शनान्न तन्मात्रादर्थनिश्चयः र्तार्ह प्रामाण्याऽनुमितेरप्यप्रामाण्यदर्शनान्न ततोऽपि प्रामाण्यनिश्चय इति चेत् । न ब्रूमः ज्ञानप्रामाण्यनिश्चयादेवाऽर्थनिश्चय इति, किं तु

आलोकः

शरीरांऽश इति । शरीरत्ववतीत्यादिसाध्यसत्वादित्यर्थः ।

विषयत्वमिति । विशेष्यत्वपर्यन्ताऽनुसरणे तु ऋजुरेव हेतुः सम्यक् किमनेनेति भावः ।

दर्पणः

( तेन पृथिवीत्वव्यधिकरणघटत्वाऽवच्छिन्नत्वाद्यो बाधः स नेति भावः[१] ) पृथिव्यवृत्तीति मूलम्[२] । सकलपृथिवीनिष्ठाऽत्यन्ताभावप्रतियोगिमात्रप्रकारकेत्यर्थः । गन्धेति मूलम् । अत्र निर्विकल्पके विषयताविरह्नात् न तत्र व्यभिचारः । ज्ञानपदस्याऽनुभवपरत्वात् जलविशेष्यकपृथिवीत्वप्रकारकप्रमुष्टतत्ताकस्मृतौ न व्यभिचारः, अवृत्तिमात्रप्रकारकपटज्ञाने व्यभिचारात् । पृथिवीत्वप्रकारकेति मूलम् । इदञ्च चरमहेतावपि देयम् ( अन्यथा पूर्वोक्तपटज्ञाने व्यभिचारः स्यात् )[३] । पृथिवीविशेष्यके

माथुरी

दीधित्यनुयायिनस्तु 'कर-चरणान्तरवत्त्वज्ञान इति कर-चरणान्तरवत्त्वावच्छेदेन शरीरत्वप्रकारकभ्रम इत्यर्थः'[२] 'शरीरांश इति शरीरत्वांश इत्यर्थः, 'एतेनेत्यादिग्रन्थस्तु पूर्ववत् । 'शरीरभ्रमस्यापीति शरीराभेदारोपस्यापीत्यर्थः, 'मुख्यविशेष्यत्वस्य साध्यघटकतया च साध्याभावादिति भावः । 'कर-चरणद्विशेष्यकेति कर-चरणवन्मुख्यविशेष्यकेत्यर्थः, 'शरीरभ्रमे चेति शरीराभेदारोपे चेत्यर्थः, इत्याहुः ।

'विषयतापक्ष इति विषयताया एव सविशेष्यकत्व-सप्रकारकत्वमत इत्यर्थः, 'शरीरज्ञानत्वादिति शरीरत्वप्रकारकविषयताप्रतियोगिज्ञानत्वादित्यर्थः, इमे स्थाणुशरीरे इति समूहालम्बनप्रमायां भागासिद्धिवारणाय प्रतियोगिकोटौ 'शरीरत्वप्रकारकेति, अखण्डाभावतया च न वैयर्थ्यम् । इमे शरीरे इति प्रमा-भ्रमसमूहालम्बनञ्च न पक्ष इति न तत्र भागासिद्धिः । इदमुपलक्षणं कर-चरणवद्वृत्तिशरीरत्वप्रकारकविषयताप्रतियोगिज्ञानत्वादित्यपि हेतुः सम्भवतीति बोध्यम् ।

---

१. कोष्ठगतो ग्रन्थो गपुस्तके नास्ति । २. पृथिवीवृत्तीति गपुस्तकपाठः ।

३. कोष्ठगतो ग्रन्थः गपुस्तके नास्ति ।

४. शरीरत्वप्रकारकभाने इत्यर्थ इति ख० ।

यत्राऽप्रामाण्यशंका नाऽस्ति करतलाऽऽमलकाऽऽदिज्ञाने, तत्र व्यवसाय एवाऽर्थनिश्चय इति तत एव प्रवृत्तिर्निष्कम्पा, यत्राऽनभ्यासदशायामप्रामाण्यसंशयेनाऽर्थनिश्चयं परिभूयाऽर्थसंशयः तत्र प्रामाण्यनिश्चयाऽधीनज्ञानादथ निश्चित्य निष्कम्पं प्रवर्तते नाऽन्यथेति सर्वाऽनुभवसिद्धम् ।

आलोकः

अत्र च शरीरज्ञानत्वाऽऽदित्यत्र तत्प्रकारकत्वमात्रं विवक्षितम् । विवक्षितसाध्ये ज्ञानगर्भे हेतौ वैयर्थ्यात् । न च प्रमापदस्याऽनुभवगर्भवचनतया नैवमिति वाच्यम्, तथा सति स्मृतौ व्यभिचाराऽऽपत्तेः, साध्ये तावद्गर्भतायां प्रयोजनाऽभावाच्चेति ।

प्रामाण्यग्रहस्य प्रवृत्त्यनौपयिकस्याऽवश्यकत्वमिति यदि तथा सत्याह—गुरुमत इति ।

अनुभवमिति । ननु किं प्रामाण्यग्रहेण कराऽऽदिमत्त्वे पुरुषस्य[1] गृहीते तत एव विशेषदर्शनात् संशयाऽभावः, तदग्रहे तु लिङ्गाऽभावादेव न प्रामाण्यग्रहः ।

दर्पणः

पृथिवी जलं वेत्यादिज्ञाने च चरमसाध्यद्वये चरमहेत्वोर्न व्यभिचारः साध्ययोर्मात्रगर्भत्वादिति । मूले विषयत्वं विशेष्यत्वम् । एवमग्रेऽपि । मूलम्—अनुव्यवसायगम्यमिति । स्वातन्त्र्येणेति शेषः । एवमग्रेऽपि तदनुव्यवसाये सतीति । ननु दाहसमर्थत्वं प्रथमेनैवोपनेयं किमनुव्यवसायेन । न च दाहसमर्थत्ववद्विशेष्यकत्वपर्यन्तोपनयनाऽर्थमनुव्यवसायाऽऽदरः । वह्निज्ञानाऽनुव्यवसायेन पुरोवर्त्तिविशेष्यकत्वे गृहीते पुरोवर्त्तिनि दाहसमर्थत्वोपनयनमात्रेण विशेष्ये विशेषणमिति न्यायेन विशिष्टवैशिष्ट्यनिर्वाहात् । न च वह्निज्ञानाऽनुव्यवसायेन वह्निविशेष्यकत्वं न गृहीतमिति वाच्यम् । दाहसमर्थज्ञानाऽनुव्यवसायेनापि तथा सति दाहसमर्थविशेष्यकत्वस्याऽग्रहादिति ।

माथुरी

'ज्ञायमानप्रामाण्यमिति स्वस्मिन् स्वप्रामाण्यविषयकं ज्ञानमित्यर्थः, 'स्वविषयंनिश्चाययत्विति स्वविषयनिश्चयरूपतामासादयत्वित्यर्थः, 'विषयनिश्चयार्थम्[2], विषयनिश्चयकार्यार्थम्[1] 'अर्थनिश्चय इति अर्थनिश्चयकार्य्यमित्यर्थः, प्रामाण्यनिश्चय इति प्रामाण्यनिश्चयकार्य्यमित्यर्थः 'अर्थनिश्चय\ इति तत्कार्य्यमित्यर्थः, एवमग्रेऽपि । 'अनभ्यासदशायामिति अप्रामाण्यसंशयप्रतिबन्धकासमवधानदशायामित्यर्थः, परिभूयेति निष्कम्पप्रवृत्तिलक्षणस्वकार्य्याक्षमीकृत्येत्यर्थः, 'प्रामाण्यनिश्चयाधीनज्ञानादिति पूर्वोत्पन्नार्थनिश्चयविशेष्यकप्रामाण्यनिश्चयोत्तरवर्त्तिज्ञानान्तरादित्यर्थः, पञ्चम्यर्थोऽभेदः अन्व-

१. विषयस्येति क्वचित् पाठः ।

२. विषयनिश्चयत्वार्थमिति क०, ख०, च ।

अत एव गृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यं निश्चाययति अप्रामाण्यशङ्का-कलङ्काऽभावात् ।

यत्र तु प्रामाण्यज्ञाने अप्रामाण्यशङ्कया प्रामाण्यसंशयः तत्र प्रामाण्यज्ञाने प्रामाण्यनिश्चयादेव प्रामाण्यनिश्चयः । एवं यावदप्रामाण्यशङ्कं

आलोकः

न च पुरुषत्वव्याप्यत्वेनाऽगृहीते कराऽऽदौ कराऽऽदिमति पुरुषत्वज्ञानत्वस्य प्रामाण्य-व्याप्यत्वे गृहीते चोभयोरुपपत्तिः । व्याप्यवति व्यापकप्रकारकज्ञानत्वमगृहीत्वा प्रामाण्यव्याप्तेरेव विपक्षबाधकाऽऽभावेनाऽग्रहात् । किं च समानप्रकारकसमान-विशेष्यकसंशयस्यैव निर्णयनिवर्त्त्यतया कुतः प्रामाण्यनिर्णयस्य विषयसंशयाऽपनोदकता, भवतु वा तद्विषयतामात्रेण निवर्त्तकता, तर्हि किमपराद्धं व्यवसायेन, विशेषादर्शन-मूलकत्वात् ? न स तथेति यदि, तदा प्रामाण्यनिश्चयोत्तराऽर्थनिश्चयोऽपि विशेषाऽ-

दर्पणः

अत्रोच्यते—ज्ञानोपनीतं गन्धस्नेहवद्विषयकत्वं मनसा परिच्छिद्यत इति मूल-दर्शनाद्विशिष्टोपनयनसिद्ध्यर्थमेवमुक्तम् ! वस्तुगत्या अनुव्यवसायं विनाऽपि अभिमत-सिद्धिर्भवत्येव । न चाऽनुव्यवसायेन विशेष्यत्वांशे सत्तानिश्चयरूपेणाऽपि दाहसमर्थ-त्वांऽशे सत्तानिश्चयाऽनात्मकेन कथं सत्तानिश्चयाऽनात्मकोपनीतभानमिति वाच्यम्, विशेषणज्ञानमात्रस्यापेक्षितत्वात् । इदं चाऽनुव्यवसायस्य विशेष्यत्वग्राहित्वमभ्युपेत्यो-क्तम् । मताऽन्तरे तु जन्माऽन्तरीयसंस्काराद्विशेष्यत्वांशोपस्थितिरिति द्रष्टव्यम् ।

वयं तु बहिरर्थेऽर्थे स्वरूपसम्बन्धाऽऽद्यात्मकस्य विशेष्यत्वस्य मनसा ग्रहाऽभा-वेऽपि अन्तरार्थे मनसा गृहीतं विशेष्यत्वमन्यत्राऽप्युपनीतं भासत इति न जन्माऽन्त-रीयसंस्काराऽपेक्षेति । तज्ज्ञानेति मूलम् । तज्ज्ञानविषयकज्ञानव्यतिरेकाऽप्रयुक्तव्यति-रेकप्रतियोगिज्ञानप्रकारत्वमित्यर्थः । ग्राह्यत्वादिति पाठे कृदभिहितन्यायेन ग्रहपदं

माथुरी

यस्तस्य 'निश्चित्येत्यत्र निश्चयेन । 'अत एवेति निश्चयकार्य्यं प्रति सर्व्वत्र निश्चय-निष्ठप्रामाण्यनिश्चयस्यानपेक्षितत्वादित्यर्थः, 'ज्ञानं' प्रामाण्यज्ञानम्, 'परप्रामाण्यं निश्चा-ययति' परप्रामाण्यनिश्चयकार्य्यं जनयतीत्यर्थः, 'प्रामाण्यनिश्चयादेव' 'प्रामाण्य-ज्ञानाप्रामाण्यनिश्चयादेव, 'प्रामाण्यनिश्चयः' प्रामाण्यनिश्चयकार्य्यं, 'ज्ञानप्रामाण्य-निश्चयादेवेति प्रामाण्यज्ञाने प्रामाण्यनिश्चयादेवेत्यर्थः, 'तन्निश्चयः' 'तन्निश्चयकार्य्यं, 'अन्यथेति सर्व्वत्रैव प्रामाण्यनिश्चयस्यापेक्षितत्वे इत्यर्थः, गुरुमते चेति गुरुमतेऽपीत्यर्थः, 'प्रामाण्यस्य' स्वनिष्ठप्रामाण्यस्य, 'स्वग्राह्यत्वम्' स्वविषयत्वं, 'स्वरूप-प्रामाण्याभ्या-मिति, तन्मतसिद्धस्वग्राह्यमात्रोपलक्षणं 'परग्राह्यत्वे' परमात्रग्राह्यत्वे, 'परिशेषानु-

तज्ज्ञानप्रामाण्यनिश्चयादेव तन्निश्चयः। न चैवमनवस्था, चरमज्ञान-प्रामाण्यस्य ज्ञानाऽभावेन कोटिस्मरणाऽभावेन विषयाऽन्तरसञ्चारेण वा प्रामाण्यसंशयाऽवश्यम्भावात्। अन्यथा भट्टमते प्रामाण्यस्य ज्ञानानुमिति-ग्राह्यत्वेनाऽनवस्था स्यात्। गुरुमते च प्रामाण्यस्य स्वग्राह्यत्वं न स्वग्राह्यम्, स्वरूपप्रामाण्याभ्यां बहिर्भूतत्वात्। किन्तु परग्राह्यत्वे अनवस्थानात् परि-शेषाऽनुमानेन प्रमाणाऽन्तरेण वा ग्राह्यम्, तथा च तत्प्रामाण्यस्यापि स्व-ग्राह्यत्वमन्येनैवेत्यनवस्थैव।

आलोकः

दर्शनमूलकत्वात्? न स तथेति यदि, तदा प्रामाण्यनिश्चयोत्तराऽर्थनिश्चयोऽपि विशेषाऽदर्शनमूलकः कथं तदपनोदकः? कथं वा प्राथमिक इव द्वितीयेऽपि न प्रामाण्यसंशयाऽभिभवः? यदपि नाऽनुमितौ प्रामाण्यसंशयो धूमवति वह्निज्ञानत्वाऽऽदीनां प्रामाण्यव्याप्याऽऽदीनां ग्रहे विशेषदर्शनात्, तदपि यत्राऽनुमितावप्रामाण्य-

दर्पणः

गृह्यमाणपरम्। करचरणवद्विशेष्यकशरीरत्वप्रकारकज्ञानत्वादित्यस्य हेतोः शरीराऽ-न्तराऽभेदभ्रमे व्यभिचारो मूले शङ्कितः, तत्र विशेष्यांऽशे व्यभिचारो नाऽस्त्येव। विशेषणांऽशेऽपि च न सम्भवतीत्यनुक्तिसम्भवत्वं शङ्काया निराकरोति—न च शरीर-त्ववतीति। वस्तुतः करचरणवत्त्वेन तत्तादात्म्याऽऽरोपे शङ्कायां दोषाऽभावात्। न

माथुरी

मानेनेति एतज्ज्ञानप्रामाण्यमेतज्ज्ञानग्राह्यम् एतज्ज्ञानभिन्नमात्राग्राह्यत्वादित्यनुमाने-नेत्यर्थः, 'प्रमाणान्तरेण वेति शब्दादिना वेत्यर्थः, तत्प्रामाण्यस्यापीति स्वग्राह्यत्वज्ञान-निष्ठप्रामाण्यस्यापीत्यर्थः, इदमुपलक्षणं मिश्रमतेऽप्यनुव्यवसायस्य प्रामाण्यमनुव्यवसाया-न्तरेण ग्राह्यमेवं तत्प्रामाण्यमप्यनुव्यवसायान्तरेणेत्यनवस्थेत्यपि बोध्यम्।

'तस्यापि' प्रामाण्यनिश्चयस्यापि, 'प्रामाण्य' प्रामाण्यज्ञानम्, क्वाप्यपेक्षितमिति शेषः। 'न चेति, प्रामाण्यनिश्चये प्रामाण्यनिश्चयाभावे इति शेषः, 'प्रामाण्यसंशयात्' प्रामाण्यज्ञाने प्रामाण्यसंशयात्, औचित्यावर्जित इति व्यवसाये प्रामाण्यसंशयाधीन-इत्यर्थः, विषयसंशयः व्यवसायस्ये विषये संशयः, स्यादिति शेषः, निश्चित इति व्यवसायस्य प्रामाण्ये निश्चिते इत्यर्थः, 'संशयाभावादिति व्यवसाये प्रामाण्यसंशया-सम्भवादित्यर्थः, 'स्वतोग्रहेऽपि' व्यवसायनिष्ठप्रामाण्यस्यानुव्यवसायादिना निश्चयेऽपि, 'तत्संशये' अनुव्यवसायादौ प्रामाण्यसंशयात् व्यवसायनिष्ठप्रामाण्यसंशये, 'अनवस्थेति मिश्रादिमतेऽपि अनुव्यवसायादौ प्रामाण्यनिश्चयार्थमनुव्यवसायाद्यन्तरापेक्षायामनवस्थे-त्यर्थः। 'प्रामाण्यसंशयादिति निश्चये प्रामाण्यसंशयादित्यर्थः, 'विषये' तद्विषये, 'विषय-

यत्तु व्यवसायस्य प्रामाण्यनिश्चयादेव प्रवृत्तेर्न तस्याऽपि प्रामाण्याऽनुसरणमिति नाऽनवस्थेति। न च प्रामाण्यसंशयादौचित्यावर्जितो विषयसंशय इति वाच्यम्, निश्चिते संशयाऽभावात्। अन्यथा स्वतोग्रहेऽपि तत्संशयेऽनवस्थेति।

आलोकः

संशयस्तत्र तत्प्रामाण्याऽनुसरणमिति स्ववचनविरुद्धम्। लिंगोपधानाऽनुपधानरूपमतभेदेन तदविरोधोपपादनेऽपि धूमवति वह्निज्ञानत्वमिति हेतावपि विषयत्वस्य व्यभिचारितया विशेष्यकत्वस्याऽनुव्यवसायाऽग्राह्यत्वेऽसिद्धिः। तद्ग्राह्यत्वे वा किमपराद्धमनुव्यवसायेन प्रामाण्यग्रह इत्यादि सर्वमसमञ्जसमिति[1] चेत्—

दर्पणः

च विषयतयेति मूलोपरि इदम्। न चेति, शरीरांऽश इति फक्किकयोर्व्यत्ययश्च लेखकप्रमादकृतः। ऋजुरेव अभावद्वयाऽघटितः करचरणवद्विशेष्यकशरीरज्ञानत्वरूपः।

ननु हेतौ ज्ञानपदस्याऽनुभवपरत्वान्न स्मृतौ व्यभिचार इत्यरुचेराह—साध्य इति।

अनवस्थैवेति मूलम्। अनुव्यवसायस्य प्रामाण्यमनुव्यवसायाऽन्तरग्राह्यमिति मिश्रमतेप्यनवस्था द्रष्टव्या। विशेषाऽदर्शनमूलकत्वात् विशेषदर्शनाऽजन्यत्वात्। एवमग्रेऽपि। अनुव्यवसायाऽग्राह्यत्वेति। ग्राह्यत्वे धूमवत्त्वांऽशे सत्तानिश्चयाऽभावादिति भावः।

माथुरी

निश्चयार्थमिति प्रामाण्यसंशयाधीनविषयसंशयनिवृत्त्यर्थमित्यर्थः, 'प्रामाण्यनिश्चयः' व्यवसायनिष्ठप्रामाण्यनिश्चयः, 'विषयसंशयमिति व्यवसाये प्रामाण्यसंशयाद्विषयसंशयमित्यर्थः, 'अनादृत्य' अनभ्युपगम्य, 'प्रवृत्तिहेतुः' साक्षादेव प्रवृत्तिहेतुः 'उक्तं' कैश्चिदुक्तम्। शङ्कते, 'अन्यसंशयादिति, 'विषयसंशयहेतुत्वमिति निश्चयोत्तरविषयसंशयहेतुत्वमित्यर्थः।

ननु ज्ञानविषयत्वात्समानधर्म्मादपि तादृशविषयसंशयोदयात् कथं प्रामाण्यसंशयस्य तद्धेतुत्वमित्यत आह, 'ज्ञानविषयत्वमपीति। 'नन्विति, पर्वतो वह्निमान् धूमादित्यादावितिशेषः, 'हेत्वसिद्धिरिति कारणासिद्धिरित्यर्थः, अभिप्रायानभिज्ञः कारणासिद्धिं परिहरति, 'अथेति, 'स्वविषयेति स्वग्राह्येत्यर्थः, 'अनुमानमात्रेति, अनवस्थया प्रामाण्यनिश्चयासम्भवादिति भावः। अभिसन्धिमुद्घाटयति, 'प्रामाण्यसंशयेनेति, 'लिङ्गसन्देहादिति सन्देहपदं अगृहीताप्रामाण्यकनिश्चयाभावपरं, तथा चागृहीताप्रामाण्यकलिङ्गनिश्चयाभावादित्यर्थः, तस्यैवानुमितिहेतुत्वादिति भावः। 'अविरोधा-

१. सर्वम् असमञ्जसमिति कपाठः।

तदसत् । यदि प्रामाण्यसंशयान्न विषये संशयो निश्चितत्वात्, तदा विषयनिश्चयाऽर्थं प्रामाण्यनिश्चयो व्यर्थः, प्राथमिकविषयनिश्चयादेव निष्कम्पप्रवृत्त्युपपत्तेः । न हि विषयसंशयमनादृत्य प्रामाण्यनिश्चयः प्रवृत्तिहेतुरित्युक्तम् । अन्यसंशयादन्यत्र निश्चिते कथं संशय इति चेत्— अनुभवं पृच्छ । येन स्वसाक्षिकमेव प्रामाण्याऽप्रामाण्यसंशयस्य विषयसंशयहेतुत्वमनुमतम् । ज्ञानविषयत्वमपि प्रामाण्यसंशयमासाद्य विषयसंशायकम् ।

आलोकः

अत्र ब्रूमः – 'अनुभवं पृच्छे'त्यनेन सति प्रामाण्यसंशये विषयसंशय आवश्यक इत्युक्तम् । तथा च विषये कराऽऽदिमत्त्वज्ञानेऽपि कराऽऽदिमद्विशेष्यकत्वं ज्ञाने न गृहीतमित्यवश्यं प्रामाण्यसंशयेन भाव्यमित्यौचित्यावर्जितो विषयसंशयः । समानप्रकारकनिश्चय एव संशयविरोधीति तद्विशेषदर्शनेऽपि प्रामाण्यसंशयः । तस्मिन् सति

दर्पणः

कराऽऽदिमद्विशेष्यकत्वमिति । विशेष्यत्वांऽशस्याऽग्रहात्तत्ग्रहेऽपि वा तद्वत्त्वांऽशे सत्तानिश्चयाऽभावादिति भावः । इदं चोपलक्षणम् । कराऽऽदेः पुरुषत्वव्याप्यत्वाऽग्रहेऽपि विपक्षबाधकाऽन्तरेणाऽऽप्तवाक्येन वा कराऽऽदिमद्विशेष्यकपुरुषत्वज्ञानत्वस्य प्रामाण्यव्याप्यत्वग्रहसम्भवात् पूर्वपक्षाऽऽशङ्कितमपि क्वचित्सम्भवतीति ध्येयम् ।

माथुरी

दिति बाधकाभावादित्यर्थः । 'लिङ्गादिज्ञानस्यैवेति लिङ्गादिनिश्चयस्यैवेत्यर्थः, एवकारात् प्रामाण्यनिश्चयव्यववच्छेदः, 'तत्कलङ्के तु' तत्सत्त्वे तु, 'उक्तैव' प्रामाण्यनिश्चयरूपैव । ननु प्रामाण्यशङ्काया न सार्व्वत्रिकत्वं किन्तु क्वाचिकत्वमित्यत्र किं वीजमित्यत्र आह, 'यत्त्विति यत् पुनरित्यर्थः, त्वया पीत्यस्य पूर्व्वं तदित्यध्याहार्य्यं, तथा च संशयसामग्र्या असार्व्वत्रिकत्वमुभयानुमतमिति भावः । 'एवमिति यथा निश्चितप्रामाण्यकपरामर्शं एवानुमितिहेतुस्तथेत्यर्थः, 'तज्ज्ञानेति निश्चितप्रामाण्यकज्ञानेत्यर्थः, 'ज्ञानान्तरमेवेति उत्तरोत्पन्नज्ञानान्तरमेवेत्यर्थः । 'नन्वेवमिति, 'एवं' ज्ञानान्तरस्यैव प्रवर्त्तकत्वे । 'तत्समानविषयकज्ञानान्तर इति । न चान्यत्र प्रामाण्यनिश्चये कथमन्यत्र नाशङ्केति वाच्यम् । तादृशज्ञानत्वावच्छेदेनाप्रामाण्यवत्तानिश्चयाद्द्वितीज्ञानानुव्यवसायेन तादृशज्ञानत्ववत्ताग्रहादेव प्रामाण्यसंशयासम्भवादनुव्यवसायाभावे च धर्म्मिज्ञानाभावादिति भावः । ननु प्रामाण्यस्य स्वतोग्राह्यत्वाभावे टीकाकृतोऽनुमितौ स्वतः प्रामाण्यग्रहाभिधानं विरुद्धमित्यत आह, 'यत्त्विति, 'निरस्तसमत्वेति

ननु लिङ्गपक्षव्याप्त्यादीनां ज्ञानस्य प्रामाण्याऽवधारणेऽनवस्था, अनवधारणे हेत्वसिद्धिः। अथ लिङ्गाऽऽदिज्ञानं स्वविषयावधारणे कर्त्तव्ये स्वप्रामाण्यज्ञानं नाऽपेक्षते अनुमानमात्रोच्छेदप्रसङ्गात्। लिङ्गाऽऽदि-निश्चयस्य च स्वकारणाऽधीनस्य सर्वसिद्धत्वादिति चेत्—न। प्रामाण्य-संशयेन लिङ्गसन्देहात्। न हि न लिङ्गज्ञाने प्रामाण्यसंशयः, अविरोधा-दिति। उच्यते। अप्रामाण्यशङ्काकलङ्काऽभावे लिङ्गाऽऽदिज्ञानस्यैवाऽर्थ-निश्चायकत्वात्, तत्कलङ्के तूक्तैव गतिः।

यत्तु व्यवसाये क्वचिदप्रामाण्यशङ्का भवति क्वचिन्नेति त्वयाऽपि वक्तव्यम्। एवं बहुवित्तव्ययाऽऽयाससाध्ये स्वर्गसाधनं याग इति ज्ञानं न गृहीतप्रामाण्यं प्रवर्त्तकं प्रामाण्याऽनुमितेः पूर्वमेव तस्य विनाशात्, किन्तु तज्ज्ञानसमानविषयकमप्रामाण्यशङ्काशून्यं ज्ञानाऽन्तरमेव।

आलोकः

विशेषदर्शनेऽपि विषयसंशयः। प्रामाण्ये तु निश्चिते हेत्वभावादेव न विषयसंशय इति किमनुपपन्नम्? किं च तदेव हि विशेषदर्शनं संशयाऽपनोदकं यदभावस्तद्धेतुः। न च कराऽऽदिमत्त्वाऽदर्शनात् संशयो येन तद्ग्रहस्तद्विरोधी स्यादपि तु प्रामाण्याऽ-दर्शनादिति युक्तम्। सति प्रामाण्याऽदर्शने कराऽऽदिमत्त्वदर्शनेऽपि संशयतादवस्थ्यम्।

दर्पणः

संशयोत्तरप्रत्यक्षेऽपीति। द्वितीयोऽर्थनिश्चयो यः स संशयोत्तरप्रत्यक्षं भवति इति निश्चयो यदि न विशेषदर्शनजस्तदा संशयोत्तरप्रत्यक्षे तद्धेतुरिति सिद्धान्तो भज्येत इत्ययमेव विशेषो द्वितीयस्येत्यर्थः।

माथुरी

अप्रामाण्यशङ्कासामग्रीविरहविशिष्टस्येत्यर्थः, 'उक्तं' टीकाकृद्भिरुक्तं, 'तत्' इति षष्ठ्यन्तमव्ययं तस्येत्यर्थः, 'इत्यभिप्रायः'इत्यग्रेतनेनान्वयः, 'उपनीतमिति यदोपनय-मर्य्यादया विषयीकृतमित्यर्थः, तदेति शेषः, 'अत इति अस्मादित्यर्थः, 'तत्र अनुमितौ, 'अर्थं निश्चित्येति अर्थविषयकानुमित्युरमेवेत्यर्थः। न चैवमनुमितिपर्य्यन्तानुसारणवैयर्थ्य-मिति वाच्यम्। अनुमानपदस्यार्थनिश्चयसामान्यपरत्वादिति भावः। 'वस्तुतस्त्विति वस्तुगत्या पुनरित्यर्थः, 'परतः पक्षे' न्यायनये, 'प्रामाण्यग्रहः' स्वतः प्रामाण्यग्रहः, 'प्रवर्त्तकः' प्रवृत्तिप्रयोजकः। ननु यदि क्वचिदपि न स्वतः प्रामाण्यग्रहः तदानुव्यवसाये रजतत्वादिप्रकारकत्वांशे ज्ञानांशे च प्रामाण्यसंशयापत्तिरित्यत आह, 'एवमिति, 'अनु-व्यवसायस्य' तत्प्रकारकज्ञानानुव्यवसायत्वस्य, 'प्रामाण्यनियतत्वादिति तत्प्रकारकत्वांशे-

नन्वेवं बहुवित्तव्ययाऽऽयाससाध्ये निष्कम्पप्रवृत्तावनुपयोगित्वात् निष्फलं प्रामाण्यज्ञानमिति किं तदुपायाऽनुसरणेनेति चेत्—न। स्वर्गसाधनं याग इति ज्ञानप्रामाण्ये निश्चिते तत्समानविषयकज्ञानाऽन्तरे अप्रामाण्य-शङ्का न भवतीति ज्ञानाऽन्तरमगृहीतप्रामाण्यमपि स्वाऽर्थनिश्चयरूपं निष्कम्प-प्रवृत्तिं जनयतीत्यप्रामाण्यशङ्काप्रतिबन्धद्वारा निष्कम्पप्रवृत्तावुपयुज्यते प्रामाण्यज्ञानमिति न निष्फलम्।

यत्त्वनुमानस्य निरस्तसमस्तविभ्रमाऽऽशङ्कस्य स्वत एव प्रामाण्य-ग्रह इत्युक्तं तद्धूमवति वह्निज्ञानत्वमनुमितेः प्रामाण्यनियतमनुव्यसाये-

आलोकः

यदप्युक्तं—द्वितीयोऽपि विशेषाऽदर्शनमूलक एव—तदसत्। तथा सति हि संशयोत्तरप्रत्यक्षेऽपि विशेषदर्शनं हेतुरित्यपि भज्येत। तथा च प्रामाण्याऽऽश्रय-विषयत्वमेव विशेषस्तद्दर्शनमेव तत्र हेतुरिति न प्रथमाऽविशेषो द्वितीयस्य। न च करादिविशेषदर्शने सति प्रामाण्यसंशयाद्विषयसंशय इति त्वयैव निरटङ्कि, तथा च प्रामाण्याऽनुमित्यनन्तराऽर्थनिश्चये प्रामाण्यसंशयस्याऽपि बाधकाऽभावेन तदाहित-विषयसंशयो दुर्वार इति वाच्यम्, तस्य ज्ञानाऽज्ञानाभ्यां विशेषदर्शनधर्म्यज्ञानयोरा-

दर्पणः

तस्येति। द्वितीयनिश्चयस्य ज्ञाने विशेषदर्शनस्य तस्याऽज्ञाने च धर्म्यज्ञानाऽ-वश्यकत्वेन संशयो न भवतीत्यर्थः।

प्रागिति। द्वितीयनिश्चयाऽनुव्यवसायेन द्वितीयनिश्चये पूर्वव्यवसायगृहीतस्य प्रामाण्यस्योपनीतस्य ग्रहादित्यर्थः। उपनीतप्रामाण्यभानात् स्वतस्त्वं अग्रिमाऽर्थ-निश्चयप्रमात्वस्येति शेषः। अत एवेति। द्वितीयनिश्चये उपनीतं प्रामाण्यं मानसे भासतेऽप्येतत्प्रामाण्याऽनुमानमर्थवदित्यर्थः। न चेति। ज्ञानत्वाऽवच्छेदेन घटत्वव-द्विशेष्यकत्वं गृहीतमिति ज्ञानत्वग्रहस्याऽपि संशयविरोधित्वान्न प्रामाण्यसंशय इत्यर्थः।

माथुरी

ज्ञानांशे च प्रामाण्यनियतत्वेन गृहीतत्वादित्यर्थः, यदा तु तत्र प्रामाण्यनियतत्वावधारणं भ्रस्त तदा तादृशशङ्कापीष्यत एवेति भावः। प्रामाण्यनियतत्वमेवोपपादयति, 'न हृति, 'घटज्ञाने' घटीत्वप्रकारकज्ञाने, 'पटञ्जानामीति पटत्वेन जानामीत्यर्थः, 'प्रत्ये तीत्यनुषज्यते। ननु रजतत्वादिप्रकारकप्रमानुव्यवसायस्य रजतत्वादिप्रकारकत्वांशे मत्वात् कथमनुव्यवसायत्वस्य तदंशे प्रामात्वनियतत्वमित्यत आह, 'भ्रमेपीति भ्रम-स्थलेपीत्यर्थः, 'तथैव व्यवसायप्रकार एव, तथा च रजतत्वादिप्रकारकभ्रमानुव्यवसया-

नोपनीतम् । अतो विशेषदर्शनान्न तत्राऽप्रामाण्यशङ्केति, प्रामाण्यनिश्चया-देवाऽप्रामाण्यशङ्काविरहात् अर्थं निश्चित्य निष्कम्पव्यवहार इत्यभिप्रायः ।

वस्तुतस्तु परतः पक्षे न क्वचिदपि प्रामाण्यग्रहः प्रवर्त्तक इति । एवमनुव्यवसायस्य प्रामाण्यनियतत्वान्न प्रामाण्यशङ्का । न ह्यजानन् जानामीति प्रत्येति । न वा घटज्ञाने पटं जानामीति । भ्रमेऽप्यनुव्यवसायेन रजतत्वाऽऽदिकं व्यवसायप्रकारत्वेनोल्लिख्यते तच्च तथैव ।

यत्त्वभ्यासदशायां झटिति प्रचुरतरनिष्कम्पप्रवृत्तिदर्शनात् प्रामाण्यं स्वत एव गृह्यते अन्यत्र तु परत इति तत्--न । विशेष्यनिष्ठाऽत्यन्ताऽ-भावप्रतियोगिप्रकाराऽनवच्छिन्नत्वाऽऽदिकं प्रामाण्यं स्वतो ग्रहीतुमशक्य-मिति परत एव गृह्यते । झटितिप्रवृत्तिस्तु करचरणाऽऽदिमति शरीर-

आलोकः

वश्यकत्वेन प्रामाण्यसंशयाऽनवकाशात् तदनुव्यवसायेन प्राग् गृहीतप्रामाण्यस्याऽ-पनीतस्य भाननियमात् । न हि तत्र किमपि बाधकं पश्यामः । तदुक्तं--त्रिसूत्रीप्रकाशे 'प्रामाण्याऽनुमितावुपनीतप्रामाण्यभानात् स्वतस्त्वम्, सति विशेषणज्ञाने विशिष्टबुद्धे-रौत्सर्गिकत्वादि'ति । अत एव प्रामाण्याऽनुमानमप्यर्थवत्, तस्मिन् सति ज्ञानाऽन्तरे तदुपनीतप्रामाण्यभानादप्रामाण्यसंशयाऽभावे तदाहितार्थसंशयाऽनुत्पत्तावप्रामाण्य-शंकाशून्यमर्थज्ञानाऽन्तरं निर्वहति । अन्यथाऽन्यस्य प्रामाण्यग्रहेऽन्यस्य तत्संशये

दर्पणः

धूमवद्विशेष्यकत्वमिति । न च धूमवद्विशेष्यकत्वस्याऽनुव्यवसायेन ग्रहेऽपि प्रामाण्यव्याप्यत्वेनाग्रहात् कथं प्रामाण्यशङ्कानिवृत्तिरिति वाच्यम्, धूमवद्विशेष्यकत्वाऽ-वच्छेदेन वह्निज्ञानस्य प्रामाण्यग्रहाद् व्यावर्तकधर्मग्रहस्याऽपि संशयविरोधित्वात् । प्रामाण्यव्याप्यत्वमपि यत्र दैववशोपनीतमनुव्यवसाये भातं तदभिप्रायकोऽयं ग्रन्थ इत्याहुः ।

माथुरी

स्यापि न रजतत्वादिप्रकारकत्वांशे भ्रमत्वमिति । अभ्यासदशायामिति पुरोवर्त्तिनि शरीरत्वादिप्रकारकज्ञानदशायामित्यर्थः, 'प्रकारानवच्छिन्नत्वादिकमिति धर्म्मप्रकार-कत्वादिकमित्यर्थः, आदिपदात्तद्वति तत्प्रकारकत्वपरिग्रहः 'परत एवेति, अभ्यासदशा-यामपीत्यादिः, 'विशेषस्य' प्रामाण्यव्याप्यस्य, 'अनुव्यवसायेन ग्रहादिति, प्रामाण्या-नुमितेरिति शेषः । प्रकारान्तरमाह, 'प्रामाण्यशङ्केति, 'व्यवसायादेवेति व्यवसायादेव

ज्ञानत्वाऽऽदेर्विशेषस्याऽनुव्यवसायेन ग्रहादप्राण्यशङ्काशून्याद् व्यवसायादेव, न प्रामाण्यज्ञानं प्रवर्त्तकमित्युक्तम्। झटिति तत्समवधानन्तु स्वकारणाऽधीनम्। न हि पिपासूनां झटिति प्रचुरतरा समर्था च प्रवृत्तिसम्भवीति पिपासोपशमनशक्तिरस्य प्रत्यक्षेति।

इति महामहोपाध्यायगङ्गेशविरचितायां तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे प्रामाण्यवादे ज्ञप्तिवादः समाप्तः।

आलोक

बाधकाऽभावादिति किं केन सङ्गतं स्यात्। न च यदवच्छेदेन यत्र यद्विशेषवत्त्वं गृहीतं तद्ग्रहस्याऽपि संशयविरोधित्वेन तद्विषयकत्वाऽवच्छेदेन प्रामाण्यग्रहात् तद्विषयकप्रानादेव न प्रामाण्यसंशय इति वाच्यम्, तावताऽपि नः समीहितसिद्धेः।

वस्तुतस्तु तद्ग्रहस्यैव तदुपनीतभानसामग्रीत्वेनैव तावता तदुपनयध्रौव्यमेव। यदप्यनुमितिप्रामाण्यं प्रति पूर्वापरविरोधाऽऽदि, तदप्यनवबोधनिबन्धनम्। तथा हि--लिङ्गज्ञानाऽऽदीनामप्रामाण्यशंकाविरहे तज्जन्याऽनुमितावुत्तरकालं प्रामाण्यसंशये

दर्पणः

प्रामाण्यज्ञाने अप्रामाण्यशङ्कानिरासे।

यत्तु व्यवसाय इति मूलम्। व्यवसाये क्वचिदप्रामाण्यशङ्का क्वचिन्नेति तत्त्वयाऽपि वाच्यमिति योजना।

माथुरी

वेत्यर्थः। द्वितीयकल्पमाह, 'प्रामाण्यज्ञानमिति, प्रथमकल्पमभिप्रेत्याह, झटितीति, 'तत्समवधानं' प्रामाण्यानुमितिसामग्रीसमवधानम्, 'पिपासोपशमनशक्तिरिति पिपासाया उपशमनं यस्मादिति व्युत्पत्त्या पिपासोपशमनं पानं तस्य या 'शक्तिः' तस्य या साधनताधीः, सा 'प्रत्यक्षा' सा स्वप्रामाण्यप्रत्यक्षात्मिकेत्यर्थः। अत्र केचित् प्रामाण्यनिश्चयो न साक्षात् प्रवृत्तिहेतुरिति ग्रन्थकृतवोक्तं न वा यथोक्तयुक्त्या द्वितीयज्ञाने प्रामाण्यसंशयनिवृत्तिद्वारा स निष्कम्पप्रवृत्त्युपयोगी, प्रवृत्तिसामग्र्या बुद्धिसामग्रीतो बलवत्तया शङ्काया एवासम्भवात्। न च प्रामाण्यशङ्कासामग्री निष्कम्पप्रवृत्तिसामग्रीतो बलवतीति वाच्यम्। मानाभावादित्याहुः। तदसत्। यत्रोपादानप्रत्यक्षादिविलम्बेन प्रवृत्तिसामग्रीविलम्बस्तत्रैवाप्रामाण्यसंशयासम्भवादिति संक्षेपः॥

इति श्रीमथुरानाथतर्कवागीश-विरचिते प्रामाण्यवादरहस्ये ज्ञप्तिवादरहस्यम्॥

आलोकः

बाधकाऽभावः। यत्र तु लिंगप्रानस्यैवाऽप्रामाण्यशंकाकलङ्केनाऽनुमित्यनुत्पादस्तत्र तत्प्रामाण्याऽनुमित्या लिङ्गनिश्चये सत्यनुमितिरिति। तदनुमितौ धूमवद्विशेष्यकत्व-मुपनीतं भातुमर्हतीत्युत्पादद्वैविध्यमेवाऽनुमितेरपीति तत्र प्रामाण्यप्राने विधाद्वयमिति सर्वं समञ्जसमिति संक्षेपः।

इति महामहोपाध्यायजयदेवमिश्रविरचिते तत्त्वचिन्तामणौ प्रत्यक्षखण्डे ज्ञप्तिवादालोकः समाप्तः।

दर्पणः

एवमनुव्यवसायस्येति मूलम्। अनुव्यवसायत्वस्येत्यर्थः। तज्ज्ञानञ्च व्यावर्त्तक-ज्ञानत्वेन शङ्काविरोधीति भावः।

विशेष्यनिष्ठेति मूलम्। तद्वति तत्प्रकारकत्वादिकमादिपदार्थः।

इति महामहोपाध्यायसद्वक्कुरमहेशविरचिते चिन्तामण्यालोकदर्पणे प्रत्यक्षखण्डदर्पणे ज्ञप्तिवाददर्पणः समाप्तः।

# अथ प्रामाण्यवादे उत्पत्तिवादः

**उत्पद्यतेऽपि प्रमा[1] परतो न तु स्वतो ज्ञानसाग्रीमात्रात्। तज्जन्यत्वेना-**

आलोकः

प्रसङ्गादुत्पत्तिं निरूपयति। उत्पद्यतेऽपीति। क्वचिदुत्पादकस्यैव ग्राहकत्व-मतस्तद्व्युत्पादयतीत्यन्ये।

दर्पणः

क्वचिदुत्पादकस्यैवेति। यथार्थवाक्यज्ञानादेः शाब्दप्रमाहेतोरेतच्छब्दजं ज्ञानं प्रमा यथार्थवाक्यार्थज्ञानजशब्दजत्वादित्येवं लिङ्गोत्थापकतया ग्राहकत्वम्। अत उपोद्घातसङ्गत्या एतन्निरूप्यत इति भावः। अन्ये त्वित्यपरितोषबीजं तु उत्पत्तौ परतस्त्वाभावेऽपि प्रकृतावाक्यार्थज्ञानं प्रमा। आप्तोक्तजत्वरूपपरतस्त्वसिद्धेरलम् उत्पत्तिपरतस्त्वचिन्तयेति[2]।

उत्पादकस्य यथार्थविशेषदर्शनादेः सार्वत्रिकत्वाभावादरुचिं प्रकाशयति—अन्ये त्विति। मूले स्वत इत्यस्य विवरणं ज्ञानसामग्रीमात्रादिति।

माथुरी

ननु प्रमात्वस्य परतो ग्राह्यत्वे स्वत उत्पत्तिकवृत्तितापि न स्यात्, परतो ग्राह्यत्वस्य ज्ञानसाक्षाद्विभाजकोपाधेः स्वत उत्पत्तिकवृत्तित्वाभावनियमादप्रमात्वे क्लृप्तत्वादित्युपोद्घातसङ्गत्या प्रमायाः परत उत्पत्तिकत्वं व्यवस्थापयति, 'उत्पद्यतेऽपीति, प्रमा परत उत्पद्यतेपीतियोजना, प्रमा परतः प्रामाण्यस्येव परत उत्पत्ति-कत्वस्याप्याश्रय इत्यर्थः। एतेन प्रामाण्यस्य परतो ज्ञप्तिनिरूपित उत्पत्तिश्च प्रमाया निरूप्यत इत्येकत्र धर्म्मिण्युभयानिरूपणादितिशब्दसमुच्चयादुपपत्तिरिति निरस्तम्। परत उत्पत्तिकत्वञ्च ज्ञानसाक्षाद्विभाजकोपाध्यवच्छिन्नकार्य्यताप्रतियोगिककारता-निरूपितकार्य्यतावत्त्वम्, तादृशकार्य्यत्वञ्च भ्रमे प्रसिद्धं भ्रमं प्रति दोषहेतुतायाः सर्व्वसिद्धत्वात् स्वमतेनैवायं ग्रन्थ[3] इति परनये तदप्रसिद्धावपि क्षतिविरहाच्च। ज्ञानसाक्षाद्विभाजकोपाधित्वञ्च ज्ञानविभाजकोपाध्यव्याप्यत्वे सति[4] ज्ञानविभाजको-पाधित्वं तादृशञ्च प्रमात्वमप्रमात्वञ्च, ज्ञानं द्विविधं विद्या अविद्या चेति विभाग-

---

१. प्रामाण्यमिति पाठान्तरम्।

२. उपरितनो ग्रन्थो गपुस्तके नास्ति।

३. प्रामाण्यमिति क० ग० च।

४. सत्यन्तदलेन चाक्षुषत्वादिनिरासः।

**प्रमापि प्रमा स्यात् । अन्यथा ज्ञानमपि सा न स्यात् । ज्ञानसामग्र्यां दोषानुप्रवेशादप्रमेति चेत्, तर्हि ज्ञानविशेषवदप्रमाप्रमाविशेषः स्यात् ज्ञानसामग्रीजन्यत्वात् । तस्मात् प्रमाप्रमयोर्वैचित्र्यात् गुणदोषजन्यत्वम् । अथ यत्र**

आलोकः

**ननु गुणदोषाभावेन प्रमाऽप्रमाभावे तयोस्ते प्रति हेतुता, न च यथेत्याह—अन्यथेति ।**

दर्पणः

ननु प्रमाऽप्रमयोर्वैचित्र्याद् गुणदोषजन्यत्वे उक्ते अथेत्यादिना अन्वयव्यतिरेकान्यथासिद्धिप्रतिपादनमसङ्गतमित्यत आह—नन्विति । अनन्यथासिद्धावन्वयव्यतिरेकौ व्यतिरेकिवस्तुकारणताग्राहकौ[1] न च प्रकृते तथेत्यर्थः । तटस्थशङ्केयमिति केचित् ।

नन्वेवं सामग्रीव्यतिरेकात् प्रमाप्रमयोरभावौ न गुणादिव्यतिरेकादित्याशङ्क्याह—तथा चेति । अन्यथेति । मूलम् । सर्वत्रापि सामान्यसामाग्रीव्यतिरेकेणैव कार्यव्यतिरेकोपपत्तेरिति भावः । प्रमात्वं यमजगत्रैधर्म्यवत्स्यादि[2] त्युक्तेः ।

माथुरी

करणात् अयञ्च विभागः मिश्रस्य भट्टस्य वा ग्राह्यः न तु वैशेषिकस्य तत्र विद्यात्वस्य निर्विकल्पकसाधारण्यार्थं भ्रमभिन्नज्ञानत्वरूपतया प्रमात्वरूपत्वाभावात् । यद्वा भ्रमप्रमान्यतरपदप्रवृत्तिनिमित्तत्वं साक्षाद्विभाजकोपाधित्वमिति भावः । स्वत इत्यस्य विवरणं 'ज्ञानसामग्रीमात्रादिति न तु ज्ञानसामान्यसामग्रीजन्यतामात्राश्रय इत्यर्थः । ज्ञानसामान्यसामग्रीजन्यत्वञ्च ज्ञानसाक्षाद्विभाजकोपाध्यनवच्छिन्नज्ञाननिष्ठकार्य्यताप्रतियोगिककार्यतानिरूपितजन्यत्वम्, अत्र हेतुमाह, 'तज्जन्यत्वेनेति, तथात्व इत्यादिः, प्रमाया ज्ञानसामान्यसामग्रीजन्यतामात्राश्रयत्वे ज्ञानसामान्यसामग्रीजन्यत्वेनाप्रमापि प्रमा स्यादित्यर्थः, सामग्र्यवैचित्र्यादिति भावः । 'अन्यथा' अप्रमाया ज्ञानसामान्यसामग्रीजन्यत्वाभावे, 'सा' अप्रमा । अप्रमायां ज्ञानसामान्यसामग्रीजन्यत्वसत्त्वेपि न तज्जन्यतामात्रमित्याशङ्कते, 'ज्ञानसामग्र्यामिति ज्ञानसामान्यसामग्र्यामित्यर्थः, 'दोषानुप्रवेशात्' दोषस्याधिकस्यानुप्रवेशात्, तथापीत्यर्थः, 'प्रमाविशेषः स्यादिति प्रमाविशेषः स्यादेवेत्यर्थः, 'ज्ञानसामग्रीति प्रमासामग्रीरूपज्ञानसामान्यसामग्रीजन्यत्वादित्यर्थः, तत्सामग्रीजन्यत्वस्य च तदात्मकत्वव्याप्यत्वादिति भावः । 'वैचित्र्यादिति प्रमात्वाप्रमात्वरूपपरस्परविरुद्धधर्म्मवत्त्वादित्यर्थः । ननु गुणदोष-

---

१. व्यापकाविति गपुस्तके ।

२. वैधर्म्यवत्स्यादिति गपुस्तके । यस्तु व्यवसाय इति मूलम् ।

**गुणदोषौ विना तयोरभावस्तत्र ज्ञानसामग्र्येव नास्ति तत्सत्त्वे ज्ञानमात्रोत्पत्तिप्रसङ्गादिति चेत्—न। विशेषविनाकृतसामान्यकार्याभावात्। तत्सामग्रीमादायैव हि सामान्यसामग्री तां विना नास्त्येव वा, अन्यथा**

आलोकः

विशेषसामान्ययोर्हेतुभेदोऽस्तु अवच्छेदकभेदान्न तु सामग्रीभेदः। फलाव्यभिचारिसमुदायस्य स्वरूपतोऽवच्छेदकतो वाऽभेदादित्यस्वरसादाह—समिति। तथा च गुणाद्यभावस्य सामग्र्यभावसम्पादनद्वारा फलाभावप्रयोजकत्वमस्त्येवेति भावः।

दर्पणः

अथानुगतेत्यादिशङ्कानुत्थानमाशङ्क्याह—ननु सामग्रीति। उपाधित्वेनेति मूलम्। जातित्वे कार्यमात्रवृत्तिजातित्वं प्रमाणं स्यादिति भावः।

[[2]इष्टत्वादिति। त्वन्मते जन्यप्रमेयत्वस्यैवेत्यर्थः। ननु नेदं विशेषणं ग्रन्थकृतोऽभिमतम् तत्राश्रुतेरत आह—नहीति। तथा च ग्रन्थस्यैवंरूपबाधकमात्रनिरासप्रवृत्तत्वान्न तत्र तथाश्रुतिर्मया तु 'तुष्यत्वि'तिन्यायेन व्याप्यधर्मोपदर्शनेपि न क्षतिरेवंविशेषणेन तन्निर्वाहादिति उच्यत इति तदेव दृष्टान्तेन दुष्यति—कार्यमात्रेति। बाधकं विना कार्यमात्रवृत्तित्वादित्यग्रे करिष्यमाणहेताविवेत्यर्थः।

माथुरी

योर्व्यतिरेके यदि प्रमाप्रमयोर्व्यतिरेकः स्यात्तदा तयोः प्रमाप्रमाहेतुत्वं स्यादनन्यथासिद्धान्वयव्यतिरेकस्य कारणताव्यापकत्वात्। न चैवं तयोर्व्यतिरेके ज्ञानसामान्यसामग्र्या एव विरहादिति तटस्थः शङ्कते, 'अथेति, 'तयोरिति प्रमाप्रमयोरित्यर्थः, 'ज्ञानमात्रेति प्रमाप्रभावहिर्भूतज्ञानसामान्योत्पत्तिप्रसङ्गादित्यर्थः, तथा च ज्ञानसामान्यसामग्रीविरहप्रयुक्त एव तत्र तदुभयाभावः, न तु गुण-दोषाभावप्रयुक्त इति भावः। यद्यपि प्रमास्थले गुणस्य भ्रमस्थले दोषस्य पृथगन्वय-व्यतिरेकोऽस्त्येव तत्र ज्ञानसामान्यसामग्रीविरहस्य वक्तुमशक्यत्वात् तथापि प्रौढ्या समाधानान्तरमाह, 'विशेषेति, 'तत्सामग्रीमादायेति विशेषसामग्रीमादायेत्यर्थः, 'सामान्यसामग्रीति, कार्य्यजनिकेति शेषः। तथा च तत्र ज्ञानसामान्यसामग्री तिष्ठत्येव विशेषसामग्री विरहाच्च न कार्य्योत्पत्तिरिति न सामान्यसामग्रीविरहप्रयुक्तः प्रमाप्रमोभयाभावः, किन्तु गुण-दोषाभावप्रयुक्त एवेति भावः। वस्तुतस्तु फलाव्यभिचारिकारणसमूहस्यैव सामग्रीत्वाद्विशेषसामग्र्यतिरिक्तसामान्यसामग्र्येव नास्तीत्याह, 'तां

१. वैरूप्यञ्चेति पाठान्तरम्।

२. यत्र प्रकोष्ठबद्धभागस्यालोकः। इत्युत इति प्रतिभाति।

**कार्यविशेषे कारणविशेषोच्छेदः ।**

**ननु यथैकजातीयसामग्रीसत्त्वेऽपि घटयोर्भेदो यमजयोर्वैधर्म्यञ्च तथा प्रमाप्रमयोर्भेदो वैधर्म्यञ्च[1] भविष्यति । अथानुगतव्यवहारात् प्रमात्वमनुगतमिति प्रमामात्रे अनुगतो हेतुर्वाच्यः, अनुगतकार्यस्याननुगतादनुत्पत्तेरिति**

आलोकः

**भेदो व्यक्तिभेदः ।**
**वैधर्म्यं वैजात्यम् ।**

दर्पणः

नन्वेवं बाधकाभावमात्रमेव हेतुरस्तु कृतं विशेष्यभागेनात आह–तदर्थस्त्विति । बाधकाभावरूपविशेषणार्थः । तथा च तत्रैवात्रापि न बाधकसामान्याभावो विशेषणमपि तु विशेष्याभाव इति न वैयर्थ्यमित्यर्थः । इयत्परमत्रावधेयम् यत्तत्पदान्तर्भाव एव सर्वस्येति विशेषणमन्यथा प्रमेयत्वादेरप्यदृष्टजन्यतावच्छेदकतया साध्यत्वेनातिप्रसङ्गाभावादिति । एवञ्च यद्धर्मेत्यत्र धर्मे लघुत्वमपि विशेषणमतो न घटत्वादिसमनियतकम्बुग्रीवादिसत्त्वादावतिप्रसङ्ग इति न चैवं ईश्वरज्ञानजन्यतावच्छेदकं जन्यत्वन्न स्यात्तदपेक्षया लघोः सत्त्वस्यैवावच्छेदकत्वसम्भवादिति वाच्यम् । एतन्मते इष्टापत्तेरिति । न व्यभिचारो न वा व्यर्थविशेषण इति । ईश्वरज्ञाने आपादकाभावात् न

माथुरी

विनेति, तथा च विशेषसामग्र्यतिरिक्ता यदि सामान्यसामग्री तिष्ठति तदा तद्विरहप्रयुक्तस्तत्र कार्य्यविरहः स्यात् न चैवमिति भावः । 'अन्यथेति, त्वदुक्तरीत्या अन्यत्रापि कारणविशेषस्य पृथगन्वय-व्यतिरेकानुविधायित्वाभावादिति भावः ।

मीमांसकः शङ्कते, 'नन्विति, उच्यते' इत्यन्तमेकः पूर्व्वपक्षः । 'भेदः' व्यक्तिभेदः, 'वैधर्म्यं' वैजात्यं, 'वैधर्म्यञ्च' प्रमात्वाप्रमात्वरूपपरस्परविरुद्धधर्म्मवत्त्वञ्च, तथा च किं प्रमात्वावच्छिन्ने गुणस्य हेतुत्वेनेति भावः । अत्र प्रमायां गुणजन्यत्वखण्डनमात्रे शङ्कितुस्तात्पर्य्यं न तु अप्रमाया दोषजन्यत्वखण्डने मीमांसकैरप्यप्रमाया दोषजन्यत्वाभ्युपगमात् ।

केचित्तु प्रमावदप्रमापि स्वत एवोत्पद्यत इति मन्वानस्य तटस्थस्याशङ्केयं तथा चोभयखण्डने तात्पर्य्येऽपि न क्षतिरित्याहुः । तदसत् तथा सति तं प्रत्येवमप्रमापि स्वज एव स्यादिति सिद्धान्तेऽनिष्टापादनस्यासङ्गतेः ।

---

१. तदतिरिक्तजन्यत्वे साध्ये इति पाठान्तरम् ।

**चेत्—न । प्रमात्वस्योपाधित्वेन कार्यतावच्छेदकत्वे मानाभावात्, कार्यमात्रवृत्तिधर्मत्वस्य नीलघटत्वज्ञानत्वादौ व्यभिचारात् । अथ प्रमा ज्ञान-**

आलोकः

**ननु सामग्रीव्यक्तिभेदात् कार्यव्यक्तिभेदः, कार्यव्यक्तिभेदे तद्वैधर्म्ये तदवैधर्म्यं प्रयोजकमस्तु । यमजयोरप्यदृष्टविशेषघटितसामग्रीवैधर्म्यमेवेत्याशयेनाशङ्कते-अथेति ।**

दर्पणः

व्यभिचारः जन्यत्वविशेषणानुपादानात् तदुपादानकृता च न व्यर्थविशेषणतेत्यर्थः । न तु सामान्यतो व्यर्थविशेषणताविरहः । यथोक्तापादकव्यतिरेकस्येश्वरज्ञानसाधारणतया मौलहेतौ व्यर्थविशेषणताध्रौव्यादिति । उपन्यस्तेति उपन्यासापादकस्य यो विपर्ययः तस्य विरोधो मौलेन हेतुना साधनायोगश्च कार्यत्वविशेषणवैयर्थ्येन व्याप्यत्वासिद्धेरित्यर्थः । तदेतत्प्रपञ्चयति—तद्विपर्ययस्येति । उपन्यस्तविपर्ययस्येत्यर्थः । तादृशि साध्य इति । इदं च प्रमात्वासामानाधिकरण्यं तदनधिकरणाधिकरणत्वमित्यभिप्रेत्येति द्रष्टव्यम् । तेन ज्ञानत्वमप्रमात्वानधिकरणप्रमावृत्तीति भवति सिद्धसाधनमिति । एवञ्चापाद्यविपर्ययः प्रकृतानुमानहेतुरुपन्यस्यतीत्याह—तद्व्यतिरेकस्त्विति । यथाश्रुतमेवेति अप्रमा स्यादित्यापाद्यदिशीति शेषः । आपादके जन्यत्वविशेषणादेवेश्वरज्ञाने व्यभिचाराभावात् तत्साधारण्यार्थमर्थान्तरविवक्षाव्यावृत्तेरभावादित्यर्थः ।]

ज्ञानहेत्वतिरिक्तहेतुजस्येति साध्ये एकविक्षेष[1]विधेर्विशेषान्तरनिषेधफलकतया

माथुरी

अत्र प्रमात्वं कार्य्यतावच्छेदकं न वेती विप्रतिपत्तिः, कार्य्यतावच्छेदकत्वञ्च न तत्पर्य्याप्त्यधिकरणत्वम् अपि तु यथाकथञ्चित्कार्य्यतावच्छेदकताश्रयत्वमात्रं तेन प्रमात्वस्य नित्यवृत्तितया तत्पर्य्याप्त्यनधिकरणत्वेऽपि न क्षतिः ।

केचित्तु प्रमात्वं कार्य्यतावच्छेदकव्यापकं न वेति विप्रतिपत्तिः, तत्तद्व्यक्तित्वस्य कार्य्यतावच्छेदकत्वे कार्य्यतावच्छेदकमनेकवृत्तित्वेन विशेष्यमित्याहुः ।

ननु अनुगतकार्य्यवैचित्र्यं कारणवैचित्र्याधीनं घटयोः स्वरूपभेदस्तु न तथा, यमजयोस्तथात्वञ्चादृष्टवैचित्र्यादित्याशयेनाह, 'अथेति, 'उपाधित्वेनेति, इदमुपलक्षणं नित्यवृत्तित्वेनेत्यपि द्रष्टव्यम् । प्रमात्वस्य कार्य्यमात्रवृत्तिजातित्वे हि कार्य्यमात्रवृत्तिजातेः कार्य्यतावच्छेदकत्वनियमस्यैव मानत्वसम्भवादिति भावः ।

ननु अनित्यप्रमात्वं कार्य्यतावच्छेदकं कार्य्यमात्रवृत्तित्वादित्यनुमानमेव मानमित्यत आह, 'कार्य्यमात्रेति, 'घटज्ञानत्वेति जन्यघटज्ञानत्वेत्यर्थः, यथाश्रुते कार्य्य-

---

१. एकशेषविधेरिति गुपुस्तके ।

२. भावप्रमारूपेति पुस्तके ।

हेत्वतिरिक्तहेतुजन्या जन्यज्ञानत्वात् अप्रमावदिति चेत्—न । प्रमाया ज्ञानस्य तद्धेतुजन्यतया साध्ये[1] बाधात्, ज्ञानाजनकजन्यत्वे विरोधात्, अप्रमायां तदसिद्धेः, व्यर्थविशेषणत्वात् व्यावर्त्त्याप्रसिद्धेः ।

आलोकः

ननु ज्ञानहेत्वजन्यत्वं न साध्यं येन बाधस्तथा सति ईश्वरज्ञानेऽपि साध्यसत्त्वेन व्यभिचाराभावात् तद्वारणाय हेतौ जन्यपदोपादानानुपपत्तेः । अपि तु ज्ञानाजनकजन्यत्वमित्यत आह—ज्ञानेति ।

विरोधात् साध्यसिद्धिविरोधादप्रसिद्धेरिति भावः । अत एव नात्र बाधो न वा आद्ये विरोध इति ध्येयम् ।

अत एव कुतो विरोध इत्यपेक्षायामाह—अप्रमायामिति ।

दर्पण

ज्ञानहेत्वजन्यत्वं विवक्षितम् यथाश्रुतमेव वा । आद्ये मूलकृता बाधो दत्तः । तत्र शङ्कते—नन्विति । ज्ञानाजनकजन्यत्वं यथाश्रुतमेवेति शेषः ।

अत एवात्र न बाध इति । ज्ञानजनकत्वस्य केवलान्वयितया ज्ञानहेत्वतिरिक्तहेतोरप्रसिद्धया तज्जन्यत्वाभावरूप[2]बाधासम्भवादित्यर्थः । इदमुपलक्षणम् । अत एव यथाश्रुतविरोधो न व्याख्यात इत्यपि द्रष्टव्यम् । न वा आद्ये विरोध इति । ज्ञानहेत्वजन्यत्वस्य[3]आकाशादौ प्रसिद्धया साध्याप्रसिद्धिरूप[4]विरोधासम्भवादित्यर्थः । मूले अप्रमायामित्युपलक्षणम् । सर्वत्र तदप्रसिद्धेरिति द्रष्टव्यम् ।

माथुरी

मात्रवृत्तित्वाभावेन व्यभिचारासङ्गतेः प्रमाया गुणजन्यत्वसाधकमाचार्य्यानुमानं शङ्कते, 'प्रमेति, अत्र ज्ञानहेत्वतिरिक्तत्वं सामान्याभावो वा यत्किञ्चिद्विशेषाभावो वा यावत्त्वावच्छिन्नाभावो वा आद्ये आह, 'प्रमाया इति, 'तद्धेतुजन्यतया' ज्ञानहेतुमात्रजन्यतया । बाधमुक्त्वा विरोधमाह, 'ज्ञानजनकजन्यत्व इति, लभ्य इति शेषः, 'विरोधात्' जन्यज्ञानत्वरूपहेतोर्व्विरोधात् । दृष्टान्तस्य साध्यवैकल्यमाह, 'अप्रमायामिति । व्यर्थविशेषणतामप्याह, 'व्यर्थेति, विशेषण' जन्यत्वं । व्यर्थतामेव विवृणोति, व्यावर्त्त्येति तद्व्यावर्त्त्यस्य ईश्वरज्ञानस्येदानीमसिद्धेरित्यर्थः । प्रमाया गुणजन्यत्व-

१. ज्ञानजन्यहेत्वलभ्येति गपुस्तके ।
२. वैरूप्यश्चेति ख०, ग० च ।
३. प्रसिद्धिरूपेति गपुस्तके ।
४. सिद्धौ इति कपाठः ।

किञ्च यत्किञ्चिज्ज्ञावहेत्वपेक्षया सर्वतद्धेत्वपेक्षया वा अतिरिक्तत्वे इन्द्रियादिभिः सिद्धसाधनात् । नापि ज्ञानसामान्यसामग्र्यतिरिक्तसामग्रीजन्येति साध्यम्, पूर्ववत् सिद्धसाधनात् विरोधाच्च ।

न च सामान्यविशेषयोः सामग्रीद्वयम्, प्रमाया ज्ञानभिन्नत्वापत्तेः,

आलोकः

व्यर्थेति । ज्ञानत्वमात्रे व्यभिचाराभावादित्यर्थः ।

न चेश्वरज्ञाने व्यभिचार इत्यत आह—व्यावर्त्येति । प्रमामात्रे गुणजन्यत्वस्थितौ[1] वैदिकप्रमायास्ताद्रूप्येणेश्वरज्ञानसिद्धेर्विशेषणोपादानं हेतो[2] रन्योन्याश्रयग्रस्तत्वमित्याशयः । ज्ञानमात्रसामग्र्यतिरिक्तत्वमिति कोऽर्थो यदि ज्ञानत्वावच्छिन्नप्रतियोगिक[3]सामग्र्यन्यत्वम्, तदेन्द्रियादिना सिद्धसाधनम् । यदि च ज्ञानत्वाश्रयजनकसामग्र्यन्यत्वन्तदाऽप्रसिद्ध्या विरोध इत्याह—सिद्धसाधनादिति ।

दर्पणः

केचित्तु ज्ञानाजनकत्वमतीन्द्रिये प्रसिद्धम् । न च तस्य सामान्यप्रत्यासत्तीभूय ज्ञानजनकत्वम् । तदिन्द्रियग्राह्यसामान्यस्यैव तदिन्द्रियप्रत्यासत्तित्वात् । योगिज्ञानञ्च न विषयजन्यमित्यभिसन्धाय विरोधहेत्वाभासपरतया प्रतिज्ञाविरोधपरतया च विरोधादिति साध्यविकल्पपरतयाऽप्रमायामिति व्याचक्षते (तेनातीन्द्रियस्यापि ज्ञानजनकत्वमेव । अन्यथा परमाणौ महत्परिमाणाभावसाक्षात्कारो न स्यात्)[4] । व्यर्थेत्यस्य विशिष्यत इति व्युत्पत्त्या विशेषणपदेन विशेष्याभिधानात् व्यर्थविशेष्यत्वादित्यर्थः । व्यावर्त्याप्रसिद्धेरित्यस्य जन्यपदवैयर्थ्यादित्यर्थ इति स्वतन्त्रावेव हेतू । अत एव

माथुरी

सिद्धावेव वैदिकप्रमायां गुणतया भगवज्ज्ञानसिद्धिरिति भावः । द्वितीय-तृतीययोराह, 'किञ्चेति, 'इन्द्रियेति, एकस्य यावदभिन्नत्वादिति भावः । ज्ञानसामग्रीभेदः किं विशेषाभावः. यावत्त्वावच्छिन्नाभावः, सामान्याभावो वा आद्ययोराह, 'सिद्धसाधनेति, अन्त्ये 'विरोधादिति । ज्ञानसामान्यसामग्र्यन्यसामग्रीजन्यत्वं साध्यं सामान्यविशेषयोः सामग्रीभेदात् प्रमासामग्री ज्ञानसामान्यसामग्रीभिन्नैवेति न बाध इति

---

१. हेतौ इति कपाठः ।
२. 'प्रतियोगिके'ति पाठो दर्पणे नास्ति ।
३. कोष्ठगतो ग्रन्थः गपुस्तके नास्ति ।
४. उत्तरक्षणमात्रस्यानुत्पत्तिरूपं सत्त्वमिति कपुस्तकपाठः ।
५. भवतीति ग० ।

अन्यथा सामग्रीभेदासिद्धिः, तस्य कार्यभेदकल्प्यत्वात् । एतेन 'ज्ञान-सामान्यहेत्वतिरिक्तहेतुजन्येति साध्यं' प्रत्युक्तम् । सकलज्ञानाभिप्राये चेन्द्रियादिभिः सिद्धसाधनम्, ज्ञानत्वाभिप्राये हेत्वसिद्धिः । नापि ज्ञानत्वावच्छिन्नकार्यत्वान्यकार्यत्वप्रतियोगिककारणजन्येति साध्यम्, ज्ञानत्वस्य नित्यवृत्तितया कार्यत्वानवच्छेदकत्वात् ।

अथ यद्धर्माश्रयस्यासतः सत्त्वं हेत्वधीनं तत् कार्यतावच्छेदकम्, ज्ञानत्वञ्च तथा । न चासत् इत्यधिकम्, व्योमादिसाधारणसत्त्वमात्रस्य

आलोकः

न चेति । फलोपधाननियतसमुदायः सामग्री । स च न सामान्यविशेषयोर्भिन्न इति प्रागुक्तम् । तथा च बाध इत्यर्थः ।

दर्पणः

चकारोऽपि सङ्गच्छत इति व्याख्यानमयुक्तम्, यथाश्रुतविशेषणपदार्थेनैवोपपत्तेः । चकारश्च व्यावर्त्त्येत्यादेर्हेतूपपादकत्वेऽपि पूर्वहेत्वपेक्षया सङ्गत एवेत्यभिप्रेत्य व्याचष्टे— ज्ञानमात्र इत्यादि । यत्किञ्चिदिति मूलम् । यत्किञ्चिज्ज्ञानस्य यज्जनकमनुमानादि-जन्यसकलज्ञानानां च यज्जनकं कालादि तद्भिन्नत्वमिन्द्रियादावस्त्येवेत्यर्थः ।

ज्ञानत्वावच्छिन्नसामग्र्यन्यत्वमिति । सर्वासु ज्ञानसामग्रीषु प्रविष्टं यत्कारणं कालादि तदन्यकारणघटितत्वमित्यर्थः । ज्ञानत्वाश्रयेति । ज्ञानत्वाश्रयसामग्रीप्रविष्ट-कारणत्वावच्छिन्नान्यकारणघटितत्वमित्यर्थः । अत्रापि कारणत्वाश्रयान्यत्वमात्रेऽभिमते

माथुरी

निराकुरुते, 'न चेति, 'प्रमाया इति, यत् यत्सामग्रीभिन्नसामग्रीजन्यं तत् ततो भिद्यते इति नियमादिति भावः । 'तस्य' सामग्रीभेदस्य । इन्द्रियादिभिरिति, एकस्य यावद्भिन्नत्वादिति भावः । 'ज्ञानत्वाभिप्राय इति ज्ञानसामान्यपदस्य ज्ञानत्वपरत्वे इत्यर्थः, 'हेत्वसिद्धिरिति, ज्ञानत्वस्येति शेषः नित्यत्वात् तथा च तद्घटितसाध्या-प्रसिद्धिरिति भावः । 'नित्यवृत्तितयेत्यस्य तब मत इत्यादिः, तथा च तव नये साध्याप्रसिद्धिरस्मन्नये तु इन्द्रियादिभिरेव सिद्धसाधनमिति हृदयम् । ज्ञानत्वस्य नित्यवृत्तित्वेपि कार्य्यतावच्छेदकत्वं स्यादित्याशङ्कते, 'अथेति, 'यद्धर्म्माश्रयस्येति 'असतः', सत्त्वम्' उत्पत्तिः आद्यक्षणसम्बन्धइति यावत् । 'हेत्वधीनं यद्धेत्वधीनं, 'तत्कार्य्यतावच्छेदकं' तस्य हेतोः कार्य्यतावच्छेदकम् अत्रासतः सत्त्वं यावत्त्वेन विशेषणीयं नातो दण्डजन्यतावच्छेदकं ज्ञेयत्वं भवति च कृत्यादिजन्यतावच्छेदकम्, बाधकाभावे सतीति विशेषणीयं तेन नीलघटत्वादिवारणम्, घटज्ञानत्वादिवारणम्,

आलोकः

हेत्वसिद्धिरिति । तथा च तद्धेत्वन्यहेतुजन्यत्वं साध्यमप्रसिद्धमिति भावः । व्योमादिति । व्योम्नः सत्त्वमनुत्पत्तिरूपम् । तथा च व्योमादिसाधारणसत्त्वमात्रस्यानुत्पत्तिरूपसत्त्वमात्रस्य हेत्वनियम्यत्वादित्यर्थः । हेतुनियम्यत्वं हेत्वधिकरणक्षणाव्यवहितोत्तरक्षणमात्रवृत्तित्वम्, न चानुत्पत्तिरूपं सत्त्वं[1] तथा, क्षणान्तरेऽपि

दर्पणः

पूर्ववत्सिद्धसाधनमिति द्रष्टव्यम् । यदि तु यथाश्रुतं ज्ञानसामग्रीभिन्नजन्यत्वं तदा बाध इत्याह—फलेति । हेत्वसिद्धिरिति । ज्ञानत्वकारणस्याप्रसिद्धिरित्यर्थः ।

माथुरी

घटज्ञानत्वादेरपि आत्ममनोयोगादेर्जन्यतावच्छेदकत्वे ज्ञानत्वाद्यपेक्षया गौरवमेव बाधकमिति त तत्रापि व्यभिचारः । एवञ्च यद्धर्म्माश्रयस्य सर्व्वमसतः सत्त्वं सर्व्वा उत्पत्तिः यद्धर्म्माश्रयाधीना बाधकं विना स धर्म्मस्तद्धर्म्माश्रयकार्य्यतावच्छेदक इति पर्य्यवसितम् । अधीनत्वञ्च जन्यत्वं अयमस्मादुत्पद्यत इति प्रत्ययादुत्पत्तेरपि दण्डादिजन्यत्वात् । यद्वा तदधिकरणक्षणध्वंसोत्पत्तिव्याप्यत्वञ्च कालिकम्, उत्पत्तिप्रवेशात् व्यभिचारिणो निरासः । बाधकं विनेतिविशेषणादेवान्यथासिद्धस्य निरास इति भावः । 'ज्ञानत्वञ्च तथेति ज्ञानत्वाश्रयस्य सर्व्वमेवासतः सत्त्वम्, ज्ञानसामान्यहेतुमनःप्रभृत्यधीनमिति तज्जन्यतावच्छेदकं ज्ञानत्वमित्यर्थः । 'अधिकमिति, तथा च नित्यज्ञानसत्त्वस्य हेत्वनधीनतया ज्ञानत्वस्य न कार्य्यतावच्छेदकत्वमिति भावः, एतच्चधीनत्वस्य जन्यत्वरूपत्वे यथाश्रुतमेव तदधिकरणक्षणध्वंसोत्पत्तिव्याप्यत्वरूपत्वे तु महाप्रलयीयतत्सत्त्व एव व्यभिचारो बोध्यः । 'व्योमादिसाधारणसत्त्वमात्रस्य' उत्पत्त्यतिरिक्तकालसम्बन्धमात्रस्य, तथा च घटत्वादेरपि दण्डादिजन्यतावच्छेदकत्वं न स्यादिति भावः । 'यदालिङ्गितस्येति, 'स्वरूपं' सर्व्वं स्वरूपम्, यदालिङ्गितं सर्वमित्यर्थः, 'लाघवादिति, उत्पत्त्यघटितत्वादिति भावः । एवञ्च कृत्यादिजन्यतावच्छेदकन्तु न ज्ञेयत्वं किन्तु कार्य्यत्वमिति हृदयम् । 'ज्ञानत्वमिति, नित्यज्ञानस्य कारणानधीनत्वादिति भावः । 'अनित्यज्ञानत्वेति ज्ञानत्वावच्छिन्नेतिकरणे इत्यर्थः, 'इन्द्रियादीति, आदिना व्याप्तिज्ञान-सादृश्यज्ञान-पदज्ञानादिसंग्रहः, इदञ्च स्वमतावष्टम्भेन, परनये तु नित्यज्ञानाप्रसिद्धया ज्ञानत्वस्यैवात्ममनःप्रभृतीनां कार्य्यतावच्छेदकत्वेनानित्यज्ञानत्वावच्छिन्नकार्य्यत्वाप्रसिद्धया साध्याप्रसिद्धिरेव प्रष्टव्या । एतेनेति, 'प्रमात्वं' घटत्ववति घटत्वप्रकारकानुभवत्वादिकमित्यर्थः, 'ज्ञानत्वावच्छिन्नेति जन्यज्ञानत्वावच्छिन्नेत्यर्थः,

१. तथा च तत्रेवात्रापि न बाधकसामान्याभावो विशेषणमपि तु विशेष्याभाव इति न वैयर्थ्यमित्यर्थः ।

हेत्वनियम्यत्वादिसि चेत्—न, यदालिङ्गितस्य स्वरूपं हेत्वधीनं तत्कार्यंतावच्छेदकं लाघवात्, ज्ञानत्वन्तु न तथा। अनित्यज्ञानत्वेतिकरणे इन्द्रियादिभिर्यथायथं सिद्धसाधनम्, तेषां प्रत्येकं ज्ञानमात्राहेतुत्वात्। एतेन प्रमात्वं ज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताभिन्नकारणताप्रतियोगिक-

आलोकः

सत्त्वात्। न तूत्पत्तिरपि क्षणान्तरे, येनानियम्या स्यात्। तथा च यद्धर्माश्रयस्योत्पत्तिर्हेतुनियम्येत्यत्र तात्पर्यम्।

यद्वा हेत्वधीनत्वं हेत्वन्वयव्यतिरेकानुविधायित्वम्। तत्रापि कथितैव रीतिरनुसर्त्तव्या। अत्र च यद्धर्म्माश्रयस्य सर्वस्यासतो यदधीनं सत्त्वमित्यादिनियमस्वरूपम्, यथाश्रुते मेयत्वादेरपि दण्डजन्यतावच्छेदकतापत्तेः। न चादृष्टजन्यतावच्छेदकत्वमेवमपि मेयत्वेन त्यज्यतामिति वाच्यम्, इष्टत्वात्। न च नीलघटत्वा-

दर्पणः

नित्यवृत्तेरपि ज्ञानत्वस्य कार्यतावच्छेदकत्वं सम्भवतीति शङ्कते-मूलम् अथेति। व्योम्न इति। असत इति विशेषणमहिम्ना आद्यक्षणसत्त्वमुत्पत्तिरूपं लभ्यते। तस्य

माथुरी

क्वचित्तथैव पाठः जन्यज्ञानत्वावच्छिन्नत्वन्तु जन्यज्ञाननिष्ठान्योन्याभावप्रतियोगितानवच्छेदकधर्म्मावच्छिन्नत्वं जन्यज्ञानत्वान्यूनवृत्तिधर्म्मावच्छिन्नत्वमिति यावत्। सकलतद्वृत्तित्वमात्रस्यात्र त्वप्रत्ययार्थत्वात्तेन परनये व्यावर्त्याप्रसिद्धया जन्यज्ञानत्वस्य शरीरादेः कार्य्यतावच्छेदकत्वेऽपि नाप्रसिद्धिः। अत्र कार्य्यताच्छेदकत्वमात्रे साध्ये ज्ञानसामान्यकारणशरीरादिनिरूपितकारणताप्रतियोगिककार्य्यतावच्छेदकत्वेनार्थान्तरप्रसङ्गः। जन्यत्व-संयोगत्वाभ्यां द्रव्यत्वावच्छिन्नजन्यत्वदर्शनेन सामान्य-विशेषयोरप्येकप्रयोज्यत्वसम्भवादतः प्रतियोगिकान्तं कार्य्यताविशेषणम्, 'कारणताभिन्नत्वं तादृशकारणतावच्छेदकानवच्छिन्नत्वम्, तेन कार्य्यतावच्छेदकभेदेनैव कारणताभेदान्नार्थान्तरतादवस्थ्यमिति भावः।

भट्टाचार्य्यास्तु कार्य्यतावच्छेदकत्वमत्र कार्य्यतानतिरिक्तवृत्तित्वं न तु स्वरूपसम्बन्धविशेषः, तथा च ज्ञानादिसामान्यकारणजन्यतानतिरिक्तवृत्तित्वेन सिद्धसाधनवारणायैव प्रतियोगिकान्तं कार्य्यताविशेषणम्, शेषं पूर्व्वदित्याग्रहः। तदसत् अत्रावच्छेदकत्वस्य कार्य्यतावच्छेदकतानतिरिक्तवृत्तित्वरूपत्वे अग्रिमानुमानेपि तथाशब्देन निरुक्तकार्य्यतानिरक्तवृत्तित्वस्यैव साध्यस्य परामर्शान्नीलघटत्वादौ तत्र व्यभिचारा-

१. तदतिरिक्तजन्यत्वे साध्ये इति ख०।

**कार्यतावच्छेदकं ज्ञानत्वसाक्षाद्व्याप्यधर्मत्वात् अप्रमात्ववदिति निरस्तम्, प्रमात्वस्य नित्यवृत्तित्वात् ।**

आलोकः

**दावति प्रसङ्गः, बाधकाभावे सतीत्यनेन विशेषितत्वात् । न ह्यदं कार्यतावच्छेदकत्व-व्याप्यधर्मोपदर्शनमपि तु नित्यवृत्तित्तारूपबाधकनिराकरणमिति कार्यमात्रवृत्तिधर्मत्वे यथा व्याप्यतानिर्वाहार्थं तद्विशेषणं तथेहापि । तदर्थस्तु अग्र एव वाच्य इति नेह कथित इति ।**

दर्पणः

च सर्वस्य हेत्वधिकरणक्षणाव्यवहितोत्तरक्षणवर्तित्वं सम्भवति । विशेषणादाने तु द्वितीयादिक्षणसत्त्वस्यापि लाभात् सर्वस्य सत्त्वस्योक्तहेतुनियम्यत्वं न सम्भवतीत्यर्थः ।

माथुरी

भिधानस्यासङ्गतत्वापत्तेः स्वरूपसम्बन्धरूपकार्य्यतावच्छेदकत्वमात्रपरत्वे च सन्दर्भ-विरोधापत्तेः तस्य पूर्व्वप्रक्रान्तत्वादिति ध्येयम् ।

'ज्ञानत्वसाक्षाद्व्याप्येति, धर्म्मत्वमात्रं सत्तादौ व्यभिचारीति व्याप्यान्न प्रत्यक्षत्वे व्यभिचारवारणाय साक्षादिति । ननु अनुभवत्वे व्यभिचारः । न च ज्ञानत्वपदम-नुभवत्वपरम्, प्रत्यक्षत्वे व्यभिचारतादवस्थ्यात् । किञ्च साक्षाद्व्याप्यत्वं न तद्व्याप्या-व्याप्यत्वे सति तद्व्याप्यत्वम्, प्रमात्वाप्रमात्वयोर्हेत्वसिद्धेः तयोस्तादृशस्य स्वस्यैव व्याप्यत्वात् । नापि तद्व्याप्यान्यूनवृत्तित्वे सति तद्व्याप्यत्वं प्रमाप्रमान्यतरत्वादिव्याप्यतया प्रमात्वाप्रमात्वयोर्हेत्वसिद्धितादवस्थ्यात् । नापि तद्व्याप्यजात्यन्यूनवृत्तित्वे सतीत्यादि-रूपम्, प्रमाप्रमान्यतरत्वादौ तत्तज्ज्ञानत्वादौ च व्यभिचारात् । बाधकाभावे सतीति विशेषणान्न दोष इति चेत् । न । तावन्मात्रस्यैव सार्थकत्वात् व्यर्थविशेषणत्वात् तादृशानुभवत्वन्यूनवृत्तितया स्वरूपासिद्धेश्च । उच्यते । ज्ञानत्वसाक्षाद्व्याप्यधर्म्मत्वं ज्ञानसाक्षाद्विभाजकोपाधित्वं भवति च भ्रमत्वं प्रमात्वञ्च तथा, ज्ञानं द्विविधं विद्या चाविद्या चेति प्रथमं विभागात् । अयञ्च विभागो मिश्रस्य भट्टस्य वा ग्राह्यः न तु वैशेषिकस्य, तत्र निर्व्विकल्पकसाधारण्यार्थं विद्यात्वस्य भ्रमभिन्नज्ञानत्वरूपतया प्रमात्वरूपत्वाभावेन स्वरूपासिद्ध्यापत्तेः ।

यद्वा ज्ञानत्वसाक्षाद्व्याप्यधर्म्मत्वं भ्रमत्व-प्रमात्वान्यतरत्वं भ्रम-प्रमान्यतरपद-

१. अप्रमयैवेति भावः ।

२. स्वविषयतातिरिक्तविषय इति कपुस्तकपाठः ।

३. 'नोक्तदोष इति' इति अधिकः पाठः कपुस्तके ।

आलोकः

यदिति। यदवच्छिन्नस्योत्पत्तिरित्येव लघु न तु यदाश्रययावदुत्पत्तिरित्यर्थः। यदवच्छेदेन हि यत्रान्वयव्यतिरेकानुविधानं तदवच्छेदकम्। न चातिप्रसक्तमन्वयाद्यवच्छेदकम्। व्यभिचारेण ग्राहकाभावेन कार्यत्वस्यैव दुर्ग्रहत्वादिति भावः।

वस्तुतस्तु हेतुनियम्यत्वं हेत्वधिकरणक्षणोत्तरक्षणनियतत्वम्। तथा च यत्स्वरूपं हेतुनियम्यमित्यनेनावच्छेदकस्यानतिप्रसक्तिनियमेन तादृशहेतुनियम्यतावच्छेदकमेव कार्यतावच्छेदकम्। तादृशहेतुनियम्यत्वस्यैव कार्यत्वरूपत्वादिति तत्त्वम्।

अनित्येति। यद्यप्येतज्ज्ञानगर्भप्रथमसाध्येऽपि तुल्यम्, तथापि तत्र दोषान्तरस्योद्भटतयैव तदुपेक्षितम्।

दर्पणः

तथा च यद्धर्माश्रयस्येति। यद्धर्माश्रयस्य सर्वा उत्पत्तिर्हेतुनियम्येत्यर्थः। कथितैवेति। सर्वस्य सत्त्वस्य हेत्वन्वयव्यतिरेकित्वाभावादित्यर्थः।

ननु सर्वपददानेऽप्ययं दोषः, तदेव किमर्थमित्यत आह—अत्र चेति। सर्वस्येति। इदश्चासत इत्यस्य विशेषणम्, तेन सर्वा उत्पत्तिर्लभ्यते, न तु यद्धर्माश्रयस्य, तथा सत्यसङ्गत्यापत्तेरित्यवधेयम्। तदर्थः बाधकाभावरूपविशेषणार्थः[१]। यद्धर्माश्रयस्य सर्वा

माथुरी

प्रवृत्तिनिमित्तत्वं वा, तेन न काप्यनुपपत्तिः। 'प्रमात्वस्येति, तथा च बाध इति भावः। 'तथा' कार्य्यतावच्छेदकम्, सति तात्पर्य्ये तथादिपदानामेकदेशपरामर्शकत्वस्यापि व्युत्पत्तिसिद्धत्वात्। अवच्छेदकत्वञ्च स्वरूपसम्बन्धविशेषः, नातोऽनित्यज्ञानत्वावच्छिन्नकार्य्यतानतिरिक्तवृत्तित्वेन सिद्धसाधनम्। 'नीलघटत्वादिनेति, आदिना अन्यतरत्वादिपरिग्रहः।

यद्वा 'तथा' अनित्यज्ञानत्वावच्छिन्नकार्य्यतानिरूपितकारणताभिन्नकारणतानिरूपितकार्य्यतावच्छेदकमित्यर्थः, पूर्वं प्रमात्वं पक्षीकृतमत्र तु अनित्यप्रमात्वमतो न पुनरुक्तिः। 'नीलघटत्वादिनेति, आदिना अनित्यज्ञानत्वादिपरिग्रहः।

'प्रमाप्रमोभयेति, प्रमाहेतुभिन्नहेतुजन्यत्वे साध्ये बाधः, अप्रमाहेतुभिन्नहेतुजन्यत्वे साध्ये दृष्टान्तासिद्धिरतः 'उभयेति, इन्द्रियादिकञ्च तदुभयहेतुरेवेति न तेन सिद्धसाधनमिति भावः। 'अप्रमायामिति, तथा च दृष्टान्तासिद्धिरिति भावः। 'घटदृष्टान्तत्व इति। यद्यपि स्वविषयकप्रमाप्रमोभयहेतुदण्डादिहेतुकतया घटोपि न दृष्टान्तः। तथापि द्व्यणुकदृष्टान्तत्वे तात्पर्य्यम्। 'तथैव' अप्रमयैव। ननु विषयतातिरिक्तरूपेण हेतुत्वविवक्षणान्नोक्तदोष इत्यरुचेराह, 'शङ्केति, 'प्रमात्वादिति, तथा च तज्जनकीभूतदोषोऽपि प्रमाप्रमोभयहेतुरेवेति तदुभयहेतुभिन्नहेतुजन्यत्वाभावात् तत्र व्यभिचार इति

१. कोष्ठगतो ग्रन्थः गपुस्तके नास्ति।

अनित्यप्रमात्वं तथा कार्यमात्रवृत्तिधर्मत्वादित्यपि नीलघटत्वादिना व्यभिचारि। अनित्यप्रमा प्रमाप्रमोभयहेतुभिन्नहेतुजन्या, जन्यत्वात्,

आलोकः

प्रमात्वमिति। यद्यपि कार्यतावच्छेदकत्वमात्रे साध्ये पक्षधर्मताबलादभिमतसाध्यसिद्धिरप्रत्यूनुहा, एकनिरूपितैकाधिकरणकार्यतावच्छेदकद्वयानङ्गीकारादिति, तथापि दूरबाधकप्रतिसन्धिक्लेशो मा भूच्छिष्याणामिति विशिष्टमेव साध्यमुपात्तम्। साध्ये च न व्यर्थविशेषणतेति प्राचीनमतेन प्रयोगादिति ध्येयम्।

दर्पणः

उत्पत्तिर्हेतुनियम्येत्यपेक्षया यद्धर्माश्रयः सर्वो हेतुनियम्य इत्येव लघु उत्पत्त्यप्रवेशान्न च ज्ञानाश्रयः सर्वो हेतुनियम्य इति सिद्धान्तयति—यदवच्छिन्नस्येति। अत्र उत्पद्यत इति उत्पत्तिः स्वरूपम्। यदवच्छिन्नस्येत्यवच्छिन्नपदाच्च सर्वत्वलाभः तेन यद्धर्माश्रयः सर्व इति लभ्यते। हेतुनियम्यत्वञ्च हेत्वन्वयव्यतिरेकानुविधायित्वम्।

युक्त्यन्तरमाह—यदवच्छेदेन हीति। इतिशब्दानन्तरं चकारः पूरणीयः।

हेत्विति। हेत्वधिकरणक्षणोत्तरत्वव्याप्यस्वाधिकरणक्षणत्वकत्वमित्यर्थः। अत्र चाव्यवहितविशेषणत्यागादपि लाघवं ध्येयम्।

भ्रान्तः शङ्कते—यद्यपीति। दोषान्तरस्य अप्रसिद्धिरूपस्य। उद्भूततया सिद्धसाधनविरोधितया। ज्ञानत्वावच्छिन्नेति मूलम्। अनित्यज्ञानत्वावच्छिन्नेत्यर्थः। एकनिरूपितेति। एकस्यां हेतुतायां उपाधिरूपसामान्यस्य उपाधिरूपविशेषस्य च

माथुरी

भावः। व्यभिचारस्तु सर्व्वांशे अलौकिकप्रत्यक्षानुमित्यात्मके शङ्खः पीत इति ज्ञाने एव न तु शङ्खाद्यंशे लौकिकप्रत्यक्षात्मके तत्र व्यभिचारः, तत्र च विषयतातिरिक्तरूपेण प्रमाप्रमोभयहेतुभिन्नो हेतुः शङ्ख एव तज्जन्यत्वेन साध्यसत्त्वादित्यमंशतो बाधोऽपि तत्रैव द्रष्टव्यः।[1]

ननु साध्ये प्रमापादेन भ्रमभिन्नज्ञानविवक्षणान्नोक्तदोष इत्यरुचेराह 'कारणेति, 'व्यक्तिभेदेति व्यक्तिविशेषेत्यर्थः,' यत्सन्निकर्षव्यक्त्या अप्रमा न जनिता प्रमैव जनिता तज्जन्यत्वेन सिद्धसाधनादित्यर्थः। 'अथ प्रमेति, 'प्रमा' अनित्यप्रमा, 'अप्रमाव्यावृत्तेति अत्र अप्रमाव्यावृत्तत्वं न भ्रमभिन्नवृत्तित्वम्, जन्यज्ञानत्वाद्यवच्छिन्नकार्य्यतामादाय सिद्धसाधनापत्तेः तादृशकार्य्यतामादाय भ्रमेपि साध्यसत्त्वेन हेतौ विजातीयान्तवैयर्थ्यापत्तेश्च। किन्तु एकमात्रविशेष्यकप्रमावृत्तित्वम्, एकमात्रविशेष्यकेत्युपादानात् अप्रमात्वस्यापि प्रमाप्रमोभयसमूहालम्बनवृत्तित्वेपि न प्रकृतासिद्धिः।

---

१. पीतशङ्खज्ञानस्यापीति ख० ग० च०।

अप्रमावदिति चेत्—न, दोषस्य पित्तादेः स्वविषयप्रमाहेतुत्वेनाप्रमायां साध्याप्रसिद्धेः। घटदृष्टान्तत्वे तथैव[1] व्यभिचारात्। शङ्खाद्यंशे पीतः शङ्ख इति ज्ञानस्यापि प्रमात्वात्, कारणव्यक्तिभेदजन्यत्वेन सिद्धसाधनाच्च।

आलोकः

ज्ञानत्वेति। ज्ञानसाक्षाद्विभाजकोपाधित्वादित्यर्थः। विद्या चाविद्या चेति प्रथमविभागादिति भावः।

ननु स्वाविषयक प्रमाप्रमोभयहेतुभिन्नहेतुजन्यत्वं साध्यमतो नोक्तदोष इत्यरुचेराह—शङ्खेति।

ननु यद्विषयकत्वेन ज्ञानं प्रति जनकत्वं तत्र प्रमात्वादिति विवक्षितम्। अतो दोषान्तरमाह—कारणेति।

दर्पणः

कार्यतावच्छेदकत्वानङ्गीकारादित्यर्थं। तेन द्रव्यनिष्ठकारणतायां जन्यगुणत्वसंयोगत्वयोः कार्यतावच्छेदकत्वेऽपि न व्यभिचारः। यथाश्रुते ज्ञानत्वसाक्षाद्व्याप्यत्वमसिद्धम्, अनुभवत्वस्यैव साक्षाद्व्याप्यत्वादित्यतोऽन्यथा व्याचष्टे-ज्ञानत्वेति। वैशेषिकानुसारिविभाजकं चात्र द्रष्टव्यम्।

ननु स्वान्यविषयकप्रमाया विवक्षितत्वान्नोक्तदोष इत्यत आह—मूले शङ्खेति। यद्विषयकत्वेनेति। यद्विषयकत्वावच्छिन्नं ज्ञानं प्रति जनकता पित्तस्य तत्रांशे भ्रमत्वमेवास्ति न तु प्रमात्वमित्यर्थः। कारणेति। यथा इन्द्रियसन्निकर्षव्यक्त्या प्रमैव जनिता तज्जन्यत्वेन प्रमाप्रागभावजन्यत्वेन वेत्यर्थः।

माथुरी

न च तथापि इच्छात्वाद्यवच्छिन्नकार्य्यताप्रतियोगिककारताश्रयात्मादिजन्यत्वेन संयोगत्वाद्यवच्छिन्नकार्य्यताप्रतियोगिककारणताश्रयद्रव्यजन्यत्वेन च सिद्धसाधनं तादृशजन्यतामादायाप्रमायामपि साध्यसत्त्वे 'अप्रमाविजातीयेति विशेषणञ्च हेतौ व्यर्थमिति वाच्यम्। कारणजन्येत्यनेन कारणताप्रतियोगिककार्य्यतावत्त्वविवक्षणात्। 'अप्रमाविजातीयेति भ्रमभिन्नेत्यर्थः, पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वाच्च न भागासिद्धिः, भ्रमभिन्नप्रमैव वा पक्षः। अत्रानुमाने तर्कं प्रदर्शयति, 'यदीति, अप्रमाव्यावृत्तधर्म्मावच्छिन्नेत्यस्य विवरणम् 'अप्रमात्वेति, 'अप्रमा स्यादिति। न चेश्वरज्ञाने आकाशादौ व्यभिचार इति वाच्यम्। जन्यत्वे सतीति आपादके विशेषणात् विपर्य्ययानुमाने जन्यत्वाभावबाधेन पक्षधर्मताबलादनन्तरं वा जन्यत्वविशेषितेनैव विशिष्टाभावेनोक्तसाध्यसिद्धिः।

---

१. कारणव्यक्तिविशेषजन्यत्वेनेति क०।

**अथ प्रमा अप्रमाव्यावृत्तधर्मावच्छिन्नकार्यत्वप्रतियोगिककारणजन्या, अप्रमाविजातीयकार्यत्वात् घटवत्। यदि प्रमा अप्रमात्वासमानाधिकरणरूपनिरूपितकार्यत्वप्रतियोगिककारणजन्या न स्यात् अप्रमा स्यादिति चेत्—न,**

आलोकः

अप्रमात्वेति। ननु यथाश्रुतमिदमीश्वरज्ञानादावनैकान्तिकम्, जन्यत्वविशेषणे विपर्ययपर्यवसायि, जन्यत्वे सत्यप्रमात्वासमानाधिकरणरूपनिरूपितकार्यत्वप्रतियोगिककारणजन्यत्वरूपे व्यतिरेके जन्यत्वविशेषणवैयर्थ्यात्। नञ्व्यत्यासे तादृशरूपानिरूपितकार्यत्वप्रतियोगिककारणजन्यत्वरूपापादके न व्यभिचारो न वा व्यर्थविशेषणता यद्यपि, तथाप्युपन्यस्तविपर्ययविरोधः। तद्विपर्ययस्याप्रमात्वासमानाधिकरणरूपानिरूपितकार्यत्वप्रतियोगिकारणजन्त्वाभावरूपतया तस्य च नित्यानित्यसाधारणत्वेनाप्रमाविजातीयत्वमात्रस्यैव सामर्थ्येन कार्यत्वविशेषणोपादानानुपपत्तेः। तादृशि साध्ये ज्ञानसामान्यहेतुजन्यत्वे सिद्धसाधनाच्चेति।

दर्पणः

केचित्तु प्रमापदेन सर्वांशप्रमा विवक्षितेत्यस्वरसेन कारणेति मूलमवतारयति। जन्यत्वविशेषण इति। आपादकस्येति शेषः। (कथं विपर्ययपर्यवसानमित्यत आह—जन्यत्वे सतीति)। कारणजन्यत्वरूपे जन्यत्वसमानाधिकरणस्योक्तकारणजन्यत्वाभावस्याभावरूपे। जन्यत्वविशेषणवैयर्थ्यादिति। यादृशे विपर्यये तर्कपर्यवसानं तदेव चानुमाने साध्यमिति तर्कविपर्ययस्य नित्यसाधारणत्वेन हेतौ जन्यपदवैयर्थ्यादित्यर्थः।

यद्वा विशेषणवति विशिष्टाभावो विशेषणसहिते विशेष्याभावे पर्यवसित इत्यभिप्रायेण यथाश्रुत एव ग्रन्थो योज्यः। जन्यत्वविशेषणवैयर्थ्यात् व्यापक इति शेषः।

माथुरी

मिश्रास्तु 'अप्रमा स्यात्' अप्रमाविजातीयकार्य्यं न स्यादित्यर्थः। अग्रे चाप्रमातादात्म्ये इत्यस्याप्रमाविजातीयकार्य्यान्यित्व इत्यर्थः, इत्याहुः।

केचित्तु 'अप्रमा स्यात्' जन्यप्रमा न स्यादित्यर्थः। अप्रामाण्याभाव एव च प्रमात्वं नातः परमते जन्यपदव्यावर्त्याप्रसिद्धिः। आकाशादेरेव तादृशत्वात्। अग्रे चाप्रमातादात्म्ये प्रयोजकमित्यस्य जन्यप्रमाभिन्नत्वे व्याप्यमित्यर्थः, इत्याहुः।

नव्यास्तु 'अप्रमा स्यात्' प्रमाभिन्नः स्यात्, रजतमात्रविशेष्यकत्वे सति रजतत्वप्रकारकत्वाभाववान् स्यादित्यर्थः। ईश्वरज्ञाने च रजतमात्रविशेष्यकस्वाभावेनापाद्यसत्त्वान्न व्यभिचारः। तादृशज्ञानस्यैव पक्षत्वात् पक्षतावच्छेदकसामानाधिकरण्येन विपर्य्यासिद्धेरुद्देश्यत्वाद्वा न विपर्य्ययानुमाने भागासिद्धिः। अग्रे अप्रमातादात्म्ये प्रयोजकमिस्य रजतमात्रविशेष्यकरजतत्वप्रकारकभिन्नत्वे व्याप्यमित्यर्थः, इत्याहुः।

अप्रमाव्यावृत्तधर्मावच्छिन्नकार्यत्वं संयोगस्य तत्प्रतियोगिककारणमिन्द्रियादीति तज्जन्यत्वेन सिद्धसाधनात् । अप्रमासाधारणव्यक्तिजन्यत्वञ्चाग्रेऽप्रमातादात्म्ये

आलोकः

अत्राहुः—अप्रमा स्यादप्रमाविजातीयकार्यं न स्यादित्यर्थः । तद्व्यतिरेकस्तु अप्रमाविजातीयकार्यत्वमेवमग्रेऽपि अप्रमाविजातीयकार्यासाधारणकारणजन्यत्वमप्रमाविजातीयकार्यभिन्नात्मकत्वे प्रयोजकमित्यर्थः । अतो न तद्विरोधः ।

वस्तुतस्तु अप्रमा स्यात् प्रमा न स्यादित्यर्थः । ईश्वरज्ञानं तु न प्रमेति न व्यभिचारः । जन्यत्वसमानाधिकरणाप्रमात्वा[1] समानाधिकरणरूपनिरूपितकार्यत्वप्रतियोगिककारणजन्यत्वाभावाभावस्य व्यतिरेकत्वात् यथाश्रुतमेव वा समादरणीयमिति ।

दर्पणः

केचित्तु आपादके ईश्वरज्ञानवारणाय जन्यपदम् परमते व्यावर्त्याप्रसिद्ध्या वैयर्थ्यमित्यर्थमाहुः । तन्न, आकाशादिव्यभिचारवारकत्वेन सार्थकत्वात् । न वेति । द्वितीयपक्षे व्यापके या जन्यपदव्यर्थता उक्ता तदप्रवेशात् सा नेत्यर्थः ।

सिद्धसाधनादिति । स्वसिद्धेनैवापादकेनेह साधनापादनादित्यर्थः । तथा च तद्व्यतिरेके साध्ये बाध इति भावः । न स्यादित्यर्थ इति । तथा च साध्यव्यतिरेकेण हेतुव्यतिरेकापादनमेवात्र विवक्षितमिति भावः ।

नन्वग्रेऽप्रमातादात्म्ये प्रयोजकमितिमूलदर्शनादप्रमातादात्म्यस्यैवापाद्यत्वं लभ्यते इत्यत आह—अग्रेऽपीति । आपादकव्यतिरेकस्यानुमानसाध्यस्य चैक्यमावश्यकम्, न तु आपाद्यव्यतिरेकहेत्वोरपीत्यभिसन्धायाह—वस्तुतस्त्वति । जन्यत्वेति । विपर्ययरूपे

माथुरी

यथाश्रुतानुमानाभिप्रायेणाह, 'अप्रमेति, संयोगत्वावच्छिन्नं प्रति द्रव्यत्वेन जनकत्वादिन्द्रियमपि द्रव्यं तथेति तज्जन्यत्वेन सिद्धसाधनमित्यर्थः । ननु विवक्षितानुमानमदुष्टमेवेति तत्र दूषणमाह, 'अप्रमासाधारणेति, अप्रमासाधारणकारणजन्यत्वमेव, 'अप्रमातादात्म्ये प्रयोजकं अप्रमातादात्म्ये व्याप्यम्, न त्वापादकीकृततादृशजन्यत्वाभाव इति तर्कोऽप्यप्रयोजक इत्यर्थः । तथा च तदुपजीवकमनुमानमपि सुतरामप्रयोजकमित्यपेरर्थः । इदमुपलक्षणं प्रमावृत्तितत्तद्व्यक्तित्वावच्छिन्नकार्य्यतामादाय सिद्धसाधनमर्थान्तरं वेत्यपि बोध्यम् ।

'अनित्यप्रमेति, दृष्टान्ते प्रमाप्रतिबन्धकदोषजन्यतामादाय साध्यमत्वम्, पक्षे च तद्द्वारा बाधादप्रमाप्रतिबन्धकगुणजन्यत्वमादाय पर्य्यवस्यतीति भावः । अप्रमाप्रति-

१. क्वचिन्मूलपुस्तके व्यक्तिविशेषजन्यत्वेनेत्येव पाठो वर्तते ।

प्रप्रयोजकमिति तर्कोऽप्यप्रयोजकः । अथानित्यप्रमा प्रमाप्रमान्यतरप्रतिबन्धक-जन्या, प्रमाप्रमान्यतरत्वात् अप्रमावत्, चाक्षुषप्रमा चाक्षुषभ्रमाजनकजन्या अनित्यप्रमात्वात् रासनप्रमावदिति चेत्—न । प्रमाजनकासाधारणव्यक्ति-

आलोकः

नन्वप्रमाव्यावृतधर्मावच्छिन्नज्ञानवृत्तिकार्यत्वनिरूपितेति करणान्न सिद्धसाधनम् । न तु ज्ञानवृत्तित्वहीनं साध्यम्, येन तत् स्यात् । अन्यथा कार्यत्वमात्रमेव हेतु क्रियेत । उक्तरीत्या इन्द्रियजन्यत्वेन तत्रापि साध्यसत्त्वात् । न चैवं घटदृष्टान्तविरोधः । व्यतिरेकदृष्टान्तत्वेनापि उपपत्तेः । न च तत्र हेत्वभावाभावान्नेदमिति वाच्यम्, घटव्यभिचारभयेनाप्रमाविजातीयकार्यज्ञानपरत्वाद्धेतोः । यो यद्विजातीयकार्यः स तद्व्यावृतधर्मावच्छिन्नकार्यत्वप्रतियोगिककारणजन्य इति सामान्यव्याप्तौ

दर्पणः

साध्ये जन्यत्वपदं न व्यर्थम्[1], विशिष्टाभावस्य साध्यत्वादित्यर्थः । न च हेतौ जन्यपदं व्यर्थम्, तस्यैवात्रानयनादिति भावः ।

तर्कोऽनुमानञ्चाप्रयोजकमित्यर्थः ।

अपिः समुच्चये ।

स्वविरोधीति । अत्रानुभवग्रहणं स्वविरोधिस्मृतिप्रतिबन्धकानुभवसामग्रीजन्य-अन्यथा ज्ञानवृत्तित्वविशेषणानुपादाने । तत्रापि अप्रमायामपि । इत्यत आहेति । इत्यस्वरसादाहेत्यर्थः ।

माथुरी

बन्धकजन्यत्वमात्रे साध्ये अप्रमायां व्यभिचारः, प्रमाप्रतिबन्धकजन्यत्वमात्रे साध्ये बाध इत्यन्यतरोपादानम्, 'प्रमाप्रमान्यतरत्वादिति । न चेश्वरज्ञाने व्यभिचार इति वाच्यम् । अनित्यत्वे सतीति विशेषणात् । न च जन्यज्ञानत्वादित्येवास्त्विति वाच्यम् । अखण्डाभावत्वात् । 'चाक्षुषप्रमेति, पक्षे चाक्षुषपदं ईश्वरज्ञाने बाधवारणाय, साध्ये च तत् दृष्टान्तलाभाय, हेतौ च प्रमापदं चाक्षुषभ्रमे व्यभिचारवारणाय, अनित्यपदमीश्वरज्ञाने व्यभिचारवारणाय । 'प्रमाजनकेति, व्यक्तिभेदस्य' व्यक्तिविशेषस्य, प्रमामात्रं जनयति यत्सन्निकर्षादिव्यक्तिः तस्या अप्रमाप्रतिबन्धकत्वेन चाक्षुषभ्रमाजनकत्वेन च प्रमायां तज्जन्यवात् सिद्धसाधनमित्यर्थः । अत्र प्रमाप्रमान्यतरप्रतिबन्धकत्वं न तत्कारणीभूताभावप्रतियोगित्वम्, किन्तु प्रमाप्रमान्यतराजनकत्वमित्यभिप्रेत्य 'अप्रमाप्रतिबन्धकत्वेनेत्युक्तम् । 'स्वविरोधीति स्वस्य विरोधी प्रतिबन्धको योऽनुभव

१. प्रमाभेदाप्रमाभेदोभयावच्छिन्नप्रतियोगिताकभेदस्य अन्यतरत्वरूपत्वेन तादृशान्यतरत्वस्य जन्यज्ञानत्वाघटितत्वान्न हेतोर्व्यर्थविशेषणघटितत्वमिति भावः ।

भेदस्याप्रमाप्रतिबन्धकत्वेन चाक्षुषप्रमाजनकत्वेन च सिद्धसाधनात् । एतेन प्रमा स्वविरोध्यनुप्रतिबन्धकजन्या, अनित्यानुभवत्वात् अप्रमावत् । दूरात्पुरुषस्य स्थाणुतया ज्ञाने सन्निधौ च भूयोऽवयवेन्द्रियसन्निकर्षस्य

आलोकः

वा तद्दृष्टान्तत्वात् । न चैतादृशसाध्याप्रसिद्धिः । प्रमानिष्ठमप्रमाव्यावृत्तधर्मावच्छेद्यम्, अप्रमाविजातीयनिष्ठकार्यत्वादित्यादिना तत्प्रसिद्धिसौकर्यात् । न चैतावता समीहितसिद्धेरनुमानान्तरानवकाश; प्रकारार्थं तत्सम्भवादित्यत आह—अप्रमेति । न हि अप्रमाव्यावृत्तधर्मावच्छेद्यकार्यत्वनिबन्धनं तद्वैजात्यमपि तु तदजनकव्यक्तिजन्यत्वनिबन्धनमिति ।

दर्पणः

अपिशब्दसमुच्चयमाह—अनुमानञ्चेति । प्रमाप्रमान्यतरत्वादिति मूलम् । ईश्वरज्ञानमुभयबहिर्भूतमिति न तत्र व्यभिचार इति भावः ।

ईश्वरज्ञानस्य प्रमात्वपक्षे मूलम्-अनित्यप्रमात्वादिति । अनित्यानुभवत्वादिति मूलम् । निर्विकल्पके व्यभिचारवारणाय सप्रकारकत्वं विशेषणमित्येके । तस्यापि

माथुरी

इत्यर्थः, स च भ्रम एव, प्रमाप्रतिबन्धकज्ञानस्य भ्रमत्वनियमादिति भ्रमप्रतिबन्धकजन्यत्वं प्रमायां सिद्धयति । अत्र स्वप्रतिबन्धकग्राह्याभावविषयकस्मृतिप्रतिबन्धककानुभवसामग्रीजन्यतया लौकिकप्रत्यक्षनिश्चयान्यप्रमायामंशतः सिद्धसाधनस्यांशतोऽर्थान्तरस्य च वारणाय साध्ये अनुभवपदम्, हेतौ चानुभवपदं स्मृतौ भ्रमप्रतिबन्धकगुणजन्यत्वानभ्युपगमात् स्मृतिसामग्र्या अनुभवाप्रतिबन्धकत्वाच्च स्मृतौ व्यभिचारवारणाय । ननु तथापि स्वप्रतिबन्धकग्राह्याभावविषयकमानसज्ञानप्रतिबन्धकसामग्रीजन्यतया मानसेतरानुभवे अंशतः सिद्धसाधनम् । अथ तद्वति तत्प्रकारकानुभवस्य पक्षतया तदवच्छेदेन साध्यसिद्धेरुद्देश्यत्वान्नांशतः सिद्धसाधनं दोषाय, अवच्छेदकावच्छेदेन सिद्धसाधनन्तु नास्त्येव, मानसप्रत्यक्षसामग्र्या ज्ञानान्तराप्रतिबन्धकतया मानसप्रमायामेव साध्यसिद्धेः । न च साध्येऽनुभवपदवैयर्थ्यं लौकिकप्रत्यक्षप्रमायां ग्राह्याभावविषयकस्मृतेरप्रतिबन्धकतया स्वविरोधिग्राह्याभावस्मृतिप्रतिबन्धकीभूतानुभवसामग्रीजन्यत्वस्य तत्रैवाभावेन सिद्धसाधनविरहात् अंशतः सिद्धसाधनस्य चादोषत्वादिति वाच्यम् । साध्ये स्वविरोधित्वं हि न स्वप्रतिबन्धकत्वम् अपि तु स्वविरोधिविषयकत्वं स्वविशेष्ये स्वप्रकाराभावविषयकत्वमिति यावत्, तथा च ग्राह्याभावस्मृतेरपि लौकिकप्रत्यक्षप्रमाविरोधितया तत्रापि स्वविरोधिग्राह्याभावस्मृतिप्रतिबन्धकीभूतानुभवसामग्रीजन्यत्वमस्त्वेनसिद्धसाधनस्यैव सम्मतादिति चेत् । न । नव्यनये सामान्यतः प्रत्यक्षसामग्रीत्वेनैवानुमितिबन्धकतया मानससामग्र्या अपि अनुमितिप्रतिबन्धकत्वाद,

विरोधिस्थाण्वनुभवप्रतिबन्धकत्वं पुरुषज्ञानजनकत्वञ्च दृष्टम् । अप्रमायां तु पित्तादेर्लिङ्गादिभ्रमस्य च तथात्वमिति निरस्तम् । प्रमाजनकव्यक्ति-विशेषस्याप्रमाप्रतिबन्धकत्वं प्रमाजनकत्वाञ्चास्तीति सिद्धसाधनादिति न

आलोकः

त्वेन सिद्धसाधनवारणाय । स्वपदं स्वसमभिव्याहृतपरम् । अतोऽत्र पक्षीभूतप्रमा-मात्रविरोधीति लाभान्न प्रत्यक्षप्रतिबन्धकानुमितिसामग्रीजन्यत्वेनांशतः सिद्ध-साधनम् । हेतावपि अनुभवपदं स्मृतावेव व्यभिचारवारणाय ।

दर्पणः

गुणजन्यत्वात् साध्यमस्तीत्यपरे । बाधपरिहाराय मूलम्—दूरादिति । दृष्टान्ते साध्य-वैकल्यपरिहाराय मूलम्—अप्रमायां त्विति । इत्यस्वरसादाहेति । इत्यत-आहेत्यर्थः ।

माथुरी

प्रत्यक्षसामग्रीत्वञ्च समानाधिकरणत्वे सति स्वाव्यवहितपूर्व्ववर्त्तित्वसम्बन्धेन प्रत्यक्ष-विशिष्टत्वं तेन नातिप्रसङ्गः, अतएवानुमितीच्छादेरपि नोत्तेजकत्वं न वा लौकिकत्व-समानविषयत्वयोः प्रवेशः, सम्प्रदायमतेऽपि मानसप्रत्यक्षं जायतां चाक्षुषाद्यतिरिक्तं प्रत्यक्षं जायतामित्यादीच्छादशायां मानसप्रत्यक्षसामग्रीमत्त्वे अनुमितेरनुदयात् तत्तदिच्छाभावकूटाभावविशिष्टमानससामग्रीत्वेन मानसेतरज्ञानं प्रति प्रतिबन्धकत्वा-वश्यकत्वाच्च, तथा च ग्राह्याभावविषयकमानसप्रत्यक्षप्रतिबन्धकसामग्रीजन्यतया मानसेतरानुभव इव ग्राह्याभावविषयकानुमितिप्रतिबन्धकसामग्रीजन्यतया मानस-प्रमायामपि सिद्धसाधनसम्भवेन पक्षीभूतप्रमामात्र एव सिद्धसाधनस्य दुर्व्वारत्वात् मानसप्रत्यक्षं प्रति मानसेतरज्ञानसामग्रीत्वेनैव प्रतिबन्धकतया स्मृतिसामग्र्या अपि मानसप्रत्यक्षप्रतिबन्धकत्वेन ग्राह्याभावविषयकमानसप्रतिबन्धकस्मृतिसामग्रीजन्यता-मादायैव स्मृतावपि साध्यसम्भवाद्धेतावनुभवपदवैयर्थ्यञ्चेति । मैवं, मानसेतरानु-भवेऽशतः सिद्धसाधनस्योक्तक्रमेण प्रमामात्र एव सिद्धसाधनस्य वारणाय प्रतिबन्धक-पदेन ज्ञानसाक्षाद्विभजकोपाध्यवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताया विवक्षि-तत्वात्, ज्ञानसाक्षाद्विभाजकोपाधित्वञ्च ज्ञानत्वव्याप्याविभाजकोपाध्यव्याप्यत्वे सति ज्ञानविभाजकोपाधित्वं तादृशञ्च प्रमात्वाप्रमात्वे स्मृतित्वानुभूतित्वे च, न तु अनुमितित्वादिर्मानसत्वादिर्वा, अतो हेतौ नानुभवपदवैयर्थ्यं, स्मृतिसामग्र्या मानसेतर-ज्ञानसामग्रीत्वेन मानसप्रत्यक्षप्रतिबन्धकत्वेऽपि मानसत्वस्यैव तत्प्रतिबध्यतावच्छेदकतया तादृशविभाजकोपाधेस्तत्प्रतिबध्यतानवच्छेदकत्वादिति भावः । 'अप्रमावदिति, अप्रमाप्रतिबन्धकज्ञानस्य प्रमात्वनियमेन प्रमाप्रतिबन्धकदोषजन्यत्वादेव तत्र साध्य-सत्त्वादिति भावः । अप्रयोजकत्वं निरस्यति, 'दूरादिति, सन्निधौ चेति, तदज्ञानेन

**प्रमायामतिरिक्तगुणसिद्धिः। किञ्च प्रत्यक्षप्रमादौ अनुगतस्यार्थान्तरस्य गुणस्याभावः। इन्द्रियसन्निकर्षादीनाञ्चाननुगमः। न च जात्यैव गुणदोषौ, प्रमाजनकत्वं गुणत्वम्, भ्रमजनकत्वं च दोषत्वमतिप्रसक्तं तन्मात्र-जनकत्वञ्चासिद्धमिति।**

इति महामहोपाध्यायगङ्गेशविरचिते तत्त्वचिन्तामणौ प्रत्यक्षखण्डे
प्रामाण्यवादे उत्पत्तिवादपूर्वपक्षः समाप्त

### आलोकः

नन्वेवं अनुगतहेतुमात्रोच्छेद इत्यस्वरसादाह—किञ्चेति। यत्र तत्सम्भवस्तत्र त्यागायोगादस्तु तथा। न चेह तथा, अनुगतहेत्वभावादित्यर्थः।

न चेति। न हि गुणत्वदोषत्वजात्यवच्छेदेन तदुभयहेतुत्वम्, तदभावादित्यर्थः। तथा च गुणदोषशब्दावननुगसवचनतया नानार्थाविवेति भावः।

ननु कुतो नानार्थौ तादृशजात्यभावेऽपि प्रमाजनकत्वादीनामेवानुगतानां तन्निमित्तत्वसंभवादित्यत आह—प्रमेति।

### दर्पणः

प्रमाप्रमाजनकतावच्छेदकगुणत्वं दोषत्वनिरूपणप्रस्तावे प्रमाजनकत्वं गुणत्वमित्यादि-

### माथुरी

तद्भाववत्तया ज्ञानेन चेतिशेषः 'विरोधि' स्थाणुत्वाभावप्रमाविरोधि, 'पुरुषज्ञानजनकत्वं' स्थाणुत्वाधावप्रमाजनकत्वं, तथाचान्वय-व्यतिरेकसिद्धमेव प्रमाविशेषे तथात्वमिति भावः।

ननु तथापि साध्यविकलोदृष्टान्त इत्यत आह, 'अप्रमायामिति, 'लिङ्गादिभ्रमस्य चेति, स्वविरोधिप्रमाप्रतिबन्धकस्येति शेषः, 'तथात्वं' जनकत्वम्। 'प्रमाजनकव्यक्ति-विशेषस्येति प्रमोपधायकतत्तज्ज्ञानादिव्यक्तिविशेषस्येत्यर्थः, 'अप्रमाप्रतिबन्धकत्वं' अप्रमात्वावच्छिन्नप्रतिबन्कत्वं, 'प्रमाजनकत्वं' तत्तत्प्रमाव्यक्तित्वावच्छिन्नजनकत्वम्, 'अस्ति' अस्तु, 'सिद्धसाधनात्' प्रमात्वनिष्ठकार्य्यंतावच्छेदकत्वस्योद्देश्यस्य सिद्धया अर्थान्तरात्, उपसंहरति, 'इति नेति, 'अतिरिक्तगुणसिद्धिः' प्रमात्वावच्छिन्नकार्य्य-तानिरूपितकारणताकगुणसिद्धिः। ननु प्रमात्वावच्छिन्नस्य पक्षत्वात्तदवच्छेदेनैव साध्यसिद्धया तादृशगुणसिद्धिरित्यत आह, 'किञ्चेति, 'अर्थान्तरस्य' पदार्थान्तरस्य, 'गुणस्य' गुणपदवाच्यस्य, तथा च प्रमात्वावच्छेदेन साध्यसिद्धौ बाध इति भावः।

आलोकः

तन्मात्रेति । अन्ततः स्वध्वंसादिकं प्रत्यपि जनकत्वादिति भाव ।

इति महामहोपाध्यायजयदेवापरनामकपक्षधरमिश्रविरचिते प्रत्यक्षतत्त्वचिन्तामण्यालोके प्रामाण्यवादे उत्पत्तिवादपूर्वपक्षः समाप्तः

दर्पणः

ग्रन्थासङ्गतिमालोच्य तदुपपादनाय पूरयति—तथा चेति । वस्तुतः प्रमाजनकत्वमित्यादिमूले जनकत्वं पूर्ववर्त्तित्वं विवक्षितमिति सम्मुख एवार्थः ।

इति महामहोपाध्यायमिथिलाराज्यसमुपार्जकमहेशठक्कुरकृते प्रत्यक्षखण्डे उत्पत्तिवादपूर्वपक्षदर्पणः समाप्तः

माथुरी

ननु गुणत्वजात्यैव तेषामनुगमान्न बाध इत्यत आह, 'नचेति, 'गुण-दोषाविति, हेतू इति शेषः, ज्ञानत्वेन सह साङ्कर्य्यादिति भावः। दोषः दृष्टान्तत्वेनोपात्तः। ननु प्रमाजनकत्वादिना तदनुगम इत्यत आह, 'प्रमेति, 'अतिप्रसक्तं' कालात्मादावतिप्रसक्तम्, 'तन्मात्रजनकत्वं' तदन्यज्ञानाजनकत्वे सति तज्जनकत्वं, तच्छब्देन यथायथं प्रमाप्रमयोः परामर्शः 'असिद्धमिति, गुणत्वेनाभिमतस्य सल्लिङ्गपरमर्शादेरपि सन्निकर्षघटकतया विषयविधया च स्वविशेष्यकभ्रमजनकत्वात् दोषत्वेनाभिमतस्यापि पित्तादेः स्वविषयकप्रमाजनकत्वाद्धिति भावः ।

इति श्रीमथुरानाथतर्कवागीश-विरचिते तत्त्वचिन्तामणिरहस्ये प्रत्यक्षखण्डे प्रमाण्यवादरहस्ये उत्पत्तिवादपूर्व्वपक्षरहस्यम् ॥०॥

# अथ उत्पत्तिवादसिद्धान्तः

उच्यते—एवमप्रमापि स्वत एव स्यान्न तु परतः, प्रमावद-साधारणकारणादेव तदुत्पत्तौ दोषस्य तत्रसत्त्वात् । अथ ज्ञानसामग्री-सत्त्वेऽपि विशेषादर्शनादिपित्तादेरनुविधानादप्रमायां दोषो हेतुरिति चेत्तर्हि

**आलोकः**

प्रतिबन्दिमात्रस्यादोषत्वमिति मूलयुक्तिमाह— नियमश्चेति । न हेतुहेतुमद्भाव

**दर्पणः**

यद्यप्यथ यत्र गुणदोषौ विनेत्यादिग्रन्थपर्यालोचनयाऽप्रमायां दोषजन्यत्वा-भावान्न प्रतिबन्दिसम्भवस्तथापि तस्य तटस्थस्य शङ्कितुर्मते तथात्वेऽपि मीमांसकस्या-प्रमायां दोषजन्यत्वाभ्युपगमोऽस्त्येवेत्यभिप्रायेणाह मूले—एवमिति । यदि च मुख्य-पूर्वपक्ष्यभिप्रायेणैव स ग्रन्थो व्याख्यायते तदाऽन्वयव्यतिरेकाभ्यामप्रमायां पित्तादि-दोषजन्यत्वं प्रसाध्य प्रतिबन्दिरियमवतारणीया । तस्मिंश्च पक्षे पूर्वपक्षग्रन्थे दोष-जन्यतामादाय यदप्रमाया दृष्टान्तत्वं तदपि प्रसाध्याङ्गकमेवेति ध्येयम् । मूले—तर्हि विशेषदर्शनेति ।

**माथुरी**

'एवमप्रमापि स्वत एव स्यादिति प्रमात्ववदप्रमात्वमपि कार्य्यतानवच्छेदक-मेव स्यादिति भावः ।[1] एवकारार्थमेव विवृणोति, 'न त्विति न तु कार्य्यतावच्छेदक-मित्यर्थः, 'असाधारणकरणादेवेति प्रमानुपधायकासाधारणकारणताक्रान्ततत्तद्व्यक्तित एवेत्यर्थः, 'अहेतुत्वात्' अहेतुतायाः सुवचत्वात् । 'आगन्तुकेति भ्रमाजनकेत्यर्थः । नन्वेतावता प्रमाम्प्रति विशेषदर्शन-पित्ताद्यभावनां कारणत्वमस्तु प्रमात्वस्य कथं कार्य्यताच्छेदकत्वं तत्तद्व्यक्तित्वेनैव कार्य्य-कारणभावसम्भवादित्यत आह, 'अपि चेति, 'नियमश्चेति कार्य्य-कारणभावघटको नियमश्चेत्यर्थः, 'न व्यक्त्योरेव' न तत्तद्व्यक्त्योरपि न तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितानुयोगिताकोपीति यावत्, कार्य्य-कारणभावघटकनियमप्रतियोगितावच्छेदकं तदनुयोगितावच्छेदकं वा न तत्तद्व्यक्तित्वमपीति तु फलितार्थः । अवच्छेदकत्वञ्च स्वरूपसम्बन्धविशेषः, तद्रूपा-दिव्यक्तिप्रतियोगिकनियमानुयोगित्व-प्रतियोगित्वयोः तत्तद्व्यक्तित्वेनावच्छिन्नत्वा-द्युपगमाद्घटकान्तं नियमविशेषणं, कारणताघटकनियमातिरिक्तनियमप्रतियोगित्वानु-योगित्वयोः स्वरूपसम्बन्धविशेषात्मकावच्छेदकतानभ्युपगमे तु तन्नोपादेयं

१. स्यादित्यर्थ इति ख०, ग० च ।

विशेषदर्शनपित्ताद्यभावादितस्तत्रैव विषये प्रमा तदभावान्नेति प्रमाया-मागन्तुककारणापेक्षेति कथं न परतस्त्वम्। अपि च नियमगर्भः कार्य-

आलोकः

इति शेषः। यद्यवच्छेदकमन्तरेण[1] यतः कुतश्चिद्व्यक्तेस्तज्जातीयः तदा तत्तद्-व्यक्त्यभावेऽपि तज्जातीयसत्त्वाद्व्यभिचारः, यदि च या व्यक्तिर्यत्पूर्वनियता सा तद्व्यक्तिहेतुरिति तदाऽतिप्रसंगः, पूर्ववर्त्तिरासभव्यक्तेरपि वह्निव्यक्तिहेतुत्वापत्तेः। न च नियमसत्त्वेऽपि अन्यथासिद्धतया तस्य नायं दोष इति वाच्यम्, अन्यत्रैत्यन्यथा-

दर्पणः

ननु नैयायिकानां गुणेनान्यथासिद्धो दोषाभावो हेतुरिति चेत्—न। भूयोऽवय-वेन्द्रियसन्नकर्षे सत्यपि पित्तादिप्रयुक्तप्रमाव्यतिरेकदर्शनात् स्वतन्त्रान्वयव्यतिरेकाद्यनु-विधायी सोऽपि हेतुरिति भावात्। प्रतिबन्दिमात्रस्येति। यद्यप्यन्वयव्यतिरेकयोरुक्तत्वान्न प्रतिबन्दिमात्रमिदं तथाप्यसाधारणव्यक्तिमादायान्वयव्यतिरेकयोरन्यथासिद्धत्वादेवमुक्तम्।

नियमश्चेति मूलम्। अत्र ज्ञानत्वावच्छेदेन इन्द्रियसन्निकर्षादिव्यक्तिभेदस्य हेतुत्वं प्रमात्वावच्छेदेन वा तत्तत्प्रमात्वाच्छेदेन वा ? त्रिष्वपि कल्पेषु प्रत्येकं हेतुताऽनु-गतरूपेण वा ? तत्र प्रथमद्वितीययोर्न प्रत्येकं हेतुता, व्यभिचारात्। तृतीये नानुगत-रूपेण हेतुता, अन्वयव्यभिचारात्। द्वितीये यद्यनुगतेन तृतीये यदि प्रत्येकं हेतुत्वं तदा सिद्धो गुणः, प्रमात्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयस्यैव गुणत्वात्।

किञ्च प्रमात्वादिकमनुगतं हित्वा यां व्यक्तिं प्रति या व्यक्तिर्नियतपूर्ववर्त्तिनी

माथुरी

तत्तद्व्यक्तित्वं कुतो नावच्छेदकं तदाह, 'व्यभिचारादतिप्रसङ्गाच्चेति। यदि सामान्य-रूपेण प्रतियोगितानुयोगिता च तत्तद्व्यक्तित्वेन तदा व्यभिचारः तद्व्यक्तिमन्तरे-णापि सामान्यधर्म्मावच्छिन्नोत्पत्तेः। यदि च प्रतियोगित्वमनुयोगित्वञ्च द्वयमेव तत्तद्व्यक्तित्वेन, यदि वा प्रतियोगित्वं तद्व्यक्तित्वेन अनुयोगित्वञ्च सामान्यरूपेण तदा अप्रसङ्गः, आद्ये तद्घटव्यक्तित्वावच्छिन्नं प्रति तद्रासभव्यक्तित्वेनापि कारणत्वप्रसङ्गात्, अन्त्ये सामान्यधर्म्मावच्छिन्नव्यक्त्यन्तरोत्पत्तिसमयेऽपि तद्व्यक्ते-रुत्पादप्रसङ्गादित्यर्थः। 'इतीति अत इत्यर्थः, 'नियमनिरूपकं' नियतत्वावच्छेदकं कार्य्यतावच्छेदकमिति यावत्, 'अनुगुणं' अनुगुणत्वावच्छेदकं कारणतावच्छेदकमिति यावत्, 'आस्थेयं' प्रकृत आस्थेयं,[2] तच्च परिशेषात् प्रमात्वमेवेति भावः।

---

१. एवं प्रमा अप्रमाकारणविजातीयकारणजन्या इति ग०।

२. 'उपस्थेयं' प्रकृते उपस्थेय इति क० पुस्तकपठित कस्यचित् मूलपुस्तकस्य तादृशः पाठोऽनुमीयत इति।

कारणभावः । नियमश्च न व्यक्त्योरेव व्यभिचारादतिप्रसङ्गाच्चेति नियमनिरूपकमनुगुणमनुगतमास्थेयम् । एवञ्चाप्रमायामिव प्रमायामपि तद्व्यावृत्तं कारणमनुगतमास्थेयम् ।

किञ्च यत्कार्यं यत्कार्यविजातीयं तत्तत्कारणविजातीयकारणजन्यम्, यथा घटविजातीयः पटः, अन्यथा कार्यवैजात्यस्याकस्मिकतापत्तेः । घट-

आलोकः

सिद्ध्यतिरिक्तान्यथासिद्धावनन्तर्भावात् तस्यां चान्तर्भावस्तदा यदि तज्जातीयं प्रति नियमः, न हि तत्र व्यक्तिं प्रत्यन्यत्र पूर्ववर्त्ती क्लृप्तः । तज्जातीयनियमे च तद्व्यक्तेर्व्यभिचार एव । तथा चाननुगते कार्ये भवतु अननुगतो हेतुः दोषाभावात् न त्वनुगते कार्येऽननुगतहेतुता, ग्राह्यग्राहकयोरुभयोरप्यभावादित्यभिसन्धायाह— व्यभिचारादतिप्रसङ्गाच्चेत्यादि ।

ननु व्यक्त्योरेव नियमः कार्यकारणभावः । न हि घटोत्तरवर्त्तिदण्डव्यक्तेरपि

दर्पणः

सा तत्र कारणमिति तृतीयपक्षाश्रयणे रासभादेर्घटविशेषहेतुतापत्त्याऽतिप्रसङ्गः । तत्र ह्यन्यत्रेत्याद्यन्यथासिद्धिर्बाधिका । न च सर्वत्राननुगतकार्यपक्षे तत्सम्भव इति निर्गलितार्थः ।

निमश्च न व्यक्त्योरित्ययुक्तम्, रूपरसव्यक्त्योस्तद्दर्शनादित्यत आह—हेत्विति । प्रत्येकं हेतुता अनुगतेन कार्यतेति निराकरोति—यदीति । इदमुपलक्षणम् । अनुगतेन रूपेण व्यक्तिविशेषं प्रति हेतुत्वेऽन्वयव्यभिचारः, अनुगतेन रूपेण प्रमात्वावच्छिन्नं प्रति प्रत्येकरूपेण तत्तत्प्रमां प्रति हेतुत्वे समीहितसिद्धिरित्यपि द्रष्टव्यम् ।

चरमपक्षे देषान्तरमाह—यदि चेति ।

ननु 'सति सम्भवे त्यागायोगादि'ति न्यायेन घटत्वाद्यवच्छिन्नं प्रति दण्डादे-र्हेतुत्वम् । तथा चान्यत्र क्लृप्तदण्डादित एव कार्यसम्भवे रासभोऽन्यथासिद्ध इत्या-शङ्क्याह—तज्जातीयेति । तर्हि प्रकृतेऽपि प्रमाजातीयकार्यसम्भवात्तत्रैव हेतुता, सा

माथुरी

उपसंहरति, 'एवञ्चेति, 'प्रमायामपि' प्रमात्वावच्छिन्नेपि ।

ननु विशेषदर्शनाद्यभावे प्रमा नेत्युक्तमयुक्तं विशेषदर्शनस्य विपरीतज्ञानोत्तर-प्रत्यक्षमात्रे हेतुतया तेन विनापि प्रमोत्पत्तेः, तदुत्तरप्रमायाञ्च तत्प्रमाकारणान्तरा-दन्यथासिद्धिः, एवं पित्ताद्यभावोपि न प्रमा हेतुः शङ्खे श्वैत्यप्रत्यक्षत्वावच्छिन्नं प्रत्येव तस्य हेतुत्वात् पित्तादिसत्त्वेपि शङ्खे श्वैत्यानुमित्युदयात् घटादौ श्वैत्यादिप्रत्यक्ष-प्रमोत्पादाच्च प्रतिबन्धिस्त्वनुत्तरमित्यरुचेराह, किञ्चेति, 'यत्कार्य्यविजातीयं' यत्कार्य्या-पेक्षया वैधर्म्यवत्, 'तत्कारणविजातीयेति तद्वृत्तिकार्य्यताप्रतियोगिककारणतान्य-कारणताप्रतियोगिककार्य्यताश्रय इत्यर्थः । यद्वा तद्वृत्तिधर्म्मानवच्छिन्नकार्य्यताश्रय

ज्ञानजातीयमपि कार्यं तद्विजातीयकार्यंकारणविजातीयघटेन्द्रियसन्निकर्षादिजन्यमिति न व्यभिचारः। एवञ्चानित्यप्रमा अप्रमाकारणविजातीयकारणजन्या[1], अप्रमाविजातीयकार्यत्वात्, घटवत्। एवञ्चानुगतस्य

आलोकः

तद्घटहेतुता। तथा च यथा सामान्यतोगृहीतनियमस्तत्तद्व्यक्तयोरेव दण्डघटादिस्थले कार्यकारणभावस्तथा सामान्यतो ज्ञानं तत्तत्कारणयोर्ऽनियमग्रहे तत्तद्व्यक्तेस्तत्तत्प्रमाव्यक्तिं प्रति जनकत्वमस्तु। प्रमात्वं तु तत्र घटादावनुगतसंस्थानवत्त्ववद्वेदित्यपि वक्तुमापाततः शक्यत एवेत्यरुचेराह—किञ्चेति। तादृशसंस्थानवत्त्वमपि यद्यनुगतं तर्हि कुम्भकारविशेषनिबन्धनमेव, अन्यथाऽनुगतमेवेति, सामान्यतो नियमग्रहे अनुगते विशेषावच्छेदके तदवच्छिन्ने विशेषसामग्र्यपि कल्प्यत एवेति भावः।

दर्पणः

च न प्रत्येकं व्यभिचारादित्यर्थः। इदमेवोपसंहरति—तथा चेति। प्रकरणार्थे मूलमवतारयति—इत्यभिसन्धायेति। प्रथमपक्षेऽनुगतेन रूपेण हेतुतेत्यंशमादाय शङ्कते—ननु व्यक्तयोरिति। स्वरूपयोग्यता सामान्ययोः फलोपधानात्मिका कारणता विशेषयोरित्यर्थः।

ननु कार्यगतप्रमात्वस्य कार्यतानवच्छेदकत्वे तदाकस्मिकं स्यादित्यत आह—प्रमात्वं त्विति आपातत इत्यनेन युक्त्यसहत्वमुक्तम्। तदेव विवृणोति—तादृशेति। ननु बाधकाभावपदेन सकलबाधकाभावो वा यत्किञ्चिद्बाधकाभावो वाऽभिमतः? आद्ये विशेष्यवैयर्थ्यम्। अकार्यवृत्तित्वस्यापि बाधकत्वात्। अन्त्ये नीलघटत्वादौ व्यभिचारः। अकार्यवृत्तित्वरूपकिञ्चिद्बाधकाभावस्य तत्रापि सत्त्वादित्यत आह—

माथुरी

इत्यर्थः, यमजयोरपि अदृष्टविशेषः प्रयोजक इति भावः। 'आकस्मिकतेति निर्निमित्तिकतेत्यर्थः। ननु घटप्रत्यक्षादौ व्यभिचारः तद्धि पटप्रत्यक्षादिविजातीयं न तत्कारणविजातीयकारणजन्यं इन्द्रियसन्निकर्षादीनां पटप्रत्यक्षेऽपि कारणत्वादित्यत आह, 'घटज्ञानेति 'घटज्ञानजातीयं' घटप्रत्यक्षादि, 'तद्विजातीयं कार्य्यं' घटज्ञानविजातीयं कार्य्यं पटप्रत्यक्षादि, 'एवं' एवंरूपेण यत्तद्भ्यां सामान्यतो व्याप्तौ, 'अप्रमाकारणेति अप्रमावृत्तिकार्य्यताप्रतियोगिककारणतान्यकारणताप्रतियोगिककार्य्यताश्रय इत्यर्थः यद्वा तद्वृत्तिधर्मानवच्छिन्नकार्य्यताश्रय इत्यर्थः। ननु अनेन तत्तत्प्रमां प्रति तत्तत्पित्ताद्यभावानां कारणत्वं सिद्ध्यतु न तु प्रमात्वस्य कार्य्यतावच्छेदकत्वं सिद्धं, किञ्च प्रमामात्रं जनयति यत्सन्निकर्षव्यक्त्यादि तज्जन्यत्वेन सिद्धसाधनञ्च। मैवं प्रमात्वावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् प्रमात्वे तादृशजन्यतारूपसाध्यस्य स्वरूप-

१. एवं प्रमा अप्रमाकारणविजातीयकारणजन्या इति पाठान्तरम्।

प्रमाहेतुत्वे प्रमा स्वविरोध्यनुभवप्रतिबन्धकजातीयजन्या, जन्यानुभवत्वात्, अप्रमावदित्यादावपि न सिद्धसाधनम् । अपि चानित्यप्रमात्वं कार्यतावच्छेदकम् बाधकं विना कार्यमात्रवृत्तिधर्मत्वात्, अप्रमात्ववत् । नीलघटत्वं तु विशिष्टं न कार्यतावच्छेदकम्, प्रत्येकानुगतप्रयोजकद्वयादेव विशिष्टसिद्धिरार्थः समाजः । घटज्ञानत्वादौ तु बाधकम् ।

आलोकः

ननु बाधकाभावे सत्येव धर्मस्यावच्छेदकत्वम्, तच्चाननुगतादौ यथाऽननुगतत्वं तथोपाधित्वमत्रापीत्याशङ्क्याह—अपि चेति । अवच्छेदकान्तरोपपन्नकार्यत्वाधिकरणत्वस्वावच्छिन्नकार्यत्वप्रतियोगिककारणासम्भवैकव्यक्तिकत्वरूपबाधकाभावे सति कार्यमात्रवृत्तित्वं कार्यतावच्छेदकत्वे प्रयोजकम् । एवं सति बाधकपदस्य

दर्पणः

अवच्छेदकान्तरेति । अवच्छेदकान्तरोपपन्नकार्यत्वाधिकरणवृत्तित्वं नीलघटत्वे बाधकम् । स्वावच्छिन्नकार्यतानिरूपितैककारणासम्भवोऽनित्यघटज्ञानत्वे बाधकः । एकव्यक्तिकत्वमेतद्घटत्वादौ बाधकम् । एतत्त्रयाभावमात्रकं विवक्षितम्, न त्वकार्यवृत्तित्वरूपबाधकस्याप्यभावो विवक्षितो येन विशेष्यपदवैयर्थ्यं स्यादिति भावः ।

माथुरी

सम्बन्धरूपावच्छेदकत्वसिद्धेः, एवञ्च तादृशो सिद्धिरपि न प्रतिबन्धिका पक्षतावच्छेदकावच्छेदेन साध्यानुमितिं प्रति तादृशसिद्धेरेव प्रतिबन्धकत्वादिति भावः।

पूर्वोक्तार्थान्तरदोषमुद्धरति, 'एवञ्चेति, 'प्रमाहेतुत्वे' प्रमात्वावच्छिन्नं प्रति हेतुत्वे, आवश्यक इति शेषः । 'न सिद्धसाधनमिति न प्रमात्वनिष्ठकार्य्यतावच्छेदकत्वस्योद्देश्यस्यासिद्धया अर्थान्तरमित्यर्थः, प्रमात्वविशिष्टस्य पक्षतया तदवच्छेदेनैव तादृशजन्यतासिद्धया उद्देश्यसिद्धेः तादृशसिद्धौ अनुगतकारणासम्भवस्यैव पूर्वं बाधकत्वेनाभिधानादिति भावः । 'अनित्यप्रमात्वमिति बिषयभेदेनानित्यप्रमात्वस्यैकस्याभावात् अनित्यत्वविशिष्टघटत्ववति घटत्वप्रकारकत्वादीत्यर्थः, एवं सर्वत्र, 'कार्य्यतावच्छेदकमिति, पक्षधर्मताबलाद् गुणजन्यतावच्छेदकत्वसिद्धिरिति भावः। हेतौ नीलघटत्ववारणाय 'बाधकं विनेति, 'कार्य्यमात्रेति । न च मेयत्वादौ अकार्य्यवृत्तित्वरूप-बाधकसत्त्वेन व्यभिचाराभावात् किं मात्रपदेनेति वाच्यम् । 'बाधकं विनेत्यत्र अकार्य्यवृत्तित्वरूपबाधकाप्रवेशात् मेयत्वे व्यभिचारवारणाय तदुपादानात् । 'कार्य्यमात्रवृतिधर्मत्वञ्च' कार्य्यान्यावृत्तिधर्मत्वं, येन सम्बन्धेन कार्य्यतावच्छेदकत्वं तेन कार्य्यान्यावृत्तित्वं वाच्यं तेन महाकालादिवृत्तितया

अस्तु वा तत्राप्यनुगतभोजकादृष्टहेतुकत्वम्, अन्यथा कार्यमात्रे नादृष्टं हेतुः स्यात् एवमनित्यप्रमात्वं अनित्यज्ञानत्वावच्छिन्नकार्यत्व-

आलोक:

संकोचवृत्तित्वेनाकार्यवृत्तित्वरूपबाधकासंग्रहेण तद्रूपमात्राबाधकवति ज्ञानत्वादौ व्यभिचारवारणाय कार्यमात्रवृत्तित्वं[1] न तूपाधित्वमपि तद्बाधकमभावस्याजन्यतापत्तेरित्यभिसन्धाय हेतुमाह— बाधकमिति।

दर्पण:

ननु स्वावच्छिन्नेत्यादिनैवाकार्यवृत्तेरपि वारणं (तथा सति विशेष्यं व्यर्थम्)[2] इति चेत्—न, स्वावच्छिन्नयावत्कार्यनियतपूर्ववर्त्यसम्भवस्य विवक्षितत्वात्। अस्ति च ज्ञानत्वावच्छिन्ना यावत्यः कार्यव्यक्तयस्तन्नियतपूर्ववर्त्यात्ममनोयोगादिरिति।

नन्वेकव्यक्तिकत्वं न बाधकम्। एतद्घटप्रागभावादीनामेतद्घटत्वाद्यवच्छेदेन जनकत्वादिति चेत्—न। लघुयद्धर्मावच्छिन्नं प्रति अनन्यथासिद्धनियतपूर्ववर्तिसम्भवः स धर्मः कार्यतावच्छेदकः, तत्र तद्धर्मावच्छिन्नयावत्कार्याणां यद्यनुगतं पूर्ववर्त्ति नास्ति यदि वा स धर्म एवाकार्यवृत्तिरुभयथाऽपि नियतत्वांशबाध इति प्रथमवारणाय स्वावच्छिन्नेत्यादि। द्वितीयवारणायं कार्येत्यादि। अवश्यकल्प्यपूर्ववर्त्तित एव कार्यसम्भव इत्यादिरूपान्यथासिद्धिर्द्वेधा पर्यवस्यति—अवच्छेदकं[3] धर्मिणञ्चादाय।

माथुरी

नासिद्धिः! 'प्रत्येकेति नीलसामग्र्या नीलं, घटसामग्र्या च घटस्तयोः समाजादर्थवशसम्पन्नं विशिष्टं न तु विशिष्टनिर्वाहाय नीलकपालत्वादिना तद्विशिष्टं प्रति हेतुत्वम्। अतएव नीलसामग्र्यभावादेव नीलाभावसम्भवेन नीलेतरघटत्वादिकमप्यर्थसमाजसिद्धमिति भावः। अत्रेदं चिन्त्यं प्रमात्वमपि अर्थसमाग्रस्तं तथा हि प्रमात्वं तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वं तथा च तत्प्रकारकज्ञानसामग्रीसत्त्वात् तत्प्रकारकत्वं, तद्वदिन्द्रियसन्निकर्षादेस्तद्वति असंसर्गाग्रहादेश्च सत्त्वात् तद्विशेष्यकत्वावच्छिन्नत्वमिति। अनित्यघटज्ञानत्वादौ व्यभिचारमुद्धरति, 'घटेति अनित्यघटज्ञानत्वादावित्यर्थः, 'बाधकमिति, अस्तीतिशेषः, असम्भवं कारणतावच्छेदकत्वमेव बाधकमिति भावः। 'तत्रापि' घटज्ञानत्वादावपि, 'अनुगतभोजकादृष्टजन्यतावच्छेदकत्वं, प्रकृते च तादृशादृष्टविशेषसिद्ध्यापि गुणजन्यत्वसिद्धिरप्रत्यूहैवेति भावः। 'अन्यथेति, घटज्ञानं प्रति भोजकादृष्टस्याकारणत्वे इत्यर्थः। इदमा-

---

१. एवमित्यारभ्य वृत्तित्वमितिपर्यन्तो ग्रन्थः आदर्शतालपुस्तके 'न' पुस्तके च नास्ति। २. कंसगतो ग्रन्थो गपुस्तके नास्ति।

३. अवच्छेदिनमिति गपुस्तके।

**प्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकम्, अनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वात्, अप्रमात्ववत्, इत्यनित्यप्रमायाम-**

आलोकः

अस्तु वेति। न चेहापि तादृशानुगतादृष्टहेतुकत्वेनैव साध्यसिद्धेरर्थान्तरमिति वाच्यम्, दृष्टेनैवोपपत्तौ अदृष्टकल्पनानवकाशात्, तादृशादृष्टस्यापि गुणत्वाच्चेति भावः। अत्र यद्यपि यथाश्रुतं साध्यं बाधितमनित्यप्रमामात्रानुगतहेत्वसिद्धेः, अत एव स्वरूपासिद्धिरपि, तथाऽप्यनित्यप्रमात्वपदेनानित्यसाक्षात्कारिप्रमात्वादिकमेव विवक्षितम्।

दर्पणः

तत्र प्रथमा यथा दण्डत्वेन घटं प्रति हेतुतायां क्लृप्तायां एतद्घटं प्रति एतद्दण्डत्वेनान्यथासिद्धिः। यथा वा कपालत्वेन घटं प्रति हेतुतायां नीलकपालत्वेन नीलघटं प्रति अन्यथासिद्धिः। द्वितीया यथा दण्डादिना एतद्घटस्यात्युपपत्तौ रासभ एतद्घटं प्रत्यन्यथासिद्धिः। तत्र आद्याया वारकं—अवच्छेदकान्तरेति। स्वावच्छिन्नकार्यतावच्छेदकान्तरावच्छिन्नकारणताकादेव यस्मात्तन्निष्ठधर्म्मान्तरं कारणतावच्छेदकीकृत्य तन्न कार्यतावच्छेदकमित्यर्थः। एतावता द्वितीया न वारितेति तद्वारणाय एकव्यक्तिकत्वम्। एकमसाधारणं कारणान्तरोपपन्नमिति यावत्तद्व्यक्तिकत्वमित्यर्थः। इदमुपलक्षणम्। अन्यथासिद्धिचतुष्टयान्यतरनियतपूर्ववर्त्तिव्यक्तिकत्वं गुरुत्वं बाधकतया द्रष्टव्यमिति संक्षेपः।

नन्वात्रापि विशेष्यसन्निकर्षादित एव प्रमालक्षणकार्योपपत्तिरिति चेत्—न, विशेष्यसन्निकर्षसमानेऽपि किञ्चिज्ज्ञानं घटविशेष्यकं किञ्चिद्घटत्वाभाववद्विशेष्यकमिति वैलक्षण्यस्य गुणकारणतां विनाऽनुपपत्तेः। यद्वक्ष्यति—अन्यथा नियामकं

माथुरी

पाततः अदृष्टत्वेन हेतुत्वेपि विशेषरूपेण हेतुत्वे मानाभावादिति भाव्यम्। पूर्वानुमाने अत्म-मनोयोगादिजन्यतावच्छेदकत्वं बाधान्न सिद्धं पक्षधर्मताबलात् कारणविशेषजन्यतावच्छेदकत्वमेव सिद्धमिदानीं साक्षादेव तत्साधयति, 'एवमिति, यद्यपि अनेनापि साक्षात्कारणविशेषजन्यतावच्छेदकत्वं न सिद्ध्यति तादृशकारणताभिन्ना कारणता अनित्यप्रमात्वावच्छिन्नस्य अत्म-मनोयोगवृतिकारणता तत्प्रतियोगिककार्य्यतावच्छेदकत्वसम्भवात् तथापि 'कारणताभिन्नेत्यस्य कारणतावद्भिन्नवृत्तीत्यर्थः। न च चक्षुरादिनिष्ठकारणताप्रतियोगिककार्य्यतावच्छेदकत्वेनार्थान्तरं बाधात्। न चैवं प्रतियोग्यन्तमपि हीयतां बाधादेव नार्थान्तरत्वमिति वाच्यम्। तथैवोद्देश्यत्वात्। 'अनित्यज्ञानत्वव्याप्येति, अनित्यज्ञानत्वे व्यभिचारवारणाय व्याप्यान्तं, 'व्याप्यान्तं, 'व्याप्यत्वं' न्यूनवृत्तित्वं तत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वमिति यावत्, यथाश्रुते अनित्यज्ञानत्वे व्यभिचारतादवस्थ्यात्।

प्रमाव्यावृत्तानुगतहेतुसिद्धिः, अन्यथानुगतकार्य्यानुपपत्तेः। तथा अनित्य-प्रमात्वसप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यता-

आलोकः

कार्यतावच्छेदकव्यापकत्वं साध्यं तादृशकार्यमात्रवृत्तिधर्मव्यापकत्वादिति हेतुरित्रि वा स्मर्त्तव्यम्।

वस्तुतस्तु सकलकार्यप्रमासाधारणमीश्वरीयसाध्यज्ञानमेव गुण इत्यग्रे वक्ष्यामः। तथा च यथाश्रुतमेव सम्यगिति सारम्।

दर्पणः

विनेत्यादि। न च घटत्ववद्विशेष्यहेतुतयैव तदुपपत्तिः। तर्हि तस्यैव गुणत्वादिति सिद्धं नः समीहितमिति संक्षेपः।

अस्तु वेति मूलमभ्युपगमवादेन। नहि घटज्ञानात् सर्वत्र समानो भोगो येन समानजातीयमदृष्टं सर्वत्र हेतुः स्यादिति भावः। अत एवेति। स्वावच्छिन्नयावत्-कार्येष्वनुगतपूर्ववर्त्त्यभावरूपबाधकसत्त्वादेवेत्यर्थः।

अनित्यसाक्षात्कारीति। यावद्सुघटोऽनुगतो गुणो निर्वहति तदेवात्र विवक्षितम्। तच्चाग्रे विवेचनीयमेवेति भावः। कार्यतेति। समानाधिकरणत्वमात्रे साध्ये न गुण-सिद्धिरिन्द्रियजन्यतावच्छेदकानित्यसाक्षात्कारत्वादिसामानाधिकरण्यमादायोपपत्तेरिति व्यापकत्वपर्यन्तमुक्तम्। इति सारमिति।

अत्र वदन्ति। यथार्थत्वं नैकम्। तद्वति तत्प्रकारकत्वमित्यत्र तत्पदार्थस्य घटत्वपटत्वादेरननुगतत्वात्।

माथुरी

'अनित्यज्ञानत्वव्याप्यत्वम्' अनित्यज्ञानत्वान्यत्वम् इति केचित्। अनित्यघटज्ञानत्वादौ व्यभिचारवारणाय 'कार्य्यतावच्छेदकेति, 'अन्यथा' अनुगतकारणं विना पूर्वानुमाने दोषजन्यतावच्छेदकत्वं बाधान्न सिद्धमिदानीं साक्षादेव साधयति, 'अनित्येति अनित्यत्वविशिष्टघटत्ववति घटत्वप्रकारकत्वादीत्यर्थः, 'अप्रमाकारणतेति अप्रमात्वा-वच्छिन्नकार्य्यताप्रतियोगिककारणतेत्यर्थः, तेन गुणनिष्ठकारणतायामपि प्रमाप्रमा-समूहालम्बनमादाय न तादृशकारणतावच्छेदकावच्छिन्नत्वम्, अप्रमापदेन एकमात्र-विशेस्यकघटत्वाभाववति घटत्वप्रकारकज्ञानं वा विवक्षितं तथा च यथाश्रुतमेव साधु एवमग्रेति बोध्यम् भ्रमत्वे व्यभिचारवारणाय हेतो 'भ्रमावृत्तीति भ्रमावृत्तित्वं घटत्वांशे या प्रमा तद्भिन्नज्ञानावृत्तित्वं भ्रमत्वान्यत्वं वा, तेन न प्रमात्वस्यापि भ्रमवृत्तितया स्वरूपासिद्धिः। 'चाक्षुषप्रमेति घटत्ववति घटत्वप्रकारकचाक्षुषत्वेत्यर्थः।

ननु यदि प्रमासामान्ये अनुगतो हेतुः सिद्धस्तदा चाक्षुषसामग्रीप्रमासामग्रीभ्यां

वच्छेदकम्, भ्रमावृत्तिकार्यतावच्छेदकत्वात्, घटत्ववत्। चाक्षुषप्रमात्वं चाक्षुषाप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यता-

आलोकः

अनित्येति। अनित्यज्ञानत्वे व्यभिचारवारणाय व्याप्यान्तम्। तत्तज्ज्ञानत्वे तद्वारणाय कार्यतेत्यादिद्वयमप्युपात्तम्।

दर्पणः

किञ्च यत्र यद्ग्राह्यं तत्र तद्यथार्थज्ञानं गुण इति वाच्यम्। तथा चाननुगम एव। अत एव विशेष्यवृत्तिविशेषणज्ञानं सर्वत्रानुगतमिति केषाञ्चिन्मतमपास्तम्। येन सम्बन्धेन यो विशेष्यवृत्तिरित्यादेर्लोहितः स्फटिक इत्यादिप्रमात्वानुरोधेनावश्यवाच्यतयाऽननुगमात्।

अदृष्टमेवानुगतमित्यप्ययुक्तम्। सर्वत्र समानजातीयभोगाभावेन समानजातीयादृष्टे मानाभावात्।

किञ्च यद्यनित्यप्रमात्वमेकं भवेत्तदाऽवच्छेदकं स्यात्। तदेव यत्तत्पदार्थाननुगमेनाननुगतमिति। तस्मादाद्यपक्ष एव सम्यगिति।

अत्रोच्यते—स्वविशेष्यावृत्तिप्रकारकत्वस्वरूपाणां भ्रमत्वानामभावसमुदाय एव प्रमात्वमिति न कार्यतावच्छेदकाननुगमः। स्वप्रकारकयद्विशिष्टप्रत्ययविशेष्ये तद्विषयसम्बन्धेन यन्नास्ति तत्प्रत्ययजनकानां तादृशविशेषणज्ञानानां भेटकूटो यत्रास्ति तादृशविशेषणज्ञानं तादृशविशेषणज्ञानविषयतापन्नविशेषणवज्ज्ञानं वा गुणत्वेन विवक्षित-

माथुरी

चाक्षुषप्रमासिद्धौ नीलघटत्ववच्चाक्षुषप्रमात्वस्यापि न कार्य्यतावच्छेदकत्वम् अतो बाधः स्वरूपासिद्धिश्च। मैवं, प्रमामात्रे साक्षात्कारिप्रमायां वा यदि सामान्येनानुगतो गुणोऽस्तीत्युच्यते परैस्तदर्थमनुमानाङ्गीकारात्। अनतिरिक्तवृत्तित्वमत्रावच्छेदकत्वं केचित्। 'चाक्षुषभ्रमेति, चाक्षुषभ्रमत्वे व्यभिचारवारणाय वृत्त्यन्तं घटत्वप्रमाभिन्नचाक्षुषावृत्तित्वं तदर्थः, तेन न स्वरूपासिद्धिः, दृष्टान्तासिद्धिवारणाय चाक्षुषत्वमखण्डाभावघटकम्। न च तद्वारणाय ज्ञानत्वेनैव प्रवेशोऽस्त्विति वाच्यम्। ज्ञानत्व-चाक्षुषत्वयोस्तुल्यशरीरत्वात्।[1] गगनादौ व्यभिचारवारणाय 'कार्य्यतावच्छेदकेति। इदानीं रजताभेदप्रमात्वस्य विशेषकारणजन्यतावच्छेदकत्वं साधयति, 'अनित्येति, 'रजतभ्रमावृत्तीति पूर्व्ववत् रजतांशे प्रामाण्यज्ञानान्यज्ञानावृत्तीत्यर्थः, 'रजतवृत्तिप्रकारकं' रजतविशेष्यकत्वावच्छिन्नरजतत्वप्रकारिताकं, 'रजतावृत्तिप्रकारकं' रजतत्वाभाववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारिताकं, तादृशप्रामाण्यस्यैव पक्षत्वेन तथैव वक्तुमुचितत्वादितिध्येयम्।

१. ज्ञानत्व-चाक्षुषत्वयोर्द्वयोरेव जातित्वादिति भावः।

वच्छेदकम्, चाक्षुषभ्रमावृत्तिकार्यतावच्छेदकत्वात्, घटत्वत्। अनित्यरजत-प्रमात्वं रजताप्रमाकारणतावच्छेदकरूपानवच्छिन्नकारणताप्रतियोगिक-कार्यतावच्छेदकम्, रजतभ्रमावृत्तिकार्यतावच्छेदकत्वात्, घटत्ववत्, अन्यथा नियामकं विना चाक्षुषादिरजतज्ञानं किञ्चिद्रजतवृत्तिप्रकारकं किञ्चिद्रजतावृत्तिप्रकारकमिति नियमो न स्यात्, ज्ञानसामग्र्यास्तुल्यत्वात्।

दर्पणः

मिति न कारणतावच्छेदकाननुगमः। ईश्वरपर्यन्तधावनं तु अभावस्य पूर्वाज्ञातस्य प्रमानुरोधेनेति दिक्।

यद्वा विशेषणज्ञानं गुणः सर्वेषां ज्ञानानां प्रमात्वात्। धर्मिणि सर्वमिति न्यायात्। निर्विकल्पकवारणाय विशेषणपर्यन्तधावनम्। ईश्वरपर्यन्तधावनन्तु भावप्रमानुरोधेनेति। यद्वा अनित्यघटप्रमात्वाद्यवच्छेदेन यथार्थघटत्वज्ञानादिकं गुणः। न चान्वय-व्यभिचारो दोषाभावरूपसहकारिविरहेण प्रयुक्तस्य तस्यादोषत्वादित्यत्र तात्पर्यम्।

केचित्तु अनित्यप्रमात्वं स्वाधिकरणमात्रवृत्तिधर्मावच्छिन्नकार्यताश्रयमात्रवृत्ति स्वाधिकरणमात्रावृत्तिधर्मावच्छिन्नकार्यताप्रतियोगिककारणताश्रयमात्रानुत्पाद्यकार्यमात्रवृत्तिधर्मत्वादप्रमात्ववत्। अत्र साध्ये द्वितीयमात्रपदं सर्वास्वनित्यप्रमासु गुणजन्यत्व-सिद्धये, आद्यमात्रपदं नीलघटत्ववारणाय, द्वितीयं स्वरूपासिद्धिवारणाय, तृतीयं ज्ञानत्वादिवारणायेत्याहुः।

माथुरी

प्राथमिकानुमाने कश्चिदुपाधिमाह तन्मतमुत्थापयति, 'यत्त्विति, 'प्रमाया असाधारणकारणजन्यत्वे' प्रमाया अप्रमाकारणविजातीयकारणजन्यत्वे, 'साध्ये', 'न च पक्षेतरत्वमिति, अतो नोपाधिरिति शेषः। पक्षेतरत्वस्यानुपाधित्वे वीजद्वयं विपक्षाव्यावर्त्तकत्वविशेषणवत्त्वं व्यतिरेकेऽसाधारणत्वञ्च तत्राद्यमत्र नास्तीत्याह, 'तवेति, प्रमान्यत्वोपाधौ प्रमाविशेषस्य भवन्मते ईश्वरज्ञानरूपविपक्षस्य व्यावर्त्तकत्वात् ईश्वरानङ्गीकर्त्रंस्मन्मते तव पक्षस्य प्रमाया एव विपक्षत्वेन तद्व्या-वर्त्तकत्वादित्यर्थः। ननु उभयमतसिद्धविपक्षस्य व्यावर्त्तकत्वमुपाधित्वे तन्त्रं तच्चात्र नास्तीत्यतआह, 'उभयसिद्धेति उभयसिद्धं विपक्षव्यावर्त्तकत्वं तन्त्रं तच्चात्रास्त्यव न तूभयसिद्धो यो विपक्षस्तद्व्यावर्त्तकत्वं तन्त्रमित्यर्थः, 'गौरवादिति यत्र व्यावर्त्तकत्वं नोभयमतसिद्धं विपक्षस्तु उभयमतसिद्धः तत्र त्वन्मतस्यापि नोपाधिरतोऽवश्यं व्यावर्त्त-कत्वे उभयमतसिद्धत्वं वाच्यम्। तथा चोभयत्र तत्प्रवेशे गौरवमित्यर्थः, नान्त्यमप्य-त्रास्तीत्याह, 'व्यतिरेक इति, 'तच्च' तदपि, 'भगवज्ज्ञानस्येत्यस्य त्वन्मते इत्यादिः, 'त्वन्मतस्येत्यस्य मन्मते इत्यादिः, 'त्वन्मतस्य' भवता पक्षत्वेनाभिमतस्येति यावत्, 'सपक्षत्वात्' व्यतिरेके साध्ये सपक्षत्वात्। ननूक्तानुमानेषु दोषाभावजन्यतावच्छेद-

यत्तु[१] प्रमाया असाधारणकारणजन्यत्वे साध्ये प्रमान्यत्वमुपाधिः, न च पक्षेतरत्वम्, ईश्वरज्ञानस्य प्रमात्वात्पक्षस्य व्यावर्त्यत्वात् । उभयसिद्धव्यावर्त्तकत्वं तन्त्रम्, न तु व्यावर्त्यस्य उभयसिद्धिः, गौरवात् । व्यतिरेकेऽसाधारणत्वञ्च पक्षेतरत्वस्यानुपाधित्वे बीजम्, तच्चात्र नास्ति,

आलोकः

तवेति । न चास्मन्मते पक्षेतरत्वमस्तु तत्र बाधोन्नीतत्वात् । उभयसिद्धं दूषणत्वं न तु दूषणतया उभयसिद्धिरिति भावः ।

दर्पणः

अनित्वप्रमात्वमिति मूलम् । अनित्यतत्तत्प्रमात्वमित्यर्थः । व्याप्यान्तमिति व्याप्यपदञ्चात्र भेदपरमिति ध्येयम् । एतानि च मूलेऽनुमानानि प्रकारार्थमिति द्रष्टव्यम् । दृष्टान्ते चाप्रमात्वपदं तत्तदप्रमात्वपरम् ।

यद्वा यथाश्रुतावेव पक्षदृष्टान्तौ । कार्यतावच्छेदकपदञ्च साध्यहेत्वोः कार्यतावच्छेदकव्यापकपरमिति । चाक्षुषभ्रमावृत्तीति मूले चाक्षुषपदं विशिष्टाभावप्रतियोगिविशेषणतया न व्यर्थम् । एवं रजतपदमपि ।

चाक्षुषप्रमात्वस्य नीलघटत्वतुल्यत्वादवच्छेदकत्वे मानाभावादिति केचित्—तन्न, अञ्जनविशेषादिना सूक्ष्मगोचरचाक्षुषप्रमादर्शनेन तत्र गुणविशेषजन्यताया आवश्यकत्वात् । चाक्षुषप्रमात्वपदेन च तादृशप्रमात्वमेवाभिमतम् । एवं रजतप्रमात्वमप्यूह्यम् ।

माथुरी

कत्वेनैवार्थान्तरमिति न गुणसिद्धिरित्याशङ्कते, 'नन्विति' । ननु तथापि प्रमायाः स्वत उत्पत्तिकत्वव्याघात एव इत्यत आह, 'आगन्तुकेति 'आगन्तुकत्वं' भ्रमाकारणत्वम् ।

अभावः कारणतावच्छेदको न कारणमिति मिश्रमतमुत्थापयति, 'यात्त्विति, तथा च दोषाभावसहितव्यक्तिविशेषत्वमेव कारणताच्छेदकमिति भावः । 'न प्रमा' न स्वैत्यप्रमा, 'अनन्यथासिद्धत्वेन' अनन्यथासिद्धान्वय-व्यतिरेकित्वेन 'हेतुत्वात्' अभावस्यापि हेतुत्वात्, उपस्थितिगौरवस्य कारणतायां बाधकत्वे कारणतावच्छेदकत्वेपि तस्य बाधकत्वापत्तेरिति भावः । 'भूयोऽवयवेति भूयोऽन्वयावावच्छेदेन सन्निकर्ष इत्यर्थः, तथा च प्रमायां गुणः दोषाभावश्च कारणम्, अप्रमायां दोषो गुणभावश्च कारणम् अन्वयव्यतिरेकानुविधायित्वादिति भावः । अप्रमां प्रति गुणाभावस्य हेतुत्वं न सम्भवतीत्याशङ्कते, 'अथेति, 'असदर्थविषयकत्व इति, असद्विषयकं ज्ञानं भ्रम इत्यभिप्रायेण 'सदर्थविषयकेति सदर्थविषयकज्ञानहेत्वभाव इत्यर्थः, 'नियमेनेति, भ्रमेपि सदुपरागेनैवासद्वैशिष्ट्यभानाङ्गीकरादिति भावः । 'तदसम्भवादिति असद्विषयकत्वरूपभ्रमत्वा-

१. प्राथमिकानुमाने कश्चिदुपाधिमाह तन्मतमुत्थापयति-यत्त्वित्यादिना ।

भगवज्ज्ञानस्य त्वत्सम्मतस्य सपक्षत्वादिति—तन्न, विपक्षबाधकबलेन हेतोः साध्यव्याप्यत्वेनोपाधेः साध्याव्यापकत्वात् ।

नन्वस्तु प्रमायां दोषाभावो हेतुः आगन्तुकभावानपेक्ष्यज्ञान-सामग्रीजन्यत्वं स्वतस्त्वम् ।

आलोकः

भगवदिति । न च तन्मते सपक्षाभावः बाधोन्नीतपक्षस्यैव सपक्षत्वादिति भावः ।

दर्पणः

न चेति मूलम् । नैयायिकस्येत्यर्थः । न च जन्यप्रमामात्रस्य पक्षत्वादीश्वर-प्रमाया अपि व्यावर्त्त्यत्वेन पक्षमात्रव्यावर्त्तकत्वाभावेन पक्षेतरत्वाभावादिति भावः । प्रमात्वात्पक्षस्येति मूले । न च मन्मते तस्य पक्षेतरत्वपर्यवसानादनुपाधित्वं तस्य सत्त्वेऽपि बाधो न तत्त्वेनोपाधित्वादिति भावः ।

माथुरी

वच्छिन्नं प्रति सद्विषयकज्ञानहेत्वभावस्य कारणत्वासम्भादित्यर्थः, भ्रमस्यापि सद्विषय-कत्वेन व्यभिचारादिति भावः । प्रमायान्तु दोषाभावस्य हेतुत्वं सम्भवत्येवेत्यत आह, 'सदर्थविषयकत्व इति, 'असदर्थविषयकारणाभावः' असदर्थविषयकत्वावच्छिन्नकार्य्य-ताप्रतियोगिककारणताश्रयाभावः, 'हेतुः' प्रयोजकः, सदर्थविषयिण्याः प्रमाया असदर्थ-विषयकत्वाभावादिति भावः । नन्वेवमप्रमायामपि सदर्थविषयकत्वाभावेन सदर्थविषयक-ज्ञानकारणाभावो हेतुः सम्भवतीत्यत आह, प्रमाया इति, 'तर्हीति सदर्थविषयकज्ञाने असदर्थविषयकज्ञानहेत्वभावस्य हेतुत्वे इत्यर्थः, 'हेत्वभावात्' असदर्थविषयकज्ञान-कारणाभावरूपहेत्वभावात् । 'सदर्थमात्रविषयकत्व इति सदर्थमात्रविषयकत्वं सर्व्वांशे प्रमात्वमेव, 'हेतुः' प्रयोजकः, 'तत्र हेतुः' सदर्थमात्रविषयकज्ञाने हेतुः, धर्म्मांद्यंशे प्रमात्मकभ्रमस्थलेऽपि गुणाभावो वर्त्तत एव सर्व्वांशे प्रमां प्रत्येव गुणस्य कारणत्वादिति भावः । 'इत्यस्त्विति आपादनं, तेन वस्तुत इदं न भवति आंशिकप्रमां प्रत्यपि गुणस्य कारणत्वात्, प्रमामात्रं प्रत्येव गुणः कारणं, भ्रमं प्रति गुणाभाव इति हृदयम् ।

ननु यदि प्रमां प्रति गुणः कारणं भ्रमं प्रति गुणाभावः तदा एकमेव ज्ञानं प्रमा अप्रमा च कथं स्यादित्याशङ्कते, 'नन्विति, 'साधारणत्वात्' विषयविशेषनियन्त्रितत्वात्, 'तदेवेति एकमेव ज्ञानमित्यर्थः, दोषाभावेऽपीति दोषाभावस्य प्रमाहेतुत्वस्वीकारेऽपीत्यर्थः, 'क्वचिदिति क्वचिदंशे इत्यर्थः, तथा च तदंशे दोषाभावः तदंशे प्रमाम्प्रति कारणमिति भावः । 'गुणाभावादिति कुत्रचित् सर्व्वांशे गुणाभावात् असन्मात्रविषयकमपि ज्ञानं स्यादित्यर्थः, 'दोषात्' कुत्रचित् सर्वांशे दोषात्, 'सर्व्वत्र विषय इति सर्वांशे इत्यर्थः । 'तदभावश्चेति चकारात्तस्यापि समुच्चयः, 'तावपि' दोष-तदभावावपि, 'न तत्र हेतू'

यत्त्वभावो न कारणम्, किन्तु दण्डत्वादिवत्कारणतावच्छेदकत्वेन सामग्रीभेदोपलक्षक इति—तन्न। जपाकुसुमादिसन्निधौ न प्रमा, तदसन्निधौ स्फटिकादौ प्रमोत्पत्तेरनन्यथासिद्धत्वेन हेतुत्वादिति चेत्—न भूयोऽवयवेन्द्रियसन्निकर्षविशेषदर्शनादिसमवधाने प्रमा तदभावे त्वप्रमेति प्रमायां

आलोकः

आगन्तुकेति। असाधारणेत्यर्थः। तथा च न प्रमाया गुणजन्यत्वेन भागवतः सिद्धिरिति परं निगर्वः।

दर्पणः

न तु दूषणतयेति। न त्वेकरूपेण दूषणतयेत्यर्थः।

ईश्वरज्ञानस्यानागन्तुकस्य गुणत्वाद् व्याचष्टे असाधारणेत्यर्थ इति। नन्वेतावता

माथुरी

न भ्रमत्वावच्छिन्ने प्रमात्वावच्छिन्ने हेतू, 'स्वप्रमायां' दोषप्रमायां, 'स्वाभावव्यभिचारश्च' दोषाभावव्यभिचारश्चेत्यर्थः, दोषाभावस्य इन्द्रियसन्निकृष्टतयैव हेतुत्वाभ्युपगमादिति भावः। दोषाननुगमस्य दोषत्वं स्वप्रमायां व्यभिचारश्च निराकर्त्तुमाशङ्कते, 'अथ दोषत्वं नैकमिति, 'नापीति, मात्रार्थः साकल्यमवधारण्यं वा, आद्ये आह, 'पित्तादेरिति, 'अननुगतत्वेनेति, व्यभिचारितयेतिशेषः, 'तदभावात्' सकलभ्रमहेतुत्वाभावात्। अन्त्ये आह, 'असम्भवाच्चेति, स्वप्रमायां स्वध्वंसेऽपि पित्तादेर्जनकत्वादिति भावः। 'नापीति, न च घटाभावस्य स्वप्रमाहेतुत्वेन घटस्यापि दोषत्वं स्यात् स्याच्च सिद्ध्यभावस्यानुमितिहेतुतया सिद्धेरपि दोषत्वमिति वाच्यम्। सकलप्रमाहेतुत्वस्यैवात्र विवक्षितत्वात्, क्वचित्साकल्यार्थकमात्रपदघटित एव पाठः, 'अन्योन्याश्रयादिति प्रमासामान्यकारणताग्रहे दोषत्वग्रहः, दोषत्वग्रहे च दोषाभावत्वग्रहात् प्रमासामान्यकारणताग्रह इत्यन्योन्याश्रय इत्यर्थः, 'पित्तादेरिति, तथा च पित्ताद्यभावस्य प्रमासामान्याहेतुत्वात् पित्तादौ लक्षणमव्याप्तमिति भावः। 'एवं हीति, 'स्वप्रमाभिन्नप्रमाप्रतिबन्धकत्वं' न तादृशप्रमासामान्यप्रतिबन्धकत्वं, पित्तादेरपि शङ्खत्वादिप्रमायामप्रतिबन्धकत्वेनाव्याप्त्यापत्तेः, परन्तु यत्किञ्चित्तादृशप्रमाप्रतिबन्धकत्वमेव तद्वाच्यं तथाचायं दोष इति भावः। इदमुपलक्षणं यत्किञ्चित्प्रमाप्रतिबन्धकत्वे विवक्षिते स्वप्रमाभिन्नत्वविशेषणवैयर्थ्यञ्च बोध्यम्। 'तस्मादिति स्वप्रमायां स्वस्यादोषत्वात्, नोक्तव्यभिचारः, कार्य्याननुगमाच्च कारणाननुगमो न दोषायेति भावः।

'स्यादेतदिति उच्यते इत्यन्तमेकः पूर्व्वपक्षः, 'प्रमामिति, 'प्रमां भ्रमञ्चाकुर्व्वति ज्ञानहेतुस्तोमे' प्रमात्वावच्छिन्नं प्रति भ्रमत्वावच्छिन्नं प्रति चाजनके ज्ञानहेतुस्तोमे, ज्ञानसामान्यसामग्रीसत्त्व इति यावत्, 'उरगविभ्रमः' उरगत्वभ्रम एव, न तु वंशत्वप्रमेति यावत्, तथा च ज्ञानसामान्यसामग्र्यां सत्यां मण्डूकवसाञ्जनदोषाद् वंशे न वंशत्वप्रमा

गुणोऽप्रमायान्तदभावो हेतुरित्येव किं न स्यात् । अथासदर्थविषयकत्वे सदर्थविषयकहेत्वभावो न प्रयोजकः, ज्ञाने सदर्थविषयतानियमेन तदसम्भवात् सदर्थविषयकत्वेऽसदर्थविषयकारणाभावो हेतुः सम्भवति। प्रमायाः सदर्थमात्रविषयत्ववदप्रमायामसदर्थमात्रविषयत्वाभावादिति चेत्—तर्ह्यप्रमायाः सदर्थविषयता न स्यात्, हेत्वभावात् । सदर्थमात्रविषयत्वे असदर्थविषयहेत्वभावो हेतुरिति चेत्—तर्हि गुण एव तत्र हेतुः। तदभावस्त्वसदर्थविषयत्वे प्रयोजक इत्यस्तु ।

दर्पणः

परस्य किमिदमागतमित्यत आह—तथा चेति । इतिभावः शङ्कितुरिति शेषः । अथ विशेषदर्शनादिरिति मूलस्य तात्पर्यमाह—नन्विति । अविनिगमः दोषाभावमात्रस्य

माथुरी

भावात् वंशत्वप्रमा इत्यन्वय-व्यतिरेकाभ्यां वंशत्वप्रमास्थले दोषाभावो हेतुः क्लृप्त तदइत्यर्थः, 'इतीति अतो हेतोरित्यर्थः, 'तथा' दोषाभावो हेतुः, अत्र हेतुमाह, 'क्लृप्तत्वादिति, न तु गुणः अक्लृप्तत्वादिति भावः । ननु मण्डूकवसाञ्जनदोषाभावः कथं वंशत्वप्रमाहेतुः तस्मिन् सत्यपि त्वचा वंशत्वप्रमोत्पत्तेरित्यत आह, 'मण्डूकेति, मण्डूकवसाञ्जनाभावः चाक्षुषवंशत्वप्रमायामेव हेतुरित्यभिप्रायः ।

दोषाभावत्वेन कारणता प्रमात्वेन कार्य्यता इत्यस्य व्यभिचारमाशङ्कते, 'गौरोऽहमिति, 'दोषसंस्कारसत्त्वे' दोषरूपमिथ्याज्ञानजन्यसंस्कारसत्त्वे, 'तत्र' गौरोऽहमित्यभेदभ्रमे, 'न तु संस्कारस्य' न तु मिथ्याज्ञानजन्यसंस्कारस्य, तथा च यदा विशेषादर्शनं तदा अभेदभ्रमः, यदा विशेषदर्शनं तदा शरीरभेदप्रमेति भावः ।

ननु विशेषदर्शनासत्त्वेऽपि गौरोऽहमिति भ्रमोदयात् स न तत्र हेतुरित्यत आह, 'तदसत्त्व इति विशेषादर्शनस्यासत्त्वे, 'तदसिद्धेः' भ्रमासिद्धेरित्यर्थः, क्वचित् 'तत्सत्त्वे इति पाठः तदा विशेषदर्शनसत्त्व इत्यर्थः, गुणस्यापि अन्वय-व्यतिरेकाभ्यां प्रमाकारणत्वे क्लृप्तत्वमाशङ्कते, 'दूरेत्यादिना, 'सजातीयसंयोगे' स्वसजातीयसंयोगे, 'तदाभावे नेति सूक्ष्मत्वादिति भावः । 'तावदिति तावद्दूरवर्त्तिविशेष्यककेशत्वप्रकारकसाक्षात्कारत्वावच्छिन्नं प्रत्येव बहुतरकेशसंयोगोहेतुः न तु तादृशप्रमात्वावच्छिन्न इत्यर्थः, तथा च भ्रमप्रमासाधारणकेशसाक्षात्कारहेतुतया न तस्य गुणत्वं प्रमात्वघटितधर्म्मावच्छिन्नकार्य्यताप्रतियोगिककारणस्यैव[1] गुणत्वादिति भावः । 'तदभावात्' केशसाक्षात्कारमात्राभावात् । अथ तावद्दूरवर्त्तिकेशसाक्षात्कारत्वस्य बहुतरकेशसंयोगकार्य्यतावच्छेदकत्वे गौरवमतः केशप्रमात्वान्तर्भावेनैव कार्य्यतेत्यत आह, 'तवापीति,

१. प्रमाया असाधारणकारणस्यैवेति ख०, ग० च ।

**ननु गुणाभावस्य साधारणत्वात्तदेव सत्यमसत्यञ्च न स्यात्, गुणतदभावयोरेकत्रासत्त्वादिति चेत्—न। दोषाभावेऽपि तुल्यत्वात्, क्वचित् कश्चिद्दोष इति गुणेऽपि समानम्। गुणाभावादसन्मात्रविषयकमपि ज्ञानं स्यादिति चेत्—न। दोषादप्यसन्मात्रविषयकज्ञानापत्तेः। सर्वत्र विषये दोषो न सम्भवतीति गुणाभावेऽपि तुल्यम्।**

### दर्पणः

प्रमाकारणतायां गुणाभावमात्रस्यप्रमाकारणतायां च विनिगमकाभावः **कारणत्वापादकतया** पादकभावमात्रस्य प्रमाकारणत्वापादकतया दोषागुणाभावमात्रस्याप्रमाकरणत्वापादकतया।

**नन्वननुगमः कारकत्वाभावतयेति** पाठेऽनेनाथ **दोषत्वमिति** मूलमवतारितमित्यवधेयम्। व्यभिचारोद्धाराय स्वप्रमां प्रति पित्तादेर्दोषत्वाभावं साधयितुं मूलमथेत्यादि कश्चिद्दोष इत्यन्तमित्येके।

### माथुरी

'तावद्दूरप्रमायां' तावद्दूरवर्त्तिविशेष्यकचाक्षुषप्रमात्वावच्छिन्ने, 'स हेतुः' बहुतरकेशसंयोगो हेतुः। ननु दूरवर्त्तिकेशप्रमायामेव दोषाभावे व्यभिचारी तत्र दूरत्वलक्षणदोषसत्त्वादित्यत आह, 'तत्रापीति, दूरत्वं तत्र दोष एव न, अन्यत्र क्लृप्तदोषस्य च तत्राभावोऽस्त्येवेति भावः। 'दोषजन्यत्वे' दोषसत्त्वे, 'अप्रमात्वापातात्' प्रमानुदयापातात्।

केचित्तु 'दोषजन्यत्व इति सति दोषे तस्यान्यथासिद्धिग्राहकाभावेन तज्जन्यत्वस्यावश्यकत्वादिति भावः। तथा च यथाश्रुतमेव साध्वित्याहुः।

'नन्विति, तथा चागन्तुकविशेषदर्शनरूपभावापेक्षज्ञानसाग्रीजन्यत्वात् प्रमायाः स्वत उत्पत्तिकत्वव्याघात इति भावः। 'तर्हीति विशेषदर्शनरूपत्वं यदि तदेत्यर्थः, यदि चाभावाभावोऽतिरिच्यते तदा नैतद्दोषशङ्कापीति भावः। 'स हेतुः' विशेषादर्शनाभावो हेतुः, 'गुणत्वेन' भ्रमप्रतिबन्धकत्वेन, 'भावत्वेन' विशेषदर्शनत्वेन, अभावत्वातिरिक्तरूपेणागन्तुकभावानपेक्ष्य ज्ञानसामग्रीजन्यत्वं स्वतस्त्वमिति भावः।

ननु दोषत्वस्य एकस्याभावात् न दोषाभावत्वं कारणतावच्छेदकं न वा विशेषदर्शनाभावाभावत्वेन गौरवात्, किन्तु विशेषदर्शनत्वेन लाघवादित्यरुचेराह, 'किञ्चेति, 'पित्तादयः' पित्तादय एव, 'दोषाः' प्रमाकारणीभूतभावप्रतियोगिनः, आवश्यकत्वादिति विशेषादर्शनस्य दोषत्वेऽपि विशेषदर्शनमेव भ्रमस्थले कुतो न भवति अतस्तत्र पित्तादय एव प्रतिबन्धका वाच्याः, तदा सर्व्वत्र पित्तादय एव दोषाः सन्तु, आवश्यकत्वादित्यर्थः, उद्वुद्धमिथ्याज्ञानवासनाया एव च दोषत्वोपगमान्नोक्तो दोष इति भावः। 'न चेति, पित्तादीनां नानात्वेन

अथ विशेषदर्शनादिर्गुणस्तदभावश्चाननुगत इति न तौ प्रमाप्रमाहेतू, किन्तु दोषतदभावाविति चेत्—र्तांह पित्तादिर्दोषस्तदभावश्चाननुगत इति तावपि न तत्र हेतू, स्वप्रमायां स्वाभावस्य व्यभिचारश्च। अथ दोषत्वं नैकम्। न हि तत्तद्भ्रमहेतुत्वं तत्, आत्मादौ गतत्वादननुगमाच्च। नापि भ्रममात्रहेतुत्वम्, पित्तादेरननुगतत्वेन तदभावादसम्भवाच्च। नापि प्रमा-

आलोकः

मुरारिमतमाशंक्य निषेधति—तत्त्विति। तथा चाप्रमावैलक्षण्येन प्रमायास्तद्धेतुविचित्रहेतुसिद्धिरेव पक्षधर्मताबलाद्गुणविषयत्वपर्यवसन्नेति भावः।

दर्पणः

अप्रमां प्रति अननुगमो नोद्धृत इत्यत आह—तत्तद्विषयकत्वेति।

ननु भ्रमं प्रति दोषस्यान्वयव्यतिरेकाभ्यां हेतुत्वे सिद्धेऽर्थादेव दोषाभावस्य

माथुरी

व्यभिचाराद्विशेषदर्शन-प्रतिबन्धकत्वेनानुगम इत्यर्थः, नानात्वेपि व्यभिचाराभावमुपपादयति, 'क्वचिदिति तत्तदप्रमायां तत्तद्दोषः कारणमित्यर्थः, 'इत्यनुगमात्, इतिव्यभिचाराभावात्। 'अन्यथेति अन्यथा तत्तदप्रमायां तत्तद्दोषस्याकारणत्वे, पित्तादि क्वचिदप्रमायां कारणं न स्यादित्यर्थः, 'अननुगमात्' अननुगमेन व्यभिचारात्। यद्यप्यप्रमायां विशेषादर्शनमेव हेतुरितिवादिनाम् अप्रमायां पित्तादि कारणमेव न भवतीति एतद्बाधकमसङ्गतम्, तथापि अप्रमासामान्ये विशषादर्शनमेव हेतुः विशेषदर्शनरूपाप्रमायां पित्ताद्यपि कारणमिति मतमवगम्य एतद्बाधमुक्तं, तथा च 'पित्तादितोप्यऽप्रमा न स्यात्' विशेषदर्शनरूपाप्यप्रमा न स्यादित्यर्थः, एतद्बाधकनेव पश्चात्परिहरणीयं 'सर्व्वत्रेत्यादिना, 'सर्व्वत्र' विशेषदर्शनरूपाप्रमायां तद्भिन्ना. 'सर्व्वत्र' विशेषदर्शनरूपाप्रमायां तद्भिन्नाप्रमायाञ्च।

ननु भवतु अननुगत एव दोषः अननुगतानां तत्तदभावानां कथं प्रमाकारणत्वमित्यत आह 'मण्यादेरिति, 'अननुगमेपि' पित्तादेरननुगमेपि, 'अदोषत्वादिति, तदभावस्य प्रमां प्रति हेतुत्वे व्यभिचारादिदोषविरहादित्यर्थः, दाहप्रतिबन्धकस्य मण्यादेरननुगमेपि तदभावानां कारणत्व इवेति भावः 'तत्रोपक्षयात्' अप्रमां प्रति अन्यथासिद्धत्वात्। पीतः शङ्ख इतिभ्रमे पीतत्वाभावविशेषादर्शनस्य व्यभिचारं स्फुटत्वादुपेक्ष्याह, पित्ताद्युत्कर्षेणेति। युक्त्यन्तरमाह, पित्तादेरिति पित्तादेरदोषत्वे प्रमां प्रति तस्याप्रतिबन्धकतया सर्वत्र प्रमारूपविशेषदर्शनमेव कुतो न भवतीत्यर्थः, प्रमारूपविशेषदर्शनं प्रति प्रमारूपविशेषदर्शनस्य हेतुत्वान्नैतद्दोष इत्यत आह, 'विशेषस्येति, 'व्यभिचारात्' प्रत्यक्षरूपविशेषप्रमायां व्यभि-

हेत्वभावप्रतियोगित्वम्, अन्योन्याश्रयात्, पित्तादेः स्वप्रमाहेतुत्वाच्च । नापि स्वप्रमाभिन्नप्रमाप्रतिबन्धकत्वम् । एवं हि प्रत्यक्षप्रतिबन्धकस्य सल्लिङ्ग-परामर्शस्य दोषत्वादनुमितिः प्रमा न स्यात् भ्रमश्च स्यात् । तस्मात् क्वचित् कश्चिद्दोष इति चेत्—तर्हि गुणेऽपि तुल्यम् । स्यादेतत्, प्रमां

### आलोकः

नन्वविनिगमः कारणत्वापादकतयोच्यते स च नास्तीत्याशंकते अथेति । नैकमिति । तथा च न तदवच्छिन्नाभावत्वेन प्रमाहेतुत्वमिति भावः ।

तस्मादिति । प्रकारान्तराभावात् भ्रमहेतुत्वग्रहार्थमुपजीव्यत्वाच्च तत्तत्पित्त-त्वादिकमेव हेतुतावच्छेदकं तत्तद्विषयकत्वतत्तत्कालीनत्वादिकमेवाप्रमायां कार्यता-वच्छेदकमित्यर्थः ।

### दर्पणः

प्रमाहेतुत्वं सेत्स्यति कृतं तस्य प्रमां प्रति व्यतिरेकप्रदर्शनेनेत्यत आह—अत्र प्रमामिति ।

वस्तुतस्तु द्वे अपि पदे विवक्षितार्थे एव दोषाभावेन विना प्रमामकुर्वति ज्ञान-हेतुस्तोमे मण्डूकवसाञ्जनदोषाभावात् प्रमेति प्रमां प्रति दोषाभावस्य स्वतन्त्रान्वय-व्यतिरेकयोर्दोषं विना भ्रममकुर्वति ज्ञानहेतुस्तोमे तस्मात् दोषादप्रमेत्यप्रमां प्रति दोषस्य

### माथुरी

चारात्' । ननु प्रत्यक्षरूपविशेषप्रमायामपि विशेषदर्शनं हेतुरिति न व्यभिचार इत्यत आह, 'तत्रैवेति, तस्मादनायत्या अननुगतानामेव पित्तादितदभावानामननु-गततत्तद्भ्रम-प्रमे प्रति हेतुत्वं वाच्यमित्युक्तप्रणाल्या प्रमायाः स्वतस्त्वमिति भावः । 'अथेति तदंशे प्रत्यक्षप्रमायां तदंशे इन्द्रियसन्निकर्षो गुण इत्यर्थः । ननु तदंशे प्रत्यक्षप्रमायामपि तदिन्द्रियसन्निकर्षस्य हेतुत्वेन कथं तस्य गुणत्वमित्यत आह, 'अप्रमांश इति यदंशे अप्रमा तदर्थस्य धर्मिणि असत्त्वेन तदंशे इन्द्रियसन्निकर्षाभावा-द्दोषो हेतुर्न इन्द्रियसन्निकर्षं इत्यर्थः । अथ रजतत्वादिप्रमायामपि दोषजन्यता किमिति नोच्यत इति तटस्थजिज्ञासायामाह, 'प्रमांश इति रजतत्वाद्यंशे प्रमायां दोषो हेतुर्न चेत्यर्थः, 'अदोषत्वेति प्रमाया अकारणत्वे सति भ्रमकारणस्य दोषत्वादिति भावः । 'प्रमांशस्येति रजतत्वाद्यंशे प्रमायामपि रजतत्वाद्यंशे अप्रमात्वप्रसङ्गाच्चेत्यर्थः, तदंशे दोषजन्यत्वस्य तदंशे दोषजन्यत्वस्य तदंशे भ्रमत्वव्याप्यत्वादिति भावः ।

नन्वेवं अप्रमायां इन्द्रियासन्निकृष्टस्य दोषवशाद्भाने अप्रमायां साक्षात्कारित्वं न स्यादिन्द्रियसन्निकर्षाजन्यत्वादित्यत आह, 'साक्षात्कारित्वञ्चेति धर्म्माद्यंशे इन्द्रियसन्निकर्षजन्यत्वादित्यर्थः अप्रमांशं दोषो हेतुरित्युक्तं दूषयति, 'ज्ञान इति, 'अंशस्येति अवच्छेदकस्येत्यर्थं । ननु विषयतया तदवच्छिन्नकार्य्यता-

भ्रमश्चाकुर्वंति ज्ञानहेतुस्तोमे मण्डूकवसाञ्जनदोषात् वंशोरगविभ्रमः, तदभावे वंशप्रमेति तत्र दोषाभावः प्रमाहेतुरित्यन्यत्रापि तथा, क्लृप्तत्वात् । मण्डूकवसा नयन एव दोषः न त्वचीति तत्र दोषाभावात् त्वचा वंशप्रमैव ।

आलोकः

स्यादेतदिति । अत्र प्रमामितिस्वरूपनिर्देशपरं भ्रमाजनकत्वमात्रस्य च वक्ष्यमाणान्वयव्यतिरेकप्रयोजकत्वात् ।

ननु तदभावो न प्रमाजनकस्तद्विनाऽपि त्वचा प्रमोत्पत्तेरित्यत आह—

दर्पणः

स्वतन्त्रान्वयव्यतिरेकयोश्च प्रदर्शनीयत्वादिति तावद्दूरवर्त्तित्वविशेषणस्यावश्यकतामाह—मूले तवापीति । तथा च तावद्दूरवर्त्तित्वविशेषणे आवयोर्ध्रुवे तावद्दूरवर्त्तिकेशविशेष्यकसाक्षात्कारत्वं वा कार्यतावच्छेदकं तावद्दूरवर्त्तिकेशत्वप्रकारकसाक्षात्का-

माथुरी

निरूपितकारणताश्रयत्वमेव तदंशे हेतुत्वमित्यनुशयादाह, 'अप्रमांशे चेति तदिन्द्रियसन्निकर्षजन्यत्वं तत्साक्षात्कारित्वप्रयोजकं एवञ्च यदंशेऽप्रमा तदंशे इन्द्रियसन्निकर्षश्चेन्नास्ति तदा तदजन्यत्वेन प्रमायाः तदंशे साक्षात्कारित्वं न स्यादित्यर्थः, 'दोषस्य तद्धेतुत्वे' जन्यतासम्बन्धेन दोषस्यापि साक्षात्कारित्वप्रयोजकत्वे, 'अतिप्रसङ्गः' भ्रमानुमित्यादेरपि साक्षात्कारित्वप्रसंगः, 'अननुगमश्च' व्यभिचारश्च प्रमानुमित्यादौ[1] इति भावः। ननु प्रमात्वस्यानुगतत्वात्तत्प्रयोजकः कश्चिदवश्यं स्वीकरणीयः दोषाभावस्य प्रतियोग्यननुगमेनाननुगतत्वात् स एव च गुण इत्याशयेन शङ्कते, 'प्रमायामिति सर्वांशे प्रमायामित्यर्थः, 'प्रमाप्रमायाञ्च' प्रमारूपाप्रमायाञ्च, आंशिकप्रमायाञ्चेति यावत्, 'दोषवदिति अतिरिक्तकारणत्वमात्रे दृष्टान्तः। 'दोषाभावस्य' दोषाणामभावकूटस्येत्यर्थः। तदेवमन्वय-व्यतिरेकात् दोषाभाव एव कारणं न तु गुण इति स्थिते आह, 'उच्यत इति, 'नानुगतो गुण इति। न च प्रमासामान्यं प्रत्येव तद्वन्निष्ठविषयतासम्बन्धेन स्वपरसाधारणस्य गुणत्वसम्भवात् प्रमामात्रे नानुगतो गुण इति कथमुच्यत इति वाच्यम् । तत्तत्प्रकारघटितत्वेन प्रमात्वस्य एकस्याभावात् घटत्व-पटत्वादिसकलप्रमासाधारणो नानुगतो गुणः सम्भवतीत्यभिप्रायात्, 'भूयोऽवयवेति भूयोऽवयवावच्छेदेनेन्द्रियसन्निकर्ष इत्यर्थः, 'यथार्थेति लिङ्गज्ञानादिषु सर्वत्र सम्बध्यते, 'यथायथं' यथायोग्यं, प्रत्यक्षप्रमाया भूयोऽवयवेन्द्रियसन्निकर्ष इत्यादिक्रमेणेति यावत् । ननु भूयोऽवयवेन्द्रियसन्निकर्षो न प्रत्यक्षमात्रे गुणः सम्भवति, रूपादिप्रत्यक्षे शब्द-सुखात्मादिप्रत्यक्षे च

---

१. भ्रम-प्रमात्मकप्रत्यक्षानुमित्यादाविति ग० ।

**गौरोऽहमित्यभेदभ्रमहेतुदोषसंस्कारसत्त्वेपि मम शरीरमिति प्रमेति चेत्— न। विशेषादर्शनस्य तत्र हेतुत्वम्, न तु संस्कारस्य, तदसत्त्वे तदसिद्धेः।**

आलोकः

मण्डूकेति। तत्तदिन्द्रियतत्तद्विषयतत्तत्कालनियतत्वात् दोषाणामित्युक्तत्वादिति भावः। प्रमात्वनियतधर्मावच्छिन्नकार्यत्वप्रतियोगिककारणताश्रयत्वं गुणत्वन्न च

दर्पणः

रिप्रमात्वं वा कार्यतावच्छेदकमिति विचारे मम केशपदं तव केशत्वप्रकारकपदमिति प्रकारकत्वांशः प्रमात्वांशश्च तवाधिकः।

माथुरी

व्यभिचारात्। नापि सावयवप्रत्यक्षप्रमायाम्, उपनयादिजन्यतत्प्रमायाम् व्यभिचारात्। नापि सावयवलौकिकप्रत्यक्षप्रमायाम्, अनुभूयमानतदारोपस्थले तादृशप्रमोत्पत्त्यापत्तेः, तादृशप्रत्यक्षमात्रे एव तस्य हेतुतायाः सुवचत्वेन प्रमात्वान्तर्भाववैयर्थ्याच्च पटादिपिहितघटास्थले निर्विकल्पस्याप्यनुत्पत्तेः। किञ्च भुयोऽवयवेत्यधिकम्। न च किञ्चिदपिहितपटादिपिहितघटादेः प्रमापत्तेस्तदवश्यं वाच्यमिति वाच्यम्। प्रत्यक्षमात्रं प्रत्येव प्रतिबन्धकत्वात् अन्यथा निर्विकल्पकोत्पत्त्यापत्ते। भूयस्त्वमपि दुर्वचनं तथाहि भूयस्त्वं न बहुत्वं द्विकपालारब्धघटे तदभावात्। न चावयवपदम् अवयवावयवसाधारणारम्भकपरमितिवाच्यम्। सर्वसाधारणारम्भकतया निर्वक्तुमशक्यत्वात् किञ्चिदपिहितवटादिपिहितघटादिप्रमापत्तेश्च। नापि विशेषण-विशेष्योभयसन्निकर्षः जन्यप्रत्यक्षप्रमासामान्ये तथा, भ्रमस्थलेपि उभयसन्निकर्षसत्त्वात्। न च तदुभयप्रतियोगिक एकः सन्निकर्षस्तथा भ्रमस्थले तु विशेषणांशे ज्ञानरूपः सन्निकर्षः विशेष्यांशे संयोगादिरिति नैकः सन्निकर्षः, गृह्यमाणारोपस्थले च नोभयप्रतियोगिकः कोऽपि सन्निकर्ष इति वाच्यम्। प्रमास्थलेऽपि विशेष्यांशे संयोगः विशेणांशे संयुक्तसमवाय इति विशेषणविशेष्योभयप्रतियोगिकैकसन्निर्षस्य क्वचिदप्यभावात्। अथ विशेष्यघटितविशेषणेद्रियसन्निकर्षोहेतुरित्याशयः। न च विशेष्यं सामान्यतः, वा प्रमाविशेष्यम्, एतज्ज्ञानविशेष्यं वा, नाद्यो भ्रमस्थलातिव्याप्तेः नहि रजतं न तथा, न वा रजतत्वं तदवृत्ति, नान्त्यः अननुगमादिति वाच्यम्। तत्र तत्प्रत्यक्षप्रमायां तद्घटिततत्सन्निकर्षस्य हेतुत्वेनोक्तत्वादिति चेत्। न, अतीतानागतप्रमायां विशेषणज्ञानस्यैव प्रत्यासत्तित्वेन तत्र व्यभिचारात् सुरभि चन्दनं गुरुत्ववान् घट इत्याद्युपनीतप्रत्यक्षे सामान्यलक्षणाजन्यप्रत्यक्षे च च व्यभिचाराच्च अतीतानागतविशेषण-विशेष्ययोर्मानसप्रमायां तदसम्भवाच्च। न च तत्रोभयविषयकमेकं ज्ञानमेव विशेष्यघटितविशेषणेन्द्रियसन्निकर्षरूपमिति वाच्यम्। तादृशसन्निकर्षस्य भ्रमस्थलेपि सत्त्वात् विशेषणांशे लौकिकत्वेन विशेषणेपि दण्डी पुरुष इत्यादिलौकिकप्रत्यक्षप्रमायां तदसम्भवात्। अथ विशेष्यवृत्तिः विशेषणस्य

**न च दूरे चक्षुषः सन्निकर्षेऽपि केशादौ सजातीयसंयोगे प्रमा, तदभावे नेति तत्र संयोगरूपो गुणः प्रमाहेतुरित्यन्यत्रापि गुणजन्यतेति वाच्यम्,**

आलोकः

तावद्दूरवर्त्तिकेशसाक्षात्कारमात्रहेतोस्तद्विशेषप्रमासामान्यहेतुत्वमित्याह–तावदिति। ननु तावद्दूरप्रमायामपि हेतुत्वेन गुणत्वं तावद्दूरप्रमात्वस्यापि प्रमात्वनिय-

दर्पणः

किं च केशे यत्र स्थूलस्य काकादेरभेदारोपस्तत्रापि सजातीयसंयोगस्यापेक्षितत्वात् तदुक्तम्—सामान्यहेतुत्वमेव सम्यगिति भावः।

माथुरी

सन्निकर्षः जन्यप्रत्यक्षप्रमामात्रे तथा तद्धर्मिकतत्प्रत्यक्षप्रमायां तद्धर्मिवृत्तेस्तस्य इन्द्रियसन्निकर्षो हेतुरिति यावत्। यद्वा विशेषणवतो विशेष्यस्येन्द्रियसन्निकर्षस्तथा तद्धर्मिकतद्धर्मप्रत्यक्षप्रमायां तद्धर्मवतस्तद्धर्मिण इन्द्रियसन्निकर्षो हेतुरिति यावत्। न च शुक्तौ इदं रजतमितिभ्रमकाले शुक्तिवृत्तिशुक्तित्वस्य शुक्तित्ववत्याः शुक्तेश्चेन्द्रियसन्निकर्षसत्त्वेन शुक्तित्वप्रमापत्तिरिति वाच्यम्। शुक्तित्वप्रत्यक्षमात्रप्रतिबन्धकस्य दोषविशेषस्य सत्त्वादिति चेत्। न। 'तद्धर्म्मिवृत्तेरित्यस्य 'तद्धर्म्मवत इत्यस्य च वैयर्थ्यापत्तेः। न चैवं रजतत्वसन्निकर्षसत्त्वेन शुक्तिधर्मिकरजतत्वप्रमापत्तिरिति वाक्यम्। तस्याप्रसिद्धत्वेनापादनासम्भवात्। न च शुक्तौ रजतत्वप्रमापत्तिरिति वाच्यम्। केवलरजतत्वप्रमात्वस्य कार्य्यतानवच्छेदकत्वेनापादनासम्भवात्[1] इति। उच्यते। तद्वत्सन्निकर्ष एव तत्प्रत्यक्षप्रमामात्रे गुणः, तस्य च सामानाधिकरण्यं प्रत्यासत्तिः, तद्घटकश्च सम्बन्धः कारणस्याधिकरणता, कारणस्याधिकरणाता, कार्य्यस्य विशेष्यतेति क्वचिदेवाधिकरणे प्रमा, नापरत्र, शुक्तौ इदं रजतमित्यादिभ्रमकाले शङ्खे पीतत्वादिभ्रमकाले च शुक्तित्व-श्वैत्यादिप्रमानुत्पादश्च प्रतिबन्धकीभूतपित्तादिदोषविशेषसत्त्वात्। न चैवं तादृशदोषविशेषाभाव एव हेतुरस्तु गुणसत्त्वेपि तस्यावश्यकत्वादिति वाच्यम्। तादृशदोषविशेषाभावस्य जन्यश्वैत्यादि-प्रत्यक्षत्वावच्छिन्नं प्रत्येव हेतुत्वात् न तु तत्र प्रमात्वान्तर्भावः तत्सत्त्वे श्वैत्यादिनिर्व्विकल्पकस्यानुत्पत्तेः। न च सैव सामान्यसामग्री जनिकास्तु किं विशेषसामग्रीकल्पनेन, अस्तु वा मैव सामान्यसामग्री प्रत्यक्षप्रमात्वावच्छिन्नं प्रत्यपि हेतुः किं सामग्रयन्तरकल्पनेन, सामन्य-विशेषयोर्नैकसामग्रीप्रयोज्यत्वमिति प्रवादस्य निर्युक्तिकत्वादिति वाच्यम्। असत्यपि तादृशे प्रत्यक्षसामान्यप्रतिबन्धकदोषविशेषे शुक्तित्वादिविरहिनि शुक्तित्वादिप्रमानुत्पादेन उक्तरूपगुणहेतुत्वस्यावश्यकत्वात।

---

१. कार्य्यतानवच्छेदककत्वेनानापादनादिति ग०।

तावद्देशवर्त्तिकेशसाक्षात्कारे स हेतुः तेन विना तदभावात् । तत्रापि तावद्दूरप्रमायां स हेतुः सन्निकृष्टकेशप्रमायास्तेन विनापि भावात् । तत्रापि वा दोषाभावः कल्प्यो दोषजन्यत्वे अप्रमात्वापातात् ।

आलोकः

तत्वात् । अन्यथा प्रमात्वावच्छिन्नमात्रहेतोर्गुणत्वेन सल्लिङ्गपरामर्शादेरप्यतत्त्वापत्ते-रित्यरुचेराह—तत्रापीपि ।

ननु भूयोऽवयवेन्द्रियसन्निकर्षे प्रमा तदभावे नेत्यन्वयव्यतिरेकतौल्यात् प्रमायां

दर्पणः

ननु तावदिति । नन्विदमनुपपन्नम् । उक्तन्यायेन प्रमात्वस्य कार्यतावच्छेदक-कोटावप्रवेशादिति । मैवम् । सजातीयसंयोगविशेषस्य च भ्रमविरोधितया प्रमाविशेष-

माथुरी

भ्रमजनकीभूतदोषश्च न प्रमाप्रतिबन्धकः येनावश्यकत्वात् तदभाव एव कारणं स्यात्[1] इति मणिकृतो निगर्व्वः । सन्निकर्षत्वस्यैकस्याभावात् अननुगमः परमत्र विभावनीयः ।

केचित्तु । तद्व्याप्यसन्निकर्ष एव तत्प्रत्यक्षप्रमाहेतुः उक्तसामनाधिकरण्यं प्रत्यासत्तिरिति । तदसत् । व्याप्यत्वप्रवेशे गौरवादिति दिक् ।

ननु तथापि यथार्थलिङ्गपरामर्शस्य प्रमानुमितौ न गुणत्वसम्भवः, वह्निव्याप्य-धूमवान् पर्व्वत इति यथार्थपरामर्शेन बाधानवतारदशायां[2] लाघवप्रतिसन्धान-सहकारेण[3] पर्व्वतो महानसीयवह्निमानित्यनुमितिजननकाले प्रमानुमितिप्रसङ्गात्, एवं वह्निव्याप्यधूमवान् पर्व्वत इति यथार्थपरामर्शेन पर्व्वतीयवह्निबाधबुद्धिसहकारेण पर्व्वतो महानसीयवह्निमानित्यनुमितिजननकाले प्रमानुमित्युत्पत्तिप्रसङ्गाच्च कूट-लिङ्गस्थलीयप्रमानुमितौ व्यभिचाराच्च । किञ्च गन्धप्रागभावकालावच्छिन्नो घटो गन्धवानित्यादावपि प्रमानुमित्युत्पत्त्यापत्तिः परामर्शस्य यथार्थत्वादिति । मैवं । बाधभ्रमाभाव-लाघवभ्रमाभावयोरपि पृथक् हेतुत्वेनाद्यदोषद्वयानवकाशात् । न चैतयो-र्हेतुत्वोपगमे कृतं तादृशगुणेनेति वाच्यम् । असत्यपि लाघव-बाधभ्रमे[4] साध्यविरहिणि पक्षे परामर्शात् प्रमानुमित्यनुत्पादात् तादृशगुणहेतुत्वस्यावश्यकत्वात् । न वा तृतीयः, तत्रेश्वरीयतद्व्याप्यप्रमायाः सत्त्वात्, साध्यवद्विशेष्यकत्वस्यैव प्रकृते परामर्शनिष्ठ-

---

१. कारणीभूताभावप्रतियोगिन एव प्रतिबन्धकत्वादिति भावः ।

२. बाधावतारे तेनैवानुमितिप्रतिबन्धाम्नापत्तिसम्भावनेति भावः ।

३. इतरबाधसहकारस्थले लाघवप्रतिसन्धानस्थले च सामान्यपरामर्शस्यापि विशेषधर्म्मावच्छिन्नानुमितिजनकत्वम् ।

४. लाघवप्रतिसन्धाने बाधभ्रमे इति ग० ।

ननु विशेषदर्शनं प्रमाहेतुः विशेषादर्शनस्य दोषत्वे तदभावस्य

आलोक:

गुणस्तदभावोऽप्रमायां हेतुरिति तुल्यम् । अन्यथा दूरेऽपि तज्जन्यत्वे प्रमात्वप्रसङ्गा-दित्यपि सुवचम् ।

वस्तुतस्तु दूरत्वमपि इन्द्रियभूयोऽवयवासन्निधिरेवेति दूरत्वदोषत्ववादिना

दर्पणः

हेतुत्वेन च तदभिधानात् । अस्ति हि केशानां संयोगविशेषो यस्मिन् सति तेषु न काकादेरभेदारोपः किन्तु केशप्रमैवेति ।

इन्द्रियसन्निकर्षविशेणस्य कृत्यमाह—अन्यथेति ।

माथुरी

यथार्थतया कूटलिङ्गकपरामर्शस्यापि यथार्थत्वाच्च । वस्तुतः वस्तुगत्या यत्तद्व्याप्यं तत्प्रमा तत्प्रमानुमितौ गुणः, घटो द्रव्यं सत्त्वादित्यादिकूटलिङ्गस्यलेऽप्यन्ततो घटत्वादेरेव तादृशज्ञानमत्त्वात् । न च यत्र जलत्वेनैव पर्व्वतं पक्षीकृत्य कूटलिङ्गेन जलं वह्निमदिति वह्निप्रमानुमितिः तत्र का गतिरिति वाच्यम् । वह्निसामानाधिकरण्यज्ञाने सामान्यतोऽ-धिकरणत्वरूपेण पर्व्वते वह्निव्याप्यस्य वह्नेरेव भावात् । कथमिदं ज्ञातमिति चेत् फलबलादेव । न च हेतुभेदेन हेतुतावच्छेदकसम्बन्धभेदेन च व्याप्तेर्भेदादननुगमः, साध्यतावच्छेदकसम्बन्धेन तद्वदन्यावृत्तित्वस्वरूपाया व्याप्तेरत्र प्रवेशात् । न च केवलान्वायिनि तदभावः, तत्र प्रमात्वस्य कार्य्यतानवच्छेदकत्वात् व्यावर्त्तनीयतदप्रमाया अप्रसिद्धेः । अस्तु वा तत्र तत्समानाधिकरणत्वेनैवानुगमः । न वा चतुर्थः, गन्धप्राग-भावकालावच्छिन्नत्वविशिष्टसमवायसम्बन्धेनैव शुद्धसमवायसम्ब्रन्धेनापि घटे गन्धस्य प्रकारत्वाभ्युपगमादिति दिक् ।

ननु तथापि यथार्थसादृश्यज्ञानस्य प्रमोपमितौ न गुणत्वसम्भवः, खरविधर्म्मा अश्व इत्यतिदेशवाक्यप्रभववैधर्म्योपमितौ व्यभिचारात् । न च सादृश्यज्ञान-जन्यप्रमोपमितावेिदं निदानमिति वाच्यम् । गोशदृशः स्वर इत्यतिदेशवाक्य-प्रभवप्रमोपमितौ व्यभिचारात् खरे गोसादृश्यप्रमाया अभावात् । न च, गोसमानधर्म्मवत्त्वं येन केनापि धर्म्मेण खरेप्यस्तीति वाच्यम् । अप्रमासाधारण्यात् । मैवं । तत्प्रकारकप्रमोपमितौ तदव्यभिचारी यो लघुधर्म्मं ईश्वरीयसाधाधारणः तत्प्रमैव गुणः स च क्वचित् सादृश्यं क्वचिदन्यत् ग्रन्थस्तूपलक्षणपरः इति । न चेवं प्रमासामान्यं प्रत्येव ईश्वरीयसाधारणग्राह्यप्रमाया गुणत्वसम्भव इति वाच्यम् । ईश्वरीयसाधारणग्राह्यप्रमावदेतस्या अपि तथात्वे क्षतिविरहात् ।

ननु तथापि यथार्थवाक्यार्थज्ञानस्य शब्दप्रमायां न गुणत्वसम्भवः, वाक्यपदं हि यत्किञ्चित्परं वा, प्रकृतवाक्यपरं वा, नाद्यः, अतिप्रसङ्गात् । नान्त्यः, अननुगमात् शुक-

हेतुत्वादिति चेत्—तर्हि दोषाभावत्वेन स हेतुर्न तु गुणत्वेन भावत्वेन वा। किञ्च विशेषदर्शनप्रतिबन्धकाः पित्तादयो दोषाः आवश्यकत्वान्न विशेषा-

आलोकः

त्वया तदभावहेतुत्वमभिमतमिति प्रतिबन्दिसत्त्वेऽपि तामुपेक्ष्य त्वयदुक्तयुक्तेरेव सिद्धन्नः समीहितमित्यभिसन्धाय शङ्कते—नन्विति।

दर्पणः

ननु तत्र दूरत्वदोषादेव प्रमानुत्पाद इत्यत आह—वस्तुतस्त्विति। भावत्वेनेति मूलम्। यद्यपि भावत्वमतिप्रसक्तं तथापि भावधर्मो विशेषदर्शनत्वमेव भावत्वपदेनोक्तम्।

माथुरी

बालकवाक्यजन्यप्रमायां व्यभिचाराच्च। मैवं, वाक्यार्थज्ञानपदेन तद्वत्त्वज्ञानस्योक्तत्वात्। तथा च शाब्दप्रमायां यथार्थतद्वत्त्वज्ञानमेव गुणः विशेष्यतासम्बन्धेन सामानाधिकरण्यं प्रत्यासत्तिरिति यत्र सा अस्ति तत्रैव शाब्दप्रमा, शुक-बालकादिस्थले ईश्वरीयमेव तत् सुलभमिति न काप्यनुपपत्तिः। न चान्योन्याश्रयः शाब्प्रमाया यथार्थवाक्यार्थ-ज्ञानरूपगुणजन्यत्वे सिद्धे वैदिकप्रमाहेतुवाक्यार्थप्रमारूपगुणाश्रयत्वेनेश्वरसिद्धिः, तत्सिद्धौ च तदीयवाक्यार्थज्ञानजन्यतया शुकादिवाक्ये व्यभिचारज्ञानाभावे शब्द-प्रमायास्तादृशगुणजन्यत्वसिद्धिरिति वाच्यम्। प्रकारान्तरेणापि ईश्वरसिद्धेरुक्तत्वात् ज्ञानस्यासार्वदिकत्वेन शुकादिस्थले यथार्थवाक्यार्थज्ञानाभावग्रहासत्त्वदशायां कारणत्वग्रहसम्भवाच्च। अन्यथा पर्वतादौ वह्नेः सन्देहात् धूमकारणत्वग्रहोऽपि तत्र न स्यादिति संक्षेपः।

'विशेषदर्शनं' विशेषप्रमा, तेन पुरुषे स्थाणुत्वव्याप्यवत्ताज्ञानात् तत्र न स्थाणुत्वप्रमा, 'विशेषदर्शनहेतुरेवेति विशेषदर्शनसामग्र्येवेत्यर्थः, तद्धेतोरेवेतिन्याया-भावः। नन्वेवं यत्र विशेषदर्शनाभावः तत्र कथं न प्रमेत्यत आह, 'तद्व्यतिरेकेति, 'तद्व्यतिरेकात्' विशेषदर्शनसामग्रीव्यतिरेकात्, 'तदभावः' प्रत्यक्षप्रमाया अभावः, 'अन्यथा' विशेषदर्शनसामग्र्यभावासत्त्वे। ननु विशेषदर्शनमपि विशेषदर्शनहेतु-रेवेति विशेषदर्शनस्य हेतुत्वं दुष्परिहरमित्यत आह, 'तत्रापीति विशेषदर्शनेऽपीत्यर्थः, 'तदपेक्षायां, विशेषदर्शनापेक्षायां, 'अनवस्थानादिति। यद्यपि विशेषदर्शनस्य प्रत्यक्षत्वनियमाभावान्नानवस्थाप्रसङ्गः, तथापि तन्मूलीभूतप्रत्यक्षमादाय तत्प्रसङ्ग इति भावः। अथ व्याप्यदर्शनसामग्री चेत् कारणं तदा पूर्वं व्याप्यसामग्रीसत्त्वेन सर्वस्या एव व्यापकप्रत्यक्षप्रमाया व्याप्यवत्त्वविषयकत्वनियमेन पुरुषत्वप्रत्यक्ष-प्रमाया अपि पुरुषत्वव्याप्यकरादिमत्त्वविषयकत्वनियमात् लिङ्गोपहितलैङ्गिक-भाननये अनुमिताविव तत्र प्रामाण्यसंशयो न स्यात् प्रामाण्यावच्छेदकत्वेन गृहीतस्य करादिमद्विशेष्यकत्वावच्छिन्नपुरुषत्वप्रकारकत्वस्यानुव्यवसायेन निश्चयादित्याह,

दर्शनम् । न च तेषामननुगतत्वेन विशेषदर्शनप्रतिबन्धकतयाऽनुगमे

आलोकः

ननु विशेषदर्शनाभावाभावो यदि हेतुस्तर्हि लाघवाद्विशेषदर्शनत्वेन हेतुर्न्न तु तदभावाभावत्वेन गौरवादत एव गुणसिद्धिः। न हि प्रमाजनकतावच्छेदकरूपाव-

दर्पणः

प्रमेति। अत्र सत्यन्तं गुणाभाववारणाय, भ्रमजनकत्वं च भ्रमत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपतिकारणताश्रयत्वम्। एवं च दोषत्वनिर्वचनं न दृष्टान्तार्थम्, विशेषादर्शनस्यादोषत्वार्थं वा अप्रमेति। अत्र सत्यन्तं दोषाभाववारणाय। प्रमाजनकत्वं च प्रमाजनकत्वं च प्रमात्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम्।

माथुरी

'एवमिति, 'एवं' व्याप्यदर्शनसामग्र्याः प्रत्यक्षमात्रकारणत्वे, 'व्याप्यविषयकव्यापकप्रत्यक्षनियमे' व्यापकप्रत्यक्षप्रमाया व्याप्यविषयकत्वनियमे, 'अनुमिताविवेति लिङ्गोहितलैङ्गिकभाननये अनुमिताविवेत्यर्थः, 'करादिमतीति। यद्यपि अनुव्यवसायेन पुरुषत्वव्याप्यकरादिमद्विशेष्यकत्वावच्छिन्नपुरुषत्वप्रकारकत्वग्रहे तद्वद्विशेष्यकत्वावच्छिन्न-तत्प्रकारकत्वमपि ग्राह्यं तुल्यसामग्रीकत्वादिति प्रामाण्यस्य स्वतस्त्वापत्तिः, तथापि अनुव्यवसायेन तद्वद्विशेष्यकत्वावच्छिन्नत्वं तत्प्रकारकत्वे न गृह्यते प्रामाण्यसंशयानुपपत्तेः, विधेयोद्देश्यतावच्छेदकत्वेन व्यवसाये भासमानो यो धर्म्मस्तद्वद्विशेष्यकत्वावच्छिन्नत्वं विधेयप्रकारकत्वे गृह्यत एव बाधकाभावात्, अन्यथा अनुव्यवसायानन्तरं प्रामाण्यस्यैवास्मिन् रजतत्वप्रकारकं न वेत्यपि संशयः स्यादिति भावः। ननु विशेषदर्शनस्य हेतुत्वेपि पूर्व्वं व्याप्यवत्तोपनयसत्त्वात् प्रत्यक्षप्रमामात्रस्यैव उपनीतव्याप्यवत्त्वविषयकत्वनियमात् कथं कुत्रचित् पुरुषत्वप्रत्यक्षप्रमायां प्रामाण्यसंशय इति उक्तदोषतादवस्थ्यमिति कुत्रचित् प्रामाण्यसंशयानुरोधात् विशेषदर्शनं विनापि प्रत्यक्षप्रमा स्वीकार्य्या तत् कथमित्याशङ्कते, 'तवापीति, 'अपिः' भिन्नक्रमे, विशेषदर्शनं विनापीत्यर्थः, 'तस्य हेतुत्वादिति, तत्र च प्रामाण्यसंशय एव न भवतीति भावः। 'ममापीति, 'तद्धेतुः' तत्सामग्री, तत्रैव' संशयविपर्य्ययोत्तरप्रमायामेव, 'तद्धेतूनां' विशेषदर्शनहेतूनां, 'तादृशप्रत्यक्षे' संशयाद्युत्तरप्रत्यक्षे, 'तद्दर्शनेषु च' विशेषदर्शनेषु च, 'व्याप्यदर्शनत्वं' व्याप्यप्रमात्वं, विशेषदर्शनसामग्र्या अपि व्याप्यदर्शनसामग्रीत्वेनानुगमे लाघवाद्विशेषदर्शनत्वेनैव कारणत्वं न तु तत्त्वेन गौरवात् अनुमित्यात्मकव्याप्यदर्शनस्थले तत्सामग्र्या प्रत्यक्षजनकत्वासम्भवाच्च भिन्नविषये अनुमितिसामग्र्या बलवत्त्वेन व्याप्यानुमितेरेव प्रथममुत्पादात् इति भावः। यद्यप्यत्रैतद्विशेष्यक-तद्व्याप्यप्रमात्वेन कारणता, तद्विशेष्यकतद्विपरीतज्ञानोत्तर-तद्विशेष्यकतत्प्रत्यक्षप्रमात्वेन कार्य्यता, समवायघटितसामानाधिकरण्यं

लाघवात् विशेषादर्शनमेव हेतुरिति वाच्यम्। क्वचित् कश्चिद्दोष इत्यननुगमात्। अन्यथा पित्तादितोऽप्यप्रमा न स्यात्। अननुगमात्,

आलोकः

च्छिन्नाभावत्वेनाजनकत्वे सति भ्रमजनकत्वादन्यद्दोषत्वम्[1]। अप्रमाजनकत्वावच्छेदकरूपावच्छिन्नाभावत्वेनाजनकत्वे सति प्रमाजनकत्वादन्यद् गुणत्वमिति पूर्वास्वरसादाह—किञ्चेति।

दर्पणः

केचित्तु अतएव वा गुणत्वसिद्धिः। न हि प्रमाजनकतावच्छेदकरूपवच्छिन्नाभावत्वेन जनकत्वादन्यत्तवे दोषत्वम्। अप्रमाजनकतावच्छेदकरूपावच्छिन्नाभावत्वेन जनकात्वादन्यद्गुणत्वमिति पाठः। तत्र अत एवेति। विशेषादर्शनाभावत्वेन जन-

माथुरी

प्रत्यासत्तिः, शुक्तिविशेष्यकरजतत्वप्रमात्वादेरप्रसिद्धत्वेन कार्य्यतावच्छेदकत्वासम्भवेपि यावद्विशेषसामग्रीबाधादेव न शुक्त्यादौ रजतत्वप्रमोदय इति क्रमेण कार्य्य-कारणभावो न सम्भवति, संशयोत्तरतत्संशयप्रमायां व्यभिचारात् आलोकाभावाद्यधीनसंशय-विपर्य्ययोत्तरयालोकादिसमवधाने सति जायमाने प्रत्यक्षप्रमानिश्चये पुरुषत्वाद्यवच्छेदकीभूतकरादिमत्त्वज्ञानाज्जायमाने संशय-विपर्य्ययोत्तरपुरुषत्वादिप्रत्यक्षप्रमानिश्चये च व्यभिचाराच्च पुरुषत्वादिव्याप्यत्वेन तत्र ज्ञानाभावात् व्याप्तेरननुगमेनाननुगमाच्च। अथ वस्तुगत्या यत्तद्व्याप्यं स्व-परसाधारणतत्प्रमात्वेनैव कारणता, तद्विपरीतज्ञानोत्तरतत्प्रत्यक्षप्रमात्वेन च कार्य्यता, विशेष्यताघटितसामानाधिकरण्यं प्रत्यासत्तिः, संशयोत्तरसंशयस्थले स्वस्यापि स्वव्याप्यत्वेन पूर्व्वसंशयस्यैव तद्व्याप्यप्रमात्वात्। अत एव संशयोत्तरमालोकसमवधाने सति जायमाने प्रत्यक्षप्रमानिश्चये अवच्छेदकीभूतकरादिमत्त्वज्ञानाज्जायमाने विपरातज्ञानोत्तरप्रत्यक्षप्रमानिश्चये च न व्यभिचारः, संशयावच्छेदकीभूतकरादिमत्त्वज्ञानयोरेव वस्तुगत्या तद्व्याप्यप्रमारूपत्वात् सर्व्वत्रेश्वरीयतद्व्याप्यप्रमामादायैव विशेष्यतासम्बन्धेन तद्व्याप्यप्रमायाः सुलभत्वाच्च। अत एव तदभावनिश्चयोत्तरमालोकसमवधाने सति जायमाने प्रत्यक्षप्रमानिश्चये तदव्याप्ये तद्व्याप्यताभ्रमाज्जायमाने विपरीतज्ञानोत्तरप्रत्यक्षप्रमानिश्चये च न व्यभिचारः ईश्वरीयतद्व्याप्यप्रमाया एव सुलभत्वात्। न चैवं पुरुषत्वादिविपरीतनिश्चयोत्तरं विनापि व्याप्यदर्शनादिकं पुरुषत्वादिप्रत्यक्षप्रामापत्तिरीश्वरीयतद्व्याप्यप्रमासत्त्वादिति वाच्यम्। तद्विपरीतज्ञानोत्तरतत्प्रत्यक्षनिश्चयत्वेन कार्य्यता, तद्विपरीतज्ञानविरोधित्वेन कारणतेति सामान्यकार्य्य-कारणभावान्तरसत्त्वेन सामान्यकारणा-

१. अवच्छेदकरूपाभावत्वेनाजनकत्वे सति भ्रमजनकत्वादन्यद्दोषत्वमिति कपुस्तके।

**मण्यादेरिवाननुगमेऽप्यदोषत्वाच्च । तदभावकूटस्य हेतुत्वात् । सर्वत्र विशेषादर्शनमेव हेतुः, पित्तादेरननुगमेन तत्रोपक्षयादिति चेत्—न ।**

### आलोकः

विशेषेति । एवकारोऽप्यर्थः । तथा चोपजीव्यतया आवश्यकत्वात् पित्तादिरनुगमकतया लाघवाद्विशेषादर्शनमित्युभयमपि दोष इति भावः । अत एवान्यथेत्यादि वक्ष्यते । अन्यथा पित्ताद्यदोषतायां तदलग्नतापत्तेरिति ।

### दर्पणः

कत्वादेवेत्यर्थः । प्रमेति । प्रमाजनकतावच्छेदकावच्छिन्नो मुख्याभावो यस्य तत्त्वेनोपलक्षितस्य जनकत्वादित्यर्थः । तवेति । तवापीत्यर्थः । एवमप्रमाजनकतावच्छेदकावच्छिन्नो मुख्याभावो यस्य तत्त्वेनोपलक्षितस्य जनकत्वादित्यर्थः । इत्यर्थ इति । तथा चाननुगमकतया विशेषादर्शनस्य दोषत्वं नेति भावः ।

### माथुरी

भावादेव तदनुत्पत्तेः, तद्विपरीतप्रमोत्तरं विनापि व्याप्यदर्शनादिकं भ्रमात्मकतत्प्रत्यक्षनिश्चयवारणाय तादृशसामान्यकार्य्य-कारणभावस्यावश्यकत्वात् । लाघवात् प्रमात्वनिरूपकसम्बन्धेन तद्वदन्यावृत्तित्वरूपाया एव व्याप्तेरत्र प्रवेशाद्व्याप्त्यननुगमेऽपि नाननुगमः । केवलान्वयिस्थले पूर्व्वोक्तैव गतिरितिचेत् । न तथासति प्रमासामान्यं प्रत्येव एकरूपेण कार्य्य-कारणभावस्य सुवचतया कार्य्यतावच्छेदकदिशि तद्विपरीतज्ञानोत्तरत्वप्रवेशस्य व्यर्थत्वापत्तेः, मूले संशय-विपर्य्ययोत्तरप्रमापर्य्यन्तानुधावनस्यासङ्गतत्वापत्तेश्च । तथापि तद्विशेष्यक-तद्व्याप्यप्रमात्वेन तद्विशेष्यकतद्विपरीतज्ञानोत्तरतद्विशेष्यकतत्प्रत्यक्षप्रमात्वेनैव कार्य्य-कारणभावः, उत्तरत्वञ्चालोकाभावाधीनविपरीतनिश्चयादिव्यावृत्तं संसर्गमर्य्यादयाकातावच्छेदकघटकं तेनालोकादिसमवधानाधीनतदुत्तरप्रत्यक्षप्रमायां न व्यभिचारः, न वा तदव्याप्ये तद्व्याप्यताभ्रमाज्जायमाने तद्विपरीतनिश्चयोत्तरप्रत्यक्षे च व्यभिचारः तद्व्यावृत्तोत्तरत्वस्यैव संसर्गत्वात् । यद्वा तद्विशेष्यक-तद्व्याप्यप्रमात्वेन कारणता, तादृशप्रमोत्तरतद्विशेष्यकतत्प्रत्यक्षप्रमात्वेनैव कार्य्यता, संशय-विपर्य्ययोत्तरप्रमापदञ्च तद्व्याप्यप्रमोत्तरतादृशप्रमापरमिति मणिकृतां निगर्व्वः ।

'नन्विति, 'एवं' संशयाद्युत्तरप्रत्यक्षप्रमायां विशेषदर्शनस्य कारणत्वे, 'तथात्वेपि' अनुमितिसामग्रीसत्त्वेपि, 'प्रत्यक्षेति सिषाधयिषाविरहविशिष्टतद्विशेष्यकलौकिकप्रत्यक्षसामग्र्याः तद्विशेष्यक-तद्विधेयकानुमितिप्रतिबन्धकत्वादित्यर्थः, अनुमितिसामग्रीविरहादिति शेषः । तद्विधेयकेत्युपादानात् पर्वतो वह्निमानित्यत्र पर्वतप्रत्यक्षसामग्रीसत्त्वेपि न पर्वतस्य प्रत्यक्षं किन्तु अनुमितिरेव, लौकिकेत्युपादानात् पर्वते वह्न्युपनीतभानसामग्रीसत्त्वेपि वह्न्यनुमितिरेव न प्रत्यक्षम् ।

**पित्ताद्युत्कर्षेण भ्रमोत्कर्षात् । पित्तादेरदोषत्वे च विशेषप्रमैव कुतो न भवति, विशेषस्य विशेषान्तरादर्शनादिति यदा तदा अनवस्थैव । किञ्च**

### आलोकः

क्वचिदिति । विषयेन्द्रियपुरुषसमयाद्यवच्छेदेन हेतुत्वस्यानुगतत्वादित्यर्थः ।

यद्यपि प्रमामात्रे नानुगतो गुणस्त्वन्मते तादृशवस्त्वप्रसिद्धेस्तथापि प्रत्येकप्रमितौ प्रत्येकस्य गुणत्वं त्वन्मतेनैवास्त्वित्यभिसन्धाय सिद्धान्तयति—प्रमेति । अस्मन्मते त्वनुगत एव सर्वसाधारणो गुणोऽस्तीति वयं वक्ष्यामः ।

### दर्पणः

ननु विशेषदर्शनप्रतिबन्धकत्वेनानुगमात्कथमननुगम इत्यत आह मूले—मण्यादेरिवेति । तत्तद्भ्रमं प्रति तत्तद्दोषस्य हेतुत्वादित्यर्थः । प्रमां प्रति च दोषाभावस्य नाननुगम इत्याह—मूले—तदभावेति ।

### माथुरी

केचित्तु 'अन्यत्र' भिन्नविषयकप्रत्यक्षे, 'तथात्वेपि' अनुमितिसामग्र्याः प्रतिबन्धकत्वेपि, 'अत्रेति, 'अत्र' समानविषयकानुमितौ, प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वादित्यर्थः इति वदन्ति । तत्र भिन्नविषयकप्रत्यक्षत्वं नानुमितिसामग्र्याः प्रतिबध्यतावच्छेदकं गौरवात्, अपि तु लाघवात् प्रत्यक्षत्वमेव । समानविषयकानुमितित्वं प्रत्यक्षसामग्रीप्रतिबध्यतावच्छेदकं तेन समानविषयकप्रत्यक्षस्थले प्रत्यक्षसामग्र्यभावरूपकारणाभावादनुमितिसामग्रीविरहादेव न व्यभिचार इति ध्येयम् ।

ननु प्रत्यक्षसामग्र्या अनुमितिप्रतिबन्धकत्वे किं मानमित्यत आह, 'तत्रेति, 'तत्र' संशयोत्तरप्रत्यक्षस्थले, 'इति' इत्येव, नानुमिनोमीत्यर्थः । 'अतएवेति क्वचित् ज्ञाने विशेषदर्शनजन्यत्वादेवेत्यर्थः । 'ज्ञातमित्यस्य ज्ञानमिति शेषः, 'बाधकं' भ्रमत्वज्ञापकं, बाध्यं' भ्रमत्वेन ज्ञाप्यम् । 'अन्यथा' कस्यचिदपि ज्ञानस्य विशेषदर्शनाजन्यत्वे । 'पुरुषज्ञानस्य' पुरुषत्वभ्रमस्य, 'नापीति, तद्विपरीतज्ञानमेव तज्ज्ञानबाधकमित्यर्थः । 'अनन्यथासिद्धमिति प्रमात्वेन ज्ञातं बाधकमित्यर्थः, तथा च करभ्रमजन्यपुरुषत्वभ्रमस्यापि प्रमात्वेन ज्ञातत्वेन बाधकत्वमिति भावः । 'तदर्थत्वात्' तज्ज्ञापकत्वात्, तथा च तदर्थमेव क्वचित् प्रत्यक्षप्रमायां विशेषदर्शनजन्यत्वं स्वीकारणीयमिति भावः । भ्रमोत्तरप्रत्यक्षप्रमां प्रति व्याप्यदर्शनस्यान्वयव्यभिचारमाशङ्क्य निराकरोति, 'न चेति, 'विशेषदर्शनेऽपि' श्वैत्यव्याप्यवत्तादर्शनेऽपि, 'तद्भावः' तद्वृत्तिधर्म्मः, तद्वृत्तिभ्रमविरोधित्वमिति यावत् । 'प्रमाहेतुः' भ्रमोत्तरप्रत्यक्षप्रमायाः कारणतावच्छेदकं, पीतः शङ्ख इत्यत्र यद्विशेषदर्शनं तद्भ्रमविरोध्येव न तत्सत्त्वेपि पीतः शङ्ख इति भ्रमोत्पत्तिरिति भावः । यद्यप्यत्र श्वैत्यविशेषदर्शनमपि भ्रमविरोध्येव दोषविशेषाद्यजन्यभ्रमं प्रत्येव तस्यैव विरोधित्वात्, तथापि यद्विशेषदर्शनं यत्प्रत्यक्षभ्रमविरोधि

विशेषदर्शनं न प्रमामात्रे न वा प्रत्यक्षप्रमायां हेतुर्व्यभिचारात् । तत्रैव तद्धेतुत्वेऽनवस्थापाताच्च । अथ प्रत्यक्षे इन्द्रियसन्निकर्षो गुणः अप्रमांशे तदर्थस्यासत्त्वेन सन्निकर्षाभावात् दोषो हेतुः । न च प्रमांशेपि स हेतुः, अदोषत्वप्रसङ्गात्, प्रमांशस्याप्रमात्वप्रसङ्गाच्च । साक्षात्कारित्वञ्चेन्द्रिय-सन्निकर्षजन्यत्वादिति चेत्—न । ज्ञाने विषयरूपस्यांशस्येन्द्रियतद्दोषा-जन्यत्वात् अप्रमांशे चेन्द्रियसन्निकर्षाभावेन साक्षात्कारित्वं न स्यात् ।

आलोकः

अत्र वदन्ति—तत्तत्प्रमायामपि नोक्तानुगतहेतुता । तथा हि न तावत् प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रियसन्निकर्षः, शब्दादिप्रत्यक्षाव्याप्तेः । नापि यथार्थ-लिङ्गपरामर्शोऽनुमितौ, गन्धप्रागभावावच्छिन्नपक्षकगन्धानुमितेर्बाधाप्रतिसन्धानदशा-यामुत्पन्नायाः प्रमाण्यापत्तेः । सादृश्यधीश्च वैधर्म्योपमितावेव नास्ति । वाक्यार्थधीश्च शुकबालादिशब्दप्रमायामेव नास्ति । न चेश्वरीयं तत्रापि सुलभमेवेति वाक्यं, अन्योन्याश्रयात् । प्रमाया गुणजन्यत्वसिद्धिं विना नान्यत् तत्र प्रमाणमिति तत्सिद्धौ व्यभिचारस्याभावे वाक्यार्थज्ञानहेतुता, तस्यां च सत्यां तत्सिद्धिरित्यन्योन्याश्रयात् । किं च यदि सामान्यं सामान्ये प्रयोजकं भवेत् तदा तद्विशेषस्य तद्विशेषप्रयोजकता 'यत् सामान्य' इति न्यायात्, न चेह वाक्यार्थज्ञानसामान्यस्य वाक्यजज्ञानसामान्य-हेतुत्वं येन तद्विशेषयथार्थज्ञानयोर्हेतुहेतुमद्भावः । न च तदेव कुत इति वाक्यं, विसंवादिशुकवाक्यजज्ञानादिषु व्यभिचारात् ।

दर्पणः

ननु मण्यादेरननुगतस्य दोषत्वसंगत्या इह न तथेत्याशयेन शङ्कते मूले–सर्वत्रेति ।

ननु विशेषप्रमाविरहस्तज्जनकगुणाद्यभावादेव स्यादित्यरुचेराह मूले–किञ्चेति । तत्रैवेति मूलम् । इदं च विशेषदर्शनस्य विशेषप्रमापरत्वे विशेषप्रत्यक्षपरत्वे वा द्रष्टव्यम् ।

स हेतुरिति मूलम् । स एव हेतुरित्यर्थः । तथा चेन्द्रियसन्निकर्षस्य तेना-न्यथासिद्धया न प्रमाहेतुत्वमिति तटस्थशङ्कार्थः ।

अदोषत्वेति मूलम् । अप्रमासाधारणकारणत्वदोषत्वादित्यर्थं ।

नन्वेवं साक्षात्कारित्वमपि भ्रमांशे न स्यात् तदंशे इन्द्रियसन्निकर्षजन्यात्वा-भावादित्यत आह—मूले साक्षात्कारित्वं चेति । लाघवादिन्द्रियसन्निकर्षजन्यत्वमेव साक्षात्वे तन्त्रम्, न तु संदशे इन्द्रियसन्निकर्षजन्यत्वमिति भावः ।

नन्वंशे जनकत्वमिदमेव यदंशविषयकत्वावच्छेदेन जनकत्वमित्यत आह—मूले अप्रमांशे चेति । स्वप्रकाशाद्यंशं विहाय यदंशे यत्सन्निकर्षजन्यत्वं तन्मते तदंशे इन्द्रियसन्निकर्षजन्यत्वस्य साक्षात्वप्रयोजकत्वात् । अत एव प्रत्यभिज्ञायां तत्तांशे

**दोषस्य तद्धेतुत्वे अतिप्रसङ्गोऽननुगमश्च । प्रमायां प्रमाप्रमायाश्च याथार्थ्यं-**

आलोकः

ननु नेदं अन्योन्याश्रयत्वम्, अपूर्वकारणव्यक्तिविशेषाननुमानापत्तेः। तथा हि—सर्वत्र विशेषयोरन्वयव्यतिरेकग्रहः सामान्ये कारणतायां प्रमाणम्, न तु पक्षधर्मताबललभ्यान्वयव्यतिरेकग्रहः, अनुमानमात्रोच्छेदात् । न चातिप्रसङ्गः, सामान्यविशेषभावस्य नियामकत्वादिति वक्ष्यते । तथा च लौकिकास्मदादिवचसि गृहीतान्वयव्यतिरेकतयाऽन्यत्राप्यनुमानेन तत्सिद्धया क्वान्योन्याश्रयत्वम्, अनैकान्तिकत्वं वा । न च प्रागेव व्यभिचारस्फुरणे कारणत्वग्रहाभावेनानुमानमेव दुःशकम्, निश्चयात्मकस्फुरणाभावात्, संशयात्मकतादृशस्य दोषत्वात् ।

दर्पणः

परोक्षत्वम्[1] । न्यायनये च स्मरणरूपसन्निकर्षजन्यत्वात् भ्रमांशे प्रमात्वं स्यादिति दूषणं बोध्यम् ।

**अतिप्रसंग** इति मूलम् । भ्रमानुमित्यादेरपि साक्षात्वापत्तिः। दोषविशेषस्य तथात्वेऽननुगम इत्यर्थः ।

ननु प्रमामात्रेऽपि ग्राह्ययथार्थज्ञानमनुगुणम् ? वक्ष्यमाणरीत्येश्वरमादाय भवत्येवेत्यत आह—**त्वन्मत** इति । त्वया ईश्वरानङ्गीकारादित्यर्थः ।

**वयं वक्ष्याम** इति । एतत्तात्पर्यमनित्यप्रमात्वमिति प्रकरणे दर्शितम् ।

**प्रमाण्यापत्तेरिति** । पक्षतावच्छेदकावच्छिन्नसाध्यविषयत्वस्यानुमितौ वक्ष्यमाणत्वान्नात्रेष्टापत्तिरित्यवधेयम् ।

अन्योन्याश्रयमेव विवृणोति—**प्रमाणमिति** । **विसंवादीति** । तत्रेश्वरस्यापि वाक्यार्थज्ञानाभावादिति भावः ।

**अन्यत्राप्यनुमानेनेति** । इदं च विशेषान्वयव्यतिरेकग्रहकाले सामान्यधर्मयोरनुपस्थितौ, यदा च तत्काले सामान्यधर्मोपस्थितिस्तदा प्रत्यक्षत एव कारणताग्रह इति।

**अस्तु वेति** । यावतां विशेषाणां सामान्येन रूपेण सामान्यकार्यहेतुता तावतां स्वातन्त्र्येण विशेषेणावश्यं हेतुतेत्यर्थः, तथा च पदज्ञानादिकमपि स्वातन्त्र्येण विशेषे हेतुः स्यादिति भावः। पदज्ञानादिकं च तथा न हेतुरिति वाक्यार्थे ज्ञानमात्रस्य स्वातन्त्र्येण विशेषहेतुतायां तन्मात्रनिष्ठं च ज्ञानत्वमुक्तनियमरक्षायै सामान्यहेतुतावच्छेदकमस्त्वित्याह—**तेनेति** । **वाक्यार्थस्य**-वाक्यार्थमात्रस्य पाठान्तरे । यावत्सामान्यघटितविशेषधर्मो विशेषहेतुतावच्छेदकः तावतां सामान्यानां सामान्यकार्ये हेतुतावच्छेदकत्वनियम इत्यर्थः । तथा च वाक्यार्थज्ञानत्वयथार्थज्ञानत्वाभ्यामपि सामान्यकार्यहेतुताऽवच्छिद्यतामिति भावः । **अप्रामाण्यम्** । अग्राहकत्वम् ।

---

१. तदंशे एव साक्षात्वम् । अत एव प्रत्यभिज्ञाद्वैविध्यमिति ।

**प्रयोजकमस्त्यप्रमायां दोषवदिति चेत्—न, दोषाभावस्य सत्त्वादिति ।**

**उच्यते । प्रमामात्रे नानुगतो गुणः, किन्तु तत्तत्प्रमायां भूयोऽवय-**

आलोकः

यत्तु सामान्याहेतुत्वं विशेषहेतुत्वे बाधकमुपन्यस्तं तत्तु विपरीतनियमप्रतीति-निबन्धनम् । तथा हि—विशेषाहेतुत्वं सामान्याहेतुत्वे भवति तन्त्रम्, निर्विशेषितसामान्याभावात्, ग्राहकाभावाच्च । विशेषान्वयव्यतिरेकस्यैव सामान्यहेतुभावग्राहकत्वात् । तादृशान्वयव्यतिरेकस्य सामान्यहेतुतायामिव विशेषकारणतायामपि प्रमाणत्वात् । न तु सामान्याहेतुत्वमपि विशेषाहेतुत्वे, बीजाभावात्, अत एव यद्विशेषयोरिति नियमे बाधकाभावे सतीति विशेषणम्, अन्यथा विशेषहेतुत्वान्यथानुपपत्त्यैव तद्धेतुत्वावश्यकत्वे नियम एव स्यान्न तु बाधकाभावविशेषणप्रयोजनम् । अथ बाधकं विनेत्यस्याप्रक्षेपे सर्वसामान्यहेतुतापत्त्या प्रमेयाभिधेयहेतुतापि प्रसज्येत । तथा च तत्र व्यभिचारवारणाय तद्विशेषणम् । तेनायमर्थः—सामान्यत्वे सत्यपि यत्र न बाधकं तत्र हेतुतेति । अत एव यत्सामान्यं हेतुरिति नियमान्तरेऽपि बाधकाभावेऽपि

दर्पणः

शुकाद्युदीरितप्रमाणशब्दे तदभावादाह—**यथार्थेति** । तज्जन्यप्रमायामित्युपलक्षणम् । वाक्यसामान्यजज्ञाने पदज्ञानबुबोधयिषापूर्वकवाक्यज्ञानं वाक्यार्थज्ञाने हेतुरित्यपि द्रष्टव्यम् । तथा च शुकादिवाक्यजविसंवादिज्ञानविशेषे स्वातन्त्र्येण पदज्ञानस्य हेतुत्वमस्तीत्युक्तनियमोऽस्त्येवेति भावः ।

**दोषान्तरम्** । सामान्यहेतुत्वे विशेषाहेतुत्वम् । **ईश्वरज्ञानद्वारा** इत्युपलक्षणम् । उक्तगत्या चेति ज्ञेयम् ।

**स्थूलेति** । स्थूलावयवकेत्यर्थः भूयोवयवेन्द्रियसन्निकर्ष इत्यत्र भूयःपदेन स्थौल्याभिधानादिति भावः ।

**पक्षतावच्छेदकाविरोधीति** । पक्षतावच्छेदकावच्छिन्नपक्षनिष्ठसाध्यव्याप्यवत्त्वप्रमा पक्षतावच्छेदकावच्छिन्नसाध्यकानुमितिः ।

**ननु सामान्यं हेतुत्वमपीति**[1] । प्रमेयत्वाभिधेयत्वाभ्यामकार्यकारणभावेपि विशेषयोः कार्यकारणभावादिति **अत एवेति** । यत एवोक्तव्याप्तिर्न भवतीत्युत्सर्गः अत एव तज्ज्ञापनायात्र बाधं विनेति विशेषणम् । तथा च न सामान्ययोर्हेतुहेतुमद्भावाभावेन विशेषयोस्तदभावानुमानमिति भावः—

प्रमायां गुण इत्यर्थः । यद्वा पक्षतावच्छेदकसमानाधिकरणसाध्ये प्रमायामनुमितिप्रमायां यथार्थलिङ्गपरामर्शो गुण इत्यर्थः । गन्धप्रागभावावच्छिन्नपक्षकानुमितेरपि पक्षतावच्छेदकसमानाधिकरणसाध्ये प्रमात्वमिति भावः । इदमुपलक्षणम् । लाघवोपनीतधर्मवत्साध्यगोचरायामनुमितिप्रमायां तद्धर्मवत्साध्यवज्ज्ञानं गुण इत्यपि ज्ञेयम् ।

---

१. सामान्याहेतुत्वमपीति पाठः ।

वेन्द्रियसन्निकर्षयथार्थलिङ्गसादृश्यवाक्यार्थज्ञानानां यथायथं प्रत्येकमेव गुणत्वम्, अन्वयव्यतिरेकात्। तत्तत्प्रमायां पित्तादिलिङ्गभ्रमादीनां दोषत्ववत् प्रत्यक्षे विशेषदर्शनमपि गुणः, तदनुविधानात्।

ननु विशेषदर्शनहेतुरेव तद्धेतुरस्तु तद्व्यतिरेकादेव तदभावोपपत्तेः।

आलोकः

सतीति विशेषणम्। अन्यथा द्रव्यगुणसामान्यहेतुतायां तद्विशेषपृथिवीस्नेहादिष्वपि संयोगयोर्नानात्वे व्यतिरेकव्यभिचारः। एकजातीयत्वविवक्षायां गृह्यमाणारोपस्थले तदेव दोषतादवस्थ्यम्। नापि विशिष्टज्ञानजनकीभूतविशेषणसन्निकर्षस्तथा। तथा सति अयं प्रतीत्यादावेवेत्यन्यथासिद्धेः, सुरभि चन्दनमित्यादौ तदभावाच्च। तस्मात् विशेषणवद्विशेष्येन्द्रियसन्निकर्ष एव तदर्थं इति भावः। तेन गृह्यमाणारोपेऽन्यधर्मस्यापरत्रारोप उभयसन्निकर्षेऽपि न व्यभिचारः[1]। न च प्रथमचरमयोर्निर्विकल्पकाव्याप्तिसामान्यविशेषोभयैकप्रयोज्यत्वदोषप्रसङ्गः। प्रथमे तस्याप्रमात्वात्। प्रमात्वे वा विशेषणादिपदस्य ज्ञानविषयीभूतयावत्परत्वात्। न च न तु यावत्प्रत्येतव्येन्द्रियसन्निकर्षो हेतुरिति प्रमाणनिबन्धविरोधः। विशेष्यसन्निकर्षमात्रहेतुत्वनये तत्फक्किकावतारात्। विषयेन्द्रियसन्निकर्षत्वेन हेतुत्वं विषयत्वं यावत्येव न तु यावत्त्वमप्य-

दर्पणः

पक्षतावच्छेदकेति। अनुमितिविषयीभूतपक्षतावच्छेदकसम्बन्धाश्रयसाध्यस्य ज्ञानमित्यर्थः। नन्हेवमित्यादिना गुणान्तरं वक्ष्यति।

नन्वेक इत्ययुक्तम्—विशेषणेन रूपादिना संयुक्तसमवायस्य विशेष्येण घटेन संयोगस्य सन्निकर्षत्वात्। न च विशेष्यसन्निकर्षघटितविशेषणसन्निकर्षस्तदर्थः। दण्डीपुरुष इत्यादावभावादिति चेत्—न। एको विलक्षणो विशेष्यवृत्तिविशेषणसन्निकर्षो यद्वा विशेषणवद्विशेष्यसन्निकर्ष इति भावात्।

न च प्रथमेति। प्रथमे निर्विकल्पकाव्याप्त्युपगमे सामान्यविशेषयोज्यत्वदोषो न चेत्यर्थः।

एवमिति। ईश्वरज्ञानमादाय गुणसमर्थन इत्यर्थः।

पक्षतावच्छेदकेति। अनुमितिसमानविषयप्रमात्वादिनेत्यर्थः।

अत्र केचित् अनुमितिप्रमात्वादेरनन्तपदार्थघटितत्वेनाननुगतत्वात्, कारणशरीरेपि पक्षतावच्छेदकादेर्यत्वस्य चाननुगतत्वान्नैवमपि हेतुहेतुमद्भावः, किन्तु घटत्ववद्विशेष्यकघटत्वप्रकारकप्रत्यक्षे स्थूलघटावयवसंयोगो गुण इत्यादिक्रमेण सर्वत्रोहनीय इत्याहुः।

---

१. एवमित्यारभ्य व्यभिचार इति पर्यन्तो ग्रन्थभागोनोपलभ्यते आदर्शतालपुस्तके न पुस्तके च।

अन्यथा विशेषदर्शनमेव तत्र कुतो न स्यात् । तत्रापि तदपेक्षायामनवस्थानादिति चेत् । एवं व्याप्यविषयकव्यापकप्रत्यक्षनियमे अनुमिताविव पुरुषप्रत्यक्षे प्रामाण्यसंशयो न स्यात् । करादिमति पुरुषज्ञानत्वस्यानुव्यवसायेन निश्चयात् । तवापि विशेषदर्शनं दिना कथं व्यापकप्रत्यक्षमिति

आलोकः

वच्छेदकत्वेन प्रविष्टमित्यत्र वा तात्पर्यम् । चरमे तूक्तदोषप्रसङ्ग एव नास्ति । प्रमामात्रे ग्राह्ययथार्थज्ञानत्वेन शाब्दप्रमायां वाक्यकारणीभूततादृशज्ञानत्वेनैकपदार्थेऽपरपदार्थसंसर्गविषयक[1]यथार्थज्ञानत्वेन वा जनकत्वात् । न चैवमनुमित्यादावपि पक्षतावच्छेकसमानाधिकरणसाध्यप्रमात्वादिना जनकत्वमस्तु किमनेन गुणेनेति वाच्यं, गुणान्तरस्य गुणान्तरानपवादकत्वात् । यथा चोक्तरूपगुणान्तरसत्त्वेऽपि प्रत्यक्षादेर्ग्राह्यप्रत्यक्षत्वपक्षतावच्छेदकसमानाधिकरणसाध्यप्रमात्वयथार्थप्रवृत्तिनिमित्तज्ञानत्वादीनामपि—तत्तत् प्रयोजकता । अत एव शाब्दप्रमाया गुणान्तरं योग्यताप्रमा ।

ननु ग्राह्ययथार्थज्ञानमात्रं यदा प्रमामात्रे तन्त्रमुच्येत यदि ग्राह्यज्ञानमात्रं ज्ञानमात्रे तन्त्रं स्यादुक्तयुक्तेरिति चेत्—न । तत्र बाधकसत्त्वेन तथाऽभावादित्युक्तप्रायात् । ग्रन्थस्त्वेव योजनीयः—प्रमामात्रे नानुगतो गुण इत्यनन्तरमस्त्वित्यध्याहार्य्यम् । प्रत्येकमेव गुणत्वमित्यत्र केन वारणीयमित्यध्याहार्यम् । तेनाभ्युपगमसिद्धान्तरीतिः स्फुटा भवति । तथा चेदं पर्यवसितम् । अस्ति तावदनुगतमेव, यदि च तव रीत्येश्वरद्वेषान्न तथा सम्भवति तथापि प्रत्येकगुणत्वेऽपि सिद्धं नः समीहितम् । प्रमायां गुण-

दर्पणः

इति दिगिति । अत्र केचिदाहुः यथा गुणानुरोधेन सर्वज्ञसिदिः तथा ग्राह्यत्वभ्रमस्यैव सर्वत्र दोषत्वकल्पनान्नित्यभ्रान्तीपि कश्चित् । यथाहि शाब्दप्रमायां यथार्थग्राह्यज्ञानस्यान्वयव्यतिरेको दृष्टौ तथा शाब्दभ्रमे ग्राह्यभ्रमस्याप्यन्वयव्यतिरेको दृष्टावेवेति ।

अत्रोच्यते—तदभाववति तज्ज्ञानापेक्षया तदभाववज्ज्ञानमेव दोषो लाघवात् । अवश्यं हि भ्रमपूर्वमारोप्याभाववत्ता ज्ञानमस्ति । आरोपविषयाज्ञाने आरोपासम्भवात् । तथा च भ्रान्तपुरुषस्यैव ज्ञानं सर्वत्रदोष इति किं भ्रान्तान्तरकल्पनेन । न चैवं प्रामायामपि तद्वति तत्प्रकारकज्ञानापेक्षया तद्वत्ताज्ञानस्यैव गुणत्वमस्त्विति वाच्यम् । तावतापीश्वरसिद्धेः । न हि प्रमापूर्वं स्वकीयं विशेष्यज्ञानमावश्यकम् । कचिद्विशिष्टप्रत्यक्षस्य विशेषणस्मरणविशेष्यसांन्नकर्षात्सम्भवादिति संक्षेपः ।

व्याप्येति । यथार्थव्याप्यवत्ताज्ञानमित्यर्थः । प्रत्यक्षस्येति । सामान्यस्येत्यर्थः । प्रामाण्यव्याप्येति । पुरुषत्वव्याप्यवति पुरुषत्वज्ञानत्वादीत्यर्थः । न तु व्याप्यवद्विशेष्यकत्वमपीति । विशेष्यत्वांशाग्रहाद् याप्यवत्वांशे सत्तानिश्चयाभावाद्वेत्यर्थः । इदं

१. संसर्गविषयकेति पाठो नादर्शतालपुस्तके न च नपुस्तके ।

चेत्—न। संशयविपर्ययोत्तरप्रमायां तस्य हेतुत्वात्। ममापि तद्धेतु-

आलोकः

जन्यत्वात् तदनन्तरमनायत्या ईश्वरसिद्धिश्चेति। अत एवाग्रे यदि प्रत्येकगुणाताभ्युपगमेन सिद्धान्तस्तदानेश्वरसिद्धि[1]रित्यभिसंधाय वक्ष्यति—अत्र ब्रूम इति दिक्।

विशेषेति। व्याप्यदर्शनमित्यर्थः।

ननु 'तद्धेतो'रिति न्यायात् विशेषदर्शनहेतुरेव हेतुरिति तत्प्रत्यक्षमेव व्याप्यमपि गोचरयति। न त्वन्तराऽपि व्याप्यविषयकं ज्ञानमित्याशङ्कते—नन्विति।

अन्यथेति। विशेषदर्शनहेतुसत्त्व इत्यर्थः।

ननु विशेषदर्शनहेतुरपि विशेषदर्शनान्तरमेव। तथा च तद्धेतुहेतुत्वेऽपि विशेषदर्शनमेव हेतुरित्यागतमित्यत आह—तत्रापीति। अनवस्थाभिया विशेषदर्शनादन्यदेव 'तद्धेतु'रिति नोक्तन्यायेन विशेषदर्शनहेतुतेत्यर्थः।

एवमिति। व्याप्यदर्शनसामग्रीजन्यत्वे प्रत्यक्षस्य व्याप्यविषयतानियमेनानुव्यवसायेन प्रामाण्यव्याप्यधर्मोपनीतौ प्रामाण्यसंशयानुपपत्तेरित्यर्थः। यद्यपि व्याप्यवद्विषयकज्ञानत्वमात्रमनुव्यवसायेन[2] शक्योपनेयं, न तु व्याप्यवद्विशेष्यकत्वमपि, तथाऽपि पुरुषप्रत्यक्षप्रामाण्यसंशयाहितसंशयः पुरुष एवानुभूयते, न तु करादाविति

दर्पणः

चोपलक्षणम्। व्याप्यवद्विशेष्यत्वग्रहेऽपि तस्य प्रामाण्यव्याप्यत्वेन व्यावर्त्तकत्वेन चाग्रहात्क्वचित्संशय उपपद्यत एवेत्यपि द्रष्टव्यम्।

तत्प्रत्यक्षस्येति। पुरुषप्रत्यक्षस्येत्यर्थं। अप्रामाण्यशङ्काशून्यविरोधिज्ञानं सामान्यत एव स्थारसिकमन्याहितं वा संशयं प्रति विरोधीति भावः। इदञ्च मतभेदेनोक्तम्। तेनानुभवं पृच्छेत्यत्रोक्तं न विरुद्धयते।

वस्तुतोऽवधारणरूपं ज्ञानं संशयविरोधि। यथा च मम विशेषदर्शनजत्वमेवावधारणत्वे तन्त्रम्, तथा तवापि व्याप्यविषयकत्वमेव तत्र तन्त्रमिति क्वापि प्रत्यक्षे संशयो न स्यादिति मूलार्थः।

प्रत्यक्षहेतुत्वे। प्रत्यक्षसामान्यहेतुत्वे।

व्याप्यदर्शनं स्विति। धर्मिनिष्ठस्य[3] ग्राह्यव्याप्यस्य ज्ञानमित्यर्थः।

ननु यत्रैतादृशं व्याप्यं व्याप्यस्वेन न ज्ञातं, किन्तु स्वरूपेण, तत्र संशयविपर्ययोत्तरं प्रमापत्तिरित्यत आह—व्याप्येऽपीति।

---

१. तदा तेनेश्वरसिद्धिरिति कपुस्तके।
२. व्यवसायेनेति कपुस्तकपाठ।
३. धर्मनिष्ठस्येति गपुस्तकपाठः।

स्तत्रैव हेतुरिति चेत्—न। करचरणचिबुकादीनां प्रत्येकं विशेषत्वेन तद्धेतूनामननुगततया तादृशप्रत्यक्षे अहेतुत्वात्। तद्दर्शनेषु च व्याप्य-दर्शनत्वमनुगतमस्ति।

नन्वेवं संशयोत्तरं व्याप्यज्ञाने सत्यनुमितिः स्यान्न प्रत्यक्ष-

आलोकः

सर्वसिद्धम्। तथा च प्रत्यक्षमात्रस्य व्याप्यमात्रगोचरतया व्याप्यवत्तया भातेषु पुरुषेतु पुरुषप्रत्यक्षप्रामाण्यसंशयाहितसंशयविषयता न स्यात्, संशयविरोधिनो विशेषदर्श-नस्य विद्यमानत्वात्। न च प्रामाण्यसंशयाहितः संशयः प्रामाण्यग्रहरूपविशेषदर्शन-मात्रनिवर्त्यो विषये करादिमत्त्वदर्शनेऽपि तिष्ठति, अन्यथा प्राथमिकपुरुषनिश्चयादेव संशयानुत्पत्तेरिति वाच्यं, तत्प्रत्यक्षस्य शंकास्कन्दितत्वात्। न तु करादिज्ञानमपि तथा, सर्वत्र पुरुषज्ञानप्रामाण्यसंशये करादिसंशयावश्यम्भावस्य त्वयाप्यननुमतत्वा-दित्यत्र तात्पर्यम्। अक्षरार्थस्तु पुरुषप्रत्यक्षप्रामाण्यसंशयाहितसंशयो न स्यादित्येवं व्याख्येयः।

ननु विशेषदर्शनस्यापि प्रत्यक्षहेतुत्वे तद्दोषतादवस्थ्यम्। विशेषदर्शनानन्तरं प्रत्यक्षस्यापि अनुमितिवद्बाधकाभावेन व्याप्यविषयकत्वनियमात्। तथा च क्वचित् संशयदर्शनात् विशेषदर्शनं विनैव प्रत्यक्षमित्यकामेनापि स्वीकार्यम्, तत् कुतस्तद्-व्यभिचारिणस्तत्र जनकत्वमित्याशङ्कते—तवेति।

संशयेति। तत्र चाप्रामाण्यसंशयाभावस्योभयसम्मतत्वेनोक्तदोष इत्याशयः।

तद्धेतूनां तद्दर्शनहेतूनाम्।

दर्पणः

तद्धेतूनामननुगतत्वादिति दूषयति—व्याप्यदर्शनेति।

व्याप्यदर्शनं त्विति—व्याप्यत्वं स्विति।

तत्सामग्रीति। घटगन्धप्रत्यक्षसामग्रीत्यर्थः।

तदुत्तरेति। घटगन्धसंशयो च न तच्चक्षुर्घ्राणजाविति न व्यभिचारः।

यद्वेति। प्रतिबन्धकाधीनविशेषादर्शनपूर्वकसंशयतिपर्ययोत्तरप्रत्यक्षे विशेषदर्शनं हेतुरित्यर्थः। इदमुपलक्षणम्। विशेषादर्शनप्रयुक्तसंशयविपर्ययोत्तरप्रत्यक्षे विशेषदर्शन हेतुरित्यपि भाव्यम। प्रासंगिकं विशेषदर्शनस्याव्यभिचारसमर्थनं कृत्वा उक्तसामग्र्या तस्यान्यथासिद्धि निराकर्तुमनुवदति यस्त्विति।

चक्रभ्रमिजनकदण्डत्वेन कारणत्वस्य वक्ष्यमाणत्वात्तत्तुल्यन्यायेन इदमपि संभवत्येवेत्यस्वरसदाह—वस्तुतस्त्विति।

मनुमितिसामग्रचा बलवत्त्वादिति चेत्—न। अन्यत्र तथात्वेप्यत्र

आलोकः

व्याप्यदर्शनत्वमिति। व्याप्यत्वेन दर्शनं संशयाद्युत्तरं प्रत्यक्षमात्रे जनकम्। व्याप्यदर्शनं तु तत्तदुत्तरप्रमायामिति विभागः। व्याप्यग्रहेऽपि व्याप्यत्वाग्रहे तदुत्तरप्रमानुत्पत्तिः, सामान्यहेत्वभावादित्यत्रावधेयम्।

अत्र वदन्ति—व्याप्यदर्शनसामग्रीत्वं तदुत्तरज्ञाने जनयितव्ये, व्याप्यत्वन्तु तदुत्तरप्रमायामनुगतं जनकतावच्छेदकमस्त्विति।

अत्र ब्रूमः—संशयमात्रोत्तरप्रत्यक्षमात्रे न विशेषदर्शनं हेतुः, अन्धकारे घटसंशयोत्तरघटप्रत्यक्षस्य तद्विनाऽप्यालोकसमवधानमात्रेणोत्पत्तेः। किं बहुना कुंकुमगन्धसंशयोत्तरतत्प्रत्यक्षस्य तैलादिसम्बन्धादेवोत्पत्तेः। न हि तदुभयन्तद्व्याप्यं तद्व्याप्यतया गृहीतं वा, किन्तु तत्सामग्री, साऽपि सत्त्वेन न हेतुस्तज्जनकत्वरयैव

दर्पणः

नाननुगमेति। इदमुपलक्षणम्। व्याप्यदर्शनसामग्र्यपेक्षया व्याप्यदर्शनस्य लघुत्वादेव हेतुत्वसंभवादिति। स्वरूपसद्व्याप्यस्य संशयविपर्ययोत्तरप्रमाकारणत्वमस्त्विति न दूषितम्, तुच्छत्वात्। तथाहि—सामान्यतो व्याप्यदर्शनस्य कारणत्वे गृहीते तस्यैव प्रमात्वपुरस्कारेण प्रमारूपकार्यविशेषहेतुत्वे संभवति कारणान्तरकल्पना गौरवग्रस्तैव। किं च व्याप्यस्य कारणत्वे लौकिकप्रत्यक्षमात्रे तस्य कारणत्वसंभवान्न संशयविपर्ययोत्तरप्रत्यक्षरूपे विशेषे हेतुत्वमिति। किं च पुरुषत्वव्याप्यापेक्षया पुरुषत्वं लघ्विति तस्यैव हेतुत्वमुचितम्। तस्मात्संशयविपर्ययोत्तरप्रत्यक्षे विशेषदर्शनं तत्प्रमायां तत्प्रमा हेतुरिति भावः।

माथुरी

तद्वृत्ति तत्प्रत्यक्षभ्रमविरोधित्वं तद्भ्रमोत्तरप्रत्यक्षकारणतावच्छेदकमित्यर्थः। तथा च पीतः शङ्ख इत्यत्र यद्विशेषदर्शनं तन्न पीतत्वप्रत्यक्षभ्रमविरोधीति भावः। ननु श्वैत्यविशेषदर्शनं कुतो न पीतत्वप्रत्यक्षभ्रमविरोधि इत्यत आह, 'प्रत्यक्षेति, 'प्रत्यक्षविशेषदर्शनं' प्रत्यक्षविपरीतनिश्चयः, तदेव 'विरोधि', न तु विशेषदर्शनानुमानिकविपरीतनिश्चयादीत्यर्थत्[1], 'दिङ्मोहइति, 'तथादर्शनात्' प्राचीत्वव्याप्यसूर्योदयशालित्ववतीयमितिविशेषदर्शन-अहं न गौर इत्यानुमानिकविपरीतनिश्चययोः प्रतिबन्धकत्वदर्शनात्। ननु प्रत्यक्षात्मकपीतत्वविपरीतनिश्चय एव कुतो न भवतीत्यत आह, 'तच्चेति, तच्च' प्रत्यक्षात्मकविपरीतनिश्चयश्च, यद्यपि प्रत्यक्षभ्रमे प्रत्यक्षविपरीतनिश्चय एव विरोधीति 'यद्विशेषदर्शनं भ्रमविरोधि तद्भावः प्रमाहेतुः' इति ग्रन्थोऽसङ्गतः विशेषदर्शनस्य प्रत्यक्षभ्रमाविरोधित्वात्, तथापि यत् यत्प्रत्यक्षभ्रमविरोधि तद्वृत्ति तत्प्रत्यक्षभ्रमविरोधित्वं तद्भ्रमोत्तरप्रत्यक्षप्रमाकारणतावच्छेदकं तच्च प्रकृते विशेषदर्शनं विपरीतनिश्चय एव न विशेषदर्शनमित्यर्थः।

१. व्याप्यदर्शनानुमानिकविपरीतनिश्चयादीत्यर्थं इति ख०।

प्रत्यक्षसामग्र्या बलवत्त्वात्। तत्र[1] पुरुषं पश्यामीत्यनुव्यवसायात्।

आलोक:

तज्जनकतावच्छेदकत्वापत्तेः, किं तु संशयविरोधीत्वेन, तत्र च निश्चयसामग्रीत्वं तन्त्रमित्यन्यदेतत्। किन्तु यदिन्द्रियजन्यो यः संशयस्तदुत्तरतदिन्द्रियजन्यनिश्चयो, यद्वा यत्र विशेषादर्शनं प्रतिबन्धकाधीनं तत्र विशेषदर्शनं हेतुः। अत्र तु न तदधीनं, किन्तु कारणाभावाधीनम्।

यत्तु व्याप्यदर्शनसामग्रीत्वम् अनुगमकमिति–तदतिस्थवीयः। अयं प्रति पूर्ववर्त्तित्वे गृहीतेऽन्यत्रान्यथासिद्धत्वेन ज्ञानं प्रत्याकाशवदहेतुत्वात्। विशिष्टज्ञाने तु यद्विशेष्यज्ञानसामग्री हेतुस्तत्र विशिष्टज्ञानस्य विशेष्यज्ञानत्वेन अयं प्रतीत्यस्याभावात्।

दर्पण:

अत्र कश्चिदाह—यत्र संशयस्तत्र विशेषदर्शनाभावे सति प्रत्यक्षं न जायते, तदभावे च जायते। यत्र तु न संशयस्तत्र तेन विनापि जायत इति प्रत्यक्षसामान्ये विशेषदर्शनविरहविशिष्टसंशयस्य प्रतिबन्धकत्वात्तदभावः कारणम्। स च क्वचिद्विशेष्यसंशयविरहात्, क्वचिद्विशेषणविशेषादर्शनविरहात्। न चैवं दाहे उत्तेजकस्येव विशेषदर्शनस्य प्रत्यक्षहेतुता न स्यादिति वाच्यम्, विशेषदर्शनत्वेन हेतुत्वाभावे इष्टापत्तेः। प्रयोजकत्वमात्रस्य विशिष्टाभावसंवादकत्वेनेष्टत्वात्। एवं विपर्ययोपि विशेषादर्शनविशिष्टः प्रतिबन्धकः, तदभावश्च कारणमिति विशेषदर्शनमुत्तेजकतया न कारणम्। अन्यथा विशेषदर्शनत्वेन संशयविपर्ययोत्तरप्रत्यक्षं प्रति कारणत्वांगीकारे संशयस्थले यत्र विशेषदर्शनविरहस्तत्र प्रत्यक्षसामान्यसामग्रीसत्त्वे प्रत्यक्षोत्पादो दुर्वारः। तदसत्त्वे तस्मादेव संशयोत्तरप्रत्यक्षविरहः कृतं विशेषदर्शनस्य हेतुत्वेनेति। न चैवं प्रत्यक्षे विशेषदर्शनमपि गुण इति ग्रन्थविरोधः, विशेषदर्शनत्वेनासाधारण्येन

माथुरी

किञ्च[2] 'यद्विशेषदर्शनं भ्रमविरोधि' यत्प्रत्यक्षप्रमानुपधायकं वस्तुतो यदव्यवहितोत्तरं यत्प्रत्यक्षभ्रमो न भवतीति यावत्, तद्भावः' तत्स्वरूपं तद्विशेषदर्शनमिति यावत्, 'प्रमाहेतुः' तद्भ्रमोत्तरप्रत्यक्षप्रमाफलोपधायकं, यद्विशेषदर्शनव्यक्तेरव्यवहितोत्तरं यत्प्रत्यक्षभ्रमो न भवति सैव विशेषदर्शनव्यक्तिः तद्भ्रमोत्तरप्रत्यक्षप्रमाफलोपधायिकेति वस्तुस्थितिरिति समुदायार्थः। प्रकृते श्वैत्यविशेषदर्शनं एवं न भवति तदुत्तरमपि पीतत्वभ्रमस्योत्पत्तेरिति भावः। ननु श्वैत्यविशेषदर्शनोत्तरं कथं पीतत्वभ्रमः विशेषदर्शनस्य भ्रमप्रतिबन्धकत्वात् इत्यत आह, 'प्रत्यक्षेति, अर्थस्तु पूर्ववत्। अथ

१. संशयोत्तरमात्रे इति कनपुस्तकयोः पाठः।

२. किञ्चेत्यादिग्रन्थस्य पूर्वं "ननु विशेषदर्शनं कथं न प्रत्यक्षभ्रमविरोधि इत्यत आह, 'प्रत्यक्षेति, 'प्रत्यक्षविशेषदर्शनं' प्रत्यक्षविपरीतनिश्चयः, तदेव विरोधीत्यर्थः" इत्ययं पाठः आदर्शपुस्तकेषु वर्त्तते, परस्त्वयं न समीचीनः 'प्रत्यक्षविशेषदर्शनं' इति मूलपाठस्य पूर्वमेव धृतत्वात्।

आलोकः

वस्तुतस्तु व्याप्यदर्शनसामग्री प्रत्यक्षानुमानादिरूपतया नानाविधा। न च तादृशसामग्र्याः संशयोत्तरप्रत्यक्षं प्रति जनकत्वं, जातिसंकरप्रसङ्गात्। तस्मात् अयमर्थः-तद्धेतूनां विशेषदर्शनहेतूनां, अननुगततया प्रत्यक्षादिरूपत्वेन नानाविधतया, तादृशस्य परस्परविजातीयस्य प्रत्यक्षेऽहेतुत्वात्। अनुमानादीनां प्रत्यक्षजनकत्वे विरोधात्। तद्दर्शने तु तत्त्वमनुगमकमिति नाननुगमजातिसंकरादिरपीति।

दर्पणः

त्वया कारणत्वानङ्गीकारादिति वाच्यम्। तत्त्वेन सामान्यतः कारणत्वानङ्गीकारेपि संशयविपर्ययोत्तरप्रमायां विशेषप्रमात्वेन गुणत्वाङ्गीकारादिति।

अपरस्त्वाह—विशेषदर्शनसहकृतसंशयस्य प्रतिबन्धकत्वे मानाभावात् आवश्यकदोषेणैव कार्याभावोपपत्तेः। तथा हि संशयोत्पत्तिकालीनपुरुषत्वनिश्चयाभावे दोष एव तन्मम्। कार्ये समानकालीनप्रतिबन्धकाभावहेतुत्वमादाय संशयसामग्रीप्रतिबन्धकत्वमादाय वा तवान्यथासिद्धावपि धर्मिज्ञानकाले दैवाधीनपूर्वोत्पन्नसंशयाजनकपुषषत्वस्मृतिमतः कुतो न पुरुषत्वनिश्चयो यदि दोषो न प्रतिबन्धकः, विशेषदर्शने च सति विशेषादर्शनरूपदोषविरहादेव कार्यं, न तु विशिष्टस्य प्रतिबन्धकतया तदभावः कारणम्। न चैवं विशेषदर्शने सति संशयानुत्तरप्रत्यमपि न स्यात् दोषसत्त्वादिति वाच्यम्, तत्र तस्यादोषत्वात्, फलवलेन क्वचिदेव तस्य दोषत्वादिति। एवं व्यभिचारसशयादेरपि नाव्यभिचारनिश्चयादौ प्रतिबन्धकत्वं, किन्तु तत्रत्यविशेषादर्शनादेर्दोषत्वैबति।

माथुरी

पीतत्वविपरीतप्रत्यक्षनिश्चय एव कथं न जायते इत्यत आह, 'तच्चेति। यद्यपि विशेषप्रमात्वेन कारणता, भ्रमोत्तरप्रत्यक्षप्रमात्वेनैव कार्य्यता, तथापि विशेषदर्शने सत्यपि पीतः शङ्ख इत्यनन्तरं न श्वैत्यप्रमा दोषरूपप्रतिबन्धकसत्त्वादिति भावः।

'अनुमित्यादिरिति, प्रमेतिशेषः। 'सत्येति यथार्थपरामर्शादिरूपगुणस्य कारणत्वमित्यर्थः। ननु यत्र एतेषां भ्रमः प्रमा च नास्ति तत्र अनुमित्यादिसामान्यकारणपरामर्शाद्यभावादेव तेषामभावः किं गुणस्य कारणत्वेनेति चेत्। न। अनुमित्यादिभ्रमेऽपि यथार्थपरामर्शादिरूपगुणभाव एव कारणमस्तु न दोषः, यत्र तु यथार्थपरामर्शाद्यभावोऽस्ति अयथार्थपरामर्शादिरूपदोषोऽपि नास्ति तत्रानुमित्यादिसामान्यकारणपरामर्शाद्यभावादेव तेषामभावः किं दोषस्य कारणत्वेन इत्यस्यापि सुवचत्वे विनिगमनाविरहादुभयोरपि हेतुत्वात्। 'वेदे तु' वैदिकस्थले तु, 'भ्रमादिः' भ्रमः, प्रमादः, विप्रलिप्सा, करणापाटवं, 'प्रमा' यथार्थशब्दज्ञानं। 'लोके' लौकिकस्थले, 'भ्रमाद्यभाव एव' भ्रमाद्यभावसत्त्व एव। 'तत्रेति लौकिकस्थले उभयोरेव सत्त्वेन लाघवाद्यथार्थवाक्यार्थज्ञानस्यैव हेतुत्वेन क्लृप्तत्वात् इत्यर्थः। 'तादृशः' यथार्थशाब्दबुद्धिजनकः, 'अन्यथा' यथार्थवाक्यार्थज्ञानं विना तादृशवाक्यप्रयोगे, 'तत्र' लौकिक-

आलोकः

अन्यत्रेति । **विषयभेद इत्यर्थः । अत्र विषयैक्ये ।**

**नन्वेवमनुमित्सयाऽपि नाध्यक्षविषयानुमितिः स्यादित्यनुमितिसामग्र्यबलवत्त्वमित्यस्यानुमितिसामग्र्यभावोऽर्थः। तथा हि— पक्षताऽनुमितिसामग्रीनिविष्टा न च सिसाधयिषाविरहसहकृतानुमानातिरिक्तमानाभावरूपा सा । अनुमानातिरिक्तप्रत्यक्षप्रमाणस्थले संशयोत्तरप्रत्यक्षे ।**

**यद्वा अनुमित्यापत्त्याऽत्र विशिष्टधीरेव न, किन्तु करादि पुरुषत्वव्याप्यम्, जयश्च करादिमानिति ज्ञानद्वयादेव संदेहोत्तरप्रत्यक्षम् । तथा च सर्वत्र प्रत्यक्षसामग्री**

दर्पणः

तदयं निर्गलितार्थः । न विशेषदर्शनस्य विशेषकारणत्वं येन कार्य्यसामान्यापत्तिः । नापि विशेषादर्शनसहकृतसंशयाभावः सामान्यकारणं, मानाभावात् । किंतु दोषाभावः प्रमानामान्यकारणं विशेषदर्शनमपि तदन्तर्गतमेवेति ।

**चिन्तामण्युक्तिस्तु** मतभेदेनेति । तदुभयमपि न विशेषदर्शनं यत्र भ्रमरूपं तत्र संशये सत्यपि प्रत्यक्षं भ्रमरूपं न भवत्येवेति दोषतया विशेषभ्रमस्य संशयविपर्ययोत्तरप्रत्यक्षभ्रमहेतुत्वस्यावश्यकत्वे सामान्यतो विशेषदर्शनस्य हेतुत्वे च 'सामान्य'[1] इति न्यायेन प्रमाविशेषे विशेषप्रमाया हेतुत्वात् ।

**किञ्चेति ।** अपरेण स्थलविशेषे विशेषादर्शनं दोष इति वदता संशयकालीनविशेषादर्शनस्य दोषत्वाभ्युपगमे विशेषणविशेष्यपरीवर्त्तनमात्रं कृतमिति ।

वच्च **केनचिदुक्तं**—'विशेषदर्शनस्य विशेषेकारणत्वे संशयस्थले तद्विरहदशायां कार्यसामान्यापत्तिरिति—तन्न, संशयविपर्ययानुत्तरप्रत्यक्षेऽनवधारणरूपे भ्रामाभावस्य

माथुरी

स्थले, 'वक्तृज्ञानं' वक्तृयथार्थवाक्यार्थज्ञानं, 'तस्येति, 'तस्य' वाक्यार्थज्ञानस्य, 'अहेतुत्वात्' वाक्याहेतुत्वात् । भ्रमाद्यभावसत्त्वे यथार्थशब्दबोधोत्पत्तिः, भ्रमादिसत्त्वे तदनुत्पत्तिरिति सोऽपि कारणमित्यभिप्रायवानाह, 'अस्तु वेति । 'न चेति, 'नित्यनिर्दोषत्वात्' नित्यत्वविशिष्टभ्रमादिषाजन्यानुपूर्वीमत्त्वात्, 'प्रामाण्योपपत्तौ' प्रमाजनकत्वोपपत्तौ, 'अपरिदृष्टः' अक्लृप्तः । 'फलमुखस्येति कार्य्य-कारणभावग्रहोत्तरकालीनप्रमाणवद्गौरवज्ञानस्येत्यर्थः, कथं तस्यादोषत्वमित्यत आह, 'पूर्व्वमिति कारणताग्रहपूर्व्वं फलानुपस्थित्या कारणताग्रहसमये गौरवज्ञानाभावादित्यर्थः, उक्तकार्य्यकारणभावस्य व्यभिचारमाङ्क्ते, 'लोके इति लौकिकानुपूर्व्यामित्यर्थः ।

ननु लौकिकस्थले लाघवात् शाब्दप्रमात्वेन कार्य्यता, वक्तृयथार्थवाक्यार्थज्ञानत्वेन कारणतेति यदुक्तं तत् वैदिकस्थले व्यभिचारि वक्तुरश्रूयमाणत्वेन प्रमाणाभावात् वेदस्य वक्तुरभावात् अतः लौकिकस्थलेऽपि भ्रमादिदोषाजन्यवाक्यत्वेन कारणता इत्येवाह, 'अथेति, कर्तस्मरणादे' अश्रूयमाणकर्त्तृकत्वादेः, 'बाधकात्'

१. 'वस्सामान्य' इति न्यायेनेति गपुस्तकयाः ।

अत एव विशेषदर्शनजन्यत्वेन ज्ञातं बाधकम्[1]। तद्दर्शनजन्यं बाध्यम्[2]।

आलोक:

बलवतीत्यनुमितिसामग्र्येव न, पश्यामीत्यनुव्यवसायसाक्षिकप्रत्यक्षताबलेन प्रामाणिकतया कल्पनागौरवस्यादोषत्वादिति चेत्—

मैवम्। पक्षतायाः संशयस्थलेऽपि सत्त्वमिति वक्ष्यमाणत्वात्। अनुमितिप्रत्यक्षयोः सामग्रीभेदमात्रसिद्ध्यानुमितौ ज्ञानद्वयमन्यत्र विशिष्टधीरित्यस्यापि सुवचत्वात्।

अत्रोच्यते—इच्छाघटिता सामग्री बलवतीत्याहार्यज्ञानादौ क्लृप्तत्वात् सिसा-

दर्पण:

संशयविपर्ययोत्तरप्रत्यक्षेऽवधारणरूपे विशेषदर्शनस्य हेतुत्वात्। न चैवं कारणद्वयाङ्गीकारे गौरवम् अ, धारणानवधारणविभागबाध्यबाधकत्वव्यवस्थान्यथानुपपत्त्वा गौरवस्य प्रामाणिकत्वात्।

नन्ववधारणत्वं मामेतरकोटिव्यवच्छेदविषयत्वम्। तच्चेतरकोट्यभावग्राहकसामग्रीवशादेवोपपन्नमिति किं विशेषदर्शनहेतुत्वाभ्युपगमेनेति—

मैवम्। विशेषदर्शनं बिना घटोऽयं न पट इति निश्चयेपि अवधारणत्वाभावात्। तस्मादवधारणत्वं जातिः यदालिङ्गितं ज्ञानं अत्याहितयापि शङ्कया नाभिभूयते, सा च जातिर्यद्यपि नाना तथापि शङ्काविरोधित्वेनानुगमान्न दोषः। आप्तवाक्यादिना संशयविरोधितर्कादिना च यत्र संशयोत्तरप्रत्यक्षं तत्र व्याप्यदर्शनं व्यभिचरणीति चेत्—न, भ्रमविरोधिदर्शनत्वेन भ्रमविरोध्यदर्शनप्रयुक्तसंशयविपर्ययोत्तरप्रत्यक्षं प्रति हेतुत्वात्।

माथुरी

सकर्तृकत्वे बाधकात्, निर्दोषत्वेन' जन्यतासम्बन्धेन भ्रमादिदोषाभावसत्त्वेन, 'प्रमाहेतुत्वमिति शाब्दप्रमाहेतुत्वमित्यर्थः, न तु शाब्दप्रमात्वेन वक्तृयथार्थवाक्यार्थज्ञानत्वेन वक्तुरश्रूयमाणत्वेन प्रमाणाभावात् वेदस्य वक्तुरभावेन वैदिकस्थले व्यभिचारादिति भावः। अथ वेदस्य दोषाजन्यत्वे किं मानमित्यत आह, 'वेदे त्विति' 'नित्यत्वेनेति नित्यानुपूर्वीकत्वेनेत्यर्थ, यथाश्रुतन्तु न सम्यक् केवलनित्यत्वस्य लौकिकसाधारणत्वात्। 'निराकरिष्यमाणत्वादिति "प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते" एवं "यतो वेदाश्च" इत्यादिना वेदस्यापि बहुश्रुतेरित्यर्थः। दोषाजन्यवाक्यत्वेन कारणता, शाब्दप्रमात्वेन कार्य्यता एतस्य व्यभिचारमाशङ्कते, 'भ्रान्तेति, 'संवादात्' घटादिरूपविषयस्याबाधितत्वात्, 'प्रमाणे' शाब्दप्रमाजनके, 'तदभावात्' दोषाजन्यत्वाभावात्, तथा च तज्जन्यप्रमायां व्यभिचार इति भावः। 'दैवेति चैत्यवन्दनमिष्टसाधनमित्यादिज्ञानं विना प्रयुक्तं चैत्यं बन्देतेत्यादिकं वाक्यमित्यर्थः, 'शुकेति वह्निना सिञ्चतीत्यादि शुक-बालकवाक्यमित्यर्थः, 'प्रमाणं स्यात्' शाब्द-

१. भ्रमत्वज्ञापकमित्यर्थः। २. भ्रमत्वेन व्याप्यम्।

अन्यथा[1] बाध्यबाधकव्यवस्था न स्यात् । न च प्रमा बाधिका, करभ्रम-जन्यपुरुषज्ञानस्यापि स्थाणुज्ञानबाधकत्वात् । नापि विपरीतबोधकत्वेन

आलोक:

घर्षिषाविषये यथोक्तनियम एवादरणीयो बाधकाभावात् । इदञ्चैकत्रो[2]भयसामग्री-सत्त्वे द्रष्टव्यम् । अन्यथा पर्वतप्रत्यक्षस्यापि दुर्वारत्वमिति दिक् ।

बाधकमप्रमात्वज्ञापकम्, बाध्यमप्रमात्वेन ज्ञाप्यम्, न त्वनुत्पादकरूपो बाधः ज्ञातमिति विरोधात् ।

अनन्यथेति । यद्यनन्यथासिद्धत्वं प्रमात्वं तदा दत्तमुत्तरं प्राक् ।

दर्पण:

यद्वा तत्रावधारणाभावान्न व्यभिचारः ।

ननु तथापि संशयसामग्र्यभावस्यावश्यं कारणत्वाद्विशेषदर्शनत्वेन कारणत्वे मानाभाव इति चेत्—अवधारणवैचित्र्यान्यथानुपपत्तेरुक्तत्वादिति ।

ननु विशिष्टाभावहेतुत्वे कारणाल्पत्वलाघवम् । तथा हि विशेषादर्शनसहकृत-व्यतिरेकज्ञानत्वेन सामान्यतः प्रतिबन्धकत्वात्तदभावः सामान्यकारणं, संशयसामग्र्य-भावश्च निश्चयं प्रति हेतुरित्युभयमेव मम कारणम् । विशेषदर्शनहेतुत्वे तु संशय-विपर्ययोत्तरप्रत्यक्षे विशेषदर्शनं, सामान्ये व्यतिरेकनिश्चयाभावः, निश्चये संशय-सामग्र्यभावश्च हेतुरिति कारणत्रयमिति ।

न च गन्धप्रागभावावच्छिन्नपक्षकानुमितौ बाधस्याप्रतिबन्धकत्वापत्त्या व्यति-रेकनिश्चयस्य पृथगेव प्रतिबन्धकत्वे विशिष्टाभावहेतुत्वेपि कारणत्रयमिति वाच्यम्,

माथुरी

प्रमाजनकं स्यात् । ननु शब्दानुपजीविप्रमागबोधितार्थकेतरवाक्यत्वेन कारणता शाब्दप्रमात्वेन कार्य्यता वाच्या, वेदस्तु एवं भवत्येव, तथा च वह्निना सिञ्चतीत्यादि शुक-बालकादिवाक्यन्तु शब्दानुपजीविप्रमाणं प्रत्यक्षादिप्रमाणमेव तद्बोधितार्थकमेव, न तदितरदिति नान्वयव्यभिचार इत्यत आह, 'प्रमाणेति, 'प्रमाणबोधितार्थकेतरत्वेन, वह्निना सिञ्चतीत्यादिवाक्यार्थस्तु भ्रमजनकबोधित एव न प्रमाणबोधित इति भावः । यथार्थवाक्यार्थज्ञानत्वेन कारणता शब्द-प्रमात्वेन कार्य्यता वाक्यन्तु व्यापार इति बोध्यं, एतस्यैव व्यभिचारमाह, 'नन्विति, 'वाक्यं' पयसा सिञ्चतीत्यादिवाक्यमित्यर्थः, 'कथं प्रमाणं' कथं प्रमा जनकमित्यर्थः, 'गुणजन्यत्वाभावात्' यथार्थवाक्यार्थज्ञानजन्यत्वा-भावात् । 'न चेति, 'गुणाजन्यत्वात्' यथार्थवाक्यार्थज्ञानाजन्यत्वात्, 'वक्तृतात्पर्य्या-विषयत्वाच्च' वक्तुर्यत्किञ्चित्तात्पर्य्यकत्वाभावाच्च वक्तुः किञ्चिद्बोधेच्छया उच्च-रितत्वाभावाच्चेति यावत् । इदन्तु शुकवाक्यस्य प्रमाजनकत्वाभावे हेतुः न तु

१. कस्यचिदपि ज्ञानस्य विशेषदर्शनाजन्यत्वे इति भावः ।

**बाधकत्वं, बाध्यतुल्यत्वात्। अनन्यथासिद्धं बाधकमिति चेत्—न। विशेषदर्शनजन्यत्वस्यैव तदर्थत्वात्[1]।**

### आलोकः

अथ प्रमात्वेन ज्ञातं तदाह—विशेषेति। विशेषदर्शनजन्यत्वस्यैव तदर्थत्वात् तत्पर्यवसन्नत्वात्। विशेषदर्शनजन्यत्वेनैव तत्प्रमाण्यानुमानादिति यावत्। न हि समानविषयज्ञानयोः अन्यतरस्याप्रमाण्यमन्यतरस्मिन् विनिगमकप्रवृत्ति विना शक्यग्रहं, न च विनिगमकं विशेषदर्शनजन्यत्वादन्यदिति भावः।

### दर्पणः

विशेषादर्शनसहकृतव्यतिरेक ज्ञानं प्रतिबन्धकमित्यव विरोधिविशेषदर्शनाभावस्य विवक्षितत्वात्। तस्य चोक्तबाधस्थले सत्त्वात्। गन्धव्याप्यपृथिवीत्वज्ञानस्य प्रागभावज्ञानविरोधित्वादिति।

यत्तु तदिन्द्रियजन्यप्रत्यक्षे तदिन्द्रियजन्यव्यतिरेकज्ञानस्य विशेषादर्शनसहकृतस्य प्रतिबन्धकत्वमस्तु, तथा च प्रागभावावच्छिन्नपक्षकानुमितावुक्तदोषो न भवतीति कैश्चिदुद्धृतम्—

तन्न। घटे गन्धो नास्तीति घ्राणजन्यभ्रमरूपप्रत्यक्षदशायां गन्धव्याप्यपृथिवीत्वज्ञाने गन्धप्रत्यक्षतापत्तेः।

न च तदिन्द्रियजन्यविशेषदर्शनमेवोत्तेजकमिति वाच्यम्, घृतादौ पृथिवीत्वसन्देहप्रयुक्तगन्धसन्देहे प्रकारान्तरजन्यपृथिवीत्वनिश्चयात्, घ्राणजगन्धनिश्चयदर्शनादिति। तस्माद्विशेषदर्शनहेतुत्वे कारणबहुत्वगौरवमिति।

मैवम्। गौरवस्य प्रामाणिकत्वात्। अन्यथावधारणानुपपत्तेरुक्तत्वादिति।

### माथुरी

भ्रान्ताप्रतारकवाक्यस्य, तस्य वक्तुर्यत्किञ्चित्तात्पर्य्यकत्वात्। 'तदिति शुकादिवाक्यं भ्रान्त-प्रतारकवाक्यञ्च न प्रमाजनकमित्यर्थः 'संवादेन' अबाधितार्थविषयकशाब्दबोधकजनकत्वेन, 'साध्ये बाधादिति प्रमाजनकत्वाभावस्य बाधितत्वादित्यर्थः। अथ वक्तृज्ञातवाक्यार्थाबाधो न योग्यता कुत्रचिदपि तस्या अभावात्सर्व्वत्रैवावश्यं वक्तृज्ञातयत्किञ्चिद्वाक्यार्थबाधस्य सत्त्वात्किन्तु प्रकृतवाक्यकारणीभूतवक्तृज्ञानविषयवाक्यार्थाबाधो योग्यता वाच्या तथासति आह, 'घटवतीति घटवति घटो नास्तीति भ्रमस्य भिन्नविषयतया घटोऽस्तीति भ्रान्त-प्रतारक वाक्यहेतुत्वादित्यर्थः, तथा च तद्विषयस्य बाधितत्वे का क्षतिरिति भावः। कुत्रचिद् घटवति पटोऽस्तीति पाठः, तदा घटवति पटोऽस्तीतिभ्रमस्य भिन्नविषयतया घटोऽस्तीतिभ्रान्त-प्रतारकवाक्ये अहेतुत्वादित्यर्थः। ननु शुकादिवाक्यस्थले भ्रान्त-प्रतारकवाक्यस्थले च प्रकृतवाक्यकारणीभूतवक्तृज्ञानविषयवाक्यार्थाप्रसिद्धेः तद् बाधरूपयोग्यताया अभावादेव न

---

१. तज्ज्ञापकत्वादिति भावः।

न च पीतः शङ्ख इत्यत्र विशेषदर्शनेऽपि श्वैत्यप्रमा नेति न तद्धेतः, यद्विशेषदर्शनं हि भ्रमविरोधि तद्भावः प्रमाहेतुः। प्रत्यक्षभ्रमे

आलोकः

यदिति। संशयविपर्ययोत्तरप्रत्यक्षं प्रति तदुभयविरोधित्वेन विशेषदर्शनस्यापि जनकता न विशेषदर्शनत्वेनेत्युक्तम्। तथा च तदेव व्याप्यदर्शमपि, तत्र जनकं यद्भ्रमविरोधि तच्च तदेव। यच्छ्वैत्यप्रत्यक्षाव्यभिचारिव्याप्यदर्शनं तत्तु पित्ताद्युत्तरकालीनं, न तु व्याप्यदर्शनमात्रं, शङ्खत्वग्रहे व्यभिचारादित्यर्थः।

दर्पणः

वस्तुतस्तु तवापि कारणत्रयमेव। तथा हि सामान्येन रूपेण हेतुत्वमसङ्गतम्। तद्धि निश्चयं प्रति वा विशिष्टज्ञानं प्रति वा। नाद्यः, विशेषादर्शनकालीनव्यतिरेकनिश्चयस्य संशयं प्रत्यपि प्रतिबन्धकतया तदसंग्रहात्। न द्वितीयः, संशयं प्रति विशेषादर्शनसहकृतसंशयस्याप्रतिबन्धकत्वात्। किञ्च विशिष्टाभावापेक्षया विशेषदर्शनं लघु। न च विशिष्टाभावकारणत्वपक्षे कार्यादिविशिष्टं लाघवमिति वाच्यम्, स्वगतलाघवापेक्षया कार्यगतलाघवस्य बहिरङ्गत्वात्, सामान्यलाघवापेक्षया लाघवान्तरस्य बलत्वात्। न चात्र लाघवमेव न, व्यवच्छेदकयोरेकव्यचपमावेशादिति वाच्यम्, सति सम्भवे धर्मिलाघवत्याप्यादरात्। न चैवमुक्तरीत्या सिद्ध्युत्तरानुमितौ सिसाधयिषाया हेतुत्वापत्तिरिति वाच्यम्, अत्रावधारणत्वस्येव तत्रानुमितौ वैलक्षण्यस्याभावादिति संक्षेपः।

एवमिति। विषयैक्येऽपि सामान्यतएव प्रत्यक्षसामग्र्या बलवत्त्वे इत्यर्थः।

तथेति। सिसाधयिषाविरहसहकृतप्रत्यक्षादिप्रमाणाभावस्य पक्षताघटकस्य सत्त्वादनुमित्सास्थले नानुमितिसामग्र्यभाव इति पर्यवसितोर्थः।

माथुरी

शाब्दप्रमेत्यतआह, 'किञ्चेति, 'वाक्यार्थबाधः, 'लाघवात्'. एकपदार्थे अपरपदार्थसंसर्गाबाधमात्रं योग्यता न प्रकृतवाक्यकारणीभूतवक्तृज्ञानविषयत्वमपि विशेषणं गौरवादित्याशयः। 'वाक्यार्थस्त्विति'[1] भ्रान्तप्रतारक-शुकादिवाक्यार्थस्तु, 'तत्र' शुकादिवाक्यस्थले भ्रान्त-प्रतारकवाक्यस्थले च,। ननु शुकादिवाक्याद्भवत्वन्वयबोधः, किन्तु स न प्रमेत्यत आह, 'संवादेनेति अबाधितार्थविषयकत्वेनेत्यर्थः',। यथार्थलिङ्गपरामर्शत्वेन कारणता प्रमानुमितित्वेन कार्य्यता एतस्य व्यभिचारमाशङ्कते, 'एवमिति। 'प्रत्यभिज्ञानात्' यो वह्निरनुमितः स एवात्र इति प्रत्यभिज्ञानादित्यर्थः, 'गोत्वादीति गोत्वव्याप्यद्रव्यत्ववतीयमित्यादिभ्रमपरामर्शजन्यगोत्वाद्येकव्यक्तिसाध्यकप्रमानुमितौ, 'तदसम्भवाच्च' व्यक्त्यन्तरविषयकत्वासम्भवाच्चेत्यर्थः,[2] तथाच

१. 'वाक्यर्थश्च' इत्यत्र 'वाक्यार्थस्तु' इति कस्यचिन्मूलपुस्तकस्य पाठमनुसृत्य 'वाक्यार्थस्तु' इति पाठः टीकाकारेणाधारि।

२. गोत्वस्य जातित्वेन एकव्यक्तिवृत्त्यादिति भावः।

च प्रत्यक्षविशेषदर्शनं विरोधि दिङ्मोहे गौरोऽहमिति भ्रमे च तथा दर्शनात्। तच्च तत्र दोषान्नास्ति। अपि च लिङ्गसादृश्यवाक्यार्थ-

आलोकः

इदमेव कथमित्यत आह—प्रत्यक्षेति। प्रत्यक्षभ्रमे प्रत्यक्षविपरीतज्ञानस्यैव विरोधितया विरोधिसामग्रीत्वेन तदेव प्रतिबन्धकं यत्तदव्यभिचारि, न शंखत्वज्ञानमात्रमित्यर्थः अत्र भ्रम इत्युपलक्षणम्। साक्षात्कारिणि निर्णये तद्विपरीतप्रत्यक्षनिर्णयो विरोधी, न त्वानुमानिकविपरीतग्रहः प्रत्यक्षरूपतद्व्याप्यग्रहो वा,

दर्पणः

नन्वेवं ज्ञानद्वयस्य प्रत्यक्षहेतुत्वे गौरवमित्यत आह—पश्यामीति। अनुमित्सास्थले च विशिष्टज्ञानमेव[1] जायत इत्याशयः।

आद्यं दूषयति[2]—पक्षताया इति। सिसाधयिषाविरहसहकृतसिद्ध्यभाव एव लाघवेन पक्षतेति वक्ष्यमाणत्वादित्यर्थः। न चोक्तदोषभिया मानाभावोऽपि पक्षतान्तर्गत इति वाच्यम्। समाधानस्य लघुनो वक्ष्यमाणत्वात्।

द्वितीयं दूषयति—अनुमितिति। तथा च विनिगमनाविरहादुभयत्र विशिष्टज्ञानमेव हेतुरिति भावः।

इच्छाघटितेति। यत्रोभयसामग्री इच्छारहिता तत्र समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वम्। यत्रान्यतरेच्छा तत्रेच्छाघटितसामग्र्या बलवत्त्वमित्यर्थः। इदं चोपलक्षणम्। यत्रोभयसामग्री इच्छाघटिता तत्रापि समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वं ज्ञेयम्। न चेच्छाघटितसामग्र्या बलवत्त्वमित्यस्यायमार्थो यत्सा प्रतिबन्धिका। तथा च सिसाधयिषाविरहसहकृतप्रत्यक्षादिसामग्रीविरहो हेतुरागत एवेति वाच्यम्, प्रत्यक्षादीच्छासहकृतप्रत्यक्षादिसामग्रीविरहस्य हेतुत्वेऽप्यनुमितावसाधारण्याभावात्।

माथुरी

एतस्यामेवानुमितौ व्यभिचार इति भावः। अथ तत्र गोत्वानुमितिरेव न भवति किन्तु अन्यगोतादात्म्यभ्रमानुमितिरेव जायते इति निराकरोति, 'नापीति, 'संसर्गारोपादिति, 'संसर्गेण' समवायादिना, 'आरोपात् भानात् गोत्वव्याप्तिभानादित्यर्थ, तथाच यत्सम्बन्धेन व्याप्तिज्ञानं तत्सम्बन्धेन तस्यानुमितिः, प्रकृते तु समवायेन गोत्वव्याप्तिभानं कथं तादात्म्येन गोरनुमितिरिति भावः।

ननु धूमभ्रमाद्वह्निधृति वह्न्यनुमितिर्भ्रम एव वह्निव्याप्यधूमवत्त्वविषयकत्वात् तथाच कथं व्यभिचार इत्यत आह, 'लिङ्गेति, तथाच प्रमानुमितित्वेन कार्य्यता यथार्थलिङ्गपरामर्शत्वेन कारणता एतस्य तत्र व्यभिचारस्तदवस्य एवेति भावः।

---

१. विशिष्टाभावज्ञानमेवेति गपुस्तकपाठः।

२. सिद्ध्यभावमात्रं पक्षतेत्यभिप्रेत्य 'उपाध्यायमतं' दूषयति।

भ्रमदोषाभावमात्रान्नानुमित्यादिरिति सत्यपरामर्शादिगुणसिद्धिः। एवं प्रमाया गुणजन्यत्वेन वेदेपि प्रमा वाक्यार्थयथार्थज्ञानगुणजन्येति तदाश्रयेश्वरसिद्धिः।

आलोकः

प्रत्यक्षरूपप्रमायामपि व्यभिचाराभावादिति पृथिवीभ्रमानन्तरं स्नेहप्रत्यक्षादेस्तद्व्याप्यदर्शनवद्विपरीतप्रत्यक्षसामग्रीत्वेन प्रतिबन्धकता न स्वातन्त्र्येणेति न व्यभिचारः।

अपि चेति। न चेदमपि असङ्गतम्, सामान्यसामग्र्यां सत्यां नियमादेवासत्यां तत एव फलाभावादिति वाच्यम्। सामान्यसामग्री हि लिङ्गादिज्ञानम्। तथा च दोषाभावसहितलिङ्गादिज्ञानमेव पर्यवसन्नम्। एवं च लिङ्गभ्रमादेर्दोषतया तद-

दर्पणः

तदिदमुक्तम्—आहार्यज्ञानादाविति। अत एव मानाभावस्य पक्षताप्रवेशापेक्षयात्र लाघवं क्लृप्तसामान्यहेतोरेव कार्योत्पत्तेर्विशिष्यहेतुत्वे मानाभावत्। तथात्वेऽपि वा न पक्षताप्रवेशः, किन्तु पृथगेव हेतुत्वमित्नुमानालोके वक्ष्यते। तदभिप्रेत्याह—इति वागिति। दूषयति नहि समानेविषयेत्यादि नियमस्वरूपम्। अनुमित्यन्यूनप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वान्न पर्वताध्यक्षमिति नव्याः।

एकस्य विशेषदर्शनस्य। तथा च विशेषदर्शनं यत्राध्यक्षसामग्री तत्रेच्छाविरहे सा बलवती। न च पर्वताध्यक्षे तत्सामग्रीति न पर्वताध्यक्षम्। तथा च यत्र विशेषदर्शनमध्यक्षसामग्री तत्र बलवत्त्वमन्यत्रानुमितिसामग्र्या भावादेव नानुमित्यभाव इति किं तत्साधारणप्रतिबन्धकत्वेनेति भाव इति नव्याः।

वयं तु यथाश्रुतमेव सम्यक्, संशयोत्तरमेकमेव विशेषदर्शनाप्रत्यक्षानुमितिसामग्री। अत्र च परामर्शोऽनुमितेरिन्द्रियसन्निकर्षः पर्वताध्यक्षस्येति न तत्सामग्र्या तत्रानुमितिप्रतिबन्ध इति। ज्ञातमिति। अनुत्पादे स्वस्वरूपसत एव प्रयोजकत्वादिति भावः। तत्वकारणदर्शनत्वेनेति भावः। उत्तारमूकरभ्रमजन्यपुरुषभ्रमस्यापि स्थाणुप्रमाप्रतिबन्धकत्वम्।

माथुरी

'भ्रान्तेति, 'आप्तोक्तत्वात्' यथार्थवाक्यार्थज्ञानजन्यत्वात् यः प्रमाणशब्दः स यथार्थवाक्यार्थज्ञानजन्य इति नियमात् भ्रान्त-प्रतारक-शुकादिवाक्ये ईश्वरीयवाक्यार्थज्ञानमेव जनकमित्यर्थ। नन्वेवञ्चेत् शुकादिवाक्ययं वेदतुल्यमेव जातमित्यत आह, 'शुकादीति' 'दोषाभाववादिना' दाषाभावस्य कारणतावच्छेदकत्ववादिना, तन्मतेऽपि दोषाजन्यत्वेनैव तुल्यत्वादिति भावः। 'शब्दाभासोच्छेदः' भ्रमजनकशब्दोच्छेदः, 'ईश्वरवक्तृकत्वात्' ईश्वरीयवाक्यार्थज्ञानजन्यत्वात्, तस्य कार्य्यमात्रकारणत्वादिति भाव[1]। 'तद्वाक्यार्थस्येति भ्रमजनकवाक्यार्थस्य, 'असत्त्वेन' बाधितत्वेनेत्यर्थः। इत्यस्वरसोद्भावनं, तद्बीजन्तु यथा शाब्दप्रमात्वेन कार्य्यता यथार्थवाक्यार्थज्ञानत्वेन कारणता

१. ईश्वरीयज्ञानस्य उपादानप्रत्यक्षविधया कार्य्यमात्रं प्रति कारणत्वमिति भावः।

ननु प्रत्यक्षादावस्तु गुणजन्यत्वम्, वेदे तु भ्रमाद्यभावचतुष्टयं प्रमाहेतुः। लोके च भ्रमाद्यभाव एव प्रमोत्पत्तेरिति चेत्–न। तत्र लाघवाद्वाक्यार्थयथार्थज्ञानस्य[1] हेतुत्वेन भ्रमाद्यभावानामन्यथासिद्धत्वात्। आप्तस्य भ्रमाद्यभावमात्रेण वाक्यार्थज्ञानं विना तादृशवाक्याभावाच्च। अन्यथा तवापि तत्र वक्तृज्ञानानुमानं न स्यात् तस्याहेतुत्वात्।

अस्तु[2] वोभयमपि हेतुः, विनिगमकाभावात्। तथापि वेदे गुणसिद्धिः। न च नित्यनिर्दोषत्वाद्दृष्टादेव वेदे प्रामाण्योपपत्तौ नापरिदृष्टनित्यज्ञानादिसर्वज्ञकल्पना गौरवादिति वाच्यम्, प्रमाणवतः फलमुखगौरवस्यापि स्वर्गादाविवादोषत्वात्, पूर्वं कारणताग्रहसमये फलानुपस्थित्या

आलोकः

भावसहितलिङ्गादिज्ञानं प्रमाजनकं वाच्यम्, तथा च तदपेक्षया भ्रमत्वाभाववल्लिङ्गज्ञानं वा प्रमारूपलिङ्गज्ञानं वा कारणमिति, इदमेव गुणजन्यत्वमिति सिद्धं नः समीहितम्। न च भ्रमो न दोषः, किन्तु भ्रमत्वमिति, तदभावतन्त्रतायां दोषाभाव-

दर्पणः

तदपेक्षयेति। अत्रावच्छेदकमात्रकल्पनालाघवमिति भावः। तत्राप्यभावस्यावच्छेदकत्वे गौरवादाह प्रमेति।

दोषाभावहेतुतेती। दोषाभावमात्रस्य हेतुत्यर्थः। मूले वाक्यार्थज्ञानस्येति। वाक्यार्थप्रमाया इत्यर्थः।

माथुरी

इति कार्य्यं-कारणभावसत्त्वात् वैदिकस्थले तज्जन्यैव शाब्दप्रमेति परिशेषात् तदाश्रयेश्वरसिद्धिः, तथा शाब्दभ्रमत्वेन कार्य्यता अयथार्थवाक्यार्थज्ञानत्वेन कारणता इति कार्य्यं-कारणभावसत्त्वात् विसंवादिशुकादिवाक्यस्थलेऽपि तज्जन्य एव भ्रम इति परिशेषादयथार्थवाक्यार्थज्ञानवान् कश्चन सिद्ध्यतु, शाब्दभ्रमं प्रति एवं कार्य्यकारणभावे चेन्मानाभावः तदा शाब्दप्रमां प्रत्यपि तत्तत्कार्य्यकारणभावे मानाभाव इति।

क्षितेः सकर्त्तृकत्वाद्यनुमानेनैव ईश्वरसिद्धिः न तु प्रमाया गुणजन्यत्वेनेत्याह, 'अत्र ब्रूमः' इत्यादिना, योग्यता न एकपदार्थे अपरपदार्थसंसर्गरूपा अतीतानागतसंसर्गस्थले व्यभिचाराकिन्तु एकपदार्थे अपरपदार्थसंसर्गाधिकरणत्वरूपा। 'एवमिति, अन्याभिधाने विसंवदिनि' 'एवमित्यन्वयः, 'एवं' योग्यताज्ञानं न यथार्थं वाक्यार्थस्य बाधितत्वात्। 'संवादीति करणापाटवजन्यमंवादिवाक्यस्थले तु योग्यताज्ञानं प्रमैवेत्यर्थः, तत्र वाक्यार्थस्याबाधितत्वादिति भावः। अथ योग्यता चेद्गुणः तदा

---

१. वक्तृवाक्यार्थज्ञानस्येति पाठान्तरम् दर्पणसम्मतम्।

२. भ्रमाद्यभावसत्त्वे यथार्थशाब्दबोधोत्पत्तिः भ्रमादिसत्त्वे तदनुत्पत्तिरिति सोऽपि कारणमित्यभिप्रायवानाह—अस्तु वेति।

**गौरवाज्ञानात् लोके नित्यत्वाभावाच्च । अथ वेदे कर्त्तृस्मरणादेर्बाधकात् लोकेऽपि निर्दोषत्वेनैव प्रमाहेतुत्वम्, वेदे तु नित्यत्वेनैव वक्तुरभावेऽपि निर्दोषत्वमवधार्य्यत इति चेत्--न, बाधकस्य बहुशो निराकरिष्यमाणत्वात् भ्रान्तप्रतारकवाक्ये, घटोऽस्तीति वाक्ये पटोऽस्तीति दोषजन्यवाक्ये च विसंवादात् प्रमाणे तदभावाच्च ।**

**किञ्च दैववशसम्पन्नं चैत्यं वन्देतेत्यादिकं शुकबालादिवाक्यमप्येवं प्रमाणं स्यात्, वक्तृदोषाभावात् प्रमाणानपेक्षत्वेन वेदतुल्यत्वाच्च ।**

आलोकः

तन्त्रतैव न गुणतन्त्रतेति वाच्यम्, स एव दोषो यो भ्रमहेतुः, न च भ्रमत्वं तथा, जनकतावच्छेदकत्वात् । तथा चैनं कल्पमपुरस्कृत्य दोषाभावहेतुता वाच्या, तत्रायं ग्रन्थावतार इति भावः ।

वक्तृज्ञातेति । अत्र प्रकृतवाक्यप्रयोगकरणीभूतवक्तृज्ञानविषयवाक्यार्थाबाधो वाऽन्यवाक्यप्रयोगकरणीभूतज्ञातृज्ञानविषयतदबाधो वा । तत्राद्ये घटवतीति । द्वितीये किच्चेति ।

नापीति । गव्येव लिङ्गाभासान्न गोत्वानुमानम्, किन्तु प्रागनुभूतगोत्वाश्रय-व्यक्त्यभेदानुमानम्, तच्चासद्विषयकतया भ्रम एवेति नेत्यर्थः ।

संसर्गारोपादिति । संसर्गारोपाभ्युपगमादित्यर्थं । गोत्वेन समं व्याप्तिग्रहो

दर्पणः

मूले **उभयमपीति** । वाक्यार्थप्रमाभ्रमाद्यभावश्चेत्यर्थः । नित्यत्वे सति निर्दोषत्वं विशिष्टप्रामाण्यप्रयोजकमिति दूषयति मूले लोक इति । निर्दोषत्वमेव प्रामाण्ये तन्त्रम् नित्यत्वं तु वेदे निर्दोषत्वो पादकमात्रेणोक्तमित्याशङ्कते मूले अथेति ।

माथुरी

क्वचित्स्वरूपसती योग्यता वर्त्तते शाब्दप्रमा कथं न जायते इत्यत आह, 'क्वचिदिति, तथाच शाब्दबोधसामान्यकारणयोग्यताज्ञानाभावादेव कार्य्याभाव इति भावः ।

अथ यत्र विष्णुबोधेच्छया हरिरस्तीति वाक्यं प्रयुक्तं तात्पर्य्यभ्रमेण यथार्थ-योग्यताज्ञानसत्त्वात् सिंहप्रमा जाता तत्रापि तद्वाक्यं प्रमाणं स्यादित्येवाह, नन्विति, 'अन्यपरात्' अन्यतात्पर्य्यकात्, तात्पर्य्यज्ञानस्याकारणत्वपक्षे आह, 'तं विनैवेति तात्पर्य्यभ्रमं विनैवेत्यर्थः, 'संवाद्यपरशक्य'' अबाधितापरशक्यम् । एवञ्चेत्तदा तद्वाक्यस्य कथं प्रमाणत्वेन न व्यवहार इत्यत आह, 'तात्पर्य्यविषयेति, 'तात्पर्य्यविषये' वक्तृबोधेच्छाविषये, 'न प्रमाणमिति न प्रमाणत्वेन व्यवह्रियते ।

ननु शाब्दप्रमायां वक्तृयथार्थवाक्यार्थज्ञानस्य हेतुत्वकल्पने गौरवं यद्यपि तथापि लौकिकस्थले प्रमाणशब्दं प्रति तस्य हेतुत्वं क्लृप्तमिति शाब्दप्रमायामपि तदेव हेतुः

ननु तवापि शुकादिभ्रान्तप्रतारकवाक्यं कथं प्रमाणं गुणाजन्यत्वात् । न च गुणाजन्यत्वात् वक्तृतात्पर्याविषयत्वाच्च तदप्रमाणं, संवादेन साध्ये बाधात् ।

यत्तु भ्रान्तप्रतारकवाक्ये योग्यतैव नास्ति वक्तृज्ञातवाक्यार्थाबाधो हि योग्यता, भ्रमविषयश्च बाधित इति–तन्न । घटवति घटो नास्तीति भिन्नविषयतया भ्रमस्याहेतुत्वात् । किञ्च वाक्यार्थाबाधो योग्यता लाघवात्,

आलोकः

तादात्म्येन समं वा सामान्यत एव, न त्वन्यगोव्यक्तितादात्म्येनेति, तथा व्याप्त्यग्रहात् । त्वयापि लिंगभ्रमात्मक[1]दोषबलेन संसर्गारोपस्यैवाभ्युपगमान्न त्वन्याभेदारोपाभ्युपगमात्बीजाभावादिति भावः ।

वस्तुतस्तु एकव्यक्तिक[2]पक्षे एकव्यक्तिकसाध्ये लिङ्गाभासजन्यायामनुमितावन्यतादात्म्यभानमसिद्धमिति तत्र गुणदोषयोर्व्यतिरेकान्वयव्यभिचारो ब्रह्मणापि दुरुद्धरः ।

लिङ्गेति । अयमभ्युपगमवादः, लिङ्गोपधानाभावात् । भावे वा व्याप्यत्वेन

दर्पणः

भ्रान्तप्रतारकस्थले भ्रमो भिन्नविषयक एव, प्रतारणापि न दोषरूपा, अविद्यमानप्रतिपिपादपिषाया एव तथात्वात् । करणापाटवमप्यविद्यमानविषयकमेव दोषा न तु विद्यमान-विषयकमित्यरुच्या मूले-किञ्चेति ।

योग्यतासहितः सम्वादः प्रामण्ये तन्त्रमित्याशयवतो मूले-यत्त्विति शङ्का ।

यद्वा तटस्थस्य शङ्केयम् । घटवतीत्यादिमूलस्य यथाश्रुतस्यालग्नकतया विकल्पयति अत्रेति । द्वितीयविकल्पे कारणपदं प्रयोजकपरम् ।

माथुरी

अन्यथा प्रमाया अजनकत्वे प्रमाणत्वप्रयोजकं न स्यादिति भावः । अथ प्रमाणशब्देऽपि न यथार्थवाक्यार्थज्ञानं हेतुरित्यत आह, 'अत एवेति यत एव प्रमाणशाब्दं प्रति यथार्थवाक्यार्थज्ञानं हेतुरत एवेत्यर्थः, 'वक्तृज्ञानानुमानमिति प्रमाणशब्देन वक्तृयथार्थवाक्यार्थज्ञानानुमानमित्यर्थः । 'एवञ्चेति वेदः स्वतन्त्रवाक्यार्थगोचरयथार्थज्ञानजन्य प्रमोपधायकशब्दत्वादित्यर्थः । 'स्वतन्त्रत्वं' शब्दाप्रयोज्यत्वं तेनाध्यापकस्य वेदजन्यवाक्यार्थ-

१. 'त्वयापि लिङ्गभ्रकात्मकेति' । अनुमितिसायग्रचा व्यापकत्वेन गृह्यमाणस्य पक्षे संसर्गमात्रस्यैवोपनयान्न तु पक्षे साध्यवद्धर्मितादात्म्यस्य । यानावान्तरतादात्म्यारोपः स्यादित्यर्थः ।

२. 'एकव्यक्तिक' इति । स्वार्थे कप्रत्ययः । अयमेतदभिन्नमित्याद्यनुमितावेकव्यक्त्यात्मके पक्षे साध्यमेकव्यक्तिमेव । एतदभिन्नत्वस्य व्यक्त्यन्तरेऽभावादित्यर्थः ।

वाक्यार्थश्च तत्राबाधित एव। न च शुकबालादिवाक्यादर्थबोध एव न भवति किन्त्वेवमयं वदतीत्येवंप्रकारा प्रतीतिरिति वाच्यम्, आकांक्षादेरन्वयबोधसामग्र्याः सत्त्वेऽनुभवानपलापात् संवादेन यथार्थत्वानुभवाच्च। एवं धूमभ्रमाद्वह्निमत्येव वह्न्यनुमितिर्न प्रमा स्यात् यथार्थलिङ्गज्ञानाजन्यत्वात्। न च वह्न्यन्तरमेव तत्र विषयः, प्रत्यभिज्ञानात्, गोत्वाद्येक-

आलोकः

तन्न तु धूमत्वादिना। तथा च व्यापकवति यत्किञ्चित्व्याप्यावश्यम्भावे लिङ्गोपधानांशेऽपि न भ्रमतेति।

भ्रान्तेति। इदं चोपलक्षणम्। संशयोत्तरप्रमायामपि विशेष प्रमाजन्यायामीश्वरीयविशेषप्रमैव गुण इति स्मर्त्तव्यम्।

ननु प्रतारणा नाहार्यारोपं विना, तथा च स एव विषयाबाधादनारोपरूपं ज्ञानमिति किमीश्वरेण। किञ्च शुकादिवाक्यस्य केवलपदज्ञानसाध्यत्वान्न वाक्यार्थ-

दर्पणः

कारणीभूतेति पाठेऽपि प्रयोजकत्वमेवार्थः, वस्तुतो वाक्यस्य बाध इत्यत्र वाक्यत्वेन, तदबाध इत्यत्र च तद्वाक्यस्य प्रवेशात् विकल्पयोर्भेदः।

आद्य इति। तथा च वाक्ये कारणमाहार्यज्ञानमेव, तद्विषयश्चबाधित एवेत्यर्थः।

द्वितीये तु वाक्यप्रयोजकत्वं भ्रमस्यापीति पूर्वदोषालग्नकतया दोषान्तरपरं मूलं—किञ्चेति।

वस्तुत इति व्याख्याने तु पूर्वदोषलग्नकत्वेऽप्यूत्कटगौरवपरं मूलं—किञ्चेति तदवतारयति द्वितीयइति।

माथुरी

गोचरयथार्थवाक्यार्थज्ञानजन्यतया न सिद्धसाधनम्। न चैवं शाब्दवाक्यार्थज्ञानजन्यप्रमाणशब्दे व्यभिचार इति वाच्यम्। तत्रापि परमेश्वरज्ञानमादाय साध्यसत्त्वादिति भावः। 'इतीश्वरसिद्धिः' इत्यनेनापीश्वरसिद्धिः। 'प्रमाणशब्दत्वं हि' शब्दस्य प्रमोपधायकत्वं हि। ननु शब्दस्य प्रमोपधायकत्वं कथं यथार्थवाक्यार्थज्ञानपूर्वकतां विना सम्भवति, प्रमां प्रति यथार्थवाक्यार्थज्ञानस्य हेतुत्वात् इत्यत आह, 'आवश्यकेति, 'यथार्थेति यथार्थतज्ज्ञानाद्वा प्रमा जायते इत्युपपादितमित्यर्थः। ननु कथमप्रयोजकं प्रमोपधायकशब्दत्वेन कार्य्यता, यथार्थवाच्यार्थज्ञानत्वेन कारणता इति कार्य्यकारणभावसत्त्वादित्येवाह, 'तथापीति, 'वाक्यार्थज्ञानं, 'तेन विना' यथार्थवाक्यार्थं विना, 'कथं तदिति, 'तत्' प्रमाणशब्दस्वरूपं। अथ वाक्यमात्रे एव वाक्यार्थज्ञानं न कारणं। न च नियतपूर्व्ववर्त्तितासत्त्वे[1] कथं कारणं नेति वाच्यं। प्रवृत्त्यर्थं

१. नियतापूर्व्ववर्त्तिभावादिति ख०।

व्यक्तिके तदभावाच्च। नापि तत्रान्यतादात्म्यारोपः, संसर्गारोपात् लिङ्गोपधानांशे भ्रमत्वेऽपि साध्यांशे प्रमात्वादिति।

उच्यते। भ्रान्तप्रतारकवाक्ये शुकादिवाक्ये च प्रमाणशब्दत्वेनाप्तोक्तत्वात् वेदवदीश्वरस्यैव यथार्थवाक्यार्थज्ञानं जनकम्, तस्य कार्यमात्रे कर्तृत्वात्। शुकादिवाक्यस्य च वेदतुल्यता दोषाभाववादिनापि वाच्या।

नन्वेवं शब्दाभासोच्छेदः तस्यापीश्वरवक्तृकत्वादिति[1] चेत्, न। तद्वाक्यार्थस्यासत्त्वेन भगवज्ज्ञानागोचरत्वात्। एवं लिङ्गाभासजन्यप्रमायामपि वह्निव्याप्यवत्त्वज्ञानमीश्वरस्यैव जनकमिति सम्प्रदायविदः।

अत्र ब्रूमः। शाब्दप्रमायां लोके वक्तुर्यथार्थवाक्यार्थज्ञानं न गुणः, किन्तु योग्यतादिकं यथार्थतज्ज्ञानं वा, लाघवादावश्यकत्वाच्च। भ्रमप्रमादविप्रलिप्साजन्ये वाक्ये विसंवादिनि न यथार्थयोग्यताज्ञानं वाक्यार्थस्य

आलोकः

धीर्हेतुः। न चेश्वरज्ञानस्य जगज्जनकतया अनायत्यैव तदत्र जनकमिति वाच्यं, वाक्यार्थविषयज्ञानतया तस्यात्राजतकत्वात्। तथा चाज्ञातजनकभावस्य प्रमात्वाप्रमात्वाभ्यां गुणदोषत्वादिति—

मैवम्। लाघवादी[2]श्वरीयज्ञानस्य गुणत्वाभ्युपगमात्। आहार्या[3]रोपस्य गुणत्वे बाधकाभावादेकत्र गुणद्वयजन्यत्वदर्शनात्।

दर्पणः

लाघवादिति मूलम्। यद्यपि यथाश्रुते वाक्यजन्यप्रतिपत्तिविषयस्य वाक्यार्थतया न लाघवम्, प्रत्युतान्यथासिद्धप्रवेशादित्युक्तापेक्षया गौरवम्, तथापि परम्परया भ्रममूलकत्वसत्त्वाद्वाक्यप्रयोजकेत्यादेर्यथाश्रुतस्यासम्भवितया प्रकृतवाक्यप्रतिपाद्यविषयकप्रकृतवाक्यप्रयोजकज्ञानविषयाबाधो वाच्यः, तथा सति प्रकृते क्षत्यभावेऽपि वस्तुगत्यनुरोधेन प्रकृतवाक्यप्रतिपाद्योबाध एव योग्यतास्त्वित लाघवमुक्तम्।

माथुरी

प्रयोज्यस्य वाक्यार्थज्ञानं भवत्विति प्रयोक्तुरिच्छानन्तरं वाक्ये एतादृशपदेभ्यो वाक्यार्थं ज्ञास्यतीति इष्टसाधनताज्ञानं जायते ततो वाक्यप्रयोगः क्रियते इति नियतपूर्ववर्ति वाक्यार्थज्ञानं किन्तु अन्यथासिद्धमित्येवाह, 'प्रवृत्त्यादीति, 'उद्दिश्य' तद्विषयकेच्छाया अनन्तरम्, इति बुद्ध्या वाक्य-प्रयोग इति, 'प्रथमं' वक्तृवाक्यार्थ-

१. ईश्वरीयज्ञानस्योपादानप्रत्यक्षविषया कार्यमात्रं प्रति कारणत्वमिति भावः।

२. 'लाघवादि'ति। शाब्दप्रमा गुणजेत्यनुमित्या लाघवसहकारेण समवाय इवैकस्यैव गुणत्वेन विषयीकरणादित्यर्थः।

३. ननु यथार्थवाक्यार्थत्वे गुणतेति कथमाहार्यारोपो गुण इत्यत आह—'आहार्ये'ति। गुणस्य गुणान्तरानपवादकत्वादित्यर्थः।

बाधितत्वात् । एवं करणापाटवादन्यस्मिन्वक्तव्येऽन्याभिधाने विसंवादिनि, संवादिनि तु प्रमाणमेव । योग्यतादिज्ञानमेव क्वचिन्नास्ति ।

नन्वेवं नानार्थादन्यपरात्तात्पर्यभ्रमे तं विनैव वा यथार्थयोग्यतादिज्ञाने सति संवाद्यपरशक्यज्ञानमपि प्रमेति तत्रापि तद्वाक्यं प्रमाणं स्यादिति चेत्, न, इष्टत्वात् । तात्पर्यविषयये च तद्वाक्यं न तदा प्रमाजनकमिति न प्रमाणम् । एवं वेदेऽपि यथार्थयोग्यताज्ञानमेव गुण इति न वैदिकप्रमायां गुणजन्यत्वेनेश्वरसिद्धिः ।

आलोकः

वस्तुतस्तु प्रमा गुणः । सा च प्रमाफलम् । न चाहार्यारोपः काकतालीयसम्वादस्तथा । तथा सति प्रमाणन्तरापत्तेरनुगताननतिप्रसक्तधर्मावच्छेदकं विना प्रमाणत्वासम्भवात् ।

यच्च किञ्चेत्यादि—तन्न । वाक्यार्थं विषयकत्वं च ज्ञानस्य गुणत्वे तन्त्रम्, लाघवात्, न तु विशिष्टवैशिष्ट्यं गौरवादिति दिक् ।

दर्पणः

वस्तुत इत्यादिव्याख्याने तद्वाक्यार्थाबाधाप्रवेशात् स्फुटं लाघवम्

वस्तुतस्तु मूले एवं विकल्पनीयम् सम्वादे सत्यपि योग्यता नास्तीति वदतः प्रकृतवाक्यर्थस्य कारणज्ञानविषयस्याबाधो वा प्रकृतवाक्यार्थस्य प्रयोजकज्ञानविषयस्याबाधो वा योग्यता विवक्षिता ।

द्वयं दूषयति मूले—घटवतीति किञ्चेति च । अत एव समानविषयतया किञ्चेति गङ्गच्छत इति ज्ञेयम् ।

माथुरी

ज्ञानमित्यन्वयः, प्रथमं' पूर्व्ववर्त्ति, 'अन्यथासिद्धं' किन्तु तदन्यथासिद्धम् । अथ केन अन्यथासिद्धमित्यत आह, 'तादृशपदसमूहस्येति, 'प्रत्येकपदहेतोरेव' प्रत्येकपदहेतोस्तत्पदज्ञानादेव । 'अथेति यत्तात्पर्य्यको वेदस्तत्र प्रमाणमित्यर्थः । अथ वेदं विना वेदार्थगोचरज्ञानं न जातमेतावता किं वेदेनैव वेदार्थज्ञानं उत्पत्स्यते तद्रा तत्प्रतीतीच्छयोच्चारणं भवेदित्यत आह, 'नचेति, वैदिकस्थले वेदादेव वेदार्थज्ञानं तदा तत्पतीतीच्छयोच्चारणं भवेदिति नचेत्यर्थं । 'अन्योऽन्येति' किं परोच्चरितवेदात् वेदार्थज्ञानं भविष्यति तदा तत्प्रतीतीच्छयोच्चारणं भवेत्, किं वा स्वोच्चरितवेदात्स्वस्य वेदार्थज्ञानं भविष्यति तदा तताप्रतीतीच्छयोच्चारणं भवेत् । नाद्यः, तदा परस्यैव वेदार्थज्ञानं कथं अन्योच्चरितवेदात् तथाचानवस्थानात् । नान्त्यः स्वस्य वेदार्थज्ञाने सति तत्प्रतीतीच्छया वेदोच्चारणं वेदे उच्चरिते तस्माद्वेदार्थज्ञानमित्यन्योन्याश्रयादित्यर्थः । तस्मादनवस्थान्योन्याश्रयभङ्गाय वेदाजन्यवेदार्थप्रतीतीच्छा अवश्यं वेदोच्चारणे हेतुर्वाच्या इति भावः । 'अत इति यतो वेदोच्चारणे वेदाजन्यवेदार्थप्रतीतीच्छा हेहुरत इत्यर्थः,

स्यादेतत्। वेदे वक्तुर्यथार्थवाक्यार्थज्ञानमपि गुणः, लोके प्रमाणशब्दं प्रति तादृशस्य ज्ञानस्य हेतुत्वात्। अत एव लोके वक्तृज्ञानानुमानम्। एवं च वेदो वाक्यार्थगोचरयथार्थज्ञानवत्स्वतन्त्रपुरुषप्रणीतः प्रमाणशब्दत्वात् गामानयेति वाक्यवदितीश्वरसिद्धिः।

मैवम्। प्रमाणशब्दत्वं हि वाक्यार्थयथार्थज्ञानपूर्वकतां विनापि सम्भवति, आवश्यकयोग्यतादिसत्त्वात् यथार्थतज्ज्ञानाद्वेत्युपपादितमतोऽप्रयोजकमेतदिति। तथापि लोके वाक्यार्थज्ञानं प्रमाणवाक्ये कारणं

आलोकः

वाक्यार्थयथार्थज्ञानं गुण इति व्यवस्थितम्। तत्र गुणान्तराभावात् उक्तगुणव्यवस्थया ईश्वरसिद्धिरित्यसहमानः प्रकारान्तरेण यद्यायाति भगवाँस्तदायातु। यदि चान्वयव्यतिरेकाभ्यां यथार्थवाक्यार्थधीर्गुणस्तदा भवतु न तु गुणान्तराभावात् परिशेषेण तस्य गुणत्वम्, न वा तत एवेश्वरसिद्धिरिति मनसिकृत्यासाधारणं सिद्धान्तान्तरमाह—अत्र ब्रूम इति।

योग्यता बाधकमानाभावात्मिकेति दोषाभाव एव पर्यवसन्नसित्यरुचेरह—तज्ज्ञानं वेति। ईदञ्चोपलक्षणम्। अनुमानेऽपि बाधाभावयथार्थज्ञानं गुण इति बोद्धव्यम्।

दर्पणः

विकल्प्य दोषान्तरमाह—गोत्वेनेति। आद्यं दोषं विवृणोति त्वयापीति।

द्वितीयम् विवृणोति—न त्विति। तत् लिङ्गे मानम्।

विशेषप्रमेति। समानाधिकरणविशेषप्रमेत्यर्थः। इदमप्युपलक्षणम्। सादृश्यभ्रममूलिकायां प्रमोपमितात्रीश्वरसादृश्यप्रमैव गुण इत्यापि ध्येयम्। वस्तुत इत्याद्यापाततः प्रामाणफलत्वेन जनकत्वेन गौरवाद्यथार्थत्वमात्रस्यापेक्षितत्वादिति।

न तु विशिष्टवैशिष्ट्यमिति। प्रकृतवाक्यार्थविषयकत्वावच्छिन्नप्रकृतवाक्यजनकताकप्रमात्वेन गुणत्वं गौरवान्नेत्यर्थः।

माथुरी

'सकलवेदार्थदर्शिना' वेदाजन्यसकलवेदार्थदर्शिना, 'सः' वेदः, 'तत्र' तस्मिन्नर्थे, 'इतीति, तस्यां प्रमायां तादृशेच्छैव गुण इत्यर्थः, तस्य वेदस्य अस्मदादिवेदार्थप्रतीतीच्छयोच्चरितत्वाभावादिति भावः। 'तादृशेच्छा' वेदाजन्यवेदार्थप्रतीतीच्छा, 'तदाश्रयः' वेदाजन्यवेदार्थप्रतीतीच्छाश्रयः, 'स्वतन्त्रेति शब्दाप्रयोज्यज्ञानवत्पुरुषश्रेष्ठसिद्धिरित्यर्थं। 'मीमांसादीति अस्य वेदस्य अयमेवार्थः अयं नार्थ इति विनिगमकप्रमाणसहकारादित्यर्थः। 'वेदार्थेति वेदार्थयथार्थविदोऽध्यापकस्यैव वेदार्थप्रतीतीच्छास्ति स एव गुण इत्यर्थः। ननु अध्यापकस्यैव वेदार्थप्रतीतिः कथं वेदार्थस्यातिन्द्रियत्वादित्यत आह, 'एवमिति' 'एवं' एवंप्रकारेण विनिगमकप्रमाणसहकारेणेति

गृहीतमिति तेन विना कथं तदिति चेत्—न। प्रवृत्त्याद्यर्थं हि प्रयोज्यस्य वाक्यार्थज्ञानमुद्दिश्यैतादृशपदेभ्यो वाक्यार्थं ज्ञास्यतीमिति बुद्ध्या वाक्य-प्रयोग इत्यन्यथासिद्धं प्रथमं वक्तुर्वाक्यार्थज्ञानम्, न तु तादृशपदावलीप्रयोगे तस्य हेतुत्वम्। तादृशपदसमूहस्य प्रत्येकपदहेतोरेव शुकादिवदुपपत्तेः।

अथ तात्पर्य्यविषये वेदः प्रमाणं तात्पर्यञ्च तत्प्रतीतीच्छ-योच्चारणम्, न चास्मदादेर्वेदं विनातीन्द्रियवेदार्थगोचरज्ञाम्, येन तत्प्रतीतीच्छयोच्चारणं भवेत्। न च वेदादेव तत्, अन्योन्याश्रयात्। अतः सकलवेदार्थदर्शिना यस्य वेदस्य यदर्थप्रतीतीच्छयोच्चारणं कृतं स तत्र प्रमाणमिति तादृशेच्छैव गुणस्तज्जन्या वेदार्थप्रमेति तदाश्रयस्वतन्त्र-पुरुषधौरेयसिद्धिरिति चेत्–मैवम्। मीमांसादिसकलाङ्गसाचिव्याद्वेद-वाक्यार्थज्ञानवताऽध्यापकेन तत्तदर्थप्रतीतीच्छया वेदस्योच्चारणमिति

आलोकः

ननु बाधाभावः स्वरूपसन्नेवानुमानाङ्गं न ज्ञातः, लाघवात्, साध्याभावा-भावस्य साध्यपर्यवसितत्वेन साध्यज्ञानस्य साध्यज्ञानजनकतापत्तेः। न चैतत् सम्भवति, तत् सिद्धसाधनस्यानुमितिप्रतिबन्धकत्वादिति—

मैवम्। प्रकृतेऽपि वाक्यार्थज्ञानस्य वाक्यार्थबोधजनकतापत्तेः। न चेष्टापत्तिः, अनुमाने सिद्धसाधनवत् शब्दे पुनरुक्तत्वस्य दोषत्वात्। तस्य चाकांक्षाविरहपर्य-

दर्पणः

दिगिति। अबाधितार्थकवाक्यप्रयोक्तुः पदज्ञानादिकमपि गुणः सम्भवतीति भावः।

नैयायिकस्येश्वरनिराकरणमयुक्तमित्यालोच्य साम्प्रदायिकोक्तयुक्तिनिराकरण-मात्रे मणिकृतः तात्पर्यमाह—वाक्यार्थेति। योग्यतेति। इदमुपलक्षणम्। संसर्गात्मक-योग्यतापक्षेऽपि संसर्गस्यातीतादावजनकत्वादित्यपि द्रष्टव्यम्।

माथुरी

यावत्, 'तादृशः' वेदार्थज्ञानवान्, तथाच विनिगमकप्रमाणसहकारेण वेदार्थज्ञान-वत्पूर्व्वपूर्व्वाध्मापकेनेति प्रतीकसमुदायार्थः। 'अनादीति, तथाचानाद्यनवस्था न दूषणवहेति भावः। 'न वेति, 'ततः' तद्वाक्यात्, 'अर्थनिश्चयः' शाब्दबोधः स्यादित्यर्थः, शाब्दबोधसामान्यकारणतात्पर्य्यज्ञानाभावादिति भावः। 'तत्परत्वं' तत्प्रतीतीच्छया उच्चरितत्वं, वेदानुपूर्व्व्या नित्यत्वादिति भावः।

शब्दखण्डे दूषयिष्यमाणत्वात् प्रागुक्तमदूषयित्वत्वैव प्राभाकरमतमाह, 'प्राभाकरास्त्विति, 'प्रामाण्यमिति घटत्वादिप्रामाण्यमित्यर्थः, स्वतएवेति स्वत उत्पत्ति-

वेदार्थयथार्थविदस्तत्तदर्थे तात्पर्यमस्त्येव। एवं पूर्वपूर्वतादृशाध्यापकेन तत्तदर्थप्रतीतीच्छयोच्चारितत्वं तत्परत्वमवगम्योत्तरोत्तरेषां वेदार्थप्रत्यय इत्यनादिस्तात्पर्यपरम्परेति किमीश्वरेण। तर्हि वेदार्थानभिज्ञाध्यापकेनोच्चारितवेदस्य न तदर्थप्रतीतीच्छयोच्चारणमिति तात्पर्याभावान्न प्रमाणं न वा ततोऽर्थनिश्चय इति चेत्—न। अनादौ संसारे तस्य वेदस्य कदाचित् केनचित् मीमांसाद्यधीनवेदार्थज्ञानवता तत्प्रतीतीच्छयोच्चारणं कृतं तावतैव तत्परत्वमिति।

आलोकः

वसन्नस्यात्रापि ज्ञाने जिज्ञासानुदयेन सुलभत्वात्। न च प्रकृते योग्यतानिश्चयो न सम्भवत्येव संशयस्य जनकत्वे दोषाभावादिति वाच्यं, तुल्यत्वात्। साध्यनिश्चयस्यैव[1] सिद्धसाधनत्वात्, तत्सन्देहस्याङ्गत्वेनानुगुणत्वात्। एतेन प्रकारान्तरेण योग्यताज्ञने पदार्थवैशिष्ट्यं विषयः प्रकारान्तरेण च शाब्द इति दोषापहारः प्रत्युक्तः अनुमानतुल्यत्वात्। तस्मादेकपदार्थेऽपरपदार्थनिष्ठधर्मविरोधितावच्छेदकशून्यत्वरूपयोग्यताज्ञानवत्पक्षतावच्छेदकसाध्ययोरविरोधविषयकयथार्थज्ञानं गुण इति।

दर्पणः

बाधाभावेति। अनुमितिविषयपक्षतावच्छेदकसम्बन्धाश्रयसाध्यस्य ज्ञानमित्यर्थः। इदमप्युपलक्षणम्। विशेषभ्रमजन्य संशयविपर्ययोत्तरप्रमायां यथार्थबाधितत्वज्ञानं ग्राह्यवति व्याप्यज्ञानं वा अग्रे वक्ष्यमाणं गुणः उपमितिप्रमायां तु उपमितिविषयप्रवृत्तिनिमित्तवद्वाच्यत्वस्य ज्ञानं ग्राह्य मित्यतिदेशवाक्यार्थज्ञानं वा गुणः, इति ध्येयम्। साध्याभावनिश्चयः साध्याभावो वा बाधः। आद्ये स्वरूपसन्नेवेति। अन्त्ये साध्याभावाभावस्येति।

साध्याभावं बाधमादाय समाधत्ते-मैवमिति। पक्षतावच्छेदकेति। एतदर्थः प्रागेवानुमितिविषयेत्यादिनोक्तः।

माथुरी

कत्वं स्वतो ग्राह्यत्वञ्चेत्यर्थः, घटत्वप्रकारकज्ञानसामग्रीजन्ययावज्ज्ञानवृत्तित्वम्, घटत्वप्रकारकज्ञानसामग्रीजन्ययावज्ज्ञानविषयत्वञ्च स्वतो ग्राह्यत्वम्। ननु प्रामाण्यं अनुभवत्वगर्भं कथं स्वतउत्पत्तिकं स्मृत्यवृत्तेरित्यत आह, 'तथाहीति, 'ज्ञानमात्रसामग्रीजन्यं' ज्ञानसामग्रीजन्यज्ञानमात्रवृत्ति, मात्रपदं साकल्यार्थकम्। ननु प्रमाया गुण-दोषाभावजन्यत्वात् प्रामाण्यं कथं ज्ञानसामग्रीजन्ययावज्ज्ञावृत्ति-गुण-दोषाभावाजन्यज्ञानावृत्तित्वात् अत आह, 'न त्विति, 'अपेक्षते', प्रमेति शेषः। ननु गुणादि चेन्न कारणं तदा तद्भ्रमोत्पत्तिसमये तत्प्रमोत्पत्तिर्नेति ज्ञानसामान्यसामग्र्यामन्वयव्यभिचार इत्यत आह, 'सर्व्वेति। अथ ज्ञानञ्चेन्नायथार्थं अयथार्थः क इत्यत, आह, 'अयथार्थस्त्विति,

१. साध्यनिश्चयस्यैवेति कपुस्तके।

प्राभाकरास्तु प्रामाण्यं स्वत एव उत्पद्यते ज्ञायते चेति। तथाहि—निष्कम्पप्रवृत्त्यङ्गं स्मृत्यनुभवसाधारणं यथार्थत्वमेव प्रामाण्यम्। तच्च ज्ञानमात्रसामग्रीजन्यम्, न तु गुणं दोषाभावं वाऽपेक्षते। सर्वज्ञानानां यथार्थत्वेनाव्यभिचारात्। अयथार्थस्तु व्यवहारः, तस्यैव बाध्यत्वात्। ज्ञानन्तु न बाध्यते, बाधकाभिमतज्ञानतुल्यत्वात्। ज्ञाने चायथार्थत्वव्यपदेशो विपरीतव्यवहारजननोपाधिकः। अथ यथार्थत्वस्य प्रामाण्यत्वे रजतज्ञानं शुक्तौ कथमप्रमाणम्, अप्रामाण्यञ्च कथं परत उत्पद्यत इति चेत्, न। अयथार्थत्वं नामप्रमाण्यम्, सर्वधियां यथार्थत्वात्। किन्तु विपरीतव्यवहारप्रवर्त्तकत्वम्। तच्च ज्ञानसामग्र्यामधिकदोषानुप्रवेशात् दोषहेतुकासंसर्गाग्रहाद्वा उत्पन्ने ज्ञाने दोषसहकाराद्वा धर्मधर्मिणोरसंसर्गाग्रहरूपमेकत्वासंसर्गाग्रहसहितं परत उत्पद्यते, न तु ज्ञानमात्र-

आलोकः

तच्च योग्यताज्ञानवत् सन्देहासन्देहसाधारणं विरोधिनिश्चयेऽनुमित्यनुत्पादेनायोग्यतानिश्चयाभावव्यापकयोग्यताज्ञानमात्रवत्तदविरोजज्ञानमात्रस्यानुमितिसामान्यहेतुतया प्रमात्वविशेषितस्य गुणत्वौचित्यात्। अत एव बाधकानवतारदशायां गन्धप्रागभावावच्छिन्नपक्षके गन्धानुमितेराभासता, अन्यथा यथार्थलिङ्गपरामर्शसापेक्षतया तत्रानुमितेर्यथार्थतया वज्रलेपापत्तेः।

दर्पणः

यथाश्रुते शङ्कते—एवमिति। पक्षतावच्छेदकसाध्याविरोधित्वज्ञानस्य जनकत्वे तद्विषयकस्यैव विरोधिज्ञानस्य व्याप्तिज्ञानविघटकव्यभिचारज्ञानस्यैव परम्परया प्रतिबन्धकतायामित्यर्थः। यद्यपि विवक्षिते गुणे नोक्तदोषावकाशः किञ्च यथाश्रुतगुणपक्षेऽपि तद्विघटनद्वारा उक्तविरोधज्ञानस्य परम्पराप्रतिबन्धकत्वेऽपि पक्षतावक्षेदकसाध्यसामानाधिकरण्यरूपग्राह्यविरहावगाहितया बाधान्तरान्तर्भावात् न हेत्वाभासा-

माथुरी

'व्यवहारः' प्रवृत्तिः, 'बाध्यत्वात्' भ्रमत्वेन ज्ञातत्वात्। ज्ञानमपि भ्रमत्वेन ज्ञायते तत् कथं नायथार्थमित्यत आह, 'ज्ञानन्त्विति, 'न बाध्यते' न भ्रमत्वेन ज्ञायते, 'बाधकाभिमतेति, 'बाधकाभिमतज्ञानं' प्रमा, तुल्यत्वं प्रमात्वेन रूपेण, तथाच प्रमात्वादिति समुदायार्थः, प्रमा च भ्रमत्वेन न ज्ञायते अन्यथाख्यात्यभावादिति भावः। नन्वेवमिदं ज्ञानमयथार्थमिति कथं व्यवहार इत्यत आह, 'ज्ञाने चेति, 'विपरीतव्यवहारेति अयथार्थप्रवृत्तिजनकत्वनिबन्धन इत्यर्थः, तथाच भाक्तो व्यवहार इति भावः[1]।

१. तथाच तादृशव्यवहारो लक्षणाया विपरीतव्यवहारजनकत्वं बोधयतीती भाव इति ग०।

सामग्रीतः, प्रमायामतिप्रसङ्गात्। उन्नीयते च विपरीतव्यवहारजनकत्वं बाधकात्। तस्य तेन तदनुव्यवसायेन वा ग्रहीतुमशक्यत्वात्। ज्ञानस्वरूपे च न दोषतदभावौ हेतू, व्यभिचारात्। ज्ञानायथार्थत्वेऽपि यथार्थत्वं ज्ञानसामग्रीजन्यमेव, न तु गुणाद् दोषाभावात् वा, विपर्ययादेरपि धर्म्यंशे यथार्थत्वात् असदर्थविषयता दोषात् इन्द्रियाणामसन्निहितेऽसदर्थे सामर्थ्याभावात्।

ननु दोषमात्रं न कारणम्, किन्तु तदपेक्षा ज्ञानसामग्रीति यथार्थत्वे दोषाभावसापेक्षा सा हेतुरिति चेत्, न। सैव सामग्र्यसदर्थांशे दोष-सापेक्षेति तदंशे ज्ञानमयथार्थम्, सदर्थांशे दोषनिरपेक्षेति तदंशे यथार्थम्, न तु सैव तत्रैव ज्ञाने दोषतदभावसापेक्षा, विरोधात्, अयथार्थयथार्थत्वे दोषतदभावौ नान्तरीयकौ, यथार्थत्वञ्च ज्ञानोल्लिखितप्रकारवत्त्वमर्थस्य, तत्प्रकारकज्ञानत्वं वा। इदं रजतमिति ज्ञानमर्थस्य रजतत्वं स्वस्य

आलोकः

नचैवम्, अधिकहेत्वाभासतावच्छेदकसाध्यविरोधज्ञानस्यान्यत्रासंकीर्णस्य प्रतिबन्धकत्वात्। न च तद्विरोधज्ञाने यदि न साध्यम्, तदा बाधः, अपरथाश्रया-सिद्धिरित्युभयथाऽपि नाधिक्यमिति वाच्यम्। विरोधज्ञानस्य तदुपजीव्यत्वात्, स्वतो दूषणत्वाच्च। ग्राह्यतदुभयसामानाधिकरण्याभावावगाहित्वात्, अन्यथाऽ-सिद्धिबाधोभयसमावेशविकल्पनेन विरुद्धोऽपि हेत्वाभासो न स्यादिति दिक्।

अत्र ब्रूमः[1]। भ्रम एव दोषः, प्रमैव गुण इति न विभागः, प्रतियोगिप्रमाया अभावभ्रमं प्रति प्रतियोग्यारोपस्याभावप्रमां प्रति जनकत्वेन व्यभिचारात्, किन्तु

दर्पणः

धिक्यम्, तथापि स्फुटत्वादिदमुपेक्ष्य गुणान्तरस्यैव सुलभत्वाद्धेत्वाभासाधिक्यशङ्कापि नेत्याशयेनाह—अत्र ब्रूम इति। वयं तु ब्रूम इति तु पाठः प्रामादिकः।

केन वारणीयमित्यत्र हेतुमाह—वस्तुतस्त्विति। व्यापकवति व्याप्यज्ञानादिक-मप्यत्र गुणः संभवतीति दिगर्थः। स्वत उत्पद्यत इति मूलम्। ज्ञानसामान्यकारणमात्र-प्रयोज्यमित्यर्थः। एवमग्रे जन्यपदमपि प्रयोज्यपरम्। योग्यतावच्छेदकेति रूप्यते

माथुरी

अयथार्थव्यवहारस्य लक्षणाय समर्थनेऽपि अप्रमात्वव्यवहारस्तत्र कथं समर्थनीयः सर्व्वंधीयाथार्थ्येन ज्ञानप्रामाण्याभावात् "अप्रामाण्यं परत उत्पद्यते" इति प्राचीनैर्व्वा कथमुच्यते[2] इत्याह, 'अथेति, 'प्रामाण्यत्वे' प्रामाण्यरूपत्वे, एतदनन्तरं तस्य च सर्व्वधीवृत्तित्वादिति पूरणीयम्। 'रजतेति शुक्तौ रजतज्ञानं कथमप्रमाणत्वेन व्यवह्रित

१. तद्विघटकस्येति गपुस्तकपाठः।

२. इति प्राचीनग्रन्थो वा कथं संगच्छते इति ग०।

**रजतत्वाश्रयविषयकत्वं यथार्थनिश्चयरूपम्, तदतिरिक्तञ्च न प्रामाण्यम्, मानाभावात् । अस्तु वा तदपि स्वतो ज्ञायतां परतो वा मा वा ज्ञायि किं तन्निरूपणेन, प्रवृत्तावनुपयोगात् । अर्थं हि निश्चित्य प्रवर्त्तत इत्यावश्यकार्थनिश्चयादेव प्रवृत्त्युपपत्तेः ।**

**अथार्थनिश्चयादेव प्रवृत्तिरिति सत्यम्, किन्त्वेवंरूपोऽयमर्थ इति निश्चयो ज्ञानप्रामाण्यग्रहाधीन इति चेत्, न । सर्वं हि ज्ञानं रजतरूपोऽयमर्थं इत्याद्याकारं स्वार्थनिश्चयरूपमेवोत्पद्यते, का तत्र परापेक्षा । अत एवार्थतथात्वं स्वयमेव परिच्छिद्यत इति स्वतः प्रामाण्यग्रहः । यदि च**

आलोकः

प्रमाजनकतावच्छेदकरूपावच्छिन्नाभावत्वेनाजनकत्वे सति प्रमात्वावच्छिन्नकार्यताप्रतियोगिककारणताकत्वं गुणत्वं प्रमाजनकतावच्छेदकरूपावच्छिन्नप्रतियोगिकाभावत्वेनाजनकत्वे सति भ्रमत्वावच्छिन्नकार्यताप्रतियोगिककारणताकत्वं दोषत्वं, तदिह व्याप्यवति व्याप्यज्ञानमव्याप्यवति व्याप्यज्ञानं प्रमाऽप्रमाजनकत्वेन गुणो दोषश्चास्तु लाघवात्, न तु तद्व्याप्यवति तद्व्याप्यज्ञानादि, गौरवात् । तथा च वस्तुतो वह्निमति यत् किञ्चिद्व्याप्यावश्यम्भावे तदज्ञानेऽपि तद्व्याप्यतया गृहीतस्य धूमादेस्तत्रासत्त्वेऽप्यनुमितेः प्रामाण्यं केन वारणीयम् ?

दर्पणः

निरूप्यते तदधीनमिति यावत् । रूपतयेत्यनन्तरमावश्यकतया । तस्यैवाप्रामाण्यरूपतामिति शेषः । तेनोपधानपक्षे नासङ्गति-रिति ध्येयम् ।

असंसर्गेति । ज्ञाने एकत्वासंसर्गाग्रहसहितधर्म-धर्म्यसंसार्गाग्रहस्यैव योग्यतावच्छेदकत्वादिति भावः ।

**दोषहेतुकोऽसंसर्गाग्रहः** धर्मधर्म्यसंसर्गाग्रहः । तस्माद्धर्मधर्म्यसंसर्गाग्रहरूपं योग्यतावच्छेदकं एकत्वासंसर्गाग्रहसहितं भवति, धर्मधर्म्यसंसर्गाग्रहात् एकत्वासंसर्गाग्रह इति यावत् । यद्वा यथा धर्मधर्म्यसंसर्गाग्रहो दोषात्तथा एकत्वासंसर्गाग्रहोऽपि दोषादेवेति । प्रथमो ज्ञानोत्पत्तिक्षणे इति विशेषः । तत्राद्यपक्षे विनिगमनाविरहोऽस्वरसबीजम् । एतञ्च पक्षद्वयपरतया व्याख्यानं मध्ये वाकारदर्शनात् ।

माथुरी

इत्यर्थः, 'परत उत्पद्यतइति, इति प्राचीनैरुच्यते इति शेषः । 'किन्त्वति अयथार्थप्रवृत्तिजनकत्वमित्यर्थः, तथाच नाप्रमात्वव्यवहारानुपपत्तिरिति भावः । अयथार्थप्रवृत्तिजनकत्वं तज्जननयोग्यत्वं, तच्च सहकारियोग्यत्वम्, अर्थात् तादृशप्रवृत्तिसहकार्य्येव, स च दोषसहकृतज्ञानसामान्यसामग्रीहेतुकोधर्म्म-धर्म्मिणेरसंसर्गाग्रहः, दोषहेतुकधर्म्म-धर्म्म्यसंसर्गाग्रहाधीनो दोषसहकृतज्ञानसामान्यकारणकलापाधीनो वा धर्म्म-धर्म्मिविषयकज्ञानद्वयेकत्वासंसर्गाग्रहश्चेत्यभिप्रायेण "आप्रामाण्यं परत उत्पद्यते"

तज्ज्ञानं न स्वार्थनिश्चयरूपं तदा प्रामाण्यज्ञानमपि न प्रामाण्यनिश्चयरूपम्, न वा तदधीनं ज्ञानान्तरमपि स्वार्थनिश्चयरूपमिति व्यर्थमर्थनिश्चयार्थं प्रामाण्यनिरूपणम् । प्रामाण्यज्ञानेऽपि स्वविषयनिश्चयार्थमन्यापेक्षायामनवस्था । किञ्च परतः पक्षे गृहीतप्रामाण्यस्य परस्य प्रामाण्यनिश्चायकत्वेऽनवस्था, अतो यथा ज्ञानान्तरागृहीतप्रामाण्यमेव परप्रामाण्यनिश्चयरूपम्, यदा तु तत्प्रामाण्यजिज्ञासा तदा तस्यापि प्रामाण्यमगृहीतप्रामाण्येनैव परेण निश्चीयत इति नानवस्था । तथा अर्थज्ञानमपि अनिश्चितप्रामाण्यमेवार्थनिश्चयरूपमविशेषात् । न ह्युत्पन्ने ज्ञाने अर्थसंशयः किमेवमनेवं वेति । अथ ज्ञानमर्थनिश्चयरूपमपि स्वमगृह्णत्कथं स्वप्रामाण्य गृह्णीयादिति चेत् । स्वप्रकाशत्वे विवादः, अर्थस्य तथाभावरूपं प्रामाण्यं स्वत एव गृह्यत इति तवाप्यनुमतम् । अथ स्वतः प्रामाण्यग्रहे अनभ्यासदशापन्नज्ञाने इदं प्रमा न वेति संशयो न स्यात्, निश्चिते तदभावात्, अत एवाप्रमात्वशङ्कया अर्थेऽपि किमेवमनेवं वेति संशयात् न ज्ञानमात्रात्करतलामलकादावप्यर्थनिश्चयो व्यभिचारादिति चेत्, न । ह्यत्र ज्ञाने सत्यत्वासत्यत्वसंशयः, सर्वज्ञानानां सत्यत्वात् । किन्तु अगृहीतभेदं ज्ञानद्वयमेकं वा ज्ञानमित्याकारो ज्ञानं प्रमा न वेति संशयः, स च कारणदोषसंशयात्, स च ज्ञानान्तरान्निवर्त्तते ।

दर्पणः

वस्तुतो मूले व्यवहारप्रवर्त्तकत्वं व्यवहारोपधानम् । तच्च दोषहेतुकज्ञानादित्याद्यः पक्ष । यथार्थज्ञाने दोषस्य न जनकत्वमित्यरुच्या द्वितीयमाह—दोषेति । दोषहेतुकासंसर्गाग्रहरूपादित्यर्थः । तृतीयमाह—उत्पन्न इति । दोषसहकृतज्ञानादित्यर्थः । तर्कि दोषज्ञानयोरेव व्यवहारोपधाने तन्त्रत्वं न त्वसंसर्गाग्रहस्येत्याशंक्य

माथुरी

इति प्राचीनप्रवादं सङ्गमयति,[1] 'तच्चेति, अप्रामाण्यञ्चेत्यर्थः एतस्य 'असंसर्गाग्रहरूपमित्यग्रेतनेनान्वयः, 'ज्ञानसामग्र्यां दोषानुप्रवेशादित्यनन्तरं जातमिति पूरणीयम्, एतस्यापि असंसर्गाग्रहरूपमित्यग्रेतनेनान्वयः तथाच ज्ञानसामग्र्यां दोषानुप्रवेशाज्जातं धर्म्म-धार्म्मिनोरसंसर्गाग्रहरूपमप्रामाण्यञ्चेत्यर्थः, दोषसहकाराद्वेत्येतत्पूर्व्वस्थं 'उत्पन्ने ज्ञाने' इति 'दोषहेतुकेत्यस्यादौ बोध्यं, 'दोषसहकाराद्वेत्यनन्तरं उत्पन्ने इति पूरणीयं । 'एकत्वासंसर्गाग्रहसहितं' एकत्वासंसर्गाग्रहोयः तेन सहितं, 'सहितमित्यनन्तरं भवतीति

१. स च धर्म्म-धर्म्मिणोरसंसर्गाग्रहः ज्ञानद्वयैकत्वासंसर्गाग्रहश्चेत्यभिप्रायेण "अप्रामाण्यं परत उत्पद्यते" इति मीमांसकग्रन्थं संगमयतीति ग० ।

ननु अनुभूतित्वं प्रमात्वम्, तच्च स्मृत्यन्यज्ञानत्वम्, स्मृतित्वञ्च संस्कारासाधारणकारणकत्वमिति स्वतो न गृह्यते, संस्कारादेरग्रहात्, अतएव न स्वत एव उत्पद्यते, स्मृतिसाधारणत्वादिति चेत्—न। प्रवृत्त्यौपयिकं हि प्रामाण्यमर्थतथात्वनिश्चयत्वम्, तच्च स्वत एव गृह्यते उत्पद्यते च, न त्वनुभूतित्वसहितं, गौरवात्। तत्रापि संवादादिना प्रवृत्तेः प्रामाण्यं यथार्थत्वमेवानुमीयते, न त्वनुभूतित्वे सति, व्यभिचारात्। स्मृत्यनुभवयोरप्रमाप्रमाव्यपदेशस्तान्त्रिकाणां सापेक्षत्वनिरपेक्षत्वनिबन्धनः। 'यथार्थानुभवो मानमनपेक्षतयेष्यते' इति तैरभिधानादिति।

अत्र ब्रूमः[1]। प्रामाण्यनिश्चयो निष्कम्पप्रवृत्तिहेतुः, न तत्संशय इत्यनुभवसिद्धम्, त्वदनुमतञ्च, तञ्च प्रामाण्यं नार्थतथात्वनिश्चयरूपम्। अनभ्यासदशापन्नज्ञानस्य स्वप्रकाशेनानुव्यवसायेन वार्थतथात्वनिश्चयत्वग्रहेऽपि निष्कम्पप्रवृत्त्यभावात्, प्रामाण्यसंशयाच्च। सर्वधियां यथार्थत्वनियमेनार्थतथात्वनिश्चयत्वस्य स्वरूपतो विषयतश्चागृहीतभेदज्ञानद्वयरूपभ्रमसाधारणत्वात्। तस्मान्न भ्रमसमानाकारादिदं रजतमिति ज्ञानान्निष्कम्पप्रवृत्तिः, किन्तु तद्व्यावृत्ताकारात्। अथ तत्र प्रामाण्ये न संशयस्तस्यार्थतथात्वनिश्चयत्वरूपस्य निश्चयात्। किन्त्वगृहीतभेदं ज्ञानद्वयं

दर्पणः

व्यवहारोपधानं विशिनष्टि—धर्मेत्यादि। रूप्यते कार्यतयेति रूपं सहितं कारणयेत्यर्थः। मध्ये च वकारः प्रमादिकः।

उपाध्यायास्तु विपरीतव्यवहारजनकज्ञानोत्पत्तिकालीने धर्मधर्मिणोरसंसर्गाग्रहे दोषस्योपयोऽग्रे ज्ञानयोरेकत्वासंसर्गाग्रहे धर्मधर्म्यसंसर्गाग्रह एव मूलमित्याद्यः कल्पः।

माथुरी

पूरणीयं, तथाच ज्ञानसामग्र्यां दोषानुप्रवेशाज्जातं धर्म्म-धर्म्मिणोरसंसर्गाग्रहरूपमप्रामाण्यञ्च उत्पन्ने ज्ञाने दोषहेतुकासंसर्गाग्रहात् दोषसहकाराद्वा तज्ज्ञानद्वयोरेकत्वासंसर्गाग्रहसहितं भवतीति योजना। 'सहितमित्यनन्तरं भवतीत्यध्याहारात्। 'दोषानुप्रवेशादित्यत्र अधीनत्वं पञ्चम्यर्थः, अन्वयश्चास्य 'असंसर्गाग्रहे'। 'परत उत्पद्यते' अतः परत उत्पत्तिकत्वव्यवहारविषय इति यावत्। तथाच 'अप्रामाण्यं परत उत्पद्यते' इत्यस्य एकमप्रामाण्यं सहितं भवतीत्यर्थः 'न तु ज्ञामात्रेति न पुनरप्रमात्वाश्रयज्ञाने जन्यतासम्बन्धेन ज्ञानसामान्यसामग्रीत इत्यर्थः, अप्रमात्वं परत उत्पत्तिकत्वव्यवहारविषय इति शेषः। 'अतिप्रसङ्गादिति जन्यतासम्बन्धेन ज्ञानसामान्यसामग्र्या अतिप्रसक्तत्वादित्यर्थः तथाच अप्रमात्ववत् प्रमात्वेपि स्वत उत्पत्तिकत्वव्यवहारा

१. मीमांसकैकदेशिसंवादमाह—अत्रेति।

विशिष्टज्ञानं वेति संशयः। स एव निष्कम्पप्रवृत्तिप्रतिबन्धकोऽपि। अतस्तस्य ज्ञानान्तरान्निवृत्तौ निष्कम्पप्रवृत्तिरिति चेत्—तर्हि यस्य संशयो व्यतिरेकनिश्चयश्च यत्प्रतिबन्धकस्तन्निश्चयस्तद्धेतुरिति व्याप्तेः भ्रमव्यावृत्तस्य विशिष्टज्ञानत्वस्य निश्चयः प्रवृत्तिहेतुर्न त्वर्थतथात्वस्य, भ्रमसाधारण्यात्, तस्मिन् तत्प्रत्यप्रत्तेश्च। तत्संशयाभावसहितस्यार्थतथात्वनिश्चयस्य प्रवर्त्तकत्वे गौरवात्। किञ्च प्रवृत्तिहेतुज्ञानं विघटयत एव ज्ञानस्य तत्र प्रतिबन्धकत्वम्, न चेह तथा, संशये सत्यपि तस्य सत्त्वात्।

अपि च विशिष्टज्ञानत्वमेव प्रामाण्यं भ्रमव्यावृत्तत्वात्। लौकिकपरीक्षकाणां भ्रमव्यावृत्ते प्रामाण्यव्यवहारात्। तदतिक्रमे प्रमात्वस्य पारिभाषिकत्वापत्तेः। तस्मात् भ्रमव्यावृत्तत्वात् निष्कम्पप्रवृत्तिहेतुत्वात् प्रामाण्यसंशयनिवर्त्तकत्वाच्च विशिष्टज्ञानत्वमेव प्रामाण्यम्।

दर्पणः

तादृशज्ञानसामग्रीकालीनधर्मधर्म्यसंसर्गाग्रहे दोषो मूलम्, अग्रे च धर्मधर्म्यसंसर्गाग्रह एवेति द्वितीयः कल्पः। तादृशज्ञानोत्पत्त्यनन्तरमेकत्वासंसर्गाग्रहे दोष एव मूलमिति तृतीयः कल्पः। धर्मधर्म्यसंसर्गाग्रहेण कारणेन सहितमित्यर्थमाहुः। **अप्रामाण्यं धर्मो दोषादिति पूर्वोक्ते।**

ननु भट्टादिमत इव धर्मिण एव परतस्त्वमुचितमित्याशङ्क्य 'सिंहावलोकित'

माथुरी

पत्तिरिति भावः। अथाप्रामाण्यं परतो गृह्यते इति सिद्धान्तः कथं संगच्छते इत्यत आह, 'उन्नयत इति, 'बाधकात्' व्यापकशून्ये व्याप्यप्रकारकप्रवृत्तिजनकत्वात्। 'तस्य' विपरीतप्रवृत्तिजनकत्वस्य' 'न' ज्ञानेन, 'तदनुव्यवसायेन' ज्ञानानुव्यवसायेन। इदानीं नैयायिकोक्तं दोष-तदभावस्य कारणत्वं दूषयति, 'ज्ञानस्वरूप इति। नैयायिकमतेनापि दूषणमाह, 'ज्ञानयथार्थेत्यादिना 'नान्तरीयकावित्यन्तेन, 'यथार्थत्वं' यथार्थत्वविशिष्टम्, 'दोषाभावाद्वेति, जायते इति शेषः नन्वेवं भ्रमोऽपि ज्ञानसामग्रीमात्रात्स्यात् किं दोषस्य कारणत्वेनेत्यत आह, 'असदर्थविषयेति, असदर्थविषयकत्वं विशेष्यावृत्तिप्रकारकत्वं, 'इन्द्रीयाणामसदर्थ विषयकज्ञानजनने सामर्थ्याभावादित्यर्थः। ननु भ्रमस्य दोषमात्रकारणकत्वे ज्ञानत्वं न स्यादतो दोषसहकृतज्ञानसामान्यसाग्र्या हेतुत्वं वाच्यम्, एवञ्चेद्दोषाभावसहकृताया एव तस्याः प्रमाहेतुत्वं वाच्यमन्यथा ज्ञानसामग्र्येव प्रमासामग्री तज्जन्यत्वे भ्रमस्यापि प्रमात्वप्रसङ्गादित्याशङ्कते, 'नन्विति' 'यथार्थत्वे' यथार्थत्वावच्छिन्ने, अन्यथा ज्ञानसामग्र्येव प्रमासामग्री तज्जन्यत्वेन भ्रमस्यापि प्रमात्वप्रसङ्गादिति भाव। 'सैव सामग्रीति, तथाच दोषनिपेक्षज्ञानसामग्रजन्यत्वमेव प्रमात्वव्याप्यमिति भावः। 'सैव' ज्ञानसामान्यसाग्र्येव, 'विरोधात्' दोषतदभावयोर्विरोधात्। अथ तदंशे दोषाभावः तत्प्रमायां कारणं वाच्यम्, तदा यद्यपि

नन्वस्तु तथा तदेव स्वतो गृह्यते इति चेत्, न। अगृहीतासंसर्गधर्मधर्मिविषयैकज्ञानत्वं भ्रमव्यावृत्तं विशिष्टज्ञानत्वम्, तत्तु स्वतो ग्रहीतुं न शक्यते, अगृहीतासंसर्गादेः प्रागनुपस्थितेः सामग्रीविरहात्। स्वप्रकाशता हि स्वमात्रसाक्षिणी, अन्यथाऽनभ्यासदशापन्नेऽपि तस्य स्वतो ग्रहादप्रामाण्यसंशयो न स्यात्। अतएव न ज्ञानसामग्रीत एव प्रामाण्यमुत्पद्यते, भ्रमस्यापि तथात्वापत्तेः।

नव्यास्तु अविद्यमानभेदस्याग्रहः प्रामाण्यम्, स चात्यन्ताभावः, कदापि तस्य ज्ञानाभावादत्यन्ताभावरूपतया स्वतः सिद्धत्वेन प्रामाण्यं स्वत इत्युच्यते। विद्यमानभेदस्याग्रहोऽप्रामाण्यम्, स चाग्रहः प्रागभावः।

दर्पणः

न्यायेनाहामूले ज्ञानस्वरूपे चेति। तथा च धर्मे एव दोषान्न तु धर्मीत्यर्थः। अभावग्रहणं च दृष्टान्तार्थम्। व्यभिचारादिति मूलम्। अन्वयव्यतिरेकविधानस्य अन्यथासिद्धेऽपि सतः कारणतायां व्यभिचारादित्यर्थ। मूले जन्यमेव प्रयोज्यमेव। अप्रमारूपज्ञाने दोषस्य हेतुत्वमुक्त्वा सर्वधीयथार्थत्वपक्षे दोषतदभावयोर्न ज्ञानस्वरूपे

माथुरी

इदं रजतमिति भ्रमस्थले रजतत्वांशे दोषोऽस्ति तथापि शुक्तित्वांशे तदभावोऽस्त्येवेत्यत ,अयथार्थ-यथार्थत्वे' इति, 'नान्तरीयको' अन्यथासिद्धो, यथा अस्मन्मते अयथार्थत्वविशिष्टे दोष अन्यथासिद्धः तथा भवन्मतेऽपि प्रमायां दोषाभावः अन्मथासिद्ध इत्यर्थः। यथाश्रुतन्तु न सम्यक् पूर्व्वं स्वयमेव असदर्थविषयकतत्तद्दोषादित्युक्तत्वात् भ्रमं प्रति इदानीं दोषकारणत्वे विवादाभावात्।

ननु प्रामाण्यस्य स्वतउत्पत्तिकत्वमुपपादितं स्वतोग्राह्यत्वं कथमित्यत आह, 'यथार्थत्वञ्चेति, 'अर्थस्य' विशेष्यस्य, स्वविशेष्ये स्वविषयीकृतप्रकारकत्वमिति निस्कर्षः, इदन्तु विषयतया ज्ञानवृत्ति। 'यद्धर्म्मत्वमिति, 'अर्थस्य' विशेष्यस्य, तथाच तद्वद्विशेष्य कत्वे सति तत्प्रकारकमिति निष्कर्षः 'इदमिति, 'इदं रजतमित्यनेन अग्रेतनस्वार्थनिश्चयरूपमित्यस्यान्वयः, तथाच इदं रजतमिति स्वार्थनिश्चयरूपं ज्ञानमित्यर्थः। 'स्वस्येति स्वस्य रजतत्वाश्रयविशेष्यकत्वं रजतत्वप्रकारकत्वञ्चेत्यर्थः, 'परिच्छिन्दत्' परिच्छिनत्ति विषयीकरोतीति यावत्। ननु विशेष्यावृत्त्यप्रकारकत्वं प्रामाण्यं तत्कथं स्वतोज्ञेयमित्यत आह, 'तदतिरिक्तञ्चेति ज्ञानोल्लिखितप्रकारकत्वाद्यतिरिक्तं न प्रामाण्यपदवाच्यमित्यर्थः, 'मानाभावात्' प्रामाण्यपदवाच्यत्वे मानाभावत्।

'अस्तु वेति, तदपि' 'तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वरूपप्रामाण्यमपि, 'स्वतोज्ञायतां परतो वा मा वा ज्ञायि' इति विचारोऽस्त्वित्यर्थः, 'किन्तदिति किन्तस्य स्वतो ग्राह्यत्वनिरूपणेनेत्यर्थः। ननु प्रामाण्यं स्वतो ग्राह्यं वेति विवादः, तदा तस्यापि प्रामाण्यत्वेन स्वतो ग्राह्यत्वविवादविषयत्वात् कथं तस्य स्वतो ग्राह्यत्वविवाद-

 

एतेन स्वव्यधिकरणप्रकारकं ज्ञानं भ्रमस्तदन्योऽनुभवः प्रमा, भ्रमो धर्म्यंशेन प्रमेति निरस्तम्। नापि प्रकाराधिकरणावृत्त्यप्रकारकविषयताप्रतियोग्यनुभवः, प्रकारानधिकरणावृत्तिविषयताप्रतियोग्यनुभवो वा प्रमा, प्रमेयमिदमिति ज्ञाने प्रकारानधिकरणस्याप्रसिद्धेः।

किञ्च रजतत्वप्रकारकविषयताया रजतवृत्तित्वनियमात् रजतत्वावच्छिन्नैव रजतभ्रमे रजतवृत्तिविषयता, अतो रजतभ्रमोऽपि रजते प्रमा

आलोकः

प्रतियोगितेति। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानस्याभावधीहेतुत्वात्, न तु सामग्रीतदिति भावः। तथा च योग्यानुपलम्भसहितस्य तस्य सामग्रीत्वं वाच्यम्, न च व्यधिकरणधर्मावच्छिन्ने तत्सम्भवति, तथा चोपलम्भकदोषसत्त्वे नानुपलम्भः, दोषाभावे यावत्तदुपलम्भकासत्त्वे[२] योग्यानुपलम्भाभाव

दर्पणः

अन्यथेति मूलम्। अप्रमात्वविरोधेन प्रमात्वस्य प्रमात्वविरोधेनाप्रमात्वस्यापि निराकरणसम्भवदिति भावः। प्रमेयमित्यादिदोषस्य प्रथमे अलग्नकत्वादाह प्रथम इति। द्वितीये स्वप्रकारानधिकरणवृत्तिविषयत्वप्रतियोगिभिन्नत्वं निर्विकल्पके सम्भवति। प्रथमे तु विषयताप्रतियोगित्वं न सम्भवति। विषयताया विशेष्यवत्तित्वादिति भावः।

प्रकारत्वेन निरूपकत्वेन।

माथुरी

सुवक्षत्वादिति भावः। 'एतेनेति भ्रमेऽपि धर्म्मितावच्छेदकांशे प्रामाणिकानां प्रमाव्यवहारसत्त्वेनेत्यर्थः, 'स्वव्यधिकरणेति स्वविशेष्यतानधिकरणवृत्तिधर्म्मेत्यर्थः स्वपदं ज्ञानपरम्। प्रकाराधिकरणावृत्तीति यत्किञ्चित्प्रकाराधिकरणावृत्त्यप्रकारकविषयताप्रतियोग्यनुभव इत्यर्थः, स्वपदं विषयतापरम्, इदं रजतमित्यादिभ्रमे अतिव्याप्तिवारणाय यत्किञ्चिदिति स्वप्रकारविशेषणं, धर्म्मितावच्छेदकप्रकारकधर्म्मिज्ञानस्य भ्रमानुभवहेतुतया प्रमुवृतत्ताकभ्रमानुभवस्याप्रसिद्धत्वाच्च न तत्रातिव्याप्तिरिति भावः। लक्षणान्तरमाह, 'प्रकारानधिकरणावृत्तीति यत्किञ्चित्स्वप्रकारानधिकरणावृत्तिविषयतायाः प्रतियोग्यनुभव इत्यर्थः। इदं रजतमित्यादिभ्रमविषयताया अपि स्वप्रकारेदन्त्वाधिकरणमात्रवृत्तित्वेन प्रकारानधिकरणावृत्तित्वादतिव्याप्तिवारणाय यत्किञ्चिदिति स्वप्रकारविशेषणमिति भावः। द्वितीये दूषणमाह, 'प्रमेयमिदमितीति प्रमेयत्वसामान्यलक्षणादिजन्यप्रमेयमित्यादिप्रमुवृतत्ताकप्रमायामित्यर्थः। इदमुपलक्षणं लक्षणद्वय एव निर्विकल्पकाव्याप्तिः, इदं रजतमित्यादिभ्रमांशप्रमानुपग्रहश्च दूषणं बोध्यम्। रजततादात्म्यारोपे विषयताश्रयीप्रकाररजतत्वमात्रप्रकारिका रजतमात्रनिष्ठा, अन्या रजतमात्रप्रकारिक शुक्तिमात्रनिष्ठा, अपरा च इदन्त्वमात्रप्रकारिका शुक्ति-

स्यात् । अथ रजतपुरोवर्त्तिनोरेकैव विषया, सा च प्रकारानधिकरण-वृत्तिधर्मावच्छिन्नैवेति चेत्, तर्हि धर्म्यंशेपि तज्ज्ञानं प्रमा न स्यात्, व्यधिकरणप्रकारकत्वस्य तुल्यत्वात्, धर्म्यंशे तु प्रमात्वे रजतेऽपि प्रमा स्यात् । अथ रजतांशे धर्म्यंशे च तज्ज्ञानं प्रमैव वैशिष्ट्यांशे न प्रमेति न प्रमेति चेत्, न । वैशिष्ट्यस्य पूर्वज्ञानाविषयत्वेनाप्रकारत्वात् ।

आलोकः

इत्युभयथाऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावासम्भवः, विस्तरश्चास्यानुमान इति भावः इति च वस्तुगतिमनुरुध्योक्तम् ।

प्रकृते च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमेऽपि न क्षतिः,

दर्पणः

किं चेतीति । रजतत्वप्रकारिकार रजतमात्रनिष्ठा रजतभ्रमे भिन्नैव विषयतेति मूलाशयः । तत्र शङ्कते मूलं– अथ रजतेति । ननु निरूपकत्वघटितमेव प्रमात्व-घटितमेव प्रमात्वमप्रमात्वं च, न तु तद्विशेष्यकत्वमात्रघटितमित्यत आह मूलं वैशिष्ट्यवृत्तीति ।

ननु भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम्, न च वैशिष्ट्यनिरूपितं वैशिष्ट्यान्तरं भासत इत्यत आह प्रकारत्वेनेति मूलम् । नापि स्वव्यधिकरणेति । अथ

माथुरी

मात्रनिष्ठा, प्रकारभेदेन विषयताभेदादिति मतमालम्ब्य लक्षणद्वय एव तत्राति-व्याप्तिमाह, किञ्चेति, रजततादात्म्यारोप इति शेषः । 'रजतवृत्तित्वेति रजतमात्र-वृत्तित्वादित्यर्थः 'रजतत्वावच्छिन्नैव' रजतत्वसमानाधिकरणैव, न त्विदन्त्वसमाना-धिकरणा, 'रजतभ्रमे' रजततादात्म्यारोपे, तथाच रजतवृत्तिविषयता स्वप्रकार-रजतत्वाधिकरणावृत्त्यप्रकारिका स्वप्रकाररजतत्वानधिकरणावर्त्तमाना चेति भावः । 'रजते प्रमा स्यादिति रजतांशे प्रमा स्यादित्यर्थः । तादृशविषयताधिकरणस्यैव भवन्मते प्रमात्ववृत्तावंशत्वादित्यभिमानः ।

पूर्व्वोक्तमतमनादृत्य शङ्कते, 'अथेति, 'प्रकारानधिकरणेति यत्किञ्चित् स्वप्रकारानधिकरणवृत्तित्वविष्टेत्यर्थः । इदमुपलक्षणं यत्किञ्चित्स्वप्रकाराधिकरणा-वृत्तिप्रकारिका चेत्यपि बोध्यम् । 'धर्म्यंशेऽपीति इदमंशेऽपीत्यर्थः । 'व्यधिकरणेति यत्किञ्चित्स्वप्रकाराधिकरणावृत्तिप्रकारकत्वस्येत्यर्थः, तुल्यत्वादिति, रजतत्व-प्रकारकविषयतावदिदन्त्वप्रकारकविषयतायामपि तत्त्वात्तयोरभेदादिति भावः । 'धर्म्यंशे त्विति प्रकारभेदेन विषयताभेदमभ्युपेत्य इदन्त्वमात्रप्रकारकविषयताव्यक्ति-मादाय धर्म्यंशे प्रमात्वोपपादन इत्यर्थः, 'रजतेऽपीति रजतत्वमात्रप्रकारकविषयता-व्यक्तिमादाय रजतांशेऽपि प्रमा स्यादित्यर्थः । 'प्रमैवेति, रजत-धर्म्मिणोरुभयोरेव निरुक्तविषयताधिकरणत्वादिति भावः । 'वैशिष्ट्यमात्रवृत्तिविषयताव्यक्तेः प्रकारा-

**वैशिष्ट्यवृत्तिविषयतायां रजतत्वपुरोवर्त्तिनोः प्रकारत्वेन भ्रमस्य वैशिष्ट्यांशे प्रमात्वाप्रमात्वापातात् । नापि स्वव्यधिकरणप्रकारानवच्छिन्नविषयता-प्रतियोग्यनुभवः प्रमा, प्रमेयमिदमिति ज्ञाने प्रमेयत्वप्रकारकविषयताना-श्रयस्याप्रसिद्ध्याऽव्याप्तेः । न च संयोगित्वादिना प्रमेयत्वप्रकारक-विषयताव्यतिरेको घटादौ प्रसिद्ध इति वाच्यम्, प्रतियोगितावच्छेदक-**

### आलोकः

**तदवष्टम्भेन प्रकृतलक्षणकरणसम्भवात् तादृशविषयतानधिकरणवृत्तिप्रमेयत्वप्रकारा-वच्छिन्नत्वात् प्रमेयत्वज्ञानविषयतायाः, घटे प्रमेयत्वसत्त्वादितिसमर्त्तव्यम् ।**

**ननु स्वव्यधिकरणत्वं न स्वानधिकरणवृत्तित्वं, किन्तु स्वाधिकरणावृत्तित्वम्,**

### दर्पणः

स्वव्यधिकरणेत्यत्र विषयताधिकरणानिष्ठात्यन्ताभावप्रतियोगित्वं स्वव्यधिकरत्वं विवक्षितम्, प्रकृते तु विषयतानधिकरणवृत्तित्वमत एवाह मूले—**विषयतानाश्रयस्येति** । अतो धर्मशब्दस्य तत्र तथाश्रुतत्वाद्वा न पौनरुक्त्यम् । प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिज्ञानं भ्रमरूपं सम्भवत्येवेत्यन्यथा व्याचष्टे **न तु सामग्रीत्वादिति** ।

ननु गुणदोषातिरिक्तसकलोपलम्भकगर्भयोग्यानुपलब्धिहेतुतया नायं दोष इत्यस्वरसादाह—**विस्तरश्चेति** ।

### माथुरी

प्रसिद्ध्या वैशिष्ट्यस्य निरुक्तविषयतानधिकरणत्वेन वैशिष्ट्यांश एव प्रमत्वाभावादि-त्यर्थः । वैशिष्ट्यस्याप्रकारकत्वेन प्रमात्वाभाववृत्तावंशत्वमेव न सम्भवतीत्यभिप्रायेण समाधत्ते, 'वैशिष्ट्यस्येति, 'अप्रकारत्वादिति, स्वप्रकारस्यैव च प्रकारपदं न विशेषणपरं परन्तु निरूपकपरं परन्तु निरूपकभेदेनैव च विषयताभेदः, तथाच तादात्म्यारोपस्य वैशिष्ट्यांशे प्रमात्व-भ्रमत्वोभयप्रसङ्गः भवन्मते प्रकारीभूतधर्म्मस्यैव भ्रमत्वेवृत्ता-वंशत्वमिति नियमादित्यभिप्रायेण दूषणान्तरमाह, 'वैशिष्ट्येति' 'प्रकारत्वेन' निरू-पकत्वेन, 'भ्रमस्य' तादात्म्यारोपस्य, 'वैशिष्ट्यांशे' रजततादात्म्यारोपस्य वैशिष्ट्यांशे, 'प्रमात्वाप्रमात्वेति रजतमात्रनिरूपितविषयताव्यक्त्यधिकरणत्वमादाय प्रमात्वप्रसङ्गः तस्याः स्वनिरूपकाधिकरणवृत्तित्वात्, शुक्तिमात्रनिरूपितविषयताव्यक्तिमादायैव च भ्रमत्वप्रसङ्गः तस्याः स्वनिरूपकानधिकरणवृत्तित्वादित्यर्थः । 'स्वव्यधिकरणेति स्वविषयतानधिकरणवृत्तिधर्म्माप्रकारकोऽनुभव इत्यर्थः । 'संयोगित्वादिनेति संयोगि-त्वादिना व्यधिकरणधर्म्मेणेत्यर्थः, अप्रकारकत्वमपि व्यधिकरणधर्म्मावच्छिन्नप्रति-योगिताकाभाव एव वाच्यः तेन प्रमामात्रे नासम्भव इति भावः । अत्र भ्रमातिव्याप्तौ सत्यामेव दोषमाह, 'प्रतियोगितावच्छेदकेति, तथाच व्यधिकरणधर्म्मावच्छिन्नाभावे मानाभावादिति भावः । 'यत्किञ्चिदिति यत्किञ्चिज्ज्ञानीयविषयताव्यधिकरणधर्म्मा-प्रकारकत्वमित्यर्थः, 'भ्रमसाधारणमिति, इद रजतमित्यादिभ्रमेऽपि द्रष्टव्यमित्यादि-

रूपवत्त्वेन प्रतियोगिज्ञानस्याभावधीहेतुत्वात् । किञ्च यत्किञ्चिद्व्यधिकरण-प्रकारानवच्छिन्नत्वं भ्रमसाधारणं प्रकृतज्ञानव्यधिकरणप्रकारानवच्छिन्नत्वं निर्विकल्पकाव्याप्तम्, तस्य निष्प्रकारकत्वादिति ।

इति प्रमाणलक्षणपूर्वपक्षः समाप्तः ।

आलोकः

तथा चावृत्तिपदार्थमादायाव्याप्त्युद्धारः स्यादित्यरुचेराह—किं चेति ।

इति प्रमाण्यवादलोके प्रामाण्यलक्षणपूर्वपक्षः समाप्तः ।

दर्पणः

ननु स्वव्यधिकरणत्वमिति । न च शंकितपौनरुक्त्याभ्रास्वरसः साधुरिति वाच्यम्, अन्योन्यात्यन्ताभावगर्भतयापि पौनरुक्त्यपरिहारादिति भावः ।

इति प्रामाण्यवाददर्पणे प्रमाणलक्षणपूर्वपक्षः समाप्तः

माथुरी

ज्ञानीयविषयताव्यधिकरणधर्म्माप्रकारकत्वस्य सत्त्वादिति भावः । 'प्रकृतज्ञानेति प्रकृतज्ञानीयविषयताव्यधिकरणधर्म्माप्रकारकत्वमित्यर्थः, 'निष्प्रकारकत्वादिति, विषयताया विशेष्यमात्रनिष्ठत्वनियमेन निष्प्रकारमज्ञाने विषयताविरहादिति भावः । न च स्वविषयताव्यधिकरणधर्म्मप्रकारकं यद्यत् तदन्यत्वं लक्षणमस्तु तथाच न निर्विकल्पकाव्याप्तिरिति वाच्यं तथापि भ्रमांशप्रमानुपपत्त्यापत्तेः[1] इति दिक् ।

इति श्रीमथुरानाथतर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये प्रत्यक्षखण्डरहस्ये प्रमालक्षणपूर्वपक्षरहस्यम् ॥

१. भ्रमांशप्रमानुपग्रहापत्तेरिति ख० ।

# अथ प्रमाणलक्षणसिद्धान्तः

उच्यते । यत्र यदस्ति तत्र तस्यानुभवः प्रमा, तद्वति तत्प्रकारकानुभवो वा । यत्र यन्नास्ति तत्र तस्य ज्ञानम्, तदभाववति तत्प्रकारक-

आलोकः

यत्र यदिति । यत्र धर्मिणि येन सम्बन्धेन यो धर्मोऽस्ति तत्र धर्मिणि तद्धर्मप्रतियोगिकतत्सम्बन्धावगाह्यनुभवः प्रमेत्यर्थः । निर्विकल्पकासंग्रहं च स्वयमेव वक्ष्यति।

यत्तु लक्षणयोर्भेदान्यथाऽनुपपत्त्या निर्विकल्पकसंग्राह्यतैव विशेष इति—तन्न । विशेषान्तरस्य वक्ष्यमाणत्वात्, तत्संग्रहानुरोधेन प्रकृतव्याख्यानादरे[1] भ्रमांशवृत्तिप्रमानुपग्रहस्य दुर्वारत्वापत्तेः । येन सम्बन्धेनेत्यादिप्रवेशप्रयोजनन्तु लोहितः स्फटिक इत्यादीनां साक्षात्परम्परासम्बन्धविषयभेदेन प्रमाप्रमोभयरूपवत्त्वमिति ।

ननु प्रतियोगित्वं स्वरूपसम्बन्धविशेषो न तु निरूप्यत्वं,[2] तत्प्रतीतौ तदविषयत्वात् । न चैकस्मिन्नेव प्रत्यय एकसम्बन्धप्रतियोगित्वमुभयोर्विषययोः, विशे-

दर्पणः

ननु मूलस्थतत्रेति सप्तम्या अधिकरणत्वमर्थः । तच्चानुभवं प्रति, प्रकारं प्रति वा ? नाद्यः, घटादेरनुभवानधिकरणत्वात् । नान्त्यः । गगने गगनत्वमित्यवृत्तिप्रकारकप्रमायामव्याप्तेः । रजतादावेव स्थितस्य रजतभ्रमे प्रकारतया तत्रातिव्याप्तेश्च । मूले अस्तीति वर्तमानता चायुक्ता, अतीतादिविशेषणकप्रमायामव्याप्तेः । सम्बन्धभेदानुक्तौ च लोहितः स्फटिक इति साक्षात्सम्बन्धावगाहिनि भ्रमेऽतिव्याप्तेः । परम्परासम्बन्धेन स्फटिकेऽपि लौहित्यसत्त्वात् । अत आह—यत्र धर्मिणीति । तत्र धर्मिणीति । तद्धर्म्यनुयोगिकतयेत्यर्थः । तथा चाधिकरणत्ववर्त्तमानत्वयोरविवक्षया सम्बन्धभेदस्य च

माथुरी

'यत्र यदस्तीति अस्तित्वं सम्बन्धित्वमात्रं न त्वाधेयत्वं तथा च यत् यत्सम्बन्धीति फलितार्थः । तेन गगने शब्द इत्याद्यवृत्तिप्रमायां नाव्याप्तिः[3] । 'तत्रेति निरूपितत्वं सप्तम्यर्थः, अन्वयश्चास्य 'तस्येतिषष्ठ्यर्थविषयतायां, तन्निरूपित-तन्निष्ठविषयताप्रतियोग्यनुभव इत्यर्थः, तथा च तत्सम्बन्धिनिरूपित-तन्निष्ठविषयताप्रतियोग्यनुभवत्वं तत्र तत्प्रमात्वमिति समुदितार्थः । सम्बन्धिता विषयता च प्रमात्वनियामकसम्बन्धेन ग्राह्या तेन संयोगसम्बन्धेन वह्न्यादिमति पर्व्वतादौ समवायसम्बन्धेन वह्न्यादिभ्रमे नातिव्याप्तिः, न वा तत्संसर्गकज्ञानस्य तत्प्रमात्वापत्तिः[4]

---

१. व्याख्यानानादरे इति पाठान्तरम् ।

२. निरूपकत्वमिति कपुस्तके पाठः ।

३. अस्तित्वस्य अधिकरणत्वरूपत्वे आधेयत्वस्य वृत्त्यनियामकसम्बन्धतया तत्सम्बन्धावच्छिन्नाधिकरणत्वाप्रसिद्धया गगने शब्द इत्यादिज्ञानस्य प्रमात्वानुपपत्तिरिति भावः।

४. तत्संसर्गकज्ञानस्य संसर्गांशेऽपि प्रमात्वापत्तिरिति ख० ।

आलोकः

**ष्यत्वविशेषणत्वाव्यवस्थाप्रसङ्गात् । न हि भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वाभ्यामन्यद्विशेषणत्वं विशेष्यत्वं वा नाम । इदमेव च प्रकारत्वं प्रकारित्वंचेति गीयते, इत्यस्वरसादन्यल्लक्षणमाह—तद्वतीति । अत्रापि तत्सम्बन्धपुरस्कारेणेति पूरणीयम्, तथा च तद्वद्विशेष्यकस्तत्प्रकारकोऽनुभवः प्रमेत्यर्थः ।**

दर्पणः

विवक्षया यद्धर्म्यनुयोगिको यद्धर्मनुयोगिकश्च यः सम्बन्धः तद्धर्म्यनुयोगिकतया तद्धर्मप्रतियोगिकतया च तं सम्बन्धमवगाहमानोऽनुभवस्त्रितयं प्रमेत्यर्थः ।

नन्वेवं विशेषणविशेष्यसम्बन्धानवगाहिनि **निर्विकल्पकेऽव्याप्तिरत** आह—**निर्विकल्पकेति । निर्विकल्पकसंग्राह्यतैवेति ।** तथा च धर्मं प्रत्येवाधिकरणत्वं न तु सम्बन्धविशेषस्य प्रवेश इति भावः ।

भेदानुपपत्तिं दूषयति—**विशेषान्तरस्येति ।** अनुयोगित्वाद्यप्रवेशेन ज्ञाननिरूपितसम्बन्धविशेषप्रवेशं दूषयति—**येनेति ।** ननु तदनुयोगिकत्वादेः स्वरूपसम्बन्धत्वं वा वैशिष्ट्यत्वं वा प्रकारत्वं वा विवक्ष्यते । नाद्यः, समूहालम्बनाद्विशिष्टधियो भेदानापत्तेः । न द्वितीयः, दण्डपुरुषसंयोगाः प्रतियोगित्वानुयोगित्वानीति समूहालम्बनाद् दण्डीति विशिष्टधियो भेदानापत्तेः । न तृतीयः, पुरुषानुयोगिकत्वदण्डप्रतियोगिकत्वयोः प्रकारतायां तत्सम्बन्धेऽपि विशेष्यानुयोगिकत्वविशेषणप्रतियोगिकत्वयोः प्रकारत्वे एवमेवाग्रे प्रधावनेऽनवस्थानादननुभवाच्च ।

अथ पुरुषानुयोगिकत्वदण्डप्रतियोगिकत्वयोर्भासमानं वैशिष्ट्यप्रतियोगित्वं न प्रकारत्वम्, किन्तु ज्ञाननिरूपितः कश्चन स्वरूपसम्बन्धोऽभावत्वादेरिव पूर्वाज्ञातयोरेवातो नानवस्था । यद्वा संसर्गमर्यादया पुरुषानुयोगिकत्वदण्डप्रतियोगिकत्वे भासेते, सा च ज्ञाननिरूपितसम्बन्धविशेषरूपा । तथा च विशेषणत्वं संसर्गमर्यादेति त्रितयमपि ज्ञाननिरूपितविषयताविशेषात्मकमेववाभ्युपेयमिति चेत्—

माथुरी

सांसर्गिकविषततायाः सम्बन्धानवच्छिन्नत्वात् । एतेन तत्र प्रमात्वनियामकसम्बन्धेन सम्बन्धित्वं सप्तम्यर्थोविषयत्वं वा, आद्ये यत्सम्बन्धि तत्सम्बन्धिनस्तस्यानुभवः तत्र तस्य प्रमेति पर्य्यवसितं तथा च शुक्ताविदं रजतमिति संसर्गारोपस्यापि रजते रजतत्वप्रकारकप्रमात्वापत्तिः तस्यापि रजतसम्बन्धिरजत्वविषयत्वात् । द्वितीये यत् यत्सम्बन्धि तद्विषयकस्तदनुभवस्तत्र तस्य प्रमेति पर्य्यवसितं तथाच रजत-रङ्गयोरिमे रङ्गरजते इति विपरीतभ्रमस्यापि रजते रजतत्वप्रमात्वापत्तिः इत्यादिदूषणम् अपास्तम् । अथ यथोक्तनिर्व्विकल्पकेऽव्याप्तिः, जाति-व्यक्तिनिर्व्विकल्पकविषयतायाः परस्परं निरूपकभावे मानाभावात्, परन्तु जाति-व्यक्त्योरुभयनिष्ठा एकैव निर्विकल्पकविषयता लाघवादधिकरणस्य च निरूपकत्वादिति चेत् । न । निर्विकल्पकालक्ष्यत्वस्यानुपदं ग्रन्थकृतैव वक्ष्यमाणत्वादन्यथा द्वितीयलक्षणेऽपि तत्राव्याप्तेर्दुर्वारत्वादिति दिक् ।

नन्वेवं तद्विशेष्यकज्ञानस्यापि तत्प्रमात्वापत्तिः । न चेष्टापत्तिः, तत्प्रकारकज्ञान एव तत्प्रमाव्यवहारादित्यस्वरसात् लक्षणान्तरमाह, 'तद्वतीति, विशेष्यित्वं

**ज्ञानं वा अप्रमा । तदन्यत्वे सत्यनुभवत्वमेव वा प्रमात्वम् । तत्प्रकारक-**

आलोकः

**स्मृतेरपि भ्रमत्वादाह— यत्रेति ।**

**सर्वमन्यत् पूर्ववत् ।**

**तदन्यत्व इति । तत्त्वात्यन्ताभाव इत्यर्थः, अन्यथाऽन्योन्याभावस्य व्याप्यवृत्तित्वनियमेन भ्रमांशप्रमानुपग्रहापत्तेरित्यवधेयम् ।**

दर्पणः

**मैवम् ।** एवं सत्यनुयोगित्वादौ मानाभावात् त्वदुक्तरीत्या दण्डस्य प्रकारतां संयोगस्य संसर्गमर्यादां दण्डादेरविशेष्यत्वं पुरुषमात्रविशेष्यतां वा आदाय विशिष्टबुद्धेः समूहालम्बनाद् भेदोपपादनात् ।

अनुयोगित्वानिसद्भावेऽपि पुरुषानुयोगिकत्वदण्डप्रतियोगिकत्वप्रकारत्वापेक्षया दण्डप्रकारकत्वस्य लघुनः प्रमालक्षणे प्रवेशोचितत्वादित्यस्वरसेनाग्रिमलक्षणमवतारयति—**नन्विति । तदविषयत्वात्** तस्य निरूपकत्वस्याविषयत्वात् ।

**न चेति ।** तथा च दण्डे सम्बन्धप्रतियोगित्वं पुरुषे च सम्बन्धानुयोगित्वं भासत इत्यर्थः । **नामेत्यनन्तरं तथा च** प्रकारत्वाद्यात्मकज्ञाननिरूपितस्वरूपसम्बन्धविशेषात्मकत्वमेव तदुच्यतामित्यर्थः ।

भवत्वेव तथापि किमायातमत आह—**इदमेवेति ।** ज्ञाननिरूपितस्वरूपसम्बन्धविशेषात्मकमेव मयाङ्गीक्रियते लघुत्वादित्यर्थः ।

**अत्रापीति ।** नन्वेवं पुनरपि सम्बन्धेनेत्यत्र स्वरूपसत्त्वादिकल्पस्तदवस्थ इति चेत्—न । सम्बन्धभेदावच्छिन्नप्रकारतरस्य सम्बन्धभेदेन भेदात्, अनन्यगत्या प्रकारत्वस्येव तद्भेदस्यापि कल्पनात् ।

नन्वेवमपि घटपटयोर्विपरीतसमूहालम्बनेऽतिव्याप्तिः ।

मैवम् । घटत्ववद्विशेष्यकत्वावच्छेदेन घटावच्छेदेन वा घटत्वप्रकारकत्वस्य विवक्षितत्वात् । न चानतिप्रसक्तत्वरूपमवच्छेदकत्वं समूहालम्बननिष्ठस्य घटस्य वाऽस्त्येवेति वाच्यम्, स्वरूपसम्बन्धस्यावच्छेदकपदार्थत्वात्, तस्य च तत्राभावात् । एतादृशावच्छेदकत्वाग्रहादेव प्रामाण्यं न स्वतो ग्राह्यमित्युक्तम् ।

माथुरी

**सप्तम्यर्थः । न चैवं तद्वद्विशेष्यकत्वे सति तत्प्रकारत्वं इति फलितं तच्च रजतरङ्गयोरिमे रङ्ग-रजते इत्यादिविपरीतसमूहालम्बेनभ्रमेऽतिव्याप्तिरिति वाच्यम् । विशेष्यित्वस्य सप्तम्यर्थस्य अवच्छिन्नतासम्बन्धेन तत्प्रकारकतायामन्वयात् तथाच तद्वद्विशेष्यकत्वावच्छिन्नत्वञ्च इदमेतद्विशेष्यकत्वांशे एतत्प्रकारकमिति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः, विपरीतभ्रमे च रजतविशेष्यकत्वावच्छिन्नं न रजतत्वप्रकारकत्वं अपि तु रङ्गविशेष्यकत्वावच्छिन्नम् । वस्तु-तस्तु 'तद्वतीत्यत्र विशेष्यितासम्बन्धेनावच्छिन्नत्वमेव सप्तम्यर्थः, अन्वयश्चास्य तत्प्रकारकत्वे, तथाच विशेष्यितासम्बधेन तदवच्छिन्ना या तत्प्रकारिता तच्छाल्यनुभवत्वं तत्प्रमात्वमिति फलितम् ।**

त्वञ्च तद्वैशिष्ट्यविषयकत्वम्, तद्विशेषणज्ञानजन्यत्वं वा। ईश्वरस्य

आलोकः

तद्वैशिष्ट्यविषयकत्वे पूर्वलक्षणाभेद इत्यर्थान्तरमाह—तद्विशेषणेति। न च ज्ञानजन्यत्वमेवास्तामिति वाच्यं, विशेषणज्ञानत्वेन जनकत्वलाभार्थं तदुपादानात्,

दर्पणः

केचित्तु भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वमादाय ईश्वरज्ञानसाधारणं प्रमाया एकं लक्षणम्, जनकीभूतज्ञानविषयत्वं प्रकारत्वमादाय तद्व्यावृत्तं द्वितीयं लक्षणमभिप्रेतमित्याहुः।

सर्वमिति। यः सम्बन्धो यदनुयोगिको न भवति यत्प्रतियोगिको वा न भवति तदनुयोगिकतया तत्प्रतियोगिकतया वा तस्य ज्ञानं भ्रमः, न चाननुगमः, अन्यतरत्वेनानुगमात्।

यद्वा तत्सम्बन्धावच्छिन्नतदभाववद्विशेष्यकं तत्सम्बन्धावच्छिन्नतत्प्रकारकं ज्ञानं भ्रम इत्यादि व्याख्यातं पूर्ववदित्यर्थः।

अवधेयमिति। यद्यपीदं रजतमिति भ्रमे रजतत्वाभाववद्विशेष्यकरजतत्वप्रकारकत्वं भ्रमत्वं, इदन्त्ववद्विशेष्यकेदन्त्वप्रकारकत्वरूपं च प्रमात्वं सकलज्ञानवृत्ति, तथा च कथं भ्रमत्वप्रमात्वयोरत्यन्ताभावोऽव्याप्यवृत्तिः? न च प्रमात्वघटकप्रकारावच्छिन्नभ्रमत्वाभावो विवक्षितः, तथा सत्यव्याप्यवृत्तित्वस्यान्योन्याभावत्यागस्य चानुपपत्तेः, प्रमाभ्रमरूपे एकप्रकारके वह्नी इतिसमूहालम्बनेऽतिव्याप्तेश्च। तथापि यत्र यस्य प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नोऽभावस्तदन्यविशेष्यकत्वे सति तत्प्रकारकोऽनुभवः प्रमेत्यत्र तात्पर्यम्। इदं च घटत्वादिप्रकारकप्रमाभिप्रायेण, प्रमेयत्वादिप्रकारकप्रमायामभावात्।

वस्तुतो यत्र यस्य प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नोऽभावस्तदन्यविशेष्यकस्तदन्यप्रकारकोऽनुभवः प्रमेत्यर्थः। तेन न केवलान्वयिप्रमायामव्याप्तिरिति।

तद्वैशिष्ट्येति। भासमानवैशिष्ट्यप्रतियोगित्वात्मके प्रकारत्वे प्रतियोगित्वे भासमानत्वान्वयात् पूर्वाभेद इत्यर्थः।

माथुरी

इदमत्रैतत्प्रकारकमिति प्रतीत्या विशेष्यस्यापि विशेष्यितासम्बन्धेन तत्प्रकारितायामवच्छेदकत्वात्, विपरीतभ्रमे च रजतावच्छिन्नं न रजतत्वप्रकारकत्वमपि तु रङ्ग्वावच्छिन्नं। न चैवमिदमत्रांशे एतद्विशेष्यकमिति प्रतीत्या प्रकारितासम्बन्धेन प्रकारस्यापि विशेष्यितायामवच्छेदकतया प्रकारितासम्बधेन तदवच्छिन्ना या तद्विशेष्यिता तच्छाल्यनुभवत्वं इत्यपि लक्षणमस्त्विति वाच्यम्। विनिगमकाभावेन तयोरेव लक्षणत्वस्येष्टत्वात्। सर्वत्र तद्वत्ताप्रकारिता च प्रमात्वनियामकसम्बन्धेन ग्राह्या तेन संयोगादिसम्बधेन वह्न्यादिमति पर्वतादौ समवायादिना तद्बुद्धौ नातिव्याप्तिः। प्रकारभेदेनेव सम्बन्धभेदेनापि प्रमालक्षणभेदस्येष्टत्वत्। तद्वत्ता च तन्निरूपितसम्बन्धेने प्रमायां नाव्याप्तिः। समवायस्यैकत्वेऽपि समवायसम्बन्धावच्छिन्नरूपनिरूपितसम्बन्धितायाः वायावभावात् न वायूरूपवानित्यादिसमवायसं-

**तद्विशिष्टविषयं ज्ञानं न तु तत्प्रकारकम्। निर्विकल्पकञ्च प्रमाऽप्रमा-बहिर्भूतमेव, व्यवहारानङ्गत्वात्। अव्यपदेश्यपदेन तदुपग्रहस्य नामजात्या-**

आलोकः

अन्यथा तद्विषयकेश्वरज्ञानजन्यतया भ्रमातिव्याप्तेरिति भावः।

ननु यदि निर्विकल्पकमसंग्राह्यमेव तर्हि प्रत्यक्षप्रमालक्षणसूत्रे इन्द्रियार्थसन्निकर्षेत्यादौ प्रमालक्षणांशेऽव्यपदेश्यपदोपादानं न स्यादित्यत आह—अव्यपदेश्येति। तद्धि न प्रमालक्षणप्रविष्टम्, व्यर्थत्वात्, अव्याप्त्यापत्तेश्चेति। तत्रापि परमतनिराकरणार्थं तदुपादानमित्याकर एव स्फुटम्, न तु तदुपादानबलात् प्रमात्वं तस्येत्यर्थः।

दर्पणः

भ्रमातिव्याप्तेरिति। इदं रजतमितिशुक्तिगोचरभ्रमे शुक्तित्ववति शुक्तित्वप्रकारकत्वरूपप्रमात्वापत्तेरित्यर्थः। इदमुपलक्षणम्। अनुमितेः पक्षादिज्ञानजन्यतया तत्प्रकारकत्वापत्तेरित्यपि द्रष्टव्या।

माथुरी

सर्गकरूपादिभ्रमेऽतिव्याप्तिः[1]। सम्बन्धिता च धर्म्मितापरनाम्नी आधारानाधारसाधारणः सम्बन्धिमात्रसाधारणः स्वरूपसम्बन्धविशेषः। न चैवं गुण-कर्म्मान्यत्वविशिष्टसत्तावान गुण इत्यादिसमवायसंसर्गकज्ञानस्यापि सत्तायाः प्रमात्वापत्तिः गुणादावपि समवायसम्बधेन सत्तानिरूपितसम्बन्धित्वमस्त्वादिति वाच्यम्। शुद्धसत्तायाः समवायसम्बन्धेन प्रमात्वस्य तत्रेष्टत्वात्, विशिष्टसत्तात्वावच्छिन्नसत्तायाः समवायसम्बन्धेन प्रमात्वस्यैव तत्रानभ्युपगमात्, तत्सम्बन्धेन तद्धर्म्मविशिष्टतन्निरूपितसम्बन्धितावति तत्सम्बन्धेन तद्धर्म्मविशिष्टतत्प्रकारकोऽनुभवः[2] तत्सम्बन्धेन तद्धर्म्मविशिष्टवत्प्रमेति विशिष्टप्रमाया लक्षणत्वात्। अतएव विशिष्टवैशिष्ट्यमितिरीत्या गुणाद्यन्यत्वविशिष्टसत्तावत्द्रव्यमिति धीरेव विशिष्टसत्तात्वविशिष्टस्य प्रमा, न तु विश्येष्ये विशेषणमिति रीत्या गुणद्यन्यत्वविशिष्टसत्तावव् द्रव्यमितिधीर्विशिष्टसत्तात्वविशिष्टप्रमा, किन्तु सत्ताव्यरेव प्रमा। न चेदमेव सर्व्वसाधारणं लक्षणमस्तु किं विशिष्टाविशिष्टभेदाल्लक्षणद्वयेनेति वाच्यम्। अयं घट इत्यादौ स्वरूपतो घटत्वादिप्रमायामव्याप्त्यापत्तेः, तत्र घटत्वादौ धर्म्मान्तरवैशिष्ट्याभानादिति भावः। 'तत्र तस्येति तन्निरूपिततन्निष्ठविषयताप्रतियोगिज्ञानं तत्र तद्भ्रम इत्यर्थः, तथाच तदभावपन्निरूपिततन्निष्ठविषयताप्रतियोगिज्ञानत्वं तद्भ्रमत्वमिति समुदितार्थः। स्मृतेरपि भ्रमतया अनुभवत्वमपहाय ज्ञानत्वप्रवेशः। नन्वेवमत्र रजतत्वमित्यादिरजत्वविशेष्यकभ्रमस्यापि रजतत्वभ्रमत्वापत्तिः। न चेष्टापत्तिः, प्रकारीभूतधर्म्मांश एव भ्रमव्यवहारादित्यत आह, 'तदभाववतीति, विशेष्यित्वं सप्तम्यर्थः। न चैवं तदभावव-

१. तथाच सम्बन्धिसत्त्वं प्रति सम्बन्धि-सम्बन्धोभयसत्त्वं नियामकमिति भावः।
२. तद्धर्म्मविशिष्टतन्निरूपितवैशिष्ट्यविषयताशाल्य इति खं।

दियोजनारहितमपि प्रत्यक्षमस्तीत्यत्र तात्पर्य्यम्। इदं रजतमिति ज्ञानमिदन्त्ववति तदनुभवत्वात् प्रमा, रजतत्वाभाववति तत्प्रकारक-

आलोकः

योजनारहितं वैशिष्ट्याविषयकम्। न चाभावप्रमायामभावत्ववत्यपि नाभावत्वप्रकारकत्वम् अभावत्वस्य तद्वित्तिवेद्यतयाऽभावत्वविशेषणज्ञानजन्यत्वाभावादिति वाच्यम्, तद्वति तत्प्रकारकानुभवो हि तदुभयप्रमेत्युक्तप्रायम्, तथा च प्रतियोग्यादि-विशेषणवानभाव इति तद्विशेषणज्ञानजन्यं प्रतियोगिविशिष्टाभावज्ञानं तदुभयं प्रमा, अन्यथा तद्धीप्रमानुपग्रहापत्तेः। न च तद्विशेषणज्ञानजन्यं तदुभयांश-

दर्पणः

अव्याप्त्यापत्तेरिति। सविकल्पक इति शेषः।

यद्विशेषणेति। यद्विशेषणज्ञानजन्यतायां यद्विशिष्टज्ञानत्वमवच्छेदकं तज्ज्ञानं

माथुरी

द्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं तद्भ्रम इति फलितम्, तच्च रजतरङ्गे इति समूहालम्बनप्रमायामतिव्याप्तमिति वाच्यम्। सप्तम्यर्थस्यविशेष्यित्वस्यावच्छिन्नतासम्बन्धेन तत्प्रकारकतायामन्वयात्, तथा च तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभाववद्विशेष्यकत्वाभावद्विशेष्यकत्वावच्छिन्नतद्व्यक्तिप्रकारिताशालिज्ञानं तद्व्यक्तेभ्रम इति फलितं। यद्वा 'तदभाववतीत्यत्र विशेष्यितासम्बन्धेनावच्छिन्नत्वमेव सप्तम्यर्थः, तथा च विशेष्यितासम्बधेन तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभाववदवच्छिन्ना या तद्व्यक्तिप्रकारिता तच्छालि ज्ञानं तद्व्यक्तेभ्रम इति फलितम्। शेषं पूर्व्वोक्तदिशावसेयम्। अभावः, प्रकारिता च भ्रमत्वनियामकसम्बधेन ग्राह्या तेन समावायादिसम्बन्धेन वन्ह्याद्यभाववति वर्व्वतादौ संयोगादिना तद्बुद्धौ नातिव्याप्तिः। प्रतियोगिताकान्तोपादानात् न वैशिष्टयव्यासज्यवृत्तिधर्म्मावच्छिन्नाप्रतियोगिकाभावमादाय प्रमामात्रे नातिप्रसङ्गः[1]। न चैवं गुण-कर्म्मान्यत्वविशिष्टसत्तावान् गुण इत्यादिसमवायसंसर्गकज्ञानस्य सत्ताभ्रमत्वं न स्यात् तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकसत्ताव्यक्त्यभावस्य गुणादावभावादिति वाच्यम्। समवायसम्बधेन स्वरूपतः सत्ताव्यक्तेभ्रमत्वाभावस्य तत्रेष्टत्वात्, विशिष्टसत्तात्वावच्छिन्नसत्तायाः समवायसम्बधेन भ्रमत्वस्यैव तत्राभ्युपगमात्, तत्सम्बधावच्छिन्नप्रतियोगिताकतदभाववति तत्सम्बधेन तद्धर्म्मविशिष्टतत्प्रकारकज्ञानं[2] तद्धर्म्मरूपेण तद्भ्रम इति विशिष्टभ्रमस्य लक्षणत्वात्। न चेदमेव सर्व्वसाधारणं लक्षणमस्तु किं विशिष्टभेदात् लक्षणद्वयेन इतिवाच्यम्। इदं रजतमित्यादौ स्वरूपतोरजतत्वादिभ्रमे अव्याप्तेः, तत्र रजतत्वादौ धर्म्मान्तरवैशिष्ट्या-

---

१. द्रव्यत्ववत्ययि घटे पटवृत्तित्वविशिष्टद्रव्यत्वाभावस्य द्रव्यत्व-गुणत्वोभयाभावस्य च सत्त्वाव द्रव्यं घट इत्यादि प्रमायामतिव्याप्त्यापत्ते रिति भावः।

२. तत्सम्बन्धावच्छिन्न-तद्धर्म्मावच्छिन्नप्रतियोगिताकतदभाववति तत्सम्बन्धेन तद्धर्म्मविशिष्टनिरूपितवैशिष्ट्यविषयताशालि ज्ञानं इति ख०, ग०।

ज्ञानत्वादप्रमा। अंशे समूहालम्बनश्च नाप्रमा, एकप्रकाराभाववत्यपि तदप्रतीतेः।

आलोकः

प्रमेति वाच्यम्, अन्यथा इदन्त्वप्रकारकत्वमादाय रजतांशभ्रमातिव्याप्तिवारणमशक्यम्। तथा च प्रतियोगिनि विशेषणेऽभावे च धर्म्मिणि तज्ज्ञानमस्तु प्रमा, अभावत्वांशे तु तत्प्रमा कुत इति वाच्यम्, यद्विशेषणज्ञानजन्यत्वं यादृशि तद्विशेष्यकोऽनुभवः प्रमा इत्यत्र तात्पर्यात्। भवति हि अभावत्वज्ञानाजन्येऽपि[1] प्रतियोग्यादिज्ञानस्या भावत्वविशिष्टज्ञाने जनकता चेदन्त्वविशिष्टज्ञानस्य रजतत्वविशिष्टज्ञानं प्रति जनकता, येनातिव्याप्तिः स्यादिति भावः।

दर्पणः

तत्प्रकारकमिति समुदायार्थः। इदञ्च प्रकारत्वं समाधिसौकर्यादुक्तम्। वस्तुतो ज्ञाननिरूपितस्वरूपसम्बन्धविशेष एव प्रकारत्वं लक्षणे प्रविष्टमित्युक्तम्। तदेव चानुव्यवसाये प्रकारीभूतमिति ध्येयम्।

माथुरी

भानात्। अतएव वह्नित्वरूपेण वह्निसामान्यप्रकारकस्य पर्व्वतो वह्निमानिति ज्ञानस्य वह्नित्वरूपेण महानसीयवन्ह्यादेर्भ्रमत्वाभावेऽपि स्वरूवतो महानसीयवन्ह्यादेर्भ्रमत्वं सर्व्वसिद्धम्। अतएव च विशेष्ये विशेषणमिति रीत्या समवायसम्बन्धेन गुणाद्यन्यत्वविशिष्टभ्रमत्वाभावात् सत्ताव्यक्तित्वावच्छिन्नाभाववति सत्ताव्यक्तिप्रकारकत्वाभावेन तद्व्यक्तिभ्रमत्वाभावाच्च, तादृशमेव ज्ञानं उपलक्षणविधया गुणाद्यन्यत्वप्रकारकमिति गीयते, विशिष्टस्य वैशिष्ट्यमिति रीत्या तादृशज्ञानन्तु विशेषणविधया गुणाद्यन्यत्वप्रकारकं ज्ञानं तच्च विशिष्टस्य भ्रमः, न तु सत्ताव्यक्तेरिति विषयविभागः। ननु तथापि सत्तागुणवृत्तिरितिप्रतीतेर्भ्रमत्वं दुर्व्वारं विशिष्टसत्तायां गुणवृत्तित्वाभासत्वेन तदनतिरिक्तायां सत्तायामपि गुणवृत्तित्वाभावसत्त्वात्। न च सत्तायां विशिष्टसत्तात्वावच्छेंदेन गुणवृत्तित्वाभावेपि सत्तात्वावच्छेदेन गुणवृत्तित्वमत्त्वात् वक्ष्यमाणरीत्या वृक्षः संयोगवानिति ज्ञानस्येव न भ्रमत्वमपि तु प्रमात्वमेवेति वाच्यं। तथा सति गुणकर्म्मान्यत्वविशिष्टसत्ता गुणवृत्तिरिति प्रतीतेरपि स्वरूपसम्बन्धेन गुणवृत्तित्वभ्रमत्वाभाव-तत्प्रमात्वयोरापत्तेः सत्तायां गुणवृत्तित्वे गुणिवृत्तित्वाभाववती सत्ता गुणवृत्तित्वाभावः सत्तावृत्तिरित्यपि प्रतीत्यापत्तेश्चेति चेत्। न। अत एवानुपपत्त्या गुणादौ वैशिष्टसत्तानिरूपिताधारताविरहेऽपि विशिष्टसत्तायां गुणाद्याधेयत्वमस्त्येवेत्यभ्युपगमात्, तथा च सत्ता गुणवृत्तिर्विशिष्टसत्ता गुणवृत्तिरिति प्रतीतिद्वयमेव न भ्रमः किन्तु प्रमैवेत्ति न काप्यनुपपत्तिः।

---

१. अभावज्ञानजन्येऽपीति कपुस्तके।

नन्वेवमव्याप्यवृत्तिभावाभावयोरेकत्र प्रमाऽप्रमा च स्यात् तदभाववति तत्प्रकारकज्ञानत्वादिति चेत्—न, भिन्नभिन्नावच्छेदेन हि

आलोकः

ननु अवच्छेजकभेदेनापि वृत्तिर्दृष्ट एव, न च वृक्षं विहाय केवलेऽवच्छेदके तद्वृत्तिः सम्भवतीत्यरुचेराह—यदवच्छेदेनेति ।

दर्पणः

यत्र वृक्ष इति मूलम् । अन्योन्याभावस्याव्याप्यवृत्तित्वाभ्युपगमपक्षे । तदनभ्युपगमपक्षमभिप्रेत्यास्वरसमाह—नन्विति । ननु संयोगादेरवच्छेदकत्वं स्वरूपसद्वा ज्ञानविषयतापन्नं वा । आद्ये भ्रमेऽतिव्याप्तिः । अन्त्ये संयोगवानित्याद्यव्याप्तिस्तदवस्थेत्यरुकेराह—वस्तुतस्त्विति । न चैवं मूलवृक्षत्वादेस्ताद्विरुद्धत्वाभावात्तदवच्छेदेन संयोगग्रहेऽतिव्याप्तिः । तदत्यन्ताभावावच्छेदकावच्छेद्यस्य तदनवच्छेदकस्य वा तद्विरुद्धपदेन विवक्षितत्वात् ।

ननु भ्रमस्यापि यदवच्छेदेन यन्नास्ति तदवच्छेदेन तज्ज्ञानमिति लक्षणं वाच्यम्, अन्यथा संयोगप्रमायामतिव्याप्ते । तथा च शुक्तिविशेष्यकप्रमुष्टतत्ताकरजतस्मृवाव-

माथुरी

नव्यास्तु यावतीस्तद्वद्व्यक्तोः प्रातिस्विकरूपेणोपादाय तत्तद्व्यक्तिविशेष्यकतत्प्रकारकानुभवस्तत्प्रमेति प्रथमलक्षणार्थः । नन्वेवं विशेष्यव्यक्तिभेदेन प्रमात्वानन्त्यमतो द्वितीयम्, भ्रमलक्षणद्वयमत्रैवमेव योजनीयम् । सर्व्वमन्यत् पूर्व्ववदिति प्राञ्जः ।

'तदन्यत्वे सतीति यावद्भ्रमभिन्नवे सति तत्प्रकारकानुभवत्वमित्यर्थः । तद्विशेष्यक-तत्संसर्गकज्ञानयोः निर्विकल्पस्य च व्युदासाय प्रकारकत्नान्तर्भावः । न चैवं विषयान्तरांशे भ्रमरूवायां प्रमायामव्यप्तिरिति वाच्यम् । अत्राशिकभ्रमस्यालक्ष्यत्वादिति भावः । वस्तुतस्तु यद्यज्ज्ञानं तस्य भ्रम एव न तु तस्य प्रमा तत्तज्ज्ञानव्यक्तिभिन्नत्वे सति तत्प्रकारकानुभवत्वं तस्य प्रमात्वमित्यर्थः । तेनांशिकभ्रमरूपाया अपि प्रमायाः संग्रहः इत्येव तत्त्वम् । एतच्चासर्व्वज्ञस्य दुर्ज्ञेयत्वादनादेयं तद्धर्म्मकत्वं तथा च रजतत्वादिप्रमा-भ्रमयोरव्याप्तिः प्रमात्व-भ्रमत्वनियामकसम्बन्धेन रजतत्वादेर्ज्ञा नाधर्म्मत्वात् साकारवादिभिरेव रजतत्वादेर्ज्ञानधर्म्मत्वाभ्युपगमादित्यतआह, 'तत्प्रकारकत्वञ्चेति, 'तद्वैशिष्ट्यविषयकत्वमिति तद्विशेषणकत्वमित्यर्थः, विशेषणता च विशेष्यतावत् स्वरूपसम्बन्धविशेष इति भावः । एतेन सामान्यतस्तद्वैशिष्ट्यविषयकत्वं यदि तत्प्रकारकत्वं तदा दण्ड-पुरुषसंयोग इति समूहालम्बनस्यापि दण्डादिप्रकारकत्वापत्तिः, यदि च संसर्गमर्य्यादया तद्वैशिष्ट्यवगाहित्वं तदा तद्विशेष्यकज्ञानस्यापि तत्प्रकारकत्वापत्तिरिति दूषणमपास्तं । यदि-चेश्वरज्ञानं प्रमाप्रमावहिर्भूतमेवेति पक्षस्तदाह, 'तद्विशेषणेति 'ज्ञानपदं सम्पातायातं तद्विशेषणकत्वे सति जन्यत्वमित्यर्थः । 'ईश्वरस्येति, अत इत्यादि । ननूक्तलक्षणानां

**वृक्षे संयोगतदभावौ, न वृक्षमात्रे, विरोधादननुभवाच्च। तथा च यत्र वृक्षे संयोगो न तत्र तदभावः, यदवच्छेदेन यत्र यदस्तीति वा विवक्षितम्।**

आलोकः

ननु संयोगवान् गोत्ववानित्यनुभवे अवच्छेदकाविषयकेऽव्याप्तिः। न च तदविषयकः प्रत्ययोऽसिद्ध एवेति वाच्यम्, प्रत्यक्षे तथाभावाभ्युपगमेऽपि शाब्दतादृश-

दर्पणः

व्याप्तिः। न च वस्तुगत्या तदवच्छिन्ने तज्ज्ञानं विवक्षितम्, तथा च प्रमुष्टतत्ताकस्मृतावपि वस्तुगत्या शुक्तित्वावच्छिन्ने रजतत्वज्ञानमस्त्येवेति वाच्यम्, वृक्षः कपिसंयोगीति प्रमायामतिव्याप्तेः। न च तत्रापि वस्तुगत्या संयोगाभावावच्छेदेन तज्ज्ञानं भ्रम इति विवक्षितम्, तथा च विशिष्टाभावसत्त्वात्प्रोक्तस्मृतावव्याप्तिरिति वाच्यम्, वृक्षः संयोगीतिप्रमायामतिव्याप्तेः। न च स्मृतिरसंग्राह्यैव, तत्राप्रमाव्यवहारानापत्तेः।

उच्यते। अप्रमालक्षणेऽवच्छेदकप्रवेशो न कर्त्तव्यः, वृक्षः संयोगीति प्रमाया-

माथुरी

र्निर्व्विकल्पकेऽव्याप्तिरित्यत आह, 'निर्व्विकल्पकञ्चेति, 'व्यवहारेति प्रवृत्त्यादीत्यर्थः। नन्वेवं "इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारीव्यवसायात्मकं ज्ञानं प्रत्यक्ष" इति प्रत्यक्षप्रमालक्षणसूत्रे प्रत्यक्षप्रमामध्ये निर्व्विकल्पकस्य गणनमसङ्गतमित्यत आह, 'अव्यपदेश्येति, 'तदुतपग्रहस्येति निर्विकल्पकाभिधानस्येत्यर्थः, 'नाम-जात्यादीति नाम-जात्यादीनां या 'योजना' वैसिष्ट्यं, तदविषयकमपीत्यर्थः, तथा च तत्सूत्रस्य इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारि ज्ञानम्।

प्रत्यक्षप्रमा, सा च द्विविधा 'अव्यपदेश्यं' निर्व्विकल्पकं ज्ञानं, 'व्यवसायात्मकं' विशिष्टज्ञानात्मकं ज्ञानञ्चेति नार्थः अव्यभिचारित्वस्य यथार्थत्वरूपतया लक्षणस्याव्याप्त्यापत्तेः निर्व्विकल्पकस्य व्यवहारानङ्गत्वाच्च। किन्तु इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारि यथार्थं यज्ज्ञानं तत्प्रत्यक्षप्रमेति प्रत्यक्षप्रमालक्षणं, प्रत्यक्षप्रमाया लक्षणमुक्त्वा परमतनिराकरणाय प्रत्यक्षसामान्यं विभजते, 'अव्यपदेश्यमिति, प्रत्यक्षन्तु द्विविधम् अव्यपदेश्यं व्यवसायात्मकञ्चेत्येव तद्व्याख्येयमिति भावः। नन्वेवं शुकाविदं मिति ज्ञानमेकस्मिन् विशेष्ये इदन्त्वस्य प्रमा, रजतत्वस्य च भ्रमः स्यादित्यत आह, 'इदमिति, 'अंशे' एकस्मिन्नेव विशेष्यांशे, 'समूहालम्बनञ्चेति घट-पटावित्यादि समूहालम्वनञ्चेत्यर्थः। 'एकप्रकाराभाववत्यपीति घटत्वाभाववति घटत्वप्रकारकत्वस्य पटत्वप्रकारकत्वस्य च विरहादित्यर्थः। 'भावाभावयोरिति, खानवच्छेदकावच्छेदेन ज्ञानमिति शेषः, ,एकच' एकस्मिन्नेव विशेष्ये, तथा च मूले वृक्षः कपिसंयोगीति ज्ञानस्य वृक्षे प्रमात्पाप्रमात्वोभयप्रसङ्गः, तथा अग्रे वृक्षः कपिसंयोगाभाववान् इति ज्ञानस्यापीत्यर्थः। लीलावतीकारमते संयोगस्य व्याप्यवृत्तितया तन्मतमाश्रित्यैव समाधत्ते, 'भिन्न-भिन्नेति, संयोग-तद्भावौ नेति च्छेदः, भिन्न-भिन्नावच्छेदेन वृक्षे संयोग-तदभावौ न स्त इत्यर्थः, 'वृक्षमात्रे' सर्व्वस्मिन्नेव वृक्षे, 'विरोधादिति कपि-

गोत्वादेरपि सास्नाद्यवच्छेदेन वृत्तेः पाकरक्ते श्यामोऽयमिति धीः प्रमैव, कदाचित्तत्र तत्सत्त्वात् । इदानीं श्याम इति तु अप्रमैव । न च यत्तद्भ्यां

आलोकः

प्रमानुपग्रहापत्तेरिति—न, तदनतिरिक्तदेशत्वस्यावच्छेदकपदार्थत्वेन संयोगादेरेव यदवच्छेदकपदार्थत्वात् ।

दर्पणः

मतिव्याप्तिश्चान्योन्याभावस्याव्याप्यवृत्तितया संयोगाभाववदन्यस्यैव वृक्षस्य विशेष्यत्वान्निरसनीयेति यथाश्रुतमेव मूलमप्यवृत्तित्वादेव चान्योन्याभावस्य भ्रमान्यत्वरूपे प्रमालक्षणे भ्रमांशप्रमानुपसंग्रहो नेति ।

यद्वा प्रकारीभूतधर्मस्यानवच्छेदकं यद्वृक्षत्वं मूलं वा तदवच्छिन्नत्वेनानुल्लिख्यमानस्यातत्त्वतो या विशेष्यता तद्भिन्ना या तदभाववतो विशेष्यता सा तद्विरुद्धधर्मानवच्छेदेनेति विशेषणेन विवक्षिता । अतो वृक्षः कपिसंयोगीत्यत्र नातिव्याप्तिः, समानाधिकरण्यमात्रेण वृक्षत्वग्रहात् । नापि वृक्षत्वमूलावच्छेदेन कपिसंयोगं गृह्णति भ्रमेऽव्याप्तिः । नाप्यन्योन्याभावस्याव्याप्यवृत्तित्वम्, नाप्युक्तस्मृतावव्याप्तिरिति ।

माथुरी

संयोग-तदभावयोः सत्त्वासम्भवादित्यर्थः, प्रतियोग्यत्यन्ताभावयोः सामान्यत एव विरोधस्य क्लृप्तत्वादिति भावः । 'अननुभवाच्चेति वृक्षे कपिसंयोग-तदभावयोरनुभवविरहाच्चेत्यर्थः । मूले वृक्षे न कपिसंयोग-इति प्रतीतिर्हि घटे वृक्षे न कपिसंयोग-इति प्रतीतिवत् वृक्षवृत्तित्वस्यावच्छेदकतासम्बन्धेनाभावमेव मूले अवगाहते न तु वृक्ष एव कपिसंयोगाभावमिति भावः । 'तथाचेति, 'संयोगः' कपिसंयोगः, एवञ्च वृक्षे कपिसंयोगवत्त्वज्ञानं प्रमैव, तदभाववत्त्वज्ञानञ्च भ्रम एवेति भावः ।

संयोगस्याव्याप्यवृत्तित्वमतमाश्रित्य समाधत्ते, 'यदवच्छेदेनेति यदवच्छेदेन यत्र यदस्ति तदवच्छेदेन तत्र तस्यानुभवः तत्प्रमेत्यर्थः, तथाच मूले वृक्षः कपिसंयोगीति ज्ञानं न प्रमा अपि तु भ्रमः, तथा अग्रे वृक्षः कपिसंयोगाभाववान् इति ज्ञानमपीति भावः । एतच्च प्रथमलक्षणाभिप्रायेण, द्वितीयलक्षणे तु यदवच्छेदेन यत्र यदस्ति तदवच्छेदेन तद्वति तत्प्रकारकानुभवस्तत्प्रमेति वक्तव्यमिति भावः ।

केचित्तु विशिष्टस्यातिरिक्तत्वमतमाश्रित्य समाधत्ते, 'भिन्न-भिन्नेति अग्र-मूलादिरूपभिन्न-भिन्नावयवविशिष्टे हि वृक्षे कपिसंयोग तदभावावित्यर्थः, 'न वृक्षमात्र इति न त्वेकस्मिन्नेव शुद्धवृक्षे तदुभयमित्यर्थः, 'विरोधादिति प्रतियोगि-तदभावयोर्विरोधादित्यर्थः, 'अननुभवाच्च' एकस्मिन्नेव शुद्धवृक्षे तयोरनुभवविरहाच्चेत्यर्थः । 'तथाचेति, इत्थञ्च मूले वृक्षः कपिसंयोगीतिज्ञानं भ्रम एव न तु प्रमा मूलविशिष्टे वृक्षे कपिसंयोगवत्त्वविरहात्, तथा अग्रे वृक्षः कपिसंयोगाभाववानिति ज्ञानमपीति भावः । विशिष्टस्यानतिरिक्तत्वमतमाश्रित्य समाधत्ते, 'यदवच्छेदेनेति, इत्याह' ।

लक्षणाऽननुगमः, न दि प्रमा सर्वत्र प्रमा, किन्तु क्वचित्, तथा च किं

आलोकः

वस्तुतस्तु यदवच्छेदेन यत्र यदस्ति तद्विरुद्धधर्म्मानवच्छेदेन तत्र धर्म्मिणि तस्यानुभवः प्रमा, स च विशिष्टाभावोऽवच्छेदकमात्रभानात् प्रकारावच्छेदक-

दर्पणः

वस्तुतस्तु अवच्छेदकप्रवेशो मूलकृता[1] कृतो व्याख्याकृद्भिश्चानुमतोऽपि मह्यं न रोचते। न तावत्प्रवेशः प्रमालक्षणे। तथा हि—मूलावच्छिन्नः कपिसंयोगवान् वृक्षत्वावच्छिन्नः कपिसंयोगवानेवंविधभ्रमवारणायावच्छेदकप्रवेशः। स चायुक्तः, वृक्षविशेष्यकसंयोगप्रकारांशे तयोरनुभवयोः प्रमात्व इष्टापत्तेः। संयोगविशेष्यक-वृक्षत्वमूलावच्छिन्नतत्प्रकारांशे च तयोर्भ्रमयोस्तद्वद्विशेष्यकत्वमेव नास्ति। नहि शाखावच्छिन्नस्य कपिसंयोगस्य विशेष्यस्य वृक्षत्वमूलावच्छिन्नत्वे, तस्मान्न प्रमा-लक्षणेऽवच्छेदकप्रवेशः। नाप्यप्रमालक्षणेऽवछेदकप्रवेशः। तथा हि—वृक्षः कपिसंयो-

माथुरी

नन्वेवं गोत्वादेर्व्याप्यवृत्तिधर्म्मस्य प्रमायामव्याप्तिस्तस्याच्छेदकविरहादित्यत आह, 'गोत्वादेरपीति। नन्वेवं पाकरक्ते घटे कालान्तरे अयं श्याम इति धीः प्रमा स्यादित्यचेष्टापत्तिमाह, 'पाकेति, 'श्यामोऽयं' कालान्तरे श्यामोऽयं, कदाचित्' कालान्तरावच्छेदेन। 'अप्रमैव' न प्रमेव। ननु तदवच्छेदकावच्छेदेन तद्वति तत्प्रकार-कानुभवत्वं तत्प्रमात्वं इत्युक्तावच्छेचकतानवगाहिनी धीः प्रमा न स्यात्। न च तदविषयकप्रत्ययोऽसिद्ध एवेति वाच्यम्। व्याप्यवृत्तिधर्म्मस्यावच्छेदकत्वाविषयिकाया अपि प्रतीतेः सर्व्वसिद्धत्वादव्याप्यवृत्तिधर्म्मस्यापि लौकिकप्रत्यक्ष एव प्राचीनैर्नैय-मतोऽवच्छेदकत्वविषयताभ्युपगमेन तदतिरिक्तप्रत्ययस्यावच्छेदकत्वाविषयकस्यापि सत्त्वाच्च। न च तदनवच्छेदकातच्छेदेन तत्र तत्प्रकारकत्वशून्यत्वे सति तद्वति तत्प्रकारकानुभवत्वं तत्र तत्प्रमात्वमिति विवक्षितम्, तत्रेत्युपादानादधिकरणान्तरे तदनवच्छेदकावच्छेदेन तत्प्रकारिकायां समूहालम्बनप्रमायां नाव्याप्तिरिति वाच्यम्। तथा च मूले अग्रे वृक्षः कपिसंयोगीति प्रमायां मत्तदभावावच्छेदकोभयावच्छेदेन तत्प्रकारिकायामव्याप्तिरिति चेत्। न। तदवच्छेदकावच्छेदेन तत्र तदप्रकारकत्वे सति यत् तदनवच्छेदकावच्छेदेन तत्र तत्प्रकारकत्वं तच्छून्यत्वे सतीति विवक्षितत्वात्। तदनवच्छेदक वच्छेदेन तत्र तत्प्रकारकत्वञ्च तत्र तदनवच्छेदकनिष्ठतद्वृत्तितदधि-कारणतावच्छेदकत्वावगाहित्वे सति तत्र तत्प्रारकत्वम्, मूले वृक्षः कपिसंयोगीति ज्ञानञ्च मूले वृक्षवृत्तिकपिसंयोगाधारतावच्छेदकत्वावगाह्येवेति भावः। एतच्चापाततः, तथापि वृक्षः कपिसंयोगी अग्रे वृक्षः कपिसंयोगीति धीरुभयात्मिका स्यात् कपिसंयोगाभाववति कपिसंयोगप्रकारकत्वात्। न च तद्वद्भिन्ने निरवच्छिन्नतदभावाधिकरणतावति वा तत्प्रकारकज्ञानत्वं भ्रमत्वमिति विवक्षितमिति वाच्यम्। मूले वृक्षः कपिसंयोगीत्यत्रा-

१. चिन्तामणिकृतेत्यर्थः।

**ज्ञानं कुत्र प्रमेति तत्तद्विशेषस्य लक्ष्यत्वेन यत्तद्भ्यामेव लक्षणं युक्तम् ।**

आलोकः

**भानाच्चाविशिष्ट इति सर्वं रमणीयम् ।**

पाकरक्त इति । इदञ्च यदि सत्त्वमात्रमस्तीत्यादेरर्थो विवक्षितस्तदा, यदि च वर्त्तमानत्वपर्यन्तं तत्तात्पर्यविषयस्तदा पाकरक्ते श्यामधीरप्रमैवेति तत्त्वम् ।

दर्पणः

गीतिवृक्षत्वसमानाधिकरणकपिसंयोगावगाहिनि शाखावच्छिन्नो वृक्षः कपिसंयोगीति शाखावच्छिन्नकपिसंयोगावगाहिनि च प्रमारूपे ज्ञानेऽतिव्याप्तिवारणायावच्छेदकप्रवेशः । स चायुक्तः, प्रतियोगिव्यधिकरणतदभाववतीति तद्वदन्योन्याभाववतीति वा विवक्षयाऽतिव्याप्तिधारणात् । वृक्षत्वावच्छिन्नमूलावच्छिन्नकपिसंयोगयोश्च प्रतियोगिव्यधिकरणविशेषणाभाववत्त्वत्तद्वदन्योन्याभाववत्त्वाद्वा ज्ञानेऽव्याप्तिर्नाशंकनीयेति संक्षेपः ।

अस्तीत्यादेरिति । आदिपदेन तद्वतीति मतुपः संग्रहः । तथा चेति मूलम् । लक्ष्यानुगमे लक्षणाननुगमो दोषो न तु तदननुगम इति भावः ।

माथुरी

व्याप्तेः आद्ये समवायादिसम्बन्धेन गगनादेर्भ्रमे अव्याप्तेश्च । न च तदभावावच्छेदकावच्छेदेन तत्प्रकारकत्वं विवक्षितमिति वाच्यम् । गुणः संयोगवानित्याद्यवच्छेदकतानवगाहिभ्रमेऽव्याप्तेः । न च तदभावानवच्छेदकावच्छेदेन तत्र तत्प्रकारकत्वशून्यत्वे सति तदभाववति तत्प्रकारकत्वं विवक्षितम्, वृक्षः संयोगीत्यवच्छेदकतानवगाहिप्रमायामतिव्याप्तेः । न च यथाविवक्षितप्रामाण्यशून्यत्वे सति तदभाववति तत्प्रकारकत्वं विवक्षितं, मूले अग्रे वृक्षः कपिसंयोगीत्यत्राव्याप्तेः । वस्तुतस्तु प्रमालक्षणे अवच्छेदकत्वं न निवेश्यते गौरवात् व्यर्थत्वाच्च, अपि तु तद्वति तत्प्रकारकानुभवत्वमेव प्रमात्वं, मूले वृक्षः कपिसंयोगवान् अग्रे वृक्षः कपिसंयोगाभाववानित्यादि ज्ञानञ्च यदि केवलसमवायविशेषणताभ्यां वृक्षे संयोग-तदभावाववगाहेते, तदा वृक्षः कपिसंयोगवान् तदभाववांश्चेतिवद्वृक्षे तदुभयोः प्रमैव किन्तु मूलाग्रयोर्वृक्षवृत्तितदुभयाधारतावच्छेदकत्वावगाहित्वांश एव न प्रमा । यदि च मूलाग्रावच्छिन्नत्वविशिष्टसमवाय-विशेषणताभ्यां वृक्षे ताववगाहेते तदा तु वृक्षे न तदुभयोः प्रमा तादृशविशिष्टसम्बन्धाभ्यां वृक्षस्य तदुभयवत्त्वविरहात् प्रमालक्षणे सम्बन्धभेदनिवेशस्य प्रागुक्तयुक्त्या आवश्यकत्वात् । एतेन पाकरक्ते घटे इदानीमयं श्यामरूपवान् तदानीमयं श्यामरूपाभाववान् इत्यादि ज्ञानमपि व्याख्यातं । न च तथापि वृक्षादिषु कपिसंयोग-तदभाववत्त्वादिबुद्धेः तत्र तयोर्भ्रमत्वमपि दुर्वारं तदभाववति तत्प्रकारकज्ञानस्यैव भ्रमत्वादिति वाच्यं । भ्रमलक्षणे तदभाववत्पदेन निरवच्छिन्नतदभावाधिकरणताया विवक्षितत्वात् । मूले वृक्षः कपिसंयोगवान् अग्रे वृक्षः कपिसंयोगाभाववान् इत्यादि ज्ञाने च[1] यदि केवलसम-

1. मूले वृक्षः संयोगवान् तदग्रे वृक्षः संयोगाभाववान इत्यादिज्ञाने चेति क० ।

अन्ये तु अनुभवत्वमेव प्रामाण्यम्, भ्रमेऽप्यंशमादाय प्रमाव्यवहारात् । रजतादिप्रमाऽप्रमा च विशिष्य लक्षणीया रजतत्ववति तदनुभवः तदभाववति तदनुभवो वेत्यादिना ।

नन्वनुभवत्वस्य प्रमाप्रमासाधारण्येन तज्ज्ञानस्य न निष्कम्प-

आलोकः

अन्ये त्वित्यस्वरसोद्भावनम् । स चानुभवत्वं प्रामाण्यमिति किमनुभवत्वं प्रवृत्त्यौपयिकम्, प्रमापदप्रवृत्तिनिमित्तं वा, नाद्योऽर्थान्तरत्वात् व्यभिचाराच्च । स्वतो ग्राह्यत्वादिविवादविषयस्य प्रवृत्त्यौपयिकस्य प्रामाण्यस्य प्रस्तावे एतल्लक्षणस्यानाकांक्षितत्वात्, भ्रमांशेऽप्यनुभवत्वाच्च । नापरोऽसम्भवस्याकर एव दर्शितत्वादिति ।

दर्पणः

भ्रमेऽपीति मूलम् । प्रमेतरघटादिभेदस्य प्रमापदवाच्यत्वस्य वा साधकमनुभवत्वम्, न तु भ्रमत्वाद्यभावसाधकमिति भावः विशेषेति मूलम् तथा च न प्रवृत्त्यर्थमनुभवत्वं लक्षणं, स्मृतावसत्त्वात्, किन्त्वितरभेदव्यवहारयोः साधनायेति भावः । अर्थान्तरं विवृणोति—स्वत इति । व्यभिचारं विवृणोति—भ्रमांशेपीति । मूले विषयताश्रयेति । अत्र निर्विकल्पकं संग्राह्यमेव । गगने शब्द इति प्रमायां च नाव्याप्तिः, येन सम्बन्धेन यस्य विषयताश्रयावृत्तित्वं तेन सम्बन्धेन तत्प्रकारकत्वा-

माथुरी

वायादिः सम्बन्धः तदा वृक्षे तदुभयोर्न भ्रमः किन्तु मूलादेर्वृक्षवृत्तिकपिसंयोगतदभावाद्याधारतावच्छेदकत्वावगाहित्वांश एक भ्रमः । यदि च मूलावच्छिन्नत्वविशिष्टसमवायादिसम्बन्धस्तदा वृक्षे कपिसंयोगादेरपि भ्रम एव तादृशविशिष्टसम्बन्धावच्छिन्नकपिसंयोगाद्यभावस्य निरवच्छिन्नाधिकरणत्वस्यैव वृक्षे सत्त्वात् । एतेन पाकरक्तघटे इदानीमयं श्यामरूपवानित्यादि ज्ञानमपि व्याख्यातम् । न च निरवच्छिन्नाधिकरणत्वस्य भ्रमलक्षणनिवेशे अन्योन्याभावस्य व्याप्यवृत्तित्वनियमवादिनये वृक्षः कपिसंयोगिभिन्न इति ज्ञानस्य भ्रमतया तत्राव्याप्तिः कपिसंयोगिभेदाभावस्य कपिसंयोगस्य[1] निरवच्छिन्नाधिकरणाप्रसिद्धेरिति वाच्यं । तन्नये[2] कपिसंयोगिभेदाभावो न कपिसंयोगस्वरूपः, किन्तु व्याप्यवृत्तिरतिरिक्त एवाभाव इत्यभ्युपगमात्[3] इत्येव तत्त्वमिति समासः । 'सर्व्वत्र प्रमेति सर्व्वत्र सर्व्वस्य प्रमेत्यर्थः, 'किन्तु क्वचित्' किन्तु क्वचित् कस्यचित्, 'कुत्र प्रमेतीति कुत्र कस्य प्रमेत्यर्थः, जिज्ञासायामिति शेषः, 'लक्ष्यवत्वेन' लक्षयितुमुचितत्वेन ।

१. अत्यन्ताभावाभावस्य प्रतियोगिरूपत्वमिव अन्योन्याभावाभावस्य प्रतियोगितावच्छेदकरूपत्वमिति नियमात् इति भावः ।

२. अन्योन्याभावस्य व्याप्यवृत्तितानियमवादिनये इत्यर्थः ।

३. तथा च व्याप्यवृत्तिमद्भेदाभावस्यैव प्रतियोगितावच्छेदकरूपत्वं न त्वव्याप्यवृत्तिमद्भेदाभावस्य इति नियम इति भावः ।

प्रवृत्त्यङ्गत्वमिति तेत्—सत्यम् । विशेषविषयप्रमाया एव प्रवर्त्तकत्वात् । अतिरिक्तविषयतापक्षे विषयताश्रयावृत्तिरवृत्तिरेव प्रसिद्धा ।

यद्वा यत्प्रकारिका या विषयता तत्प्रकारसमानाधिकरणविषयताकः, स्वप्रकारसमानाधिकरणविषयताको वाऽनुभवः प्रमा ।

आलोकः

प्रकारभेदेन विषयताया भेदेऽपि न दोष इति लक्षणान्तरमाह—यद्वेति । एकस्या विषतायास्तदवच्छिन्नानवच्छिन्नत्वे परं विरुद्धे, न तु विशेष्यवृत्तिप्रकारकत्वाप्रकारकत्वे अपीति भावः ।

दर्पणः

भावस्य विवक्षितत्वात्, तस्य च गगने शब्द इत्यत्र सत्त्वादिति भावः । यत्प्रकारिकेति मूलम् । निर्विकल्पकस्यासंग्राह्यत्वं विषयतायाश्च सप्रकारकत्वमुपेत्येदमुक्तम् । यत्पदश्रवणात् तत्तत्प्रकारघटितमिदम् । स्वप्रकारेति मूलम् । स्वं विषयता, यत्पदाश्रवणात् सकलप्रकारघटितमिदम् । अत एव न पौनरुक्त्यम् । प्रकारसमानाधिकरणत्वं च प्रकारतानिर्वाहकसम्बन्धघटितं विवक्षितमतो गगने शब्द इत्यादौ नाव्याप्तिः । नापि सम्बन्धान्तरमादायातिव्याप्तिरिति ध्येयम् ।

माथुरी

नन्वेवं भ्रमेऽतिव्याप्तिरित्यतो लक्ष्यत्वेन परिहरति, 'भ्रमेऽपीति । 'विषयतेति विषयताश्रयावृत्त्यप्रकारकविषयताप्रतियोग्यनुभव इत्यर्थः, विषयताश्रयावृत्त्यप्रकारकस्यानुभव इति प्रतियोगित्वाथकषष्ठ्या समासात्, विषयताश्रयावृत्त्यप्रकारकोऽनुभवः प्रमेत्यसमस्तपाठश्च प्रामादिकः । यद्यपि 'विषयताश्रयावृत्तीत्यत्र विषयतापदं न विषयतासामान्यपरं रजतत्वादिभ्रमातिव्याप्तेः, समवायादिसम्बन्धेनावृत्तेरेव समवायादिसम्बन्धेनावृत्तेरेव समवायादिसम्बन्धेन विषयताश्रयावृत्तित्वात् तस्य धर्म्मितावच्छेदकांशे प्रमात्वेन लक्ष्यत्वाभ्युपगमेअनुभवत्वमात्रस्यैव सम्यक्त्वेन प्रतियोग्यन्तविशेषणवैयर्थ्यात् । नापि स्वविषयतापरं, स्वमनुभवः, रजत-रङ्गयोरिमे रङ्ग-रजते इति विपरीभ्रमेऽतिव्याप्तेः तद्विषयतायाः तदीयविषयताश्रयावृत्त्यप्रकारकत्वात् । तथापि स्वाश्रयावृत्तिप्रकारकान्यविषयताप्रतियोग्यनुभवत्वं विवक्षितं, स्वं विषयता, धर्म्मितावच्छेदकमात्रांशे प्रमारूपोभ्रमस्तु न लक्ष्यः तेन शुक्ताविदं रजतमित्यादिभ्रमे नाव्याप्तिः, धर्म्मितावच्छेदकातिरिक्तांशे प्रमारूपो भ्रमस्तु लक्ष्य एव तेन रङ्गरजतयोरिदमिदञ्च रजतमित्यादिसमूहालम्बने विशेष्यतावच्छेदकभेदेन विषयताभेदेऽपि नातिव्याप्तिः, न वा रजतारजतयोर्द्वयं रजतमित्यादिज्ञाने अतिव्याप्तिः, तस्यापि लक्ष्यत्वात् । नचैवं रजत एवेदं रजतं रङ्गञ्चेति भ्रमांशप्रमायामव्याप्तिः तद्विषयतायाः स्वाश्रयावृत्तिरङ्गत्वप्रकारकतया तदप्रकारकत्वाभावादिति वाच्यं । विशेष्यतावच्छेदकतातिरिक्तप्रकारताभेदेनापि विषयताभेदाभ्युपगमात् । एतच्च ग्रन्थकृदेवाग्रे

यत्प्रकारिका या विषयता तत्प्रकारव्यधिकरणविषयताकम्, स्वप्रकारव्यधिकरणविषयताकं वा ज्ञानं भ्रमः । प्रकारभेदेनैकत्र विषयताभेद इति लक्षणद्वयसमावेशात् प्रमाभ्रमसङ्करः ।

आलोकः

विषयताद्वय इति प्राग्लक्षणाभिप्रायेणा प्रकृते तु विषयतैक्येऽपि न दोष इत्युक्तमनुपदम् । तदुक्तमात्मतत्त्वविवेक इति शेषः ।

दर्पणः

यत्प्रकारिकेति मूलम् । विषयताप्रकारभेदघटितमिदम् । स्वप्रकारेति मूलम् । स्वं विषयता । प्रकारपदं सकलप्रकारपरम्, अतो न पौनरुक्त्यम् । द्वितीयचतुर्थयोः प्रकारत्वावच्छिन्नघटितयोर्विषयतैक्ये विरोधादाह मूले—प्रकारभेदेनेति । इदं च समाधिसौकर्यादुक्तम् ।

वस्तुतस्तु द्वियीयचतुर्थयोरपि ज्ञानप्रकारटितत्वेन न पौनरुक्त्यम् न वा विरोध

माथुरी

वक्ष्यति । विषयताया विशेष्यमात्रनिष्ठत्वोपगमात् निर्विकल्पके निर्विशेष्यके विषयताविरहान्न तत्रातिव्याप्तिः, सप्रकारकत्वेन वा अनुभवो विशेष्यः । 'स्वाश्रयावृत्तीत्यत्र च वृत्तित्वं स्वनिरूपकसम्बन्धेन सम्बन्धित्वं न तु सामान्यतो वृत्तित्वं घटे घटत्वमित्यादिप्रमायामव्याप्तेः । न हि घटत्वे घटो वर्त्तते, न च वृत्तित्वं सम्बन्धित्वमात्रम्, स्वाश्रयासम्बन्धिप्रकारकत्वस्या प्रसिद्धेः अवृत्तेरपि येन केनचित् सम्बन्धेन सम्बन्धित्वात् । स्वपदद्वयञ्च भेदप्रतियोगिविषयतापरं न तु प्रकृतविषयतापरम्, सर्व्वं प्रमेयं इति तादात्म्यसम्बन्धसंसर्गकप्रमायां भगवज्ज्ञानं घटवदित्यादि विषयितासम्बन्धसंसर्गकप्रमायाञ्चाव्याप्तेः, तत्र स्वनिरूपकतादात्म्यविषयितादिसम्बन्धेन स्वाश्रयासम्बन्धिनोऽप्रसिद्धेः । न च स्वपदद्वयस्य भेदप्रतियोगिपरत्वे संयोगादिव्यधिकरणसम्बन्धेन गुणादिविशेष्यक-घटादिभ्रमेऽतिव्याप्तेः तद्विषयताया अपि स्वनिरूपकसम्बन्धेन स्वाश्रये गुणे वर्त्तमानस्याप्रसिद्ध्या तादृशभेदकूटवत्त्वादिति वाच्यम् । स्वनिरूपकसम्बन्धेन कस्यचिदधिकरणे वर्त्तमानत्वेन चरमविषयताविशेषणात् । ननु प्रमेयं रजतमित्यादिनिखिलप्रमेयविशेष्यकरजतत्वादिप्रकारकांशिकप्रमायामव्याप्तिः तद्विषयतायाः स्वनिरूपसम्बन्धेन यत्किञ्चित्स्वाश्रयव्यक्तिवृत्तिप्रकारकतया तादृशभेदकूटवत्त्वविरहादित्यत आह, 'केवलान्वयिनीति व्यापकत्वरूपमवच्छिन्नत्वं सप्तम्यर्थः, अन्वयश्चास्य विषयतायां, केवलान्वयिधर्म्मावच्छिन्नविषयतायाः स्वनिरूपकसम्बन्धेन स्वाश्रयवृत्तिसामान्यभिन्न इत्यर्थः, 'अवृत्तिरेव प्रसिद्ध इति स्वनिरूपकसम्बन्धेन अवृत्तिरेव प्रसिद्धः न तु प्रकारीभूतो रजतत्वादिरित्यर्थः, तथाच 'स्वाश्रयावृत्तिपदेन स्वाश्रयवृत्तिसमान्यभिन्नस्य विवक्षणान्नाव्याप्तिरिति भावः । ननु तथापि प्रकारतावच्छेदकैक्ये प्रकारभेदेन विषयताभेदाभावात् घटो रूपवानित्यादिनिखिलरूपादि-

यद्वा विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिप्रकारकविषयताप्रतियोगी, विशेष्यनिष्ठात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयत्वप्रतियोगी वा, विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारकविषयत्वाप्रतियोगी वा,

आलोकः

प्रकाशस्येति। सम्बन्धान्तरं विना तदीयताप्रयोजकः स्वभाव एव विषयत्वं तदिच्छादौ गतमतः प्रकाशस्येत्यादि, प्रकाशत्वे सतीत्यर्थः।

दर्पणः

इति ध्येयम्। प्रकारेति। प्रथमतृतीयलक्षणवद्विषयतैक्येऽप्यविरुद्धं लक्षणान्तरमाहेत्यर्थः। तदवच्छिन्नत्वे इति द्वितीये चतुर्थे च प्रमालक्षणे व्यधिकरणप्रकारानवच्छिन्नत्वं भ्रमलक्षणे च व्यधिकरणप्रकारावच्छिन्नत्वं विशेषणमेकस्यां विषयतायां विरुद्धमित्यर्थः। विशेष्यवृत्तीति। विशेष्यनिष्ठात्यन्ताभावाप्रतियोगीत्यादिप्रमालक्षणेऽप्रमालक्षणे[1] च प्रविष्ट इति शेषः। प्रागिति। प्राक् प्रथमं लक्षणं विषयतैक्येऽप्यविरुद्धं विशेष्येत्यादिरूपं येषा तदभिप्रायेणेत्यर्थः। प्रकृते प्रथमलक्षणे। विषयत्व-

माथुरी

प्रकारकप्रमायामव्याप्तिस्तद्विषयतायाः स्वाश्रयावृत्तिजलादिनिष्ठरूपादिप्रकारकतया तत्प्रकारकान्यत्वविरहात् इति चेदेतदस्वरसेनैव 'यद्वे'त्यादिना लक्षणान्तरप्रणयनात्। वस्तुतस्तु 'स्वाश्रयावृत्तिप्रकारकपदेन स्वाश्रयवृत्तिनिष्ठत्वाभाववत्प्रकारताकं विवक्षितं तदन्यत्वमर्थः, इदं रजतमित्यादिभ्रमीयविषयतायाः रजतत्वादिनिष्ठप्रकारताव्यक्तेरेव तादृशनिष्ठत्वाभाववत्त्वान्नातिव्याप्तिः, रजत एवेदं रजतं रङ्गञ्चेति भ्रमांशप्रमीयविषयतायाः रङ्गत्वनिष्ठप्रकारताव्यक्तेस्तादृशनिष्ठत्वाभाववत्त्वेऽपि प्रकारताभेदेन विषयताभेदात् रजतत्वनिष्ठप्रकारताकविषयताव्यक्तिमादायैव लक्षणसमन्वयः, एवञ्चात्र निषेधद्वयप्रवेशाद्गौरवं प्रकारताभेदेन विषयताभेदाभावे रजत एवेदं रजतं रङ्गञ्चेति भ्रमांसप्रमाया असङ्ग्रहश्चे'त्यस्वरसाद् 'यद्वे'त्यादिना लक्षणान्तरप्रणयनमित्येव तत्त्वं।

केचित्तु ननु निखिलप्रमेयविशेष्यक-संयोगादिसम्बन्धेन रजतत्वप्रकारकभ्रमे अतिव्याप्तिः तद्विषयतायाः केवलान्वयित्वेन स्वाश्रयावृत्तेरप्रसिद्धतया तत्प्रकारकान्यत्वादित्यत आह, 'केवलान्वयिनीति केवलान्वयिधर्म्मावच्छिन्नव्यधिकरणप्रकारकविषयतायाः स्वनिरूपकसम्बन्धेन स्वाश्रयावृत्तिरित्यर्थः, 'अवृत्तिरेव प्रसिद्ध इति स्वनिरूपकसम्बन्धेनावृत्तिः स्वप्रकारीभूतधर्म्म एव प्रसिद्ध इत्याहुः।

प्राञ्चस्तु ननु निखिलप्रमेयविशेष्यक-प्रमेयमित्यादिसामान्यप्रत्यासत्तिजप्रत्यक्षे अव्याप्तिः तत्र विषयताश्रयावृत्तेरप्रसिद्धेरित्यत आह, 'केवलान्वयिपीति निरूपितत्वं सप्तम्यर्थः, केवलान्वयिधर्म्मनिरूपितविषयतायाः स्वनिरूपकसम्बन्धेन स्वाश्रया-

---

१. विशेष्यनिष्ठात्यन्ताभावप्रतियोगीत्यादीति यावत्।

विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयताप्रति-योगी वानुभवः प्रमा।

स्वसमानाधिकरणप्रकारानवच्छिन्नविषयताप्रतियोगि ज्ञानं,

आलोकः

स्वभावतः सविषयः प्रकाश एव लाघवादिच्छादीनां ज्ञानोपाधिकमेव विषयत्वम्। अत एवेश्वरज्ञानस्वीकारः, कृतेरेव कार्यहेतुतया तस्याश्च ज्ञानं विना सविषयकत्वाभावात्तद्विषयत्वलाभार्थं ज्ञानेच्छयोः स्वीकारः। स्वसमानकालीनेच्छा-

दर्पणः

प्रतियोगित्वतदप्रतियोगित्वयोरिति मूलम्। व्यधिकरणप्रकारावच्छिन्नविषयत्व-प्रतियोगित्वं तद्भ्रमलक्षणम् तृतीये च यत् प्रमालक्षणं तयोरित्यर्थः। यद्यपि विषयता-भेदेऽप्यत्र विरोधोऽस्त्येव, तथापि प्रकारभेदावच्छेदेन विषयताप्रतियोगित्वतदभाव-योरंगीकाराद्वारणीय इति भावः। सर्वत्र च सम्बन्धभेदप्रवेशाद्गगने शब्द इत्यादौ न दोष इति पूर्वोक्तमनुसन्धेयम्।

माथुरी

वृत्तिरित्यर्थः, 'अवृत्तिरेव प्रसिद्ध इति स्वनिरूपकविशेषणताविशेषसम्बन्धेनावृत्तिरेव प्रसिद्ध इत्यर्थः, इति व्याचक्षुः। तदसत्प्रागुक्तयुक्त्या स्वपदस्य भेदप्रतियोगि-परत्वावश्यककया विषयताश्रयावृत्तेरप्रसिद्धावपि अव्याप्तिविरहादिति दिक्।

'तत्प्रकारसमानाधिकरणेति प्रकारपदं धर्म्मपरम्, तद्धर्म्मसमानाधिकरण-तद्विषयताक इत्यर्थः, 'अनुभवः प्रमा' इत्यग्रेतनमत्रापि सम्बध्यते, 'प्रमा' तद्धर्म्मस्य प्रमा। यत्तभ्यां विषयताया उभयथा प्रवेशे गौरवादाह, 'स्वप्रकारेति, 'स्वं' विषयता, प्रकारता च धर्म्मितावच्छेदकतातिरिक्ता ग्राह्या, तेनेदं रजतमित्यादिभ्रमे नाति-व्याप्तिः, तस्यापि लक्ष्यत्वे अनुभवत्वमात्रस्यैन सम्यक्त्वात्। एतल्लक्षणद्वये इदं रजतं रङ्गश्चेत्यादौ प्रकारभेदेन विषयताभेदाभावेऽपि न क्षतिरिति ध्येयं। अतिरिक्तविषयता-पक्षे प्रमां लक्षयित्वा भ्रमं लक्षयति, 'यत्प्रकारिकेति, 'तत्प्रकारिकेति, 'तत्प्रकारव्यधि-करणविषयताक इति 'प्रकारः' धर्म्मः, तद्धर्म्माधिकरणवृत्तितद्विषयताकं ज्ञानं भ्रम इत्यर्थः, अग्रेऽपि 'स्वप्रकारव्यधिकरणत्वं' स्वप्रकाराधिकरण वृत्तित्वं, रजतारजत-साधारणधर्म्मद्रव्यविशेष्यकं द्रव्यं रजवमित्यादि ज्ञानन्तु न रजतत्वादिभ्रमः[1]।

मिश्रास्तु 'तत्प्रकारव्यधिकरणत्वं' तत्प्रकारानधिकरणवृत्तित्वम्, अग्रेऽपि 'स्वप्रकारव्यधिकरणत्वं' स्वप्रकारानधिकरणवृत्तित्वं, तथा च द्रव्यं रजतमित्यादि ज्ञानमपि रजतत्वस्य भ्रमः इत्याहुः।

प्राथमिकप्रमालक्षणं द्वितीयभ्रमलक्षणञ्चाभिप्रेत्याह, 'प्रकारभेदेनेति विशेष्य-तावच्छेदकतातिरिक्तप्रकारताभेदेनेत्यर्थः, 'प्रमाभ्रमसङ्कर इति रजत एवेदं रजतं

---

१. न रजतमित्यादि भ्रम इति क०।

**स्वव्यधिकरणप्रकारावच्छिन्नविषताप्रतियोगि ज्ञानं वा भ्रमः। इदं रजतमितिभ्रमे च विषयताद्वये व्यधिकरणप्रकारावच्छिन्नत्वतदनवच्छिन्नत्वयोः विषयत्वप्रतियोगित्वतदप्रतियोगित्वयोरविरोधात्, समूहालम्बने च विषयताभेदान्न प्रमाऽप्रमालक्षणेऽव्याप्त्यतिव्याप्ती।**

### आलोकः

धीनं कृतौ सविषयत्वं, तादृशज्ञानाधीना चेच्छा सविषयता। अत एव न ज्ञानवदिच्छायामपि प्रत्यासत्तिरभ्युपगम्यते, ज्ञनेनैवान्यथासिद्धेः।

### दर्पणः

ननु समुहालम्बने घटपटोभयवृत्तिरेकैव विषयता, सा च घटात्मकविशेष्यनिष्ठात्यन्ताभावप्रतियोगिपटत्वावच्छिन्नेति प्रमालक्षणं तत्राव्याप्तम् भ्रमलक्षणञ्चातिव्याप्तमित्यत आह मूले—समूहेति। विषयताभेदे च घटनिष्ठा विषयता न पटत्वावच्छिन्नेति नोक्तदोष इति भावः।

### माथुरी

रङ्गञ्च इत्यादि समूहालम्बने प्रमा-भ्रमयोः 'सङ्करः' अभेद इत्यर्थः। सामान्यतः प्रकारताभेदेनैव विषयताभेदाभ्युपगमे इदं रजतमित्यादि भ्रमेऽपि धर्म्मितावच्छेदकनिरूपितविषयताव्यक्तिकादायैवातिव्याप्तिरतोऽतिरिक्तान्तं प्रकारताविशेषणम्। एकधर्म्मावच्छिन्नतत्तदभावोभयवन्निष्ठविशेष्यताकं द्रव्यं रजतमित्यादि ज्ञानं न लक्ष्यमितिमते लक्षणान्याह, 'विशेष्यनिष्ठेति स्वाश्रयनिष्ठेत्यर्थः, 'स्वं' विषयता, प्रतियोगिता च स्वरूपतो व्यक्तिद्वयावृत्त्यधिकरणत्वावच्छिन्नत्वेन स्वनिरूपकसम्बन्धावच्छिन्नत्वेन च विशेषणीया, तेन वैशिष्ट्य-व्यासज्यवृत्तिधर्म्मावच्छिन्नाभावं व्यधिकरणसम्बन्धावच्छिन्नाभावञ्चादाय नाप्रसिद्धिः, प्रकारता च विशेष्यतावच्छेदकतातिरिक्ता ग्राह्या तेनेदं रजतमित्यादि भ्रमे नातिव्याप्तिः, तस्यापि लक्ष्यत्वे अनुभवत्वमात्रस्यैव सम्यक्त्वात्। एवमग्रेऽपि वृक्षः संयोगवानित्याद्यव्याप्यवृत्तिसंयोगादिप्रमायां संयोगत्वादिनिरूपितविषयतामादाय लक्षणसम्भवेऽपि कोलिकादिसम्बन्धेन स्वरुपतो गोत्वादिप्रमायामव्याप्तिरतो निरवच्छिन्ननिष्ठतालाभार्थं 'अत्यन्तपदं, एवमग्रेऽपि। अत्र विषयितादिसम्बन्देन भगवज्ज्ञानादिविशेष्यकप्रमायामयाप्तिस्तत्र तादृशप्रतियोगिनोऽप्रसिद्धेरतो लक्षणान्तरमाह, 'विशेष्यनिष्ठेति स्वाश्रयनिष्टेत्यर्थः, 'प्रतियोगिप्रकारानवच्छिन्नेति प्रतियोगिप्रकारकं यद्यत् तत्त्वाभावकूटवदित्यर्थः। प्रतियोगिप्रकारकत्वञ्च तादृशाप्रतियोगिनिष्ठत्वाभाववत्प्रकारताकत्वं, तेनेदं रूपवदित्यादि निखिलरूपादिप्रकारकप्रमायां नाव्याप्तिः। 'विषयतासमानाधिकरणेति स्वसमानाधिकरणाभावप्रतियोगिप्रकारकविषयताप्रतियोगि यद्यत् तत्तदन्यानुभव इत्यर्थः। अत्र सर्व्वांशप्रमैव लक्ष्या तेनांशिकप्रमायां नाव्याप्तिरिति भावः।

